संस्कृतविद्यापीठग्रन्थमालायाः द्वितीयं पुष्पम्

# गीति-कादम्बरी

( संस्कृतगीतपद्यात्मकद्वादशग्रन्थसंकलनरूपा )




प्रस्तावनालेखकः

**डॉ० गौरीनाथशास्त्री**

उपकुलपतिः

**वाराणसेयसंस्कृतविश्वविद्यालयस्य**

सम्पादकः

**डॉ० मण्डनमिश्र आचार्यः, एम्० ए० पी० एच्० डी०**

**निदेशकः**

ग्रन्थकारः

**कविरत्नम्, श्रीअमीरचन्द्रशास्त्री, साहित्याचार्यः**

प्राध्यापकः

**श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्**

दिल्ली

१९६८

# प्रस्तावना

पण्डितवरेण श्रीग्रमीरचन्द्रशास्त्रिमहोदयेन विरचितस्यानेकविधखण्डप्रबन्धस्य प्रस्तावनां लिखितुं डाक्टरमण्डनमिश्रः श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठस्य दिल्लीस्थस्य निदेशकः प्रार्थयामास। प्रबन्धेऽस्मिन् गीतिकादम्बरी, श्रीमद्भागवतकथासारः, अध्यात्मदर्शनम्, को वेदाधिकारी, रसकल्पतरुः, हितकल्पतरुः, सङ्गीतवृन्दावनम्, स्तुतिकादम्बरी, चरितकादम्बरी, व्याख्यानकादम्बरी, प्रशस्तिकादम्बरी, पूर्तिकादम्बरी चेति द्वादश खण्डप्रबन्धाः पद्यात्मना विरचिताः पण्डितवरेण। प्रायोऽत्रासन्नसप्तसहस्राणि पद्यानि नानावृत्तैर्विरचितानि सन्ति।

महाकाव्यं खण्डकाव्यं वा कवीनां सततपदार्थपरिचिन्तनपरिणामविलसितमित्यत्र न कश्चिद्विशय इति। काव्यकरणीभूतनिपुणताया व्युत्पत्त्यपरपर्यायायाः 'लोकशास्त्रकाव्याद्यवेक्षणात्' इति हेतुत्वं प्रतिपादयन् मम्मटाचार्य इदमवद्योतयति यत्काव्यनिर्माणसम्प्रदायो वेदाध्ययनाध्यापनसम्प्रदाय इवानादितः कालाद् भारते प्रवृत्त इति। अन्यथा काव्यावेक्षणस्य कारणत्वप्रतिपादनमनुपपन्नं स्यात्। काव्यनिर्माणनिपुणता काव्यावेक्षणजन्येत्युक्तेऽवेक्षणकर्मीभूतं काव्यं प्रत्यपि काव्यान्तरावेक्षणं स्वीकर्तव्यं भवति। न चात्रानवस्थादोष; बीजाङ्कुरन्यायेनानवस्थायाः परिहारोपपत्तेः। भगवान् वाल्मीकिरादिकविः, तद्विरचितं रामायणञ्चादिकाव्यमिति लोके प्रसिद्धम्। तत्रापि महर्षेर्निपुणता 'मा निषाद प्रतिष्ठां त्वम्' इत्यादिकाव्यावेक्षणप्रयुक्तेति साधनं न युक्तिहीनम्। एवञ्च काव्यरचनासम्प्रदायश्चिराद् भारते प्रवृत्तः सहृदयानाह्लादयतीति सिद्ध्यति।

नैकविधेषु सांसारिकव्यापारेषु सुखदुःखमोहफलेषु स्वैरं प्रवृत्ताश्चित्तवृत्तीर्निरुध्य सुखैकमये विषये ताः प्रवर्तयितुं परमं साधनं काव्यं नाम। शरीरं पोषयितुं यथा विभिन्ना भवन्त्याहाराः, तथैव बुद्धिं मनस्तत्त्वञ्चोपबृंहयितुं काव्यविशेषाः। सर्वतः सर्वदा प्रसरणशीलस्य मनसो निरोधाय परमस्य सुखस्य च लाभाय यथा प्रकृतिसिद्धा सुषुप्त्यवस्था, तथैव जाग्रदवस्थायामपि तदेव फलमवाप्तुं चिरन्तनानां कवीनामयमुद्यमः। सततं व्यापृतस्य मनसो विश्रमाय काचिदवस्था एष्टव्यैव।

आसीत्कश्चन कालः, यस्मिंश्चिरन्तना अनवरतग्रन्थपरिशीलनपरिपक्वमतिवैभवाः नैकविधं संस्कृतवाङ्मयमाविष्कुर्वन्तो लोकानां बुद्धितत्त्वमपूपुषन्। तत्र दर्शनानां शास्त्राणाञ्च यत्स्थानं संस्कृतवाङ्मये, तदेव स्थानं काव्यानामपि । प्रत्युत तेभ्यः एतेषां कान्तासम्मितैः शब्दैर्विरचितत्वेन विशिष्टं स्थानं परिकल्पनीयम् । रसमयेभ्यः काव्येभ्यः परमानन्दावाप्तिरित्यत्र सहृदयाः प्रमाणमिति साहित्यशास्त्रविदो वदन्ति । कतिपय एव दार्शनिका अपि तत्तद्दर्शनजन्यमानन्दमनुभवितुं क्षमाः, न तु सर्वे एव । ये च तादृशक्षमतामावहन्ति त एव तत्र सहृदयाः परिगण्यन्ते । तथैव काव्यानि पश्यन्तः शृण्वन्तश्च सामाजिकाः सर्वे एव न रसास्वादकाः, किन्तु कतिपय एव, ते च सहृदयाः । एवं चित्रगुणीभूतव्यङ्ग्यकाव्येभ्योऽपि कश्चनानन्दोऽनुभूयते । शब्दवैचित्र्यमुक्तिवैचित्र्यमलङ्कारवैचित्र्यञ्चेति सन्ति बहूनि कारणानि मनसो ह्लादनाय । अत एव साहित्ये ध्वनिप्रस्थानमलङ्कारप्रस्थानं रीतिप्रस्थानं शब्दप्रस्थानं शब्दार्थोभयप्रस्थानं चित्रप्रस्थानमिति नैकविधानि प्रस्थानानि सहृदयैराविष्कृतानि । काममुच्चावचानि भवेयुस्साधनानि, किन्तु तत्तदनुरूपं साध्यन्तु सर्वत्र वर्ततैव । स्थण्डिले वा मञ्चे वा हंसतूलिकापर्यङ्के वा शयानः सुषुप्तिजन्यं सुखमनुभवत्येव तथैव विभिन्नप्रस्थानान्यनुसरन्तः सामाजिकाः सहृदया न्यूनाधिकभागेन रसास्वादका भवन्त्येव । अन्यथा विभिन्नप्रस्थानानां प्रवर्तने ग्रन्थकाराणां प्रवृत्तिरेव विफला स्यात् । सर्वत्र परमानन्दावाप्तेरभावेऽपि मनसः स्थिरीकरणाय तेषु सामग्री वर्तत एव । इमामेव सरणिमाश्रित्य पण्डितवरेण नैकविधानि रसमयानि पद्यानि सन्दृब्धानि । पद्यरचनाधारा लुप्तप्रायैव दृश्यतेऽद्यतनेषु दिवसेषु । अस्य ग्रन्थस्य सर्वतः प्रचारेण मन्ये पद्यरचनाधारा पुनर्भारते निष्प्रत्यूहं प्रवहेदिति ।

वाराणसेयसंस्कृतविश्वविद्यालयः गौरीनाथशास्त्री.
वाराणसीम्, चैत्रशुक्लप्रतिपद् २०२५ वैक्रमाब्दः (उपकुलपतिः)

## सम्पादकीयम्

श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठप्रकाशनमालाया द्वितीयपुष्पतया 'गीतिकादम्बरी' नाम्ना संस्कृतभाषाया आधुनिकतमानां रचनानामिदं सङ्कलनं प्रस्तुवतो मे मनसि प्रमोदप्रकर्षः समुदेति ।

एष ग्रन्थो विद्यापीठस्य साहित्यविभागे यशस्विनो व्याख्यातुः श्रीअमीरचन्द्रशास्त्रिणो मनोज्ञानां कवितानां सङ्ग्रहात्मकोऽस्ति । श्रीशास्त्रिमहोदयः संस्कृतजगतो विश्रुत आधुनिकः कविर्वर्वर्ति, संस्कृतविद्यापीठस्य च स्थापनाकालादेव कुशलाध्यापकत्वेनास्य वर्चस्वं वर्धयितुं साधनां चर्कर्ति । न केवलं सफलशिक्षकत्वेन, अपि त्वन्यैरपि बहुभिः प्रकारैर्विद्यापीठस्य विकासे श्रीशास्त्रिमहोदयस्य योगदानमुल्लेखनीयतामर्हति । असौ नूनं प्रभावशाली वक्ता राजधान्याश्च लब्धप्रतिष्ठो विद्वान् विद्यते । अस्य सक्षमया लेखन्या खल्वखिलभारतीयसंस्कृतसाहित्यसम्मेलनस्य मुखपत्राय 'संस्कृतरत्नाकराय' 'विश्वसंस्कृतशताब्दीग्रन्थयोजनायै' च गौरवं प्रत्तमस्ति ।

अस्मिन् सङ्ग्रहे किलैकतो वयं श्रीशास्त्रिणो गम्भीरं वैदुष्यं, काव्यशास्त्रीयाणां प्राचीनपरम्पराणाञ्च निर्वाहस्य दृश्यं प्रेक्षामहे, अन्यतश्च कवित्वस्याधुनिक्या अप्याधुनिकतरायाः पद्धतेर्विकसितं स्वरूपं निरूपयामः । संस्कृतभाषायां श्रीशास्त्रिणः कश्चिदसाधारणो वर्ततेऽधिकारः, तदीयाश्च रचना ओजःप्रसादमाधुर्यैस्त्रिभिरपि गुणैरोताः प्रोताश्च विद्यन्ते । विषयवैविध्यदृशाऽपि 'गीतिकादम्बरी' स्वकीयां कामपि विशिष्टतां परिवेवेष्टि । अस्यामेकत्र वैदिकीनां दार्शनिकीनाञ्च विभिन्नानां धाराणां, श्रीमद्भागवतादिसम्बद्धानाञ्च पौराणिकानां विषयाणां शास्त्रीयं विवेचनं चर्च्यते, अन्यत्र च राष्ट्रपितुर्गान्धिमहात्मनः, श्रीजवाहरलालनेहरोः, श्रीलालबहादुरशास्त्रिणस्तादृशानाञ्चापरेषां राष्ट्रनेतॄणाम् आदर्शचरित्रचित्राणि समर्च्यन्ते । इयं श्रीशास्त्रिणः कापि विलक्षणा क्षमताऽक्षिलक्ष्यीक्रियते यद् वेदेष्वगाधा विद्वत्ता, दर्शनेषु गम्भीरं परिशीलनं, साहित्यशास्त्रस्य कवित्वपूर्णं मननम्, आधुनिकज्ञानविज्ञानयोश्चेदानीन्तनं चिन्तनं तत्र युगपत्समवेतं जजागरीति । अयं सङ्ग्रहः श्रीशास्त्रिणो बहुमुख्याः प्रतिभायाः प्रत्यक्षं निदर्शनं प्रस्तौति ।

अस्य ग्रन्थस्य प्रकाशनं केन्द्रीयसंस्कृतमण्डलेन नियुक्तानां विशेषज्ञानां परामर्शेन भारतसर्वकारस्य च स्वीकारेणास्माभिर्हस्ते गृहीतम् । विद्यापीठस्य शोध—प्रकाशनसमितेरध्यक्षेण डाक्टररामधारीसिंहदिनकरेण, डाक्टररामकरणशर्मणा, महामहोपाध्यायश्रीपरमेश्वरानन्दशास्त्रिणा, डाक्टररसिकविहारिजोशिना, श्रीराजेन्द्रद्विवेदिना च विद्यापीठद्वाराऽस्य प्रकाशने सम्मतिं प्रदायास्माकं मार्गः प्राशस्त्यं नीतः । एतदर्थमहं डाक्टरदिनकरस्य शोधप्रकाशनसमितिसदस्यानां च चिरकृतज्ञोऽस्मि ।

विद्यापीठस्य प्रेरणास्रोतःस्वरूपा अस्मत्सभापतयो जम्बूकाश्मीरमहाराजाधिराजा डाक्टरकर्णसिंहमहोदयाः शोधप्रकाशनसमितेरनुशंसामनुरुध्यास्य ग्रन्थस्यापि विद्यापीठप्रकाशनमालायां समन्वयनाय स्वकीयां स्वीकृतिं प्रत्तवन्तः । तदर्थं वयं तेषामाभारिणो वर्तामहे । वाराणसेयसंस्कृतविश्वविद्यालयस्योपकुलपतयो डाक्टरगौरीनाथशास्त्रिणोऽस्य ग्रन्थस्य प्रस्तावनां विलिख्य विद्यापीठे कृतानामुपकाराणां परम्परायामेकां नूतनां शृङ्खलां समयूयुजन् । अतोऽहं महनीयांस्तान् महानुभावान् श्रद्धापुरस्सरं कोटिशः प्रणामाञ्जलिभिः सम्भावयामि ।

अन्ततश्चैताभिः सकलाभिरप्युत्तमाभी रचनाभिरभिनवसंस्कृतसाहित्यस्य श्रीसंवर्धनमुपलक्ष्याहं श्रीअमीरचन्द्रशास्त्रिणं हृदयेनाभिनन्दयामि, उत्तमञ्चैनं काव्यसङ्ग्रहं सहृदयेभ्यः पाठकेभ्यः सादरं समर्पयामि ।

२६ मार्च २९७८ दिनाङ्के

डा० मण्डन मिश्रः

## ग्रन्थकारस्य निवेदनम्

पञ्चाम्बुप्रदेशे भङ्गमण्डलेऽहमदपुरस्यालनामनि ग्रामे १९१८ ख्रिष्टाब्दे कुशलसगोत्रात्त्र्यप्रवराच्छ्रीदुनीचन्द्रवर्मणः श्रीमत्यां हुक्मदेव्यामहमजनिषि। 'राज्ञो बलार्थिनः षष्ठे' इति मन्वादेशात् षष्ठे वर्षे श्रीदेवीदत्तशर्मनामा विप्रवर उपनीयमानाय मह्यं गायत्रीमन्त्रेण साकं सारस्वतं मन्त्रमप्युपादिशत्। वर्षद्वयेन च सपुत्रकलत्रोऽसौ विप्रवरो मत्पितृदत्तां वृत्तिमुपजीवन् वेदव्याकरणस्तोत्रादिपाठोपकारिणीं प्रारम्भिकीं शिक्षामप्यदात्। अष्टमे तु वर्षे हरिद्वारस्थे ऋषिकुलब्रह्मचर्याश्रमेऽध्ययनार्थं पित्रा प्रेषितोऽस्मि। तत्राकस्मादेव हिन्दीसंस्कृतयोः प्रस्फुटितां कवित्वशक्तिमवलोक्य प्राचार्यः श्रीघूटरझाशास्त्री 'बालकवि' व्यपदेशेन मयि प्रसादविशेषं प्राचकाशत्। उत्तीर्णशास्त्रिपरीक्षन्तु वेणीसंहारस्य रसमयेऽभिनये कतिपयेषां पद्यानां स्थाने गीतान्युपनिबद्धवन्तं सूत्रधारीभूय च स्वयमप्यभिनयन्तं मां तात्कालिकः प्राचार्यः श्रीलीलाधरशास्त्री 'कविरत्नम्' इत्युपाधिनाऽलमकरोत्। इत्थं १९२७–१९४० ख्रिष्टाब्देषु भूयसीः कविताः प्राणैषम्। यासु 'आर्यवीर' इति हिन्द्याम् 'प्रतापविजय' इति च संस्कृते खण्डकाव्ये अपि व्यरीरचम्। 'किसान—लकड़हारा—परलोक—गले का हार' इत्याद्या हिन्दीकविता माधुरीपरलोकप्रभृतिपत्रिकासु, निर्धनकुटीरम्, श्रीराधाजानिस्तोत्रम् इत्याद्याश्च संस्कृतकविताः संस्कृतरत्नाकरसूर्योदयादिपत्रेषु प्रकाशमप्युपानीयन्त।

ऋषिकुले छात्रत्वेन चतुर्दशभिर्वर्षैर्विद्याभास्करतां साहित्याचार्यताञ्चाधिगत्य शिक्षकत्वेन च षड्वर्षाणि व्यतियाप्य भङ्गमण्डलस्थे मध्यानानगरे महावीरसंस्कृतकालेजे प्रधानाध्यापकत्वेन षड्भिर्वर्षैः पञ्चाशतं छात्रान् शास्त्रिणो विधाय कवित्वदिशि तु किमपि नानुष्ठाय पुनरपि वर्षत्रयस्य कृते ऋषिकुलमध्यागमम्। अत्र श्रीगान्धिमहात्मप्रभृतिशीर्षकैर्विरचिताः कविताः केनापि काव्यचौरेणापहृताः।

१९५० ख्रिष्टाब्दे तु श्रीवृन्दावनधामनि श्रीरामानुजवेदान्तविद्यालये प्रधानाध्यापकत्वेन जीविकां निर्वहन् श्रीराधाकृष्णयोर्वन्दितत्वस्य सौभाग्यमविन्दम्। बहु प्रावोचम्-

बहुतरमलिखम् । ततो वटपत्तने भारतीविद्यालयेऽध्यापकीभूय सप्तभिर्वर्षैः संस्कृतविद्व-त्सभासमाश्रयेण चलचित्रगीतगतीन्यपि गीतानि निरमाम् । दिल्लीमुपागतस्तु दरिया-गञ्जस्थायाः श्रीसनातनधर्मसभाया व्यासत्वेन तद्विद्यालयस्य च प्राचार्यत्वेनोपजीवन् श्रीमद्भागवतकथासारम्, अध्यात्मदर्शनम्, हितकल्पतरुम्, को वेदाधिकारीति निब-न्धश्च प्राचीक्लृपम् ।

१९६३ ख्रिष्टाब्दे संस्कृतविद्यापीठस्य प्राध्यापकत्वेन सह संस्कृतरत्नाकरस्य विश्वसंस्कृतशताब्दीग्रन्थस्य च सहायकसम्पादकत्वमुपगतस्य कवित्वशक्तिः सविशेष-मजागरीत् । अत्र चानेकगद्यपद्यनिर्माणपरम्परायां वैदिकसाहित्यपरिचयादीन् नैकान् पद्यात्मकनिबन्धान् प्रशस्तिबन्धांश्च प्राबध्नाम् । एवमासां विविधानां रचनानां मध्या-त्काश्चन वल्मीकजग्धतया काश्चन च देशविभाजनावसरे साम्प्रदायिकवैमनस्याग्नि-दग्धतया नष्टाः । अवशिष्टास्तु द्विचत्वारिंशत्कृतयः । यासु श्रीराधासुधानिधिस्तोत्रस्य रसकुल्याख्यव्याख्याया रसकलशनामको हिन्दीभाषानुवादः (९०० पृष्ठात्मकः) श्रीवृन्दा-वनवासिना श्रीराधावल्लभीयेन बाबाकिशोरीशरणमहात्मना प्रकाशितः । ऋग्वेदसायण-भाष्यस्य भाषानुवादश्च ब्राह्मणसमाजपत्रे क्रमेण प्रकाश्यमानोऽस्ति । संस्कृतपद्यात्मि-कासु त्वष्टादशसु रचनासु द्वादशात्र गीतिकादम्बर्यां सङ्कलिताः । ताश्चैताः

'गुणिनोऽप्यवसीदन्ति गुणग्राही न चेदिह ।
सगुणः पूर्णकुम्भोऽपि कूप एव निमज्जति ॥'

इति न्यायेन विद्यापीठनिदेशकेन डाक्टरमण्डनमिश्रेण केन्द्रीयसंस्कृतमण्डलविशेषा-धिकारिणा डाक्टररामकरणशर्मणा च स्वकीयया सहजया गुणग्राहकतया प्राकाश्य-मुपनीताः । इति नूनमहं विद्यापीठसंस्कृतमण्डलयोराजीवनमधमर्णतां नीतोऽस्म्येताभ्यां महानुभावाभ्याम्, तत्प्रयोजितैश्च तैस्तैर्विद्वद्गोष्ठीविशिष्टैः शिष्टजनैः ।

अस्य कृत्स्नस्य सङ्कलनस्य प्रथमा रचना 'गीतिकादम्बरी, स्वप्राधान्येन स्वनाम्नैव व्यपदेशहेतुरभवत् । किञ्च कांश्चिन्निबन्धान् विहायान्यासां रचनानां भावमयतया अनूभूतीच्छाशक्तिबोधवृत्तिप्रभृतिमनोवैज्ञानिकाधारवत्तया, रागात्मकवृत्तिप्रवणतया, भावान्वितया, सङ्क्षिप्ततया, सहजान्तःप्रेरणया, गेयतया चेत्येवमादिगीतिकाव्य-

गततत्त्वानुगततया, प्रायोऽमूः सकला अपि गीतिकाव्यव्यपदेशनिर्देश्यतां बिभ्रति। अपि च दिवङ्गताया मत्पुत्र्या गायत्र्यवतारभूतायाः कादम्बरीनामिकाया बालिकाया भूयसीषु रचनासु कलकण्ठगाननृत्यप्रयोगयोगस्य स्मृतिरूपेणानुस्यूततयाऽपि ग्रन्थोऽयं गीतिकादम्बरीनाम्ना व्यवजिहीर्षितः।

अपौरुषेयतया विख्यातेषु ऋग्यजुःसामसु, पौरुषेयतया विश्रुतेषु च रामायणमहाभारतपुराणकाव्यनाटकमुक्तकादिषु सर्वेष्वपि छन्दस्वत्सु पद्यभेदेषु, क्वचिच्चाच्छन्दस्केष्वपि गद्यभेदेषु गेयतायाः समुपलम्भाद् गीतिमयताया इयत्ता न शक्यतेऽवधारयितुम्। पुराणेषु श्रीमद्भागवते तु रुद्रगीतम्, देवगीतम्, वेणुगीतम्, गोपीगीतम्, युग्मगीतम्, भ्रमरगीतम्, भिक्षुगीतम्, ऐलगीतम्, भूमिगीतञ्चेति नव पद्यपुञ्जानि गीतनाम्नैवाख्यायन्ते। तथापि प्राकृतभाषाया गाथासप्तशती, तदनुकृतिकल्पिता संस्कृतभाषाया आर्यासप्तशती, हिन्दीभाषायाश्च विहारीसतसईप्रभृतयोऽनेकाः सप्तशत्यो गीतिकाव्यत्वं भजन्ते। कविकुलगुरोः कालिदासस्य ऋतुसंहारमेघदूतौ, घटकर्परकाव्यम्, भर्तृहरिमयूरामरुकाणां शतकानि, चौरपञ्चाशिका, पवनदूतादीन्यन्यान्यपि सन्देशकाव्यानि गीतिकाव्यीयतत्त्वानुगततया तत्त्वेनैव परिगणितानि विचक्षणैः। समस्तापि स्तोत्रपरम्परा काव्यशास्त्रिभिरिदन्त्वेनैव विवेचिता।

जयदेवस्य गीतगोविन्दम्, प्रबोधानन्दस्य सङ्गीतमाधवम्, तथाविधानि चाद्यावधि कविभिः परिकल्प्यमानानि काव्यान्तराणि प्राधान्येन गीतिकाव्यव्यपदेशभाञ्जि भवन्ति। एतत्सङ्कलनान्तर्गतं सङ्गीतवृन्दावनं त्रिंशत्सर्गात्मकं गीतिकाव्यमेव प्रतिभाति। प्राचीनासु प्राकृतसंस्कृतहिन्दीमयीषु सप्तशतीषु श्रूयन्ते ते ते विशेषाः, येषामस्यां सप्तसाहस्र्यामपि न स्यात्कश्चन लेशः। तथापि संस्कृतभाषां सम्बोध्य लिखिताः—

‘तव मधुरिम्णा चापि गरिम्णा स्वमहिम्ना च परीतैः
अमरचन्द्रकविना रचितेयं कादम्बरी स्वगीतैः।
भवतु बुधानामधुना समं ते, मधुरं पयो निपीततमं,
संस्कृतभाषे तव गुणगीते गीतेऽपि न चेतो मम याति शमम्॥’

इत्याद्याः पङ्क्तीरनुसृत्य स्वप्रयत्नस्य किमपि साफल्यसाकल्यं सम्भावयामि। गुरुदेवेन काव्यमीमांसातीर्थेन सुगृहीतनामधेयेन श्रीकृष्णलालझामहानुभावेन

सुतनिर्विशेषं लालितस्य मम 'अमरचन्द्र' इत्येव नाम स्वगिरा प्रतिष्ठापितम्, इत्यत्र सङ्ग्रहे गीतेषु प्रायस्तदेव नाम प्रायुञ्जे ।

अथ मम तावत्—

'इह सकलेन्द्रियवृत्तिरलीयत नयने, तदनु च जयकृति कण्ठे,
नेति नेति वचनामृतपाने तु श्रुतिविवरे किल सोत्कण्ठे ॥'

तथापि कृत्स्नस्यापि प्रयत्नस्यास्य मुख्यं फलमेतदेवेष्टम्, इदमेव चाभीष्टम्—

संसारे किल कामभानुजनितक्रोधातपोद्दीपिते
लोभाम्बुप्रसरभ्रमावहमहामोहच्छटाच्छादिते ।
भ्रामं भ्राममनेकधा हरिणवन्मात्सर्यमूर्च्छाञ्चितं,
राधावल्लभपादपल्लवतले चेतोऽद्य विश्राम्यतु ॥ इति

२५ मार्च १९६८ दिनाङ्के

विदुषामाश्रवस्य
अमीरचन्द्रशास्त्रिणः



# विषयानुक्रमणिका

## १ गीतिकादम्बरी

(त्रिपञ्चाशद्गीतात्मिका)

पात्रं कुरुमामाशु कृपे, पाहि मामाशु कृपे, भज हरिवंशम्, सुभगसुन्दरी, सहजं शृङ्गारकम्, सहजा शोभा, सहज रूपम्, श्रीवृषभानुनन्दिनी, सहजानन्दकादम्बिनी, सहजविपिनवर उदितचन्द्रिका, सहजकेलिः, त्रिभङ्गी मदनमोहनः, द्वयं प्रेमास्पदम्, किमिति न नृत्यसि, अन्यां न लोके त्वादृशीम्, कायेन वाचा च मनसा श्रये, सदा सौदामिनीं वन्दे, भज राधिकाम्, स्वागतगीतम्, निनादय वेणुम्, हृदयेन शून्येन जीवामि, प्रियं तं दिदृक्षुः, अयते मनो वृषभानुसन्ततिम्, राधा हरेत मम बाधान्, देव ! वन्दामहे, श्रीमतां स्वागतम्, तव नौमि सरस्वति पादयुगम्, नमनीया संस्कृतवाणी, जगति विजयते संस्कृतभाषा, गुरुवन्दना, सन्तवन्दना, कविवन्दना, भारतभूमिवन्दना, परिहर भारत ! खेदशतानि, शीलय शीलमुदारम्, परिहर परमनुसरणम्, विलपति करुणम्, नमः स्तान्नेतृजनगुरवे, अयं शास्त्री चिरं जीव्यात्, नरकार्हं कार्यं कुर्वतामपि, मुद्राराक्षसस्यैकं गीतम्, द्वितीयं गीतम्, पाहि लोकं कृपालो, अमरेश्वर ! नावतरेः समरे, भवन्तमन्तरा कः, सन्त्यज रुजमिव मानम्, भजे श्रीरङ्गम्, स्वागतगीतम्, स्वागतगीतम्, जागर्तु देवभारती, रचितेयं कादम्बरी स्वगीतैः। १—२८

## २. श्रीमद्भागवतकथासारः

( ३४५ स्रग्धरावृत्तात्मकः )

**श्रीमद्भागवतमाहात्मयकथासारः** पद्मपुराणोक्तः, स्कन्दपुराणोक्तश्च । २९–३०

**श्रीमद्भागवतकथासारः**—प्रथमस्कन्धादिद्वादशस्कन्धान्तः। ३१–८२

## ३. अध्यात्मदर्शनम्

(२७० श्लोकात्मकम्)

अवतरणिका, भगवदधिकरणम्, प्रमाणाधिकरणम्, श्रद्धाधिकरणम्, स्वभावाधिकरणम्, मनुष्यत्वाधिकरणम्, भक्त्यधिकरणम् । ८३—१०२

## ४. को वेदाधिकारी ?

(२७० श्लोकात्मको निबन्धः)

वेदलक्षणम्, वेदास्तित्वे प्रमाणम्, वेदविज्ञानसाधनम्, वेदाधिकारविचारः जन्मतो वर्णव्यवस्था कर्मतो वा, त्रैवर्णिकस्य वेदाधिकारः, शूद्रस्य वेदाध्ययने निष्प्रयोजनाशक्यत्वे, त्रैवर्णिकस्यापि वेदानध्ययने प्रत्यवायः, शूद्रस्य वेदाध्ययने भूयान् प्रयासः फले चाविशेषः, वेदाक्षरग्रहणे कीदृशोऽयं यत्नः, वेदाध्ययनस्य दुष्करत्वम्, वेदाध्ययनमन्तरापि पुराणेतिहासाभ्यां तत्प्रयोजनसिद्धिः, वैदेशिकेष्वपि वास्तां चातुर्वर्ण्यम्, भारतीयसंस्कृतेः प्रचाराय वैदेशिका अपि वेदानध्यापनीयाः ? चरित्रशिक्षणमपेक्षितम्, न तु वेदाध्ययनम्, भारतीयसंस्कृतेराचारप्रधानत्वम्, आचारे प्रतिष्ठितैर्वर्णपरीक्षा, तां कृत्वा वैदेशिका अपि त्रैवर्णिका वेदानध्यापनीयाः, आचारप्रतिष्ठानन्तरं वेदप्रचारे कृते विदेशेषु भारतीयसंस्कृतिर्बद्धमूला स्यात्, भारतीयानामार्याणामशाश्वतेऽनास्था, को वेदाधिकारी ? इत्यस्योपसंहारः, श्रोतृजनं प्रति कृतज्ञताप्रकाशः, कृतिसमर्पणम् । १०३—१२४

## ५. रसकल्पतरुः

(२७० श्लोकात्मकः प्रबन्धः)

**प्रथमो विटपः**—रसस्वरूपनिरूपणम् । **द्वितीयो विटपः**–विभावविचारः-श्रीराधा, श्रीश्यामसुन्दरः । **तृतीयो विटपः**–श्रीवृन्दावनम्, युगलकेलिः । **चतुर्थो विटपः**—व्यभिचारिविचारः । **पञ्चमो विटपः**–हितयोगः, हितस्य रसरूपता ।

१२५—१४६

## ६. हितकल्पतरुः

(११०८ श्लोकात्मकः अष्टादशाध्यायः, श्रीराधावल्लभीयसिद्धान्तकारिकापरपर्यायः) **प्रथमोऽध्यायः**-सम्प्रदायपदार्थः, प्रमाणनिर्धारणम्, **द्वितीयोऽध्यायः**—प्रमेयचिन्ता, **तृतीयोऽध्यायः**–हितस्य रसरूपता, **चतुर्थोऽध्यायः**–द्विदलसिद्धान्तः,

**पञ्चमोऽध्यायः**—विशुद्ध प्रेमस्वरूपम्, **षष्ठोऽध्यायः**—प्रेमनिरूपणम्, **सप्तमोऽध्यायः**—हितवृन्दावनम्, **अष्टमोऽध्यायः**—हितयुगलम्, **नवमोऽध्यायः**—युगलकेलिः, **दशमोऽध्यायः**—श्यामसुन्दरः, **एकादशोऽध्यायः**—श्रीराधा, **द्वादशोऽध्यायः**—श्रीराधाचरणप्राधान्यम्, **त्रयोदशोऽध्यायः**—श्रीराधा, **चतुर्दशोऽध्यायः**—श्रीहितहरिवंशः, **पंचदशोऽध्यायः**,—उपासनामार्गः, **षोडशोऽध्यायः**—परिचर्या, **सप्तदशोऽध्यायः**—नामनिरूपणम्, **अष्टादशोऽध्यायः**—वाणीमाहात्म्यम् ।

## ७. संगीतवृन्दावनम्

(श्रीराधारससुधानिधिस्तवादिमत्रिंशश्छ्लोकव्याख्यात्मकं त्रिंशत्सर्गात्मकं महाकाव्यम्) **प्रथमः सर्गः**—अवतरणिका, यस्याः कदापीत्यादि। **द्वितीयः सर्गः**—ब्रह्मेश्वरेत्यादि **तृतीयः सर्गः**-यो ब्रह्मेत्यादि। **चतुर्थः सर्गः**—आधाय मूर्धनीत्यादि। **पंचमः सर्गः**—दिव्यप्रमोदेत्यादि। **षष्ठः सर्गः**—तन्नः प्रतिक्षणेत्यादि। **सप्तमः सर्गः**—यत्किङ्करीष्वित्यादि । **अष्टमः सर्गः**—वृन्दानीत्यादि । **नवमः सर्गः**—केनापीत्यादि। **दशमः सर्गः**—यत्पादपद्मेत्यादि । **एकादशः सर्गः**—उज्जृम्भमाणेत्यादि । **द्वादशः सर्गः**—वृन्दावनेत्यादि । **त्रयोदशः सर्गः**—राधाकरेत्यादि। **चतुर्दशः सर्गः**—कृष्णामृतमित्यादि। **पंचदशः सर्गः**—पादाङ्गुलीत्यादि। **षोडशः सर्गः**—उज्जागरमित्यादि **सप्तदशः सर्गः**—वैदग्ध्यसिन्धुरित्यादि **अष्टादशः सर्गः**—दृष्ट्वैवेत्यादि । **एकोनविंशतिः सर्गः**—श्रीराधिके। इत्यादि **विंशः सर्गः**—श्रीराधिके इत्यादि। **एकविंशः-सर्गः**—सत्प्रेमसिन्धिवत्यादि । **द्वाविंशः सर्गः**—सङ्केतकुञ्जेत्यादि । त्रयोविंशः । सर्गः—गत्वा कलिन्देत्यादि। **चतुर्विंशः सर्गः**—सत्प्रेमराशीत्यादि। **पंचविंशः सर्गः**—लावण्यसारेत्यादि। **षड्विंशः सर्गः**—चिन्तामणिरित्यादि। **सप्तविंशः सर्गः**—मञ्जुस्वभावेत्यादि। **अष्टविंशः सर्गः**—श्रीराधिकामित्यादि। **एकोनत्रिंशः सर्गः**—पीतारुणच्छवीत्यादि। त्रिंशः सर्गः—निर्मायेत्यादि। २२९—३४४

## ८. स्तुतिकादम्बरी

(विविधस्तोत्रसङ्ग्रहः)

भारतभूमिस्तोत्रम्- स्वतन्त्रभारतध्वजदण्डकम्। सरस्वतीस्तोत्रम्—तव नौमि सरस्वति पादयुगम्। शिवस्तोत्राणि—सोमनाथवन्दना। नटराजस्तवः। सोमनाथपुनः-प्रतिष्ठास्तोत्रम्। मोहमदमूलोन्मूलनस्तोत्रम् । श्रीसोमनाथपुनःप्रतिष्ठायां कुण्ड-

लिकाः । बुद्धमानसपूजा । बुद्धषट्पदी । बालकृष्णकेलिमुक्तकानि । निजेष्टमार्ग-षट्पदी । श्रीराधाचरणतलस्तोत्रम् । सुधानिधिस्तवस्तुतिकलापकम् । दैन्यषट्-पदी । कैङ्कर्याभिलाषकलापकम् । गायत्र्यर्थश्रीराधास्तोत्रम् । वृन्दावनम् । काचि-दुत्कण्ठा । कृपाकटाक्षस्तोत्रम् । राधामुकुन्दयुगलस्तोत्रम् । कृपाकटाक्षस्तोत्रम् । राधावल्लभपादपल्लवयुग्मकम् । जयतिजयतिविशेषकम् । श्रीराधिकाचरण-पङ्कजमञ्जुरेणुवन्दनम् । श्रीहरिवंशाष्टकम्—कदाचित्पन्थानं व्रजतु हरिवंशो मम दृशोः । वंश्यादिवन्दनम् । अश्वघाटीयुग्मकम् । वासुदेवस्य देवत्वम् । श्रीहरिवंशवाण्यष्टकम् । आत्मनिवेदनम् । जन्माद्यस्येत्यादिव्याख्यास्तोत्रम् । प्रातः स्मरणस्तोत्रम् । बालकृष्णकेलिकलापः ।

## ६. चरितकादम्बरी

(कतिपयचरितसङ्ग्रहः)

१. **श्रीहरिवंशचरितामृतम्** (सेवकवाण्याः संस्कृतपद्य-व्याख्या) यशोविलासो-नाम **प्रथमः सर्गः** । रसविलासो नाम **द्वितीयः सर्गः** २. **श्रीहरिवंशचरितामृतम्** (द्वितीयम्) **प्रथमः सर्गः** । **द्वितीयः सर्गः** । ३. मारुतिचरितम्—**प्रथमम्**—जननी जनयेद भक्तं शूरं दातारमात्मजम् । **द्वितीयम्**-उत्तिष्ठत जाग्रत प्राप्य वरान्निबोधत । **तृतीयम्**-यो यमिच्छति तस्य सः । **चतुर्थम्**—विद्या शास्त्रस्य शस्त्रस्य द्वे विद्ये प्रति-पत्तये । **पंचमम्**-ॐ नमः शिवाय । **षष्ठम्**—सत्संगतिः कथय किं न करोति पुंसाम् । **सप्तमम्**—रामनाम जपतां कुतो भयम् । **अष्टमम्**—अभेदः शिवरामयोः । ४. **श्रीमद्-दीनदयालुशर्मचरितम्**. (सर्गत्रयात्मकं खण्डकाव्यम्) आदिमं चरितम्, मध्यमं चरितम्, अन्तिमं चरितम् ५. **श्रीगांधिगरिमा**-अमृतस्य मृत्युः, श्रीगान्धिनं प्रति, भारतं प्रति, मानसं प्रति, हाहा महात्मा हतः । श्रीगान्धिविचारदोहनम्—सत्यं ब्रह्म । ६. **श्रीनेहरुचरितचर्चा**—श्रीमन्नेहरुचित्रपरिचयः, किं कम्प्रति ब्रूमहे, को भयस्यावकाशः, आजौ कुतः संशयः, नमः स्तान्नेतृजनगुरवे, उत्तराधिकारलेखः, काश्मीरिकं कुलम्, परहितमवधत्तां पञ्चशीलेन लोकः । ७. श्रीशास्त्रिचरित-चर्चा—अस्माकं नूतनः प्रधानमन्त्री भागवतः पुरुषः, अयं शास्त्री चिरं जीव्यात्, अर्जुनस्य प्रतिज्ञे द्वे, शास्त्री लालबहादुरो विजयताम् वास्तविको नेता साधा-रणः पुरुषः, रक्षाबन्धनकाले प्रधानमन्त्रिणः सन्देशः, जय भारत, शोकाश्रुविन्दवः । ३४५—३७७

## १०. व्याख्यानकादम्बरी

कालिदासस्य महिमा,—कालिदासजयन्तीभाषणम् (द्वितीयम्), स्फुटाः सिद्धान्ताः, रसोपास्तिः (समन्वयवादः), सूक्तिषट्कम्, युगरूपानुसारतः, संयोजकाभिभाषणम्, संस्कृतात्संस्कृतिर्नः, महर्घता, आचारविभ्रंशः, राजधानीस्थ-माध्यमिकविद्यालयेषु संस्कृतस्यानिवार्यत्वम्, प्रतिनिधिभाषणम्, निर्णायकभाषणम् । **वैदिकसाहित्यपरिचयः**—ऋग्वेदपरिचयः **प्रथमोऽध्यायः** । ऋक्संहिता-संस्कृतिसूत्रोच्चयो **द्वितीयोऽध्यायः** । वैदिकसंस्कृतिपरिचय**स्तृतीयोऽध्यायः** । यजुःसंहितासंस्कृतिसूत्रोच्चय**श्चतुर्थोऽध्यायः** । वेदानामपौरुषेयत्वं पञ्चमोऽध्यायः । ४८४—५३०

## ११ प्रशस्तिकादम्बरी

जगद्गुरुशङ्कराचार्यभगवत्पादप्रशास्तिः, मैथिलकोकिलविद्यापतिप्रशस्ति—पद्याष्टकम्, स्वामिश्रीहरिदासमहानुभावस्य प्रशस्तिः, अखिलभारतीयसंस्कृतसाहित्यसम्मेलनप्रशस्तिः, परिषत्प्रशस्तिः, अखिलभारतीयसंस्कृतभाषणप्रतियोगितासभाप्रशस्तिः, संस्कृतविद्यापीठेऽन्तर्व्यूहसमितिप्रशस्तिः, श्रीरामराज्यपरिषत्प्रशस्तिः, केन्द्रीयसंस्कृतमण्डलप्रशस्तिः, श्रीरूपकलाहरिनामसङ्कीर्तनसम्मेलन-प्रशस्तिः, संस्कृतविद्वत्सभाप्रशस्तिः, दरभङ्गानगरे वक्तृत्वस्पर्धासभाप्रशस्तिः, सभासदां प्रशस्तयः । ५३१—५४७

## १२. पूर्तिकादम्बरी

समस्यापूर्तयः स्वतन्त्रकविताश्च । ५४९—५६८



श्रीराधावल्लभो जयति ।

# गीतिकादम्बरी

## पात्रं कुरु मामाशु कृपे !

(१)

कुरु कलिनिधने वृन्दाविपिने कृतवसतिं मामाशु कृपे ।
वर्णयतु प्रिययशांसि वदनम् । चित्तं भवतु नामरतिसदनम् ।
अस्तु मनः स्मरणे मम लीनम् । इति सर्वं हरिवंशाधीनम् ।।कुरु०।।

प्रतिजीवं जीवनवत्प्रीतिः । भवतु निरूढा सकला रीतिः ।
श्रवणे काप्यभिनवा प्रतीतिः । कथने स्फुरतु च सरसा स्फीतिः ।।कुरु०।।

सुहृद्दुर्हृदौ समौ भवेताम् । मानविमानौ मनसोऽपेताम् ।
सुखे च दुःखे लाभे हानौ । पततु न चित्तं हर्षे म्लानौ ।।कुरु०।।

धर्मिजनानां भवतु स सङ्गः । वृद्धिमुखो यस्मिन् रसरङ्गः ।
दूरनिरस्तकलुषितानङ्गः । उदयतु चित्ते प्रेमाऽभङ्गः ।।कुरु०।।

पश्यन्तं मां नित्यविहारम् । पुलकितरोमाञ्चिततनुसारम् ।
आनन्दाश्रुकलाकुलनयनम् । स्वीकृतराधारसनिधिशयनम् ।।कुरु०।।

क्षणे रुदन्तं क्षणे हसन्तम् । आनन्दोद्रेकैर्विकसन्तम् ।
क्षणे क्षणे साकं विचरन्तम् । दर्शं दर्शं प्रेम भरन्तम् ।।कुरु०।।

क्षणे यशोऽभङ्गं गायन्तम् । नित्यकिशोरौ निध्यायन्तम् ।
पश्यन्तं त्वभिनवसुरतोत्थाम् । प्रातश्छविमथ धृतावहित्थाम् ।।कुरु०।।

तदपि न तृप्तं स्वं मन्वानम् । नयनयुगलममलं विदधानम् ।
कुञ्जरन्ध्रतो दृष्टद्वन्द्वम् । लब्धानिर्वचनीयानन्दम् ।।कुरु०।।

मनोऽतीत-सौभाग्यसगर्वम् । श्रीहरिवंशकृपाढ्यमखर्वम् ।
वर्द्धमान-नवनवानुरागम् । शिरसि दधानं सरसपरागम् ।।कुरु०।।

**पाहि मामाशु कृपे !**

( २ )

पाहि शरण्ये वृन्दारण्ये कृतवसतिं मामाशु कृपे !

जगदिदमस्ति विलोकितमखिलम् । श्रीहरिभक्तिधरं तन्निखिलम् ।
मामिव तत्र न कश्चिदनीतिम् । पश्याम्येष सकपटप्रीतिम् ।।पाहि०।।

कृत्वा गुप्तप्रीतेर्भङ्गम् । प्रकटप्रीतिमहो प्रत्यङ्गम् ।
लोकसमक्षं कृतसत्सङ्गम् । यान्तं नान्तः कमपि च रङ्गम् ।।पाहि०।।

यशोगीतगानेषु रसालम् । घनतिलकेनालङ्कृतभालम् ।
अभिनयनिपुणं विनैव भावम् । प्रकटितविकटोत्कटबहुहावम् ।।पाहि०।।

गायन्तं नृत्यन्तं चालम् । प्रीतिं विना त्वननुगततालम् ।
मनसि वयन्तं तं समकालम् । निजबन्धाय महाभवजालम् ।।पाहि।।

स्वीयं सौभाग्यं मन्वानम् । रागमननुरागं तन्वानम् ।
किन्तु विचारे कृते निदानम् । जानन्तं तदभाग्यनिधानम् ।।पाहि०।।

अपि च पठन्तं वेदपुराणम् । प्रीतिमन्तरा ददतं दानम् ।
नावमानलवमपि सहमानम् । अभिमानेन च विद्धममानम् ।।पाहि०।।

अनुपममेकं दर्शनभक्तम् । अरुचिररूपं न ह्यनुरक्तम् ।
भवगहने पर्यटतां भूपम् । अधिगतघोरतर-भ्रमरूपम् ।।पाहि०।।

अधिकसुन्दरं परं प्रवीणम् । प्रीतिमन्तराऽशुभमपि लीनम् ।
सकलकलुष-कलितान्तरधीनम् । भान्तमदीनमपि स्फुटदीनम् ।।पाहि०।।

अस्मिन् गुणमानिनि संसारे । अनधिगतप्रेमाद्‌भुतसारे ।
शिरसि धृताधिकगुणगणभारम् । गन्तुमशक्तं कथमपि पारम् ।।पाहि०।।

**भज हरिवंशम्—**

( ३ )

भज हरिवंशं, भज हरिवंशं, हरिवंशं भज साधुमते !

एकं चित्तं वित्तमनेकम् । विन्दतु कथमिति धेहि विवेकम् ।
गीतं पिङ्गलया स्मर गीतम् । नक्तं कथमिदमीयमतीतम् ।
भज हरिवंशं, भज हरिवंशं, हरिवंशं भज साधुमते ।

तुरगद्वयमारुह्य तुरङ्गी । भवति कदाचन किमु सुखसङ्गी ।
को नयते गणिकासुतमङ्कम् । नैकजनकता-जनितकलङ्कम् ।
भज हरिवंशं, भज हरिवंशं, हरिवंशं भज साधुमते ।

त्रिभुवनमध्ये यद्यदुदीर्णम् । तत्किल कालव्यालनिगीर्णम् ।
इति कलयन् वलयान्तःकरणम् । श्रय हे श्यामश्यामाचरणम् ।
भज हरिवंशं, भज हरिवंशं, हरिवंशं भज साधुमते ।

सखिगे सूर्ये व्ययगे सोमे । हानिस्थलकृतवासे भौमे ।
बुधे विरुद्धे गुरौ च वङ्के । मा कुरु चिन्तां मनसि विशङ्के ।
भज हरिवंशं, भज हरिवंशं, हरिवंशं भज साधुमते ।

राज्यगते शुक्रे, शनिकेत्वोः । लग्नगयोर्विदितक्षतिहेत्वोः ।
मृत्युगते राहौ पुनरेभ्यः । त्यक्त्वा शङ्कां ग्रहरङ्केभ्यः ।
भज हरिवंशं, भज हरिवंशं, हरिवंशं भज साधुमते ।

रविमथ दशमे विधुमपि लग्ने । भौमबुधौ स्थाने शिवमग्ने ।
वीक्ष्य सुरासुरगुरू च नवमे । स्वं वद पङ्के पतितमनवमे ।
भज हरिवंशं, भज हरिवंशं, हरिवंशं भज साधुमते ।

लाभगते वा बन्धुगते वा । सूर्यसुते रिपुगेहगते वा ।
राहुसखे केतौ च तृतीये । स्वं लक्षय गर्ते पापीये ।
भज हरिवंशं, भज हरिवंशं, हरिवंशं भज साधुमते !

**'सुभगसुन्दरी'**

( ४ )

एकसुन्दरीं सुभगजनीषु ।
व्रजनवतरुणिकदम्बमुकुटमणिरिति सुन्दरतासीमाम् ।
व्रजनवतरुणिकदम्ब-नागरी-दर्शन-विनतग्रीवाम् ।
लक्ष्मीकोटिविलक्ष्यसुलक्षणलसितकिशोरीराध्याम् ।
चित्रकामिनीकुलमणिकमलाकोटिकामनासाध्याम् ।

नवरत्नं च - पुरन्ध्रिजन-चूडाभरणविराजि ।
कथयन्ति श्रीराधिकेतीष्टमभीष्टं भ्राजि ॥

**'सहजं शृङ्गारकम्'**

( ५ )

सहजं शृङ्गारकं दधाति ।
नखकिरणेन विनिर्जितभास्वत्तारावलिविधुपूषा ।
काञ्चनकान्तिसकलतनुरिति नापेक्षितनानाभूषा ॥
अधरमनालक्तकरक्तं दृगनञ्जनरञ्जनतान्ता ।
इत्थं या षोडशशृङ्गारानङ्गीकृताऽपि कान्ता ॥

यामविभूषणभूषितां व्रजगौरीं गायन्ति ।
गायन्तः श्रीराधिकेतीष्टं तामुपयन्ति ॥

**'सहजा शोभा'**

( ६ )

प्रत्यङ्गं सहजा शोभास्ति ।
यत्र विसर्जनमर्हति कोटिः कोटिचन्द्रिकाराशिः ।
छविरुपस्थिता बद्धकराञ्जलिरिच्छति किमपि शुभाशिः ॥
कुरुते सकलगुणावलिरनिशं चामरचालनसेवाम् ।
तामखिलावयवेषु सपर्यास्पदमद्भुतपतिदेवाम् ॥

यस्या लुठति सुकोमले, पदे रतिः शरणाय ।
इष्टं किं श्रीराधिकां, तां कलयाम विहाय ॥

## 'सहजं रूपम्'

( ७ )

एकं सहजं रूपं भाति ।

शतशरदिन्दुवृन्दतोऽप्युज्ज्वलमेतत्किमपि यदीयम् ।
हरति हठादिव हृदयं सहृदयरसिकमौलिरत्नीयम् ।।

मुद्रा काचन मुद्रितकाञ्चनचम्पककथाऽङ्गकानान् ।
अहो विलुण्ठति यत्र विलोचनयुगलं सुभावुकानाम् ।

चटुलितचपलसुनागरान्तःकरणं सहसैव ।
सम्मान्या श्रीराधिकाऽस्माकमिहेष्टं सैव ।।

## 'श्रीवृषभानुनन्दिनी'

( ८ )

सेयं वृषभानुजा विभाति ।

अहह, विविधसम्बन्धबन्धुरं पुत्रादिकमपि मुक्त्वा ।
भुक्तिमुक्तिकुलटे विहिताञ्जलिपुटे नेति नेत्युक्त्वा ।।

किमिति रसज्ञः सज्यति राधारससिन्धौ सविवेकम् ।
किमिति च हृदयेऽनुभवति कञ्चन सुधारसौघोद्रेकम् ।।

राजकुमारी, लाडिला, लाडग्रहिलेत्यादि ।
भजति मनः श्रीराधिकां, तां सन्ततमविषादि ।।

## सहजानन्दकादम्बिनी

( ९ )

सहजानन्दं वर्षति साथ ।

उद्यतते, नायस्यति, पश्यति, यमियं करुणादृष्टिः ।
यो वान्तर्ध्यायति तां, तं प्रति भवति सुधारसवृष्टिः ।।

स्वयमपि सेयं सान्द्रानन्दामृतपरिपूर्णः सिन्धुः ।
स्वयमपि चेयं तं हर्षयितुं समुदयते नव इन्दुः ।।

स्वयमपि चेयं वृष्टये, भवति मेघमालेव ।
स्वयमपि च श्रीराधिका सेयं नवतडिदेव ।।

**'सहजविपिनवर उदितचन्द्रिका'**

( १० )

वरवनचन्द्रचन्द्रिका सैव ।
प्रेमसुधाज्योतिःपरिपूर्णं कर्तुमिदं ब्रह्माण्डम् ।
राकानेकविचित्रचन्द्र उदयति यदि भुवि रसभाण्डम् ।।
तदपि न यस्या वदनकेलिलेशस्मितलवतुलनीयम् ।
तादृशचन्द्रचन्द्रिकाकलिता वृन्दावनावनीयम् ।।
एवंविधबहुगुणनिकर-सुन्दरमन्दिरमत्र ।
प्रणमामः श्रीराधिकामिष्टं तत् सर्वत्र ।।

**सहजकेलिः**

( ११ )

अभिनवसहजकेलिरपि यत्र ।
सहजं मृदुवचनं मृदुहसनं मृदुचलनं मृदुवलनम् ।
नवलकेलिभिर्जनयति नवलं रङ्गं सुखमभिरमणम् ।।
अहह, महासुखतनुरिति कथितं धृतमधुरिम नवगात्रम् ।
इति निर्देशमात्रमुदितं किल न स्वरूपमितिमात्रम् ।।
ऋतस्वरूपं शक्यते केन तु कवयितुमत्र ।
यस्याः सा श्रीराधिकैवेष्टं नः सर्वत्र ।।

**त्रिभङ्गी मदनमोहनः**

( १२ )

मोहन इह त्रिभङ्गी
मोहन इह मनसा वचसा वपुषा च जयति कन्दर्पम् ।
तेन त्रिविधं भङ्गमिहार्च्छति कमपि दधाति न दर्पम् ।।
अथवा मदनमोहनः सोऽयं स्वयमपि भवंस्त्रिभङ्गी ।
रूपौदार्यचातुरीमानसमोहन इति लसदङ्गी ।।
मोहनमदनद्वयेन कलितस्त्रिभिरङ्गैरिह भङ्गः ।
प्रथमस्तावत्कुटिलचरणकटिकण्ठो वक्रत्र्यङ्गः ।।
अपरो मनसा वचसा वपुषा मोहनलुण्ठितदर्पः ।
त्रिविधभङ्गकलनेनानङ्गो भवति भवे कन्दर्पः ।।१।।

रसिकजनानुपकुर्वाणोऽयं भवति नितान्तमुदारः ।
परमचातुरीपरिपूरितवचनोद्गतनवश्रृङ्गारः ॥

अद्भुतरूपमाधुरीधिक्कृतकोटिसुधाकरवृन्दः ।
विश्वमोहनं मदनमप्यहो मोहयते गोविन्दः ॥

मदनमोहनो मदनजैत्रमुनिमनोमोहनाटोपः ।
प्रकटसघनपरमानन्दो गुणगहनसमुद्रो गोपः ॥

इन्द्रिय-दिग्-वाणी-जल-पादप-किरण-कुलिश-भू-स्वर्गान् ।
छन्दांस्यथ सुरभीः परिपाति श्रीवनजान् खगवर्गान् ॥२॥

कुञ्जतरूनवतीति सुमण्डितवक्षःस्थलवनमालः ।
धातुविचित्रितपीताम्बर इति धृतवसुधावसुजालः ॥

कलकलरवैः किङ्किणीजनितैर्निगदितविविधच्छन्दः ।
नखमणिभिर्वज्राणि तरणिभिः किरणान् दधात्यमन्दः ॥

निजचरणेन भुवं सरसीरुहगणैर्जलं परिरक्षन् ।
बर्हिणादिविहगोत्करमवयन् शिरसि शिखण्डं वक्ष्यन् ॥

शब्द-स्पर्श-रूप-रस-गन्धैरिदमुत्थैर्लसदङ्गी ।
परिपालयति गवां परिवारं मोहन इह त्रिभङ्गी ॥३॥

कलितकिङ्किणीकलरवकल्पितनवलकुतूहलकर्णः ।
चरणसरोजमृदुलतरसुखदस्पर्शवशित्वक्पर्णः ॥

पीताम्बरतडिता वृतवारिदमेचकतनुहृतनेत्रः ।
नववनमालासुलभसुरभिभरसहसा नासाजैत्रः ॥

सर्वाङ्गीणममाधुरीपानामृतनिलीननयनान्तः ।
लीनरसनया रसितसुरसया परिपीतोऽप्यतिकान्तः ॥

इति सकलेन्द्रियतर्पणसुनिपुणगुणगणसुविलसदङ्गी ।
द्वादशगोपालो गोपालो मोहन इह त्रिभङ्गी ॥४॥

विजयपराजययोरिह नियमः कोऽपि न समरे रूढः ।
यथा स्वविक्रमतोषितरुद्रः पार्थो भुवि जयमूढः ॥

कलयतु तथा कदाचन मदनो मोहनतस्तं भङ्गम् ।
क्वचन पुनर्मोहनमपि मदनो रचयतु विकलत्र्यङ्गम् ॥

इति मदनादमनागधिकं तं प्रथयामोऽत्र नवीनम् ।
मुनिरंगी मनुते न मोहनस्तृणमपि तं स्मरदीनम् ॥

विदितं विदुषां यदिमं जनयति मनो मनोजव्याधिम् ।
इति मुनयो जित्वा मन एवाध्यासत कमपि समाधिम् ॥

तेषां तानि मनांसि नागरो रासविलासविशेषैः ।
तथा हरति यत्तेऽपि मोहनं वलयन्त्यालीवेषैः ॥५॥

आत्मारामाः कृतरतयोऽपि ब्रह्मानन्दस्वरूपे ।
नवशृङ्गारानन्दं रसयितुममिमंक्षन् रसकूपे ॥

इति रञ्जितमुनिमना मनागपि नास्य ददात्यवकाशम् ।
त्रिविधविजयभारेण त्र्यङ्गीभङ्गी कलयति रासम् ॥

मुनयो विरलविरलमप्रकटं प्रागविदन्नानन्दम् ।
अद्य तु सुघनं सुघटं प्रकटं ददृशुः परमानन्दम् ॥

अहह! न निर्गुण आनन्दस्तानलं बभूव विभवितुम् ।
इति ते गुणगम्भीरे सिन्धौ मग्ना रसमनुभवितुम् ॥६॥

अयमतिरम्यो मधुरः सकलैः सुलक्षणैः श्रितगात्रः ।
नवलकिशोरो वावदूकता—मूकित—सुवचनपात्रः ॥

सुधीः सुधीरोऽम्बुधिगम्भीरोऽप्रतिमः प्रतिभाशाली ।
इत्यादिः कलितापि न कलिता यस्य बुधैः सुगुणाली ॥

तस्मादपि गोपाल ईरितो गोपालनमतिमुग्धः ।
गोपायितगोपदप्रतिपादितवस्तुरसामृतदुग्धाः ॥

वृन्दावननाकं परिपालयतीति शिरोधृतमुकुटः ।
तस्य दिशः परिरक्षति मणिकुण्डलमण्डितश्रवणपुटः ॥७॥

## द्वयं प्रेमास्पदम्

( १३ )

भजे नवकुञ्जनिलयेऽहम्, सदा नवकेलिकलितेहम्, द्वयं प्रेमास्पदम् ।
जडीकृतदर्शिनीदेहम्, समेधितहर्षिणीस्नेहम्, द्वयं प्रेमास्पदम् ॥

निभृतनिकुञ्जे धृतकोरकपुञ्जे, नवनवपल्लवशोभानिर्जितगुञ्जे ।
तरुणकलकण्ठमिथुनाभम्, मधुरमनुगायदतिलाभम्, द्वयं प्रेमास्पदम् ॥

धीरसमीरे नवयमुनातीरे, मृदुमृदु गुञ्जन्मधुपे कूजत्कीरे ।
समदगजयुग्ममिव वन्यम्, चलन्मन्दं परं धन्यम्, द्वयं प्रेमास्पदम् ॥

वृन्दाविपिने विलसद्विशदम्, मुखरसखी तत्कलयति सुखदम् ।
सदा राधाहरी इति शम्, जपन्ती नाम तद्वरदम्, द्वयं प्रेमास्पदम् ॥

भजे नवकुञ्जनिलयेऽहम्, सदा नवकेलिकलितेहम्, द्वयं प्रेमास्पदम् ।
जडीकृतदर्शिनीदेहम्, समेधितहर्षिणीस्नेहम्, द्वयं प्रेमास्पदम् ॥

## किमिति न नृत्यसि

( १४ )

काले कोकिलवाचाले, गायति कलमालीजाले, पञ्चमावञ्चम् ।
वेणुं धमति च गोपाले, किमिति न नृत्यसि नवबाले, छम्छमाछम्छम् ।

मानिनी मानमन्द्रा, यामिनी स्मयमानचन्द्रा,
पद्मिनीनयने जलजे, मन्दमन्दं याति तन्द्रा ।
मृदुला शेफालीकलिका, फुल्लति तरुभाले । वेणुं धमति च गोपाले० ।

तारका तारतरला, मारे कासारे सरला,
वीचिरपि नीचानीचा, खेलति प्रेमभरला ।
खिद्यते चक्री चक्रो, मञ्जति शुचि ताले । वेणुं धमति च गोपाले० ।

कान्तचलचेतश्चोरी, वर्तते न च का किशोरी,
चन्द्रमाचामति का नो, सुधास्वादे ज्ञा चकोरी ।
त्वं न किं दयिते दयसे, शोभितवनमाले । वेणुं धमति च गोपाले० ॥

**अन्यां नलोके त्वादृशीम्**

( १५ )

राधे, त्वदीये पदकमले हृदयं मे रेवताम् ।
अन्यां न लोके त्वादृशीं, भुवि धन्यां देवताम् ॥

रूपं यदीयं पीयते, मधुवन्मधुद्विषा,
हरिणा हा, हरिणीभूयते, वागुरया यत्त्विषा ।
तां श्यामसुन्दरगेहिनीं, त्वामेवासेवताम् । अन्यां न० ।

यां वा प्रसादयंश्चिरं, देवोऽप्यानन्दते,
ब्रह्मेश्वरादिवन्दितो, वन्दी वा वन्दते ।
आपित्सु तां, लुठत्सतां, पदयोर्नो देवताम् । अन्यां न० ।

प्रेमैकसारं यां विना संसारो नीरसः,
यस्या न धामनि वर्तते कामः कुम्भीनसः ।
तामन्तरा गवेषयत्, कतमां वा गेवताम् । अन्यां न० ॥

**कायेन वाचा च मनसा श्रये**

( १६ )

कायेन वाचा, च मनसा श्रये, कुञ्जदेवीमवाचा ।
श्यामेन साकं निकुञ्जालये, कुञ्जदेवीमवाचा ।कायेन वाचा० ।

वृन्दावने यत्र कुत्रापि कुञ्जे,
या राजते फुल्लपुष्पालिपुञ्जे,
तां सुन्दरीमेव मनसा श्रये, कुञ्जदेवीमवाचा । कायेन वाचा० ।

ध्यायामि तामेव युगलात्मनाऽहम्,
नायामि तं भूरि भवदावदाहम्
गायामि कारुण्यसाराश्रये, कुञ्जदेवीमवाचा । कायेन वाचा ।

यमुनाजले श्रीमता तेन सार्धम्,
केलिं करोतीह या वासरार्धम् ।
शेषं दिनं केलिकुञ्जालये, कुञ्जदेवीमवाचा । कायेन वाचा० ॥

## सदा सौदामिनीं वन्दे

( १७ )

ललितवृन्दावनाकाशे, प्रकाशामेव निर्द्वन्द्वे ।
कलितकादम्बिनीक्रोडे, सदा सौदामिनीं वन्दे ।

परं प्रेमाङ्कुरं मधुरैः, स्वरैरपि रोपयन्तीं तम् ।
सकलगोकुलपुरन्ध्रीणां, शिलीन्ध्राणां हृदयकन्दे ।

कथाराधाङ्कचित्राणां, खगानां का विचित्राणाम् ।
पवित्राणां च हंसानां, हरन्तीं स्वान्तमानन्दे ।।

तृषातुरचातकीनेत्रे, तपाकुल-भारतीक्षेत्रे ।
नवलताया 'भ्रमरवेत्रे', बलं वलयन्तिकां मन्दे ।।

## भज राधिकाम्

( १८ )

भज राधिकां करुणाधिकां, करुणाधिकान्ताम्,
नवकुञ्जमञ्जुगेहिनीं, भवबाधिकां ताम् । भज राधिकां० ।

श्रीनन्दनन्दन–वन्दनैरनुकूल–चेतसम्,
अनुकूलवेतसं यथा, नतिसाधिकां ताम् । भज राधिकां० ।

वृन्दावनप्रदायिनीं निजकैङ्करीकृताम्,
निजकैङ्करीकृतार्थिताखिलनाधिकां ताम् । भजराधिकां० ।

पूर्णाराग - सिन्धुमिन्दु - सुन्दराननाम्,
स्वदराननाम्बुजस्मितैरगाधिकां ताम् । भज राधिकां ।।

## स्वागतगीतम्

( १९ )

गायामः स्वागतगीतम् ।
त्वं कुरु केशव, वेणुरवम् । गायामः स्वगतगीतम् ।
असि भवकर्मसु साक्षी त्वम्, निजजनमहिमाकाङ्क्षी त्वम् ।
विरुदमिमं कुरु देव नवम् । गायामः स्वागतगीतम् ।

त्वमसि विभो, अन्तर्यामी, स्थावरजङ्गमयोः स्वामी,
कलय जने करुणैकलवम् । गायामः स्वागतगीतम् ।।

## निनादय वेणुम्

( २० )

निनादय वेणुं तावदये घनश्याम !
सरिगमपधनिमयं नियमं सर, स्मर हृदये मृदु साम । निनादय० ।
यावदहं रचये चरणौ ते, मणिमयनूपुरधाम ।
कटितटमपि कलये किङ्किणिकाकल्पितरशनादाम । निनादय० ।
प्रतिमणिपूरं सकनकवलयं, वलये कुवलयवाम !
धृतकेयूरौ विदधे बाहू, यावदहं जितकाम । निनादय० ।
कम्बुमनोहरकण्ठमिमं तव, यावदये शुभनाम !
मुक्ताहारैरतिशयशोभाशालिनमिह विदधाम । निनादय० ।
मलयजतिलकालङ्कृतमलिकं यावदिदं प्रणयाम ।
अमरचन्द्रकविमन्द्रभावमयकवितालतिललाम ! निनादय० ॥

## हृदयेन शून्येन जीवामि

( २१ )

विरहानलेनालि, असहेन दह्ये ।
व्रजतो गते प्राणनाथे तु हृदयेन, शून्येन जीवामि । असहेन० । विरहानले० ।
विषमं विषं किन्तु पीत्वा म्रियेताथ, दावानलं प्राप्य । ,, । ,, ।
यमुनाजले किन्तु तत्कान्तिसाम्येन, काम्ये निमज्जेय । ,, । ,, ।
गले पाशदानेन वा प्राणहानेन, शान्तिं समेप्यामि । ,, । ,, ।
अमीरेन्दुना वन्दितस्य प्रियस्याथ, देशेऽत्रपा यामि । ,, । ,, ॥

## प्रियं तं दिदृक्षुः

( २२ )

वियोगानलेनालि, असहेन दह्ये ।
व्रजतो गते प्राणनाथे तु हृदयेन, विश्लेषदुःखे श्वसन्ती न सह्ये । वियो० ।
विषमं विषं किन्तु पीत्वा म्रियेयाथ, नीत्वा तनं दाववह्नावसह्ये । वियो० ।
गले पाशदानेन वाऽसून् विहाय, व्रजन्ती समीरैस्तदङ्गेषु नह्ये । वियो० ।
निमग्ना भवेयं नु किं यामुनेऽस्मिन्, तदीयाङ्गकान्त्या जले दुर्विरह्ये ।वियो०
अमीरेन्दुना वन्दितं वा प्रियन्तं, दिदक्षुस्त्रपाद्यैर्गुणैर्नो निगृह्ये ॥वियो०॥

## श्रयते मनो वृषभानुसन्ततिम्

( २३ )

श्रयते जनो भवखण्डने, शशिमण्डने रतिम् ।
श्रयते परन्तु मे मनो, वृषभानुसन्ततिम् ।।

यस्याः पदारविन्दयो, र्बहु-काकु-चाटुभिः,
कुरुते स नन्दनन्दनोऽपि सर्वदा नतिम् । श्रयते० ।

मा भून्ममापवर्ग एव, स्वर्ग एव वा,
नमितुं परत्र मस्तकं कलयामि नो मतिम् । श्रयते ० ।

वटपत्तने, दिल्लीपुरे, वपुषैव संवसन्,
वृन्दावनेऽभिरोचये सरसां हृदा वसतिम् । श्रयते० ।

शशिमण्डनेन मे स्वयं वृन्दावनीयपथः,
सन्दर्शितोऽथ हृतं मनो भजतेऽपरां न गतिम् । श्रयते० ।।

## राधा हरेत मम बाधान्

( २४ )

जल्पेत किं, कथमजल्पेन ना पदमनल्पेहितं विवृणुताम्,
कल्पेत कल्पतरुरल्पेऽपि किं क्वचन तल्पे स्थितं कुशले ।
मन्दारतां श्रयति मन्दार इत्यहह वन्दारवे प्रियतमा,
नन्दात्मजाय सुखकन्दायते जगति मन्दायतेऽन्यदखिलम् ।।१।।
छायापि यस्य किल मायाभिधा जगति जाया सती विहरति ।
कायाधवावितुरनायासमस्य किल सायासमुन्निमिषतः ।
आधार एक इह मा धावतात्परमगाधारसामृतझरी,
राधा हरेत मम बाधानशेषभवसाधारणाननुदिनम् ।।२।।

## देव ! वन्दामहे !

( २५ )

अम्बुदश्यामलं,त्वां परं निर्मलं, देव, वन्दामहे ।
मञ्जुकुञ्जेषु वृन्दावने राजसे, प्रेम्णि चागाधया राधया भ्राजसे ।
तत्र मोदास्पदं, किङ्करीणां पदं, नाथ विन्दामहे । देव,वन्दामहे ।अम्बुद०।
गोकुले त्वं यशोदाहृदा पाल्यसे, किञ्च नन्दोपनन्दादिभिर्लाल्यसे ।
तत्र भूत्वा द्रुतं, तत्सवयसोऽद्भुतं, बालमीडामहे । देव,वन्दामहे ।अम्बुद०।

नन्दवासे च गोपीभिराराध्यसे, प्रेमरज्ज्वा निबध्येव संसाध्यसे ।
तत्र लब्ध्वा वयं, वर्ष्म गोपीमयं, त्वां मुदोपास्महे । देव,वन्दामहे ।अम्बुद०।

सापि मथुरापुरी, यत्र विरहातुरी-भूतकुब्जातनौ ते श्रुता चातुरी ।
तत्र मल्लैः समं, युद्धतस्ते श्रमं, हर्तुमेधामहे । देव,वन्दामहे ।अम्बुद०।

घातयन्तं कुरुक्षेत्रमध्ये गुरु-द्रोणभीष्मादिकौरव्यसैन्यं पुरु ।
पा ˊवत्सम्मुखीकृत्य नित्यं सखीकर्तुमाशास्महे । देव वन्दामहे । अम्बुद।

द्वारिकायां परावारिकायां परा, प्रेयसी का न ते श्रूयते श्रीतरा ।
तत्र ते चारुकं, सेवकं दारुकं, नाम सेवामहे । देव, वन्दामहे ।अम्बुद०।

## श्रीमतां स्वागतम्

( २६ )

पूर्वपुण्यार्जितम्, भूरिभाग्यानतम्,
भारती श्रीमताम्, गायति स्वागतम् ।
शिष्यदेयागमैर्विश्वधेयानमैः क्षीरनीरावभेदाय हंसोपमैः ।
पण्डितैर्मण्डितं सर्वथाऽखण्डितं, धन्यधन्यं भवद्भिः श्रिता भारतम् ।पूर्वपुण्या०
भावुकैर्भावितम्, साधुभिः पावितम्, कान्तकाव्यात् स्रवद्भी रसैः प्लावितम् ।
अद्य वटपत्तनं वन्द्यविद्वज्जनं, संश्रितेदं भवद्दर्शनेनोन्नतम् ।।पूर्वपुण्या०।
अद्य निस्तामसे, निर्गलद्राजसे, नैकभावोदयात् सात्त्विके मानसे ।
राजमानाऽनिशं, दर्शयन्ती दिशम्,प्रस्तुवन्ती भवद्गौरवं सन्ततम् ।पूर्वपुण्या०।।
आप्तकद्वदनिराकारिगद्गदगिरा, प्राप्तविद्वत्सभामण्डपाग्राजिरा ।
वर्ष्म रोमाञ्चितं स्वेदकणलाञ्छितम्, बिभ्रती, वाञ्छितं, ते च साऽनारतम् ।
पूर्वपुण्यार्जितम्, भूरिभाग्यानतम्, भारती श्रीमताम्, गायति स्वागतम् ।।

## स्वागतगीतम्

( २७ )

ध्यायति मञ्जुलमङ्गलमूर्तिम्, गायति हृदयमुदारम्, स्वागतगीतम् ।
मनुते काममपि जीवनमूर्तिम्, तनुते रुचिसम्भारम् ।
वनुते नवलभावनास्फूर्तिम्, सनुते गौरवसारम् । गायति गीतम्, ध्यायति० ।
किमपि किमपि तरलीभवतीदम्, सरलीभवति निकामम् ।
द्रवति च नारेश्वरतारेश्वर, शशिमणिसममविरामम् ।
स्रवति सुरसमविगीतम्, गायति गीतम् । ध्यायति० ।
चरणकमलरजसां कणिकाभी, रञ्जितमञ्जितसत्त्वम् ।
निर्द्वन्द्वं स्वच्छन्दं परिगत—परमानन्दसतत्त्वम् ।
त्रिगुणकलापमतीतम्, गायति गीतम् । ध्यायति० ।
मन्दं मन्दं न्यस्यतु चरणम्, न्यस्यतु मन्दं मन्दम् ।
वन्दं वन्दं पश्यतु तमिदम्, पश्यतु वन्दं वन्दम् ।
तेजस्वि भवतु तदधीतम्, गायति गीतम् । ध्यायति० ॥

## तव नौमि सरस्वति पादयुगम्

( २८ )

नवरात्रभवैर्ग्रथितानि यवैः प्रणिपातपरैर्नमितानि सुरैः ।
अलिकानि वदद्यवरेखमिदं तव नौमि सरस्वति पादतलम् ॥

अधिगन्तुमथो नु सुधां मधुरां, स्वकलङ्कमुदङ्कयितुं परम् ।
शरणागतमूचिवदेव विधुं, तव नौमि सरस्वतिपादतलम् ॥

कृतमङ्कुशतैर्नितरां निशितैर्यदि वाचि वसेर्हृदि वा विलसेः ।
इति विष्णुसमर्पितचक्रमिदं, तव नौमि सरस्वति पादतलम् ॥

इह ये निरताः किल ते विरताः, जहतीह मुदोऽपि मया वितताः ।
इति कल्पलता यदुपायदिदं, तव नौमि सरस्वति पादतलम् ॥

इदमाश्रयतां पुरतो विदुषां न सुराजपदं विजहाति मदम् ।
इति संश्रितमङ्कुशधा हरिणा, तव नौमि सरस्वति, पादतलम् ॥

## नमनीया संस्कृतवाणी

( २९ )

नमनीया संस्कृतवाणी, यत्र धृता सकला धरणी ।

आवर्जितहरिहरदेवा, विधिसमुपार्जितबहुसेवा,
ऋषिषु विवेकाविष्करणी, रमणीया संस्कृतवाणी । नमनीया० ।

प्राचेतसचेतसि रुचिता, द्वैपायनगायननिचिता,
सुकविमनोविवशीकरणी, कमनीया संस्कृतवाणी । कमनीया० ।

नहि केवलभारतदेशे, अपि तु पराच्यपि परदेशे,
याऽभिमता भाषाजननी, गमनीया संस्कृतवाणी । गमनीया० ।

भारतसंस्कृतिजीवातुम्, को नहि तामिच्छति गातुम्,
जयतितमां या भवहरणी । चमनीया संस्कृतवाणी । नमनीया० ।

## जगति विजयते संस्कृतभाषा

( ३० )

जगति विजयते संस्कृतभाषा । परिपूरित-नग-जगदभिलाषा ।।

या सकलानामपि विकलानां प्रथितबलानामपि नवलानाम् ।
नियतानामपि चलाचलानां भाषाणां कलयत्यभिलाषाः ।जगति०।

या विरञ्चिविरचितवरिवस्या, फलिता मुनिजनतीव्रतपस्या ।
दर्शनदर्शितविषमसमस्या, कविकल्पितनवरसपरिभाषा । ।जगति०।

इह विज्ञानघनस्य स्पष्टिः, चतुरधिकेह कलानां षष्टिः ।
इयं सनातनसंस्कृतियष्टिः, स्वतःप्रकाशा, विधुतविनाशा ।जगति०।

..त्रजातोऽपि शिशुः पठतीमाम्, अम्ना, अम्ना, इति मृदु रटतीमाम् ।
वेद न कश्चन यद् गुणसीमाम्, इति चकिता मतिरिह तृणपाशा ।जगति०।



## गुरुवन्दना

( ३१ )

वन्दे श्री गुरुचरणमुदारम् ।
निगमागमपुराणपरिवेदित-दिव्य-कृपाघनसारम् ।।वन्दे०।।

यद्रजसः कणिका किल रजसो हरति समस्तविकारम् ।
सरति च यन्नखकिरणे, नश्यति तिमिरमनन्तविसारम् ।।वन्दे०।।

सत्त्वं विकसति, तत्त्वं विलसति, गलति ममत्वमसारम् ।
खेलति भगवच्चरणसरोजे, मधुपीभूतहृदारम् ।।वन्दे०।।

हरिरिह वितरति सम्पदतिशयं, गुरुरथ वितरति तारम् ।
हरिमिति 'कविरमरेन्दु' रुदीक्षे, गुरुमहिमाब्धिमपारम् ।
वन्दे श्रीगुरुचरणमुदारम् ।।

## 'सन्त'वन्दना

( ३२ )

वन्दे सन्तं सत्यानन्दम् ।
निगमागम-पुराण-रामायण-भारत-सार-निबन्धम् । वन्दे० ।

राम-नाम-रस-रसिक-शिरोमणिमधिक-मधुर-सुख-कन्दम् ।
साधन-पथ-पथिकालि-सार्थवहमपहृत-निखिल-द्वन्द्वम् । वन्दे० ।

सर्व-धर्म-समभाव-भरितमपि हिन्दू-धर्मममन्दम् ।
पाययितुं जनतामिच्छन्तं निगमाम्बुज-मकरन्दम् । वन्दे० ।

शरदां नवनवतिं जीवित्वा वर्षित-विनयानन्दम् ।
विविध-विचार-भेद-भिन्नैरपि जनैर्विहितनतिवन्दम् । वन्दे० ।

## कविवन्दना

( ३३ )

धन्यतमो दिवसोऽयमहो, यदसौ सुकवीनभिनन्दयते ।
शास्त्रगतेस्तु कथापि वृथा, वपुषेव गिरा मनसापि लघोः,
निजमुग्धतयान्धितयाऽद्य धिया, कविमौलिमणीनभिवन्दयते ।यदसौ०।

भावुकवृन्दममन्दगुणं, गुणगौरवगर्भितबोधघणं,
अविचारसुचारुभिरस्य मुधा-रचनैर्वचनैरपि चन्दयते ।यदसौ०।

कोऽपि कवालिकया कवयेदिह कोऽपि कविर्गजलं रचयेत्,
उभयेन च कोऽपि समारभतामिति मद्वदनेन निवेदयते ।यदसौ०।

छन्द इहाक्रमतां मन्दं, सकलं किल सौरगवीषु गतम् ।
इति तस्य कृते समयं यमयन्, मयका सुधियः परिवेषयते ।यदसौ०।

भूरितमं सौभाग्यमिदं, यदिमे श्रीमन्तो मान्यबुधाः ।
उररीकृतवन्तः प्रमुखपदं, तदिदं परमोत्सवमाभजते ।।यदसौ०।३२।

## भारतभूमिवन्दना

( ३४ )

अयि भारतीयवसुन्धरे महिमा तवातिमहान् ।
महिमा तवातिमहानहो, गरिमा तवातिमहान् ।

अयि पूर्वपश्चिमदक्षिणैर्मकरालयैर्वलिते,
भुवि शत्रुभिर्न कदाप्यहो मनसापि सङ्कलिते ।
अयमुत्तरेण विराजते, महिमालयो हिमवान् ।महिमा०।

प्रभवन्त्यमी तव रेणवोऽप्यवितुं त्वदीयतनूं,
जनयन्ति ते त्रसरेणवो बलशालिनो ह्यतनून् ।
तव सङ्कटेषु समेत्यहो, त्वरितः स्वयं भगवान् ।महिमा०।

निगमागमादिजुषामथो सदसद्विवेकपुषाम्,
जननीतिदोषमुषामहो जननीं परं विदुषाम् ।
भवतीं निषेवितवान् प्रभुर्न कदा स तत्रभवान् ।महिमा०।

कलया बलातिबलाद्यया, बहुशिल्पकल्पनया,
विधया कयासि न वर्धिता, किमनल्पजल्पनया ।
त्वमसि त्वमेव गुणप्रसूरिति भाषतां मतिमान् ।
अयि भारतीयवसुन्धरे, महिमा तवातिमहान् ।
महिमा तवातिमहानहो, गरिमा तवातिमहान् ।।३३।।

## परिहर भारत ! खेदशतानि

( ३५ )

परिहर भारत, खेदशतानि ।
निबिडपराधीनतया त्वभवन्, यानि रुचिररुचिहानि ।
अधुना संस्कृतवचनं विरचय, मा चिनु कटुरटितानि ।।
दैन्यं जहि विजहीहि पराश्रयमयि मा वद करुणानि ।
पुनरपि दिक्षु तनुष्व विलक्षण ! निजतेजांस्यरुणानि ।।
ऋषिऋणमथ संस्मर भर हृदये निगमागमपठितानि ।
अमरचन्द्रकवि-मन्द्रभावमय-कवितास्वपि खचितानि ।।

## शीलय शीलमुदारम्

( ३६ )

भारत, शीलय शीलमुदारम् ।
नाद्य रसातलतलमुत्तालय, भालय हिमगिरिभालम् ।। भारत० ।।
मास्म गवेषय राकारजनिषु, तिमिरं कलुषाकारम् ।
अयि कलयस्व कुहूष्वपि गगनं, हसदुज्ज्वलतरतारम् ।। भारत० ।।
ज्वलति ज्वलने मा क्षिप निजजननिन्दनमिन्धनभारम् ।
परगुणकथनामृतमभिवर्षय, हर्षय किल संसारम् ।। भारत० ।।
असुरतयोपहृतं मधु मा धय, बाधयदुचितविचारम् ।
दैविकसम्पदुपायनमुपनय, सद्गुणमणिनवहारम् ।। भारत० ।।

## परिहर परमनुसरणम्

( ३७ )

भारत, परिहर परमनुसरणम् ।
परवशतापञ्जरमतिजर्जरमयि वर्जय सुखहरणम् ॥ भारत० ॥

श्रुतिपुटकटु न घटय पटु रटितं, तव सन्ततमपकरणम् ।
विरचय वचनं मञ्जुलरचनं, नवरस-नवमधुझरणम् ॥ भारत० ॥

भाषावेषविषयकं कामय, भारतीयताश्रयणम् ।
भविता भव्यभावविषयकमपि, शनैः शनैर्हृद्ग्यनम् ॥भारत०॥

गुणग्रहणमिह वरमिति सम्प्रति, साम्प्रतमतिमतिमननम् ।
परमिह निजगुणपरिहरणेन न, सफलीभवति तु जननम् ॥भारत०॥

## विलपति करुणम्

( ३८ )

हर्षविशाले काले स्ववशं याता, विलपति करुणं भारतमाता ।

बन्धनमिह मम येन निरस्तम्, तं न विलोके हा ! गतमस्तम् ।
शृङ्खलजाता अङ्का अपि न निखाता, हन्त! हतो नवजीवनदाता ।हर्ष०।

इदमिह फलितं दिशि दिशि दुरितम्, जगदिह कलये, तापनिपतितम् ।
तदपि न शान्तं पापं, विरमत ताताः, को न्विह भविता भवतां त्राता ।हर्ष०।

पश्यत वत्सा, आत्मचरित्रम्, कुरुते यन्मम, वपुरपवित्रम् ।
निन्दथ चिन्ताव्यग्रानयि हितघाताः, कथयथ को नहि भवतां भ्राता ।हर्ष०।

अधना विजनाः क्षुधिता नग्नाः, कति न सुता मम जाग्रति भग्नाः ।
सन्त्यपरे हा संचित-दुरितव्राता, हरहर ! शरणं भुवनविधाता ।हर्ष०।२७।

## नमः स्तान्नेतृजनगुरवे

( ३९ )

नमः स्तान्नेतृजनगुरवे, जवाहरलालनेहरवे ।

स्वदेशस्याङ्गमङ्गं ते, समानं प्रेम यद् भजते ।
तदेतां ब्रह्मऋषितां ते, मनोऽस्माकं परिष्वजते ।।नमः०।।१।।

विदेशानामपि स्वान्ते,त्वयाऽऽरोप्यङ्कुरः शान्तेः ।
फलं तस्याक्षयं भूयात्, प्रतिष्ठा तेऽपि कल्पान्ते ।।नमः०।।२।।

मिषन्तो नैकरूपं त्वां, न चित्रीयेमहि श्रीमन् !
समक्षं विश्वरूपं त्वां, यदा वीक्षामहे धीमन् !नमः०।।३।।

स्मृतिः कीर्तिर्धृतिर्मेधा, क्षमा, गीः श्रीश्च नारीणाम् ।
तदेतत्सप्तकं लज्जां, सदाऽजनयत्तवारीणाम् ।।नमः०।।४।।

कुतश्चिज्जायते स्वर्णं, कुतश्चिच्चैष निकषाश्मा ।
परं तव वर्तते द्वेधा, गुणिन् गुणगौरवज्ञाऽऽत्मा ।।नमः०।।५।।

क्वचित्स्याद्राजनैतिकता, क्वचिच्चैषास्तु भावुकता ।
क्वचित्स्याद्धन्त लेखकता, त्रयाणां त्वय्यथैकगता ।।नमः०।।६।।

क्वचिद्वज्रात्कठोरस्त्वम्, क्वचित्त्वं कोमलः पुष्पात् ।
त्वदीयालौकिकत्वं नः, परिज्ञातं किलामुष्मात् ।।नमः०।।७।।

न कनकं नाप्यहो कान्तां, त्यजन्त्येतेऽद्य सन्तोऽपि ।
त्वया श्रीरामवत्त्यक्त्वा, द्वयं तत्, स्वं स्वरारोपि ।।नमः०।।८।।

त्वदीयोऽयं वियोगो नः, परं मर्माविधो जातः ।
क्व यातो हिन्दुमुस्लिमयोः, प्रियो भ्राता जगत्तातः ।।नमः०।।९।।

न भक्तस्त्वं भवाभवयोः, न भक्तो देवदानवयोः ।
परं भक्तस्त्वमेकोऽभूर्विभूमन् भूमिमानवयोः ।।१०।।

नमः स्तान्नेतृजनगुरवे, जवाहरलालनेहरवे ।

**अयं शास्त्री चिरं जीव्यात्**

( ४० )

(भुवङ्गतः)

प्रधानामात्य' इति दीव्यात्,
अयं शास्त्री चिरं जीव्यात् ।

यदीयः कोमलो देहः, प्रगीतः सर्वगः स्नेहः ।
सदार्थिप्रावृतो गेहः, स लोकान् कीर्तिभिश्चीव्यात् ।१।
अयं शास्त्री चिरं जीव्यात् ॥

यदीया संस्कृतौ प्रीतिः, प्रसिद्धा संस्कृतेऽधीतिः ।
पवित्रा शासने रीतिः, स वैरं वारिवत् स्रीव्यात् ।२।
अयं . शास्त्री चिरं जीव्यात् ॥

यदोयं नीतिनैपुण्यं, प्रतीतं चोपकृतिपुण्यम् ।
चरित्रं चारु शुचि गुण्यं, स विच्छिन्नं पुनः सीव्यात् ।३।
अयं शास्त्री चिरं जीव्यात् ॥

( दिवङ्गतः )
हताशे ताशकन्देऽयं, तनुं त्यक्त्वा गतो ज्ञेयं,
वितीर्यास्मासु सद्ध्येयम्, यशः कायेन भुवि पीव्यात् ।४।
अयं शास्त्री चिरं जीव्यात् ।



## नरकार्हं कार्यं कुर्वतामपि

( ४१ )

नरकार्हं कार्यं कुर्वतामपि नाके किलाशा ।
प्रथितानां मिथ्याचारिणामपि सौख्येऽभिलाषा ॥

अन्धे तमस्युपसर्पतामुपसर्पतामन्धे,
हा हा हा, मनसो वाञ्छितास्ते परमाः प्रकाशाः ॥ नरकार्हं० ॥

मुक्तिं लभामहे क्षणान्नु लभामहे मुक्तिम्,
इति हृदये कृत्वा धावतां दुरितैस्तताः पाशाः ॥ नरकार्हं० ॥

दूरे स्थितं भविताऽमृतं, नचिरेण तददूरे,
इत्थं मृषाभिशंसिनां, निकटे स्थिता नाशाः ॥ नरकार्हं० ॥

## मुद्राराक्षसस्यैकं गीतम्

( ४२ )

गुरुणा चिराय विधृतां, धुरमद्य धारयिष्यन् ।
हृदि चिन्तयत्यजस्रं, नहि वेद्मि किं करिष्यन् ॥
विषमेऽपि हन्त ! काले, विकटेऽपि चैव देशे,
परिरक्षति स्म राज्यं, गुरुरग्रतः स्थितः सन् ।
गुरुणा कृतो यशस्वी, परतन्त्रवन् मनस्वी,
शरदुत्सवं प्रकुरुते, जनतां प्रहर्षयिष्यन् ॥

## द्वितीयं गीतम्

( ४३ )

पुरवासिनो भवन्तः शरदुत्सवे त्वरध्वम् ।
पथि वीथिवर्ति सर्वं कलुषं निराकुरुध्वम् ॥ पुर० ॥

सलिलानि सन्मलयजैरधिवासितानि सिक्त्वा,
कुसुमैर्दलैश्च शोभां नगरस्य चाहरध्वम् ॥ पुर० ॥

नवतोरणानि क्लृप्त्वा, प्रविसार्य सत्पताकाः,
अवधूय राष्ट्रकेतून्, नगरश्रियं श्रयध्वम् ॥ पुर० ॥

### तृतीयं गीतम्

( ४४ )

ममाद्यापि तृष्णा मुधा माद्यतीयम् ।

निरूप्यात्र रूपादिकं यैर्हृषीकैः, प्रवृद्धाऽस्तमेतानि तान्युज्झतीयम् ।।ममा०।।

न मे पाणिपादं, न मे नेत्रकर्णं, वशे वर्ततेऽथापि हा ! ताम्यतीयम् ।।ममा०।।

अतीतं शिशुत्वं, व्यतीतं युवत्वं, जरा चागता, किन्तु नो शाम्यतीयम् ।।ममा०।।

### पाहि लोकं कृपालो !

( ४५ )

पाहि लोकं कृपालो करुणया, अर्थिभूतेन्द्रभास्वद्वरुणया ।

सर्वतः सङ्कटैरावृतोऽयम्, भिन्न एवापवादैः कृतोयम्

धर्मनीती नते, प्रीतिभीती गते, वेलया दोषदुष्यत्तरुणया ।

पाहि लोकं कृपालो, करुणया ।।अर्थि०।।

राष्ट्रमेकैकमस्मै तु सर्वम्, आष्ट्रतुल्यं स्थितं भूरिगर्वम्,

नात्र कश्चिज्जनं, वष्टि तत्तद्धनं, लिप्सया हाऽन्यरक्तैररुणया ।।

पाहि लोकं कृपालो, करुणया ।।अर्थि०।।

भ्रष्टमेवाचरत्यत्र कश्चित्, पापमप्याश्रितो हा ! विपश्चित् ।

नेहरूदीक्षितं, शास्त्रिणा वीक्षितम्, नानुयातीह वृत्त्या त्वनृणया ।।

पाहि लोकं कृपालो, करुणया ।।अर्थि०।।

### अमरेश्वर ! नावतरेः समरे

( ४६ )

अयि लक्ष्यविभेदनदक्ष हरे ! अमरेश्वर नावतरेः समरे !

रिपुपक्षपरिक्षपणे निपुणं, न सुदर्शनमद्य चिरं विचरेत् ।

न च शङ्खरवं खरवम्बरवं परिभावयितुं भगवन् प्रभवेत् ।अयि०।

न गदाद्य मदापहृतौ प्रहृतौ, द्विषतां निचये सुचिरं प्रसरेत् ।
इह नन्दकमन्दकथापि वृथा, स हि शत्रुगणे न गतिं प्रणयेत् ।अयि०।

अणुतोऽप्यणुरस्ति तव प्रभुता, महतोऽपि महात् महिमाऽस्ति भवे ।
इति पातय पुरुषव्याघ्रसमं, द्वयमेव तु रूपमरिप्रकरे ।अयि०।

**भवन्तमन्तरा कः ?**

( ४७ )

भगवन् ! भवन्तमन्तरा, को भावहीनानाम् ?
निष्कारणोऽपि बन्धुरस्ति नाथ ! दीनानाम् ॥

अपि कुर्वतां मलास्पदं, नानाविधैरघैः,
जीवातु जीवनमेकमेवं कदा न मीनानाम् ।भगवन्०।

याचन्त एवं हन्त येऽविनीतवद्‌ घनम्,
तेषां न तं विनाऽवनावनोऽस्ति वीनानाम् ।भगवन्०।

देवा भवन्ति रक्षकास्तपसा कृशाङ्गानाम् ।
त्वमिहासि पीनबाहुदण्ड ! पाप-पीनानाम् ।भगवन्०।

**सन्त्यज रुजमिव मानम्**

( ४८ )

सन्त्यज रुजमिव मानं, वेणुवाद्यवादके,
हरति मनो मुकुन्दे, मोदसम्पादके ।

चन्द्रिका मन्दं मन्दं, कचयति कुमुदम्,
रहयति नन्दसुनुः, सपदि च हृदि तुदम्,
प्रेमसमानं दानं, विरहविबाधके,
देहि नवाले काले, नवरुचिसाधके ।सन्त्यज०।

वहते धीरः समीरो रविजापुलिने,
सहते नवलः किशोरः स्थितिमपि नलिने ।
अतनुविरुग्णे तनु, मृदुतनु राधिके,
दयिते कृपाकटाक्षं, क्षेमशतसाधके ।।सन्त्यज०।।

**भजे श्रीरङ्गम्**

( ४९ )

भजे श्रीरङ्गमवधूतं, सकलकल्याणसम्भूतम् ।
निजानन्दाञ्चिताकूतं, तपोविद्यादिपरिपूतम् ।।भजे०।।

तपोविद्यादि वा यस्मात्, कृतार्थीभूतमेकस्मात्,
स्मृतिर्यस्याऽऽगताऽकस्मात्, जनं कुरुते सतां नूतम् ।।भजे०।।

करालेऽस्मिंश्च कलिकाले, कलितनानाकलुषजाले,
मलिनिताशेषसुखशाले, निवारितमायिकालूतम् ।।भजे०।।

अहो ! कामार्कजक्रोधातपप्रतिभासिलोभाम्भो-
भ्रमावहमोहमृगतृष्णाविकलजनहरिणजीमूतम् ।।भजे०।।

**स्वागतगीतम्**

( ५० )

स्वागतं भवतां मुदा सुहृदामुदारहृदाम् ।
स्वागतं शुभदर्शनैर्नवजीवनोत्सवदाम् ।।

भूमिं तृणानि वारि वा, गिरं च सूनृताम्,
न लभामहे, न च मन्महे, क्षमाणि धीमताम् ।।स्वागतं०।।

आस्यतामिदमासनं तृणकल्पमेव मनो,
यस्य गौरवमीप्सितं प्रणयेन खेदभिदाम् ।स्वागतं०।

जीवनं त्विदमर्घ्यपाद्यविधौ निधित्सुरयं,
सार्थकीक्रियताञ्जनो भुवि धन्यतां लभताम् ।स्वागतं।

वस्तुतो गुणगौरवं प्रियमीयुषां भवता—
मर्चने परुषापि वागुपयाति सूनृतताम् ।स्वागतं।

आतपं सहते परं श्रयते सुखं ददतः,
पादपा भवतामिमां करुणामुपादधताम् ।स्वागतं।

दूरदूरतरादुपेत्य घनोऽपि वर्षति यत्,
मार्गमेष भवादृशामनुयाति तत्सुतराम् ।स्वागतं०।

## स्वागतगीतम्

( ५१ )

पूर्वपुण्यार्जितं, भूरिभाग्यानतं, भारती श्रीमतां, गायति स्वागतम् ।

शिष्यदेयागमैर्विश्वधेयानमैः, क्षीरनीरावभेदाय हंसोपमैः,
पण्डितैर्मण्डितं, सर्वथाऽखण्डितं, धन्यधन्यं भवद्भिः श्रिता भारतम् ।।पूर्व०।।

भावुकैर्भावितं, साधुभिः पावितं, कान्तकाव्यात् स्रवद्भी रसैः प्लावितम्,
अद्य सम्मेलनं, वन्द्यविद्वज्जनं, संश्रितेदं भवद्दर्शनेनोन्नतम् ।।पूर्व०।।

अत्र निस्तामसे, निर्गलद्राजसे, नैकभावोदयात् सात्त्विके मानसे,
राजमानाऽनिशं, दर्शयन्ती दिशं, प्रस्तुवन्ती भवद्गौरवं सन्ततम् ।।पूर्व०।।

दृप्तकद्वदनिराकारिगद्गदगिरा प्राप्तविद्वत्सभामण्डपाग्राजिरा ।
वर्ष्म रोमाञ्चितं, स्वेदकणलाञ्छितं, बिभ्रती वाञ्छितं चेतसानारतम् ।।पूर्व०।।

## जागर्तु देवभारती

( ५२ )

जागर्तु देवभारती, सेयं बिभर्तु भारतम् ।
गायन्ति गीतकाव्यमी, यस्यामरा अनारतम् ।।

ब्रह्मर्षयो यस्मिन्नपुरा, साक्षादकुर्वतागमान्,
राजर्षयोऽप्यपालयन्, प्राणाधिकं प्रजाजनान्,
तद्वर्षमेतु सर्वथा, भूयः प्रकर्षमागतम्,
विद्यावतां मनस्विनां, यशस्विनां दृशा ततम् ।।जागर्तु०।।

यस्मिन् धनान्युपार्जयन्, अन्नादि वोदपादयन्,
धेनूश्च राजऋद्धये, वैश्या हठादपालयन्,
शूद्राश्च सर्ववर्णगं दास्यं मनागनाहतम्,
यस्मिन्नचीचरन्नहो, तदुपैतु मानमाततम् ।।जागर्तु०।।

**रचितेयं कादम्बरी स्वगीतैः**

( ५३ )

संस्कृतभाषे तव गुणगीते, गीतेऽपि न चेतो मम याति शमम् ।
क्षारनिधाविव सन्ति गुणानां, रत्नानां त्वयि भाराः,
जायन्ते किल समुपासकजनकण्ठतटे ये हाराः,
किन्तु लभन्ते सुधया समं ते, नैव समेऽपि भुवि सारतमम् ।
गीतेऽपि न चेतो मम याति शमम् ।।संस्कृत०।।

यत्पठितव्यं तल्लिखितव्यं, मात्रापि न तव मोघा,
हिमगिरिशृङ्गैरिव तव वर्णैर्जनिता रससरिदोघाः ।
भाषाभूषाणामपि भूषा, कानुपदं तव याति समम् ।।
गीतेऽपि न चेतो मम याति शमम् ।।संस्कृत०।।

का नु चतुर्विधमाह पुमर्थं, विज्ञानं सविवेकम् ।
कान्वभिदधते ज्ञाननिधानं, का नु जगौ प्रभुमेकम् ।।
इति सर्वासामपि भाषाणां, कलयन्त्यसि किल गर्वदमम् ।।
गीतेऽपि न चेतो मम याति शमम् ।।संस्कृत०।।

माधुर्यानुगुणास्तव वर्णाः, कर्णानन्दवदान्याः,
सदा प्रसन्नाः सदा गभीराः, रचनास्त्वयि सम्मान्याः,
किन्तु जनानां सुषमामयं ते, रूपमविदितं साधुतमम् ।
गीतेऽपि न चेतो मम याति शमम् ।।संस्कृत०।।

तव मधुरिम्णा, चापि गरिम्णा, स्वमहिम्ना च परीतैः,
अमरचन्द्रकविना रचितेयं, कादम्बरी स्वगीतैः,
भवतु बुधानामधुना समं ते, मधुरं पयो निपीततमम् ।
गीतेऽपि न चेतो ममयाति शमम् ।। संस्कृत० ।।



श्रीहितराधावल्लभो विजयतेतराम् ।

# श्रीमद्भागवतमाहात्म्यकथासारः

( पद्मपुराणोक्तः )

श्रीसूतः शौनकादीन् कथयति महिमानं शुकेनेरितस्य,
देवाः पीयूषकुम्भं ददुरथ विधिरुत्तोलयामास तत्तत् ।
सप्ताहस्योपदेशं सुरमुनिरगमद्वै कुमारोपदेशात्,
कालिन्दीकूलदृष्टत्रिकविषमदशादूयमानान्तरात्मा ॥१॥

भक्तिं संसान्त्व्य खिन्नः स विफलयतनो ज्ञानवैराग्यबोधे,
ब्राह्म्या वाचाथ धैर्य्यं समलभत परं नैष सत्कर्म वेद ।
तीर्थे तीर्थे मुनीशा अपि तदुदितया विस्मितास्ते गिराऽऽसन्,
दृष्ट्वाकस्मात्कुमारानथ स विविविदे साधु सत्कर्म तेभ्यः ॥२॥

गङ्गाद्वारान्तिके ते सुरमुनिविनयात्क्षिप्रमानन्दतीर्थे,
त्रैलोक्यादागतानां हरिजनमुनिसच्छास्त्रतीर्थादिकानाम् ।
प्रत्यासन्ने समाजे जयजयसुरवैर्गुञ्जिते मञ्जुलाभे,
माहात्म्यं यर्ह्यगायन् समुपगतवती तर्हि भक्तिः सपुत्रा ॥३॥

मेघश्यामोऽपि तावत्स्वजनहृदयगोऽभूद्वृतः पारिषद्यै-
रुद्धार्यानाहुरग्रे दलितपतितदुर्मार्गगांस्ते कुमाराः ।
दृष्टान्तत्वेन तत्रोचुरथ सपदि पुत्रार्थिनो धार्मिकस्यै-
तां गाथामात्मदेवस्य किल यतिवरात्पुत्रहेतोः फलस्य ॥४॥

धुन्धुल्या धुन्धुकारी समभवदहहा ! धेनुतो धेनुकर्णः,
पूर्वः पापी नृशंसः, सहृदयहृदयश्चापरो धार्मिकोऽभून् ।
पूर्वः स्त्रीसङ्गदोषान्मरणमुपगतः प्रेततामाप पाप-
स्तस्योद्धारं द्वितीयो मिहिरवचनतो भागवत्या चकार ॥५॥

सप्ताहस्य प्रकारे प्रथममिह भवेल्लेखनं पत्रिकाणां,
　　सत्कारोऽभ्यागतानामथ भवति कथामण्डपस्य व्यवस्था ।
वक्तर्यासीन आराद्यमनियमभृतः श्रोतृवर्या विशेयु-
　　रेवं वल्गत्सु तेषु स्वयमुपगतवांस्तत्र कीरो हरिश्च ॥६॥

( स्कन्दपुराणोक्तः )

वज्रं श्रीमाथुरे स्वं तनुजतनुजनिं हस्तिनाख्ये पुरे च
　　संस्थाप्यान्ते गतास्ते प्रथितभुजबलाः पाण्डवाः स्वर्गलोकम् ।
तस्मिन्काले परीक्षित्सविनयमनयत्तत्र शाण्डिल्यविप्रं
　　स प्राहैतौ व्रजस्य प्रगुणितमहिमानं यथा तौ प्रसन्नौ ॥१॥

इन्द्रप्रस्थात्परीक्षित्तदनु शतशतं माथुरान् ब्राह्मणान्वै,
　　संस्थाप्यानन्दमाप प्रभुचरितपदान्यानयत्स प्रतिष्ठाम् ।
कालिन्दीं वीक्ष्य हृष्टामथ जगदुरिमां कृष्णपत्न्यः कुतस्ते,
　　हर्षोऽयं, साब्रवीत्ता-यदहमनुचरी राधिकायाः किलास्मि ॥२॥

कालिन्द्युक्ताश्च देव्यो व्रजभुवि भगवत्कीर्तनं कारयन्त्यो,
　　दृष्ट्वा तत्रोद्धवं चास्य वदनकमलाज्ज्ञातवत्यो रहस्यम् ।
श्रीकीरोक्ते तु शास्त्रे वसति स भगवान्यस्य नाभेरजोऽभूत्,
　　सप्ताहस्य प्रवृत्त्या सृजति स हरिरारक्षतीदं शिवोऽत्ति ॥३॥

वज्रो राज्ये स्वपुत्रं न्यधित च जननीभिः समं कीरशास्त्रं
　　श्रोतुं गोवर्धनान्ते स्थित उचितपदे चोद्धवः प्राह तस्मै ।
श्रोतारस्तस्य चोक्ता अवरप्रवरताभेदतश्चातकाद्या
　　हंसाः कीराश्च मीना अथ वृकवृषभूरुण्डभृङ्गोष्ट्रखेगा ॥४॥

श्रीहितराधावल्लभो विजयतेतराम् ।

# श्रीमद्भागवतकथासारः

## प्रथमः स्कन्धः

श्रीसूतं शौनकाद्याः स्तुतिसहितमपृच्छन्निदं प्रश्नषट्कं,
किं श्रेयो निश्चितं वै ? किमथ स भगवान् कर्तुमायाति कृष्णः ?
किं किं नित्यावतारैः कलयति स धृतैः ? किं निमित्तावतारैः ?
चक्रे किं राम्युक्तो हरिरथ ? शरणं कं गतोऽन्तेऽस्य धर्मः ? ॥१॥

सूतस्तानाह—भक्तिर्भगवति परमा निश्चितं श्रेय एकं,
सा हि ज्ञानं विरागानुगमुपजनयेत्सर्वधर्मैकसारम् ।
देवो नित्यावतारैर्हरिहरविधिभिः पालनादीनि कुर्याद्,
अन्यैस्तिर्यङ्नृदेवैस्त्रिभुवनभविकं भावयेद् भूरिभावैः ॥२॥

विष्णुर्ब्रह्मा वराहो भवति सुरऋषिर्द्वौ मुनी सांख्यकर्ता,
दत्तात्रेयोऽथ यज्ञो भवति स ऋषभो वै पृथुश्चैव मत्स्यः ।
कूर्मो धन्वन्तरिः सन्नमृतवितरणे मोहिनी सन्नृसिंहः,
खर्वो रामौ च पाराशर-यदुकुलजा गौतमश्चाथ कल्किः ॥३॥

सम्पृष्टः शौनकाद्यैः कथमिव नु कथा सात्त्वतीयं प्रवृत्ते-
त्यूचे सूतः स वेदानुवचनसहितां भारताख्यानक्लृप्तिम् ।
श्रीव्यासेनाथ नान्तः शममनुभवता चिन्तितं यद्, यदुक्तं,
यच्चैवाभ्यागतस्य द्रुहिणतनुजनेस्तेन पूजा कृताऽभूत् ॥४॥

सम्पृष्टो नारदेनाखिलकुशलमसौ सादरं प्रत्युवाच—
नात्मा सन्तुष्यतीति, त्वमवगमय मे न्यूनतां चेति नम्रः ।
तस्मै सोऽयं दिदेश—प्रवद भगवतो निर्मलाञ्चारु कीर्तिं,
माहात्म्यं चापि गाय, त्वमिह शृणु पुराजन्मवृत्तं मदीयम् ॥५॥

व्यासस्तद्वृत्तमादेः कथयितुमनुरोधं चकाराथ सोऽपि
प्रत्यूचे जन्म दास्या, अतिशयममतां; पोषणे चाप्यशक्तिम् ।
ज्ञात्वा तां सर्पदष्टां, भगवदतिकृपामेष मत्वा वनस्थो,
दृष्ट्वान्तर्देवमाराद् वनमधिगतवान् व्योमवाचं विचित्राम् ॥६॥

तस्मिन्याते यथेच्छं प्रणिहितमनसा तेन पाराशरेण,
शम्याप्रासे सरस्वत्यमरगणनदीपश्चिमोपान्तसंस्थे ।
पूर्वं देवोऽथ माया तदनुवशगताऽवालुलोकेऽथ विद्वां-
श्चक्रेऽसौ संहितां तां शुकमुनिपठितां नारदेनोक्तसाराम् ॥७॥

प्रारभ्योवाच सूतो–मृतजनसलिलं दापयित्वा, कुरूणां
नाथादीन् सान्त्वयित्वा समयगतिबलं दर्शयित्वा च तेभ्यः ।
सद्राज्यं स्थापयित्वा त्रिभिरथ च मखैर्याजयित्वोत्तराया
गर्भं संरक्ष्य कुन्तीस्तुतिसदयमनाः पार्थ शोकं निरस्यन् ॥८॥

पार्थं तीर्थं स निन्ये विनशनमखिलैर्भ्रातृ-मित्रैश्च विप्रै-
र्भीष्मस्तत्रार्चयित्वा समयगतिबलं वर्णयित्वाह चेनम् ।
राजा धर्मात्मजोऽयं, भगवति सुहृदि प्राप्तवान् हन्त कष्टं,
यावज्जीवामि तावद्वस नयनपथे देव देवेति चास्तौत् ॥९॥

भीष्मे सम्पन्नमात्रे, सुसुखमधिगते, सानुजे धर्मपुत्रे
कांश्चिन्मासानुषित्वा हरिरथ सुरथं यातुमध्यारुरोह ।
तत्रत्याभिः प्रजाभिः सकुसुमकिरणं वन्द्यमानोऽभिनन्द्य-
मानश्चायं प्रतस्थे स्वपुरमभिगतः सायमानर्तदेशम् ॥१०॥

आनर्तान् प्राप्य दध्मौ दरमथ दलयंस्तद्गतानां विषादं,
तं श्रुत्वा प्रीतिपूर्णाः प्रणिजगुरबलास्ताः प्रजा द्वारकेशम् ।
अभ्युद्यातः सुहृद्भिः स्तुतिततिभिरथो गीयमानो जनीभिः,
पत्नीभिर्नन्द्यमानः पुरमविशदसौ वन्द्यमानः सुधीभिः ॥११॥

द्रौण्यस्त्रेणोपसृष्टः शुकमुखवचनैश्चोपदिष्टो महात्मा,
वंशध्रः पाण्डवानां कथमिव जनितो वा मृतः किञ्च चक्रे ?
इत्थं पृष्टस्तु सूतः समकथयदलं विष्णुरातस्य तांस्तान्,
पूर्वेषां भूमिपानामिव गुणनिवहान् नाम हेतुञ्च दिव्यम् ॥१२॥

क्षत्ताऽगात्पाण्डवानां सविधमथ स तैरर्चितश्चाथ पृष्टः,
प्रत्याहैतानशेषं यदुकुलविलयादन्यदेषु न्यवात्सीत् ।
गत्वा वैचित्रवीर्यं कृतमलमनयं प्रोच्य साकं तु निन्ये,
धर्मः सूतं त्वपृच्छत्परममरऋषिः प्राह तद्वृत्तमस्मै ॥१३॥

दृष्ट्वारिष्टानि दुष्टान्यनुजमकथयद् धर्मपुत्रः स्वचिन्तां,
तावत्प्राप्तोऽर्जुनस्तं मलिनमुखमनाः सोऽनुपृष्टोऽथ तेन ।
सर्वेषां द्वारकायामपि कुशलमये, रामकृष्णाश्रयाणां,
कच्चित्तेऽनामयं यत्त्वमिह मलिनतां द्रागपूर्वां दधासि ॥१४॥

इत्थं भ्रात्राभिपृष्टो हरिविरहकृशः प्राह पार्थोऽतिदीनं
त्यक्तोऽहं बान्धवेन क्षणविरहमृतो यस्य लोकोऽखिलोऽयम् ।
तेजो विस्मापनं मे विहतमहह तद्येन शत्रूनजैषं,
पीत्वा मद्यं यदूनां निधनमपरता निर्ययुस्ते गृहेभ्यः ॥१५॥

भूमिं तत्रौत्तरेयः सविनयनयवान् साध्वशात् सन्नियोगात्
पुत्रान् प्रापच्च गङ्गातटमनु हयमेधानयष्टेष्टदेवः ।
दिग्जैत्रे चाभियाने धरणिवृषयुगं गोस्वरूपेण धावद्,
निघ्नन्तं वै कलिं यो व्यषहत न मनाग्दृष्टवांस्तद् वदच्च ॥१६॥

तेनापृष्टौ तु गावौ, परिचयमददाद् धर्मरूपी वृषोऽहं,
भूरूपा धेनुरेषा, कलिनिहततया दुर्बलौ निर्बलौ स्वः ।
तच्छ्रुत्वा क्षुब्धचेता अपि शरणगतं तं कलिं प्राह राजा,
द्यूतं पानं स्त्रियस्तेऽनृतमदमदना रागवैरे च वासाः ॥१७॥

सूतोक्त्याथौत्तरेये स्थितमतिमहिमानं विदित्वा सुवीराः,
सत्सङ्गं ते शशंसुस्त्रिदिवपरपदापेक्षया भूरिसत्वम् ।
सूतस्तानाह—हा हा, कुकुलजनिरुजं सत्कथा नो धुनोति,
राजा ब्रह्मर्षिकण्ठेऽर्पितभुजगतया शापमापास्य पुत्रात् ॥१८॥

राजा सन्तप्यमानः स्वकृतदुरितमेतत् स्मरन् मृत्युकामो,
गङ्गातीरे व्रती सन् स्थित इति मुनयस्तं समीयुः समन्तात् ।
न्यस्तस्वराज्ये स्वहितमभिलषत्येव भूपे मुनिभ्य-
स्तस्मिन् वैयासकिश्चागमदथ नृपतिस्तं स पप्रच्छ सार्चम् ॥१९॥



# द्वितीयः स्कन्धः

प्रश्नं वैयासकिस्तं सकलजनहितं सोऽस्तवीत् प्राह चास्मै-
श्रोतव्यः कीर्तितव्योऽभयमभिलषता चिन्तनीयो हरिश्च।
'पातालं' पादमूलं प्रपदमथ 'रसा' गुल्फयुग्मं 'महा' च,
यस्यास्ते विश्वमूर्ते'रतलवितल'मूरू इयं 'भूः' कटिश्च॥१॥
माहात्म्यं धारणायाः शुकमुनिरवदच्छब्दबुद्ध्यर्थबुद्धी,
क्षित्यादीनां च शय्यादिकफलकलनाद् द्रव्यवद्भवत्युपेक्षाम्।
आहान्यां धारणायाः सरणिमथ चतुर्बाहुरूपस्य चिन्तां,
भक्त्युद्रेकोदयान्तां श्रवणकथनसंस्मारपूर्वां गतिञ्च॥२॥
नानाकामैस्तु नानासुरगणभजनं कार्यमित्येक आहुः,
किन्तूदारो मुमुक्षुः श्रयतु हरिमहो सर्वकामोऽप्यकामः।
तच्छ्रुत्वा शौनकोऽसौ सविनयमवदत्–पृष्टवान् किं नृपोऽन्यत्,
तन्नो ब्रूह्यार्य, सर्वेन्द्रियसफलकरी कृष्णचर्चा तदर्चा॥३॥
सूतः प्राहाथ राजा शुकमुनिवचने श्रद्दधानोऽभ्यपृच्छद्,
विश्वं वै दुर्विभाव्यं सृजति कथमिदं पाति संयच्छतेऽजः।
ध्यायन्वैयासकिस्तं हरिमनमदसावुद्भवस्थाननाश-
लीलाशीलं, प्रसत्तिं मुनिवरविहितां प्रार्थयत् प्रास्तवीच्च॥४॥
पुत्रं ब्रह्माचचक्षे जगदिदमखिलं रोचयत्येष देवः,
सत्त्वाद्या वै गुणास्ते स्थितिसृजननिरोधेषु मायागृहीताः।
शक्त्या सञ्चोदितास्ते परिणतिमगमन्नण्डरूपां, तदण्डं
भित्वा साक्षात्सहस्राननयनशिरोबाहुपादाविरासीत्॥५॥
यस्याङ्गैर्लोकक्लृप्तिं समभिदधति सब्रह्मविट्क्षत्रशूद्रां,
वागादीनां मुखादि प्रणिजगदुरथो दैवतानाञ्च धाम।
अस्याहं नाभिपद्माज्जनित इह तदङ्गैस्तमेवायजञ्च,
तन्निर्देशात्सृजामि, स्वयमवति पुमांस्तद्वशो हन्ति चेशः॥६॥
विष्णोर्लीलावतारानथ वदति विधिस्तांश्चतुर्विंशतिं, त-
त्सर्गारम्भे नवान्ते चतुर इह परं दुर्वितर्क्यं प्रभावम्।
देवर्षिर्देवदेवोऽसुरवरमनवस्ते ध्रुवाद्याश्च भक्ता
राजब्रह्मर्षिमुख्याश्चरणशरणगा एव जानन्ति मायाम्॥७॥

राजाऽपृच्छच्छुकर्षि–विधिकथितमिदं नारदः कस्य कस्या-
वोचत्तच्छ्रोतुमिच्छा मुखरयतितरां मां कथापानतृष्णम् ।
लोकान् कल्पं विकल्पं त्रिविधमनुमितं कालमायुः सतश्च,
भूर्याश्चर्यं चरित्रं भगवत इह सद्धर्मसांख्यादिसारम् ।।८।।

तस्मै प्रोवाच वैयासकिरथ विधिनाकर्णितं द्विस्तपेति,
वक्तारं द्रष्टुकामोऽतपदथ, भगवान् दर्शयामास धाम ।
प्रोचे चास्मै तपोगौरवमपि, विधिनाभ्यर्थितः स्वं स्वरूपं
देष्टुं प्रादाच्चतुःश्लोकमिह स तनुजं, व्यासमेषैष मह्यम् ।।९।।

अस्मिन् सर्गो विसर्गः स्थितिरथ परिपुष्टिस्तथोतिः कथाश्च,
रोधो मुक्तिः श्रयश्चेत्यभिहितदशकं, पूर्वमन्त्यस्य शुद्ध्यै ।
अन्त्यश्चाध्यात्मिकादित्रितयमुपगतः, स्वाश्रयोऽण्डं स भित्वा,
नाराः सृष्ट्वाऽऽस्ववात्सीत्सुरकरणमयस्तेन नारायणोऽसौ ।।१०।।

———

## तृतीयः स्कन्धः

प्रस्तौति क्षत्तृमैत्रेयमथ स-विदुरो धार्तराष्ट्रैः कृतांस्तां-
स्तान् दोषान् वक्ति, दुष्टैरवमतिमयते, याति सोऽटन् प्रभासम् ।
तत्रानेकर्षितीर्थभ्रमिरुपयमुनं दृष्टवानुद्धवं स,
क्षेमं श्रीरामकृष्णादिकसकलसुहृद्वर्गगं पृष्टवांश्च ।।१।।

पृष्टस्तेनोद्धवोऽयं द्रुतहृदयतया वक्तुमासीदशक्तः
पूर्वं, पश्चादुवाचास्तमितवति हरौ हा, कुतः क्षेममद्य ।
मन्दा वै यादवास्ते, न विदुरिह हरिं, संवसन्तोऽपि ये तं,
यस्यैश्वर्यं समन्तात्प्रकटितमहहा, निग्रहानुग्रहाभ्याम् ।।२।।

कंसं हत्वा स रामः सदनमुपगतोऽसौ गुरोर्वेदविद्यां,
लब्ध्वा, तत्पुत्रमादान्मृतमपि जठराद्राक्षसस्याब्धिमध्यात् ।
पत्नीनां भूयसीनां प्रिय-हित-पतितां प्राप्य दुष्टाञ्जघान,
वीर्गैर्वा घातयामास स यदुभिरथो यादवान् हन्तुकामः ।।३।।

पीत्वाथो वारुणीन्ते कलहमुपगता जघ्नुरन्योन्यमेव,
स्वं लोकं यातुकामो मम बदरवनं गन्तुमादिश्य युक्तः ।
ऊचे मह्यं स्वकं 'भागवत' सुचरितं चारु मित्रासुताय,
तज्ज्ञानं प्रोच्य सोऽगात्तुहिनगिरिमथासौ च मैत्रेयपार्श्वम् ॥४॥

मैत्रेयं पृष्टवान् भोः किमिह सुखकरं, दुःखनिर्हारकं किम्
मन्येऽहं कृष्णगाथा श्रवणपथगता सर्वदुःखं निहन्ति ।
मैत्रेयः प्राह तस्मै–सृजति स भगवान् यं स्तुवन्तीह देवा
यत्पादाम्भोजमेमोऽनवरतमुपयामोऽस्य शक्त्याऽऽत्मशक्तिम् ॥५॥

तेषां ज्ञात्वा गतिं स स्वयमविशदिमान् कर्मणाऽयोजयच्च,
युक्तास्तेऽण्डत्वमीयुर्यदधि स पुरुषः सर्वसत्त्वैरुवास ।
अध्यात्मादित्रिरूपस्तदनु दशविधः प्राण एको हृदन्त–
र्निर्भिन्नेष्वस्य चाङ्गेष्वविशदमरवृन्दं बभूवुश्च वर्णाः ॥६॥

चिन्मात्रस्याविकर्त्तुः कथमिव नु गुणा निर्गुणस्य क्रियाश्चे-
त्येतत्क्षत्त्राभिपृष्टोऽकथयदथ मुनिस्तज्जले चन्द्रकम्पम् ।
सोऽयं चासद्भ्रमः स्याद् भजनबलहृतस्तद् भजस्वासुरारिं,
तच्छ्रुत्वा वंशवंशानुचरितभुवनादिव्यवस्थामपृच्छत् ॥७॥

मैत्रेयस्तं बभाषे–क्षणिकसुखकृते भूरि दुःखं गतानां,
लोकानां सौख्यसिद्ध्यै भगवदभिहितं वर्णयिष्ये पुराणम् ।
तद्वै सांख्यायनायाभिहितमिह कुमारेण, स व्यासपित्रे,
श्रद्धाशीलाय मह्यं स गुरुरचकथत्तत्तवाहं ब्रवीमि ॥८॥

दृष्ट्वा ब्रह्मा विसर्गं भगवदभिमुखस्तं स्तुवीते-" प्रभो ! त्वं
ज्ञातो, रूपं तवेदं जनिकमलजनुर्दृष्टमाद्यावतारम् ।
आनन्दात्मा त्वमेकस्त्वमु भवसि जगन्मङ्गलो मङ्गलाये"-
त्याकर्ण्याहास्य देवः-कुरु तपसि मनः प्रीत एषोऽस्तु भद्रम् ॥९॥

मैत्रेयः प्राह-चक्रे विधिरधिकतपस्तेन सोऽपश्यदब्जं,
विष्ट्वा तत्स व्यभाङ्क्षीत्त्रिविधबहुविधं यद्द्विसप्तात्म जातम् ।
षट्सर्गान् प्राकृतांस्तानसृजदयमजो वैकृतांस्त्रींश्च दैवं
सर्गं वैकारिकं चाष्टविधमुभयरूपञ्च कौमारसर्गम् ॥१०॥

सूक्ष्मात्सूक्ष्मं तु कालं सृजति स परमाणुं तथा ब्रह्मदेवः
स्थूलस्थूलं महान्तं परममिह कलाः सन्ति कालस्य नैकाः।
सूक्ष्माः स्युस्ता लवान्ता अणुरथ त्रसरेणुस्त्रुटिर्वेधमुख्या,
अन्याः स्थूलास्तु कल्पा युगशरदयनाश्चर्तुमासपक्षधस्राः ।।११।।

तामिस्रञ्चान्धतामिस्रमघजनिमहामोहमोहे तमश्च,
दृष्ट्वा पापीयसीं तां भगवदवहितो मानसांस्तान् ससर्ज।
क्रोधाज्जज्ञेऽथ रुद्रस्तदुदितप्रजया शङ्कितस्तं स तप्तु-
मुक्त्वा वेदान्मरीचिप्रमुखदशसुतान्नारदं चाप्यसूत ।।१२।।

अर्धः स्वायम्भुवोऽभूदथ खलु शतरूपाभवत्सोऽर्धभागः,
कन्या उत्तानपादप्रियव्रतसहिता जज्ञिरे तस्य तिस्रः।
आज्ञां स्वायम्भुवोऽधाच्छिरसि विधिकृतां, भूमिमुद्धर्तुमद्भ्यो
ध्यायञ्जातं हिरण्याक्षहणमृषिनुतं शूकरं सोऽभ्यपश्यत् ।।१३।।

मारीचं काश्यपं वै दितिरतिसमये हृच्छयार्ताभिपेदे
तेन प्रोक्तापि वासोग्रहणपरकरा कामिनी सोऽभिशप्ता।
दोषान्मौहूर्तिकात्तेऽधमसुतयुगलं स्याज्जगत्तापकारि
पश्चात्तापात्तु भूयाद् भगवति रतिमांस्तत्कुले चेत्यभाणीत् ।।१४।।

प्राजापत्यन्तु तेजोऽदधदिह शतकं वत्सराणां दितिः सा
देवा ब्रह्माणमीयुर्मनसि धृतभयाः, प्राह कः सान्त्वयंस्तान्।
पुत्रा मे मानसास्ते ययुरिह निलयं श्रीहरेर्दर्शनोत्का-,
स्तान्पार्षद्यावरुन्धामिति मुनिभिरिमौ राक्षसत्वेऽभिशप्तौ ।।१५।।

वैकुण्ठाधीश्वरस्तान् सविनयमुपयन्नाह युक्तं कृतं वः
सोऽयं भृत्यापराधः खलु मम विदितस्तेन तं क्षामये वः।
शापान्ते मामुपैतामिति हरिविनयात्प्रीयमाणान्तरास्ते,
ब्रह्मण्यं चास्तुवंस्तं भुवि जयविजयौ ताविमावद्य जातौ ।।१६।।

तच्छ्रुत्वा वीतशङ्काः प्रजहृषुरमराः, साप्यसूतात्मजौ द्वौ,
उत्पाता वातवर्षातपगिरिवसुधाकम्पमुख्यास्तदासन्।

संवृद्धौ जातमात्रौ, कनककशिपुना मृत्युमार्गा निरुद्धा,
गर्विष्ठोऽन्यो हिरण्याक्ष इति जितसुरः पाशिनं योद्धुमायात् ॥१७॥

श्रुत्वा तस्मात्तु विष्णुं स्वसदृशममरं, नारदात्तं विदित्वा,
गत्वा नीचै रसाया दशनधृतधरं शूकरं क्रूरमूचे ।
सोऽपि व्यङ्ग्योक्तिभङ्ग्या समरसमरसं व्यञ्जयंस्तं समागाद्,
गुर्वीभ्यां तौ गदाभ्यां युयुधतुरतुलं, कोऽर्थयामास विष्णुम् ॥१८॥

तद्वाचं निर्व्यलीकाम्मनसि धृतवता विष्णुनासौ सपत्नो,
भूयो भूयो गदायाः प्रहृतिमु गदया निष्फलीकुर्वतान्ते ।
चक्रेण च्छिन्नशूलो विफलितबहुमायो हतः कर्णमूले,
भूमौ लुण्ठन्मृतोऽभूदथ तु सुरगणः शूकरं तं ववन्दे ॥१६॥

देवोऽदेवान् स सृष्ट्वा यभितुमुपगतान् वीक्ष्य विष्णुं प्रपेदे,
तन्निर्देशाच्छुभाङ्गी समभवदथ तां ते सकामाः परीयुः ।
कासि त्वं कस्य वामे ! इति जडमतयस्तामगृह्णन्त सन्ध्यां,
गन्धर्वादीननेकानजनयदजनस्तैः स्वरूपैरनेकैः ॥२०॥

क्षत्त्रा पृष्टोऽथ मित्रासुत इदमवदत्-कर्दमो भूरि तप्त्वा,
दृष्ट्वा पीताम्बरं तं प्रमुदितहृदयः साञ्जलिश्चाभ्यनन्दत् ।
तेन प्रीतो हरिस्तं मनुतनुजनुषं त्वामुपेतामुपेयाः,
तस्याः पुत्रांल्लभेथा इति समचकथत्सोऽपि तत्स्वीचकार ॥२१॥

आयातस्तावदेनं मनुरिदमवदत्-ब्रह्म हृत्क्षत्रमङ्गं,
तस्मादन्योन्यरक्षाकरमिदमुभयं, तद्गृहाणात्मजाम्मे ।
तामेषोऽङ्गीचकार प्रणयपरिगतां देवहूतिं महात्मा,
देवः स्वायम्भुवोऽपि प्रभुगुणकथया स्वान्तरान्तं स रेमे ॥२२॥

साध्वी प्रीत्या पतिं पर्यचरदियमथो कर्दमस्तेन तुष्ट-
स्तस्या इच्छन् प्रियं सोऽखिलविभवमयं क्लृप्तवान् सद्विमानम् ।
सर्वर्द्धीनां निवासे सकलगृहसुखं तत्र सा प्राप्य पत्या,
पुत्रीरूपाण्यपत्यान्यथ जनितवती, नानुमेने प्रव्रज्याम् ॥२३॥

निर्विण्णां तां दयालुः प्रभुवचनबलादुक्तवान्—राजपुत्रि,
गर्भन्ते प्राप्स्यतीशः स्वयमिह हृदयग्रन्थिनिर्भेदनः सन् ।
सम्भूतः सांख्यकर्ता कपिल इति सुतो, ब्रह्मवाक्यात्स पुत्री
र्मुख्येभ्यो विश्वसृड्भ्यो व्यतरदथ सुतोक्त्या वनं सोऽभिपेदे ।।२४।।

यातेऽरण्यन्तु ताते कपिलमुनिरसावास्थितो विन्दुतालं
मातुर्निःश्रेयसायादिशदुपरतिकृद्योगमाध्यात्मिकं सः ।
चेतो वन्धाय मुक्त्यै च भवति मतिमांस्तन्न सज्जेद् गुणेषु,
वैराग्यज्ञानयुक्तामपि परिहृतमुक्तिन्तु भक्तिं श्रयेत ।।२५।।

तत्त्वानां लक्षणञ्चादिशदथ भगवान् भ्वादिभूतानि पञ्च,
तन्मात्राः पञ्च गन्धादय इह करणानि त्वगादीनि दिग्वत् ।
चित्ताहङ्कारबुद्धित्रिकसहितमनः स्याच्चतुर्विंशमत्र
कालः स्यात्पञ्चविंशो भयजनकतया सोऽयमीशप्रभावः ।।२६।।

पानीयेऽर्कोपमोऽयं प्रकृतिमुपगतः सन्नपि प्राकृतैस्तै-
र्नैवाक्तः स्याद्गुणैर्वा अविकृत इह सोऽकर्तृतानिर्गुणत्वात् ।
भक्त्या ज्ञानेन वैराग्यनिचिततपसा योगजाद्वा समाधे-
र्दग्धाऽन्तर्भावमीयात्प्रकृतिरिह पुमान् मुच्यते योनिरग्नेः ।।२७।।

योगः प्रोक्तः स येनोन्मुदितमिह मनो याति सन्मार्गमारा-
द्धर्माचारे प्रवृत्तं तदितरसरणेः सन्निवृत्तं समन्तात् ।
सन्तोषाद्या गुणाश्च प्रचयमुपगता भान्ति यत्राखिलास्ते,
चित्तञ्चैवेशपादाम्बुजमधुपतया निश्चलत्वं प्रयाति ।।२८।।

भक्तित्रैविध्यमूचे त्रिगुणपरिचयान्निर्गुणं भक्तियोगं
भक्तिं चाहैतुकीं तामकथयदथ यात्यन्तिको भक्तियोगः ।
यं लब्ध्वा भूतमात्रं प्रणमति मनसात्र प्रविष्टः स देवो,
योगाद्वा भक्तियोगात्तमयति पुरुषः पूरुषं विष्णुसंज्ञम् ।।२९।।

तस्यैतस्याप्रमेयं न खलु जनमनो वेद माहात्म्यसारं,
दुःखेनायं सुखार्थं यदुपकलयते तद्धुनोत्यस्य देवः ।

इत्थं लोभाभिभूतो विफलितयतनः कालपाशेन बद्धो
दूतैर्वैवस्वतस्य स्वकृतमनुसरन् नीयते यातनार्थम् ॥३०॥

कर्माधीनः स नार्या उदरमधिगतस्त्वेति तान्तामवस्थां
शेते विण्मूत्रगर्ते क्षुधितकृमिशतैर्दंशितः स्तौति दीनः ।
"आत्मानन्तूद्धरिष्ये व्यसनतिमिरतस्त्वत्पदाब्जाश्रयेण"-
त्युत्पन्नं तं न माया परिहरति पुनर्मृत्युकूपोपनेत्री ॥३१॥

केचिद्धर्मानुसारं चरितविरचनै सावधाना अपीह
त्रैवर्ग्ये सज्जमाना दधति विमुखतां मोक्षदे देवदेवे ।
तेऽर्यम्णो मार्गमेता जननमरणजां यान्ति भूयोऽप्यवस्थां
भक्तास्तु प्राप्य वैराग्यसहितममलं ज्ञानमायान्ति मुक्तिम् ॥३२॥

साऽथ श्रुत्वोपदेशं सुतमपि भगवद्भावतो वन्दते स्म-
"विश्वाधारस्त्वमासीर्मम जठरभृतो ध्वस्तमायागुणोऽजः ।"
सोऽप्येतामाह—"मातर्मम सुमतमिदं श्रद्दधानैहि मुक्तिम्"
मैत्रेयः प्रोच्य गाथामिति कपिलमुनेर्देवहूत्याश्च शान्तः ॥३३॥



# चतुर्थः स्कन्धः

आकूतेर्यज्ञनाम्ना रुचितनय उदैत्तोषसन्तोषतातः,
कन्या दक्षः प्रसूत्यामजनयदमलाः षोडशानन्तपुत्राः ।
कार्दम्यामत्रिराप त्रिसुरसमुदयं दत्तनाम्ना प्रसिद्धं
मूर्त्यां वै दक्षपुत्र्यां सुविदितनरनारायणौ धर्मपुत्रौ ॥१॥

दक्षो जामातरि स्वे शिव इति विदिते द्वेषमाधात्किमर्थम् ?
इत्यापृष्टस्तु सूतोऽवददिह--यजने विश्वसृड्भिः प्रक्लृप्ते ।
दक्षे प्राप्ते शिवाजेतर-सुर-ऋषयोऽभ्युत्थितास्तेन दक्षः
शेपे रुद्राय नन्दी द्विजमभि, तमभि, श्रीभृगुः शाम्भवेभ्यः ॥२॥

एतस्मिन्नन्तरेऽभूत्सकलभवसृजामाधिपत्येऽभिषिक्तो
दक्षो दृप्तोऽथ चक्रे क्रतुवरमखिलानाजुहावामरान् सः ।
पूर्वद्वेषान्न शम्भुं, तमथ हठवती सा सती प्राह गन्तुं,
सोऽनाहूताभियानेऽवगुणसमुदयं दर्शयंस्तां रुरोध ।।३।।

सत्या व्यामुग्धमत्या मनसि नहि धृतं यत्किलोक्तन्तु पत्या,
यान्तीं तामन्वगच्छन् सपदि शिवगणाः, सा तु पित्रावमेने ।
यज्ञे नीरुद्रभागे पितृजनिततया स्वां तनूं गर्हयन्ती,
योगाग्नौ सा जुहाव प्रमथगणमथाध्वर्युराराद् रुरोध ।।४।।

तच्छ्रुत्वाऽऽक्रुध्य रुद्रोऽजनयदिह जटोत्कर्त्तनाद् वीरभद्रं
रौद्रास्तस्यानुयाता मखभुवमरुणन्यज्ञपात्राण्यभाङ्क्षुः ।
भृग्वादीनप्यबध्नन् विकृतमुखरदश्मश्रुनेत्रानकार्षुः,
रुद्रस्त्वाक्रम्य दक्षं कठिनतरशिरस्तस्य चिच्छेद विद्वान् ।।५।।

देवा ब्रह्माणमेत्य व्यदधत विदितं, नेयतुः काच्युतौ यद्-
गत्वा कैलासशृङ्गे स्थितममरवरं शङ्करं ते प्रणेमुः ।
ब्रह्मास्तौषीत्-त्वमेव त्रिभुवनमखिलं पासि निर्मासि हंसि,
पूष्णो दन्ता, भृगोः श्मश्रु च भगनयनं चास्तु दक्षस्य जीवः ।।६।।

शम्भुस्तं सप्रहासं त्विदमभिहितवान्—द्वेष्मि यज्ञाय नाहं,
सम्मूढान् दण्डयामि त्वजमुखप्रभृतेः स्यात्तदङ्गव्यवस्था ।
इत्थं लब्धानुकम्पाः पुनरथ यजने विष्णुसन्दर्शहृष्टा
दक्षर्त्विग्रुद्रसिद्धाग्न्यृषिभृगुविधयस्तं प्रणेमुः प्रबुद्धाः।।७।।

आसन् हंसर्भुमुख्याः सनकप्रभृतयो नारदश्चोर्ध्ववीर्यः,
भार्याऽधर्मस्य जज्ञे मिथुनमतनयो निर्ऋतिः स्वीचकार ।
मायादम्भौ तु लोभादिकमजनयतां, मानवोऽभूद्ध्रुवो यः
सोऽयं निर्गत्य लेभे सुरऋषिकृपया द्वादशार्णन्तु मन्त्रम् ।।८।।

तन्मन्त्राशङ्कितानां स्तुतिमवदधता विष्णुनास्मै वितेने,
वाक्शक्तिर्दर्शनञ्चेत्युभयमुपगतः सोऽपि तुष्टाव देवम् ।

देवाल्लब्ध्वा वरञ्च ध्रुवपदसहितं न ध्रुवोऽन्तः प्रहृष्टः,
प्रत्यायातस्तु पित्रा समुदमुपगतोऽभूत्स मात्रा विमात्रा ॥९॥

भ्रम्यां कल्पं तथा वत्सरमयमजनिष्ट द्वयं शैशुमार्यां,
लेभे चैवोत्कलाख्यं सुतमथ च सुतां वायुपुत्र्यामिलायाम् ।
श्रुत्वा भ्रातुर्वधश्चातिशयकरुणया गुह्यकान् सोऽभ्यगच्छ-
त्तेषां मायां निशाम्य ध्रुवमभिदधिरे विष्णुमेहीति सन्तः ॥१०॥

तच्छ्रुत्वा वैष्णवास्त्रं धनुषि स धृतवांल्लिल्यिरे चापि मायाः
आर्षास्त्रादस्य वाणाः सपदि निरगमन् गुह्यकाः प्राक्रमंश्च ।
साक्षात्स्वायम्भुवोऽथ प्रलयकरममुं बोधयमास—"वत्स,
सन्नत्या गुह्यकेशं धनदमनुसरेर्येन मा भून्निपातः" ॥११॥

युद्धाद्वीरं निवृत्तं धनद उपगतोऽब्रूत—"कालोऽत्र हेतु-
र्नैव त्वं नैव यक्षाः, कथय वरमहं किन्तु तुभ्यं ददामि ।"
वव्रे भक्तिं ध्रुवां सोऽयजत बहुमखैस्तं हरिं, वीतचिन्त-
स्तं वै नन्दः सुनन्दो ध्रुवपदमनयेतां सुनीतिन्तु पूर्वम् ॥१२॥

राज्यार्थी नोत्कलोऽभूदिति नृपपदभाग्वत्सरस्तत्कनिष्ठ-
स्तस्मात्पुष्पार्णनामा वहुसुतजनकस्तस्य च व्युष्टनामा ।
व्युष्टाच्चक्षुस्ततोऽभून्मनुरथ मनुतश्चौल्मुकस्तस्य चाङ्ग—
स्तस्माद्यज्ञप्रभावाज्जननिकुलगतोऽधार्मिको वेन आसीत् ॥१३॥

वेने भूपे निलिल्युः सभयमिह शठाः साधवश्चावमानात्,
यज्ञा दानानि होमा अपि समदमहाघोषणातो विलिल्युः ।
तं सम्यग्बोधयन्तोऽपि न सुपरिणतिं वीक्ष्य सन्तो विजघ्नु-
र्हुङ्कारैरेव, तस्योरुमथनजनितो बाहुकोऽभून्निषादः ॥१४॥

बाह्वोर्मन्थात्तु बालः पृथुरिति जनितः कन्यकाच्चिर्श्च विष्णो-
रंशौ, ब्रह्मादिदेवास्तमभि च दधिरे राज्यलक्ष्माभिषेके ।
ब्रह्मा ब्राह्मन्तु वर्मादिधदथ च हरिश्चक्रमित्येष सूता-
नाह स्माहो भवन्तो भगवति सति मां किं मृषेत्थं स्तुवन्ति ॥१५॥

सूतैः स स्तूयतेस्म-त्वदमलकथया वाचमेते पुनीम-
स्त्वं गोरूपां धरित्रीं सकलहितकरं शस्तमन्नं दुदोग्ध ।
त्वद्राज्यात्प्रद्रुतास्ते दिशि दिशि च शठाश्चापविस्फूर्जनेन,
त्वं वै ज्ञानं कुमारादमलमुपगतो येन विन्दन्ति तत्त्वम् ॥१६॥

एवं संस्तावकेभ्यः स बहुबहु ददौ, पूजयामास सर्वान्,
पूर्वं विप्रैर्हि तस्मै नरपतिपदवी दीयमाना यदासीत् ।
तस्मिन् काले प्रजास्तं शरणमुपगताः क्षुत्पिपासाकुलत्वाद्-
वैन्यश्चायं धरित्रीमभि भृशकुपितो वन्दितोऽभूद् धरित्र्या ॥१७॥

सा चैनं प्रार्थयद्-यज्जगति सफलता लभ्यते भूर्युपायै-
र्वत्सं मे कल्पय त्वं यदि मम सुरभेर्दोहमन्विच्छसीह ।
तच्छ्रुत्वासौ तु वत्सं मनुमकृत करे चौषधीः सन्दुदोह,
पात्रेष्वन्येषु चान्येऽप्यनुगुणमदुहन् कल्पयित्वा स्ववत्सान् ॥१८॥

पश्चादेषोऽश्वमेधान् शतमिह विदधद्देवराजेन रोषा—
वेशादन्त्येऽश्वमेधे हयहरणकृता विघ्नितोऽभूच्छलेन ।
अत्रिप्रोक्तस्तु तस्यात्मज इममनुगत्यारुणच्चानिनाय,
शक्रः पाषण्डकर्त्ता विधिवचनबलान्मोचितस्तेन सोऽन्ते ॥१९॥

श्रीवैकुण्ठो मघोना सह तमुपगतोऽक्षमापयच्चादिशच्च
श्रेयोरक्षां प्रजानां तदितरमघदं, किन्ददेऽहं वरन्ते ।
तच्छ्रुत्वा मग्नचित्तः प्रथममयममुं नेक्षितुं वक्तुमैष्ट,
पश्चात्तत्कीर्तिपानक्षणमधि दशसाहस्रमैच्छच्छ्रुतीनाम् ॥२०॥

लब्ध्वा भक्तिप्रसादं स्वनगरमगमत्साध्वशाच्चात्मराज्यं,
कालिन्दीगङ्गयोश्चान्तरगतवसुधाभाग एष न्यवात्सीत् ।
राजन्ब्रह्मर्षिसंघे क्वचिदथ स नृपो बोधयामास सर्वान्,
यच्छ्रीकान्तं भजध्वं सहि सकलसुहृत्तेन ते हर्षमापुः ॥२१॥

हर्षोद्रेकात् पृथुन्तं स्तुवति मुनिगणेऽभ्यागतास्ते कुमारा-
स्तान् प्रत्युत्थानतस्ते बिनयमतितरां दर्शयामासुरञ्जः ।

आसीनेष्वेषु राजा सविनयमवदत्क्षेमदं किञ्जनस्य ?
प्रोचुस्ते कृष्णपादाम्बुजशरणमथान्योन्यमेते शशंसुः ॥२२॥

राजा पुत्रेषु पुत्रीं विरहविकलितान्न्यस्य सर्वाः प्रजाश्च
वानप्रस्थं प्रपेदे कठिनतरतपः सादरं दारयुक्तः ।
त्यक्त्वा कौमारसन्दर्शितनवविधिनाऽऽध्यात्मयोगेन देहं
सोऽर्च्चिर्नाम्न्या स्वपत्न्यानुगत इह सुरीभिः सदारः स्तुतोऽभूत् ॥२३॥

अन्तर्धानोऽस्य पुत्रो, नरपतिरदिशद् भ्रातृवर्गाय काष्ठाः,
पुत्रांस्त्रीञ्ज्येष्ठपत्न्यामलभत भवितारोऽग्नयो येऽभिशापात् ।
कानिष्ठेयाद्हविर्धान इति सुविदिताद्वर्हिषस्तत्प्रचेतो-
वर्गो यस्मै स रुद्रोऽदिशदतिविमलं रुद्रगीतस्तवाख्यम् ॥२४॥

तेपुस्ते तज्जपन्तस्तप इह शरदाञ्चायुतं मग्नचित्ता,
देवर्षिर्बर्हिषन्तं प्रति समचकथद् बोधयन्नात्मतत्त्वम् ।
गाथां पौरञ्जनीन्तां तनुपुरवसतिं बुद्धिनारीविमोहं
सुप्तायां प्राणनागावनमथ मुमुदाते यथा तौ पुरेऽस्मिन् ॥२५॥

पञ्चाश्वस्यन्दनेन व्रजति स मृगयां, मुञ्चतीमाञ्च गेहे
तीक्ष्णैर्बाणैर्निहन्ति स्ववशविहरणान्, विप्लवो येन तेषाम् ।
प्रत्यागत्य स्वगेहं मदनवशगतो नेक्षते तत्र नारीं,
भूत्वासौ दीनदीनः सपदि मृगयते, रौति चाटूक्तिगर्भम् ॥२६॥

सुस्नाताभ्यागतासावथ तदनुगतेनान्तरङ्गेण मूढो,
यान्तं कालं न वेत्ति क्षणमिव मनुते सर्वमायुर्व्यतीतम् ।
पुत्रानुत्पाद्य तस्यामुपयमनविधेरन्तरं पुत्रपुत्रान्
आयातश्चण्डवेगोऽप्यनुचरसहितः कालपुत्रः सबन्धुः ॥२७॥

प्रज्वारं कालकन्यामपि समनुगताः सैनिकास्ते भयाख्या,
अस्यां भूमौ चरन्तः प्रविविशुरहहा तां पुरीं नागरक्ष्याम् ।
निःसारः कालकन्याभिभवमुपगतः प्रार्द्यमानां पुरीं स्वां,
दृष्ट्वा दीनः स देहं त्यजति, तमनु च ब्राह्मणः कश्चिदेति ॥२८॥

देवर्षिं बर्हिषत्सोऽवददयि सदय, स्पष्टमाचक्ष्व मह्यं,
देवर्षिस्तं बभाषे- समुदितकथया ज्ञायतेऽध्यात्मतत्त्वम् ।
तच्छ्रुत्वा धर्यमागादथ च मुनिमनोमोहहेतूनपृच्छद्,
देवर्षिस्त्वाह सा संभ्रममतिरखिलं दोषमुत्पादयेत ॥२९॥

अन्तः सिन्धौ जपन्तः सुचिरमथ दिशो भासयन्तं स्वभासा,
दृष्ट्वा ते बार्हिषद्या हरिमतिचकितास्तेन सम्बोधिता वै ।
भद्रं वः स्याद् वृणीध्वं वरमिति कथितास्ने नमश्चक्रुरेनं,
सङ्गं तत्सङ्गिनां तेऽवृणत, तरुसुताश्चास यस्यां स दक्षः ॥३०॥

दक्षे विन्यस्य भारं सकलमपि गृहाज्जाजलेराश्रमन्ते,
गत्वा ब्रह्मण्यपारे युयुजुरथ सुरर्षिं विलोक्योत्थितास्ते ।
सम्मानेनाभिपृष्टोऽकथयदथ मुनिर्मूलसेवा फलाय,
यद्वत्तद्वन्मुकुन्दार्चनमिह सकलं श्रेय आश्वादधाति ॥३१॥

---

## पञ्चमः स्कन्धः

देवर्षेः सङ्गलाभादपरमनुसुतो वासुदेवेऽवधाय,
दीक्षां न ब्रह्मसत्रेऽभ्यलषत सहितां, तं समागाद्विरञ्चिः ।
ब्रह्माज्ञागौरवेण श्रितनृपतिपदो, विश्वकर्मात्मजायां
पुत्रान् पुत्रीश्च लेभे स्वरथचरणरेखाकृतद्वीपसीमा ॥१॥

आग्नीध्रस्तस्य पुत्रः पितरि परिणते धर्मतो गां शशास,
जम्बूद्वीपप्रसिद्धामयमथ पितृलोकेच्छया साधु तेपे ।
गायन्तीं पूर्वचित्तिं मदनवशगतः स्वीचकाराथ पुत्रा-
नस्यामुत्पाद्य सोऽन्ते तदनुगतमनास्तत्सलोकत्वमाप ॥२॥

नाभिस्तज्ज्येष्ठपुत्रो दुहितरि किल मेरोरपत्यं न लब्ध्वा,
यज्ञेनायष्ट यज्ञं, तदिह स भगवान् रूपमाविश्चकार ।

ऋत्विग्भिस्तं स्तुवद्भिस्तदनुगुणसुतो यन्नृपस्यार्थितोऽभू-
न्निःसाम्यस्तेन देवः स्वयमिह ऋषभाख्यां दधानः स जज्ञे ॥३॥

राजानं कामयन्ते तमिह भगवतो लक्षणैः शोभमानं
देवा, देवाधिपस्तु स्वहृदि न सहते, तेन नासौ ववर्ष ।
राजासौ स्वात्मयोगादवनिमवति तद्वीक्ष्य नाभिः कृतार्थः,
पुत्राणां यच्छतं तज्जनयति, भरतस्तेषु, यस्यैष देशः ॥४॥

ब्रह्मावर्ते कदाचिन्मुनिवरसदसि प्राप्त एषादिदेश,
"नायं देहो नृलोके क्षणिकसुखकृते, ब्रह्मसौख्याय सोऽयम् ।
तल्लब्धुं साधुसेवा युवतिविमुखता चानिवार्या किलोक्ता"
धर्मं साक्षान्मुनीनां स्वचरिततपसा दर्शयच्चैष देवः ॥५॥

आत्मारामं न भोगो व्यथयति किल यत्सत्यमुक्तं, न कुर्या-
द्विश्वासं किन्तु चेतश्चपलमिदमहो सख्ययोग्यं न जातु ।
इत्यादेशं ददानः स गहनगहने वह्निना लीढदेहो-
ऽभूच्छिष्यस्तस्य चार्हन्यमदिशि नृपतिस्तं न मन्येत धीरः ॥६॥

आसन्वै पञ्च पुत्रा भरतनरपतेर्विश्वरूपात्मजायां
चातुर्होत्रैः स लेभे भगवति परमां भक्तिमन्यैश्च भावैः ।
पुत्रेषु न्यस्य भारं स तु पुलहमुनेराश्रमं प्राप्य पूतं
नद्या वै चक्रवत्या स मिहिरभुवने पूरुषं तं ववन्दे ॥७॥

सुस्नातो ब्रह्मजापं विदधदथ कदाचित्स सिंहानुनादात्,
त्रस्ताया वै हरिण्याः पयसि निपतितं तोकमालोक्य सूतम् ।
तत्सेवासक्तचित्ताद्यमनियमगणाः सर्व एवोद्गतास्ते,
तद्ध्यानाच्चाप चान्ते मृगतनुमथ तां चक्रनद्यां मुमोच ॥८॥

कस्यापि ब्राह्मणस्य श्रुतचरितगुणैरूर्जितस्यैष गेहे,
पुत्रत्वं प्राप, सञ्जातसभय इव जडं दर्शयन् स्वञ्च मूकम् ।
गायत्रीं प्राप्य, याते पितरि सुरभुवं भ्रातृभिर्वै निरस्त-
श्चाण्डालैर्भद्रकाल्या बलिरिव विहितो निर्व्यथो रक्षितोऽभूत् ॥९॥

सौवीरेशोऽथ गच्छन् पथि किल शिबिकावाहकं कञ्चिदिच्छन्,
एनं लेभे, स चायं समुदवहदिमां प्रस्खलन्नुच्छलंश्च ।
रुष्टं तेनातिकष्टं किमपि किमपि जल्पन्तमेनं स आह–
कः स्वामी कोऽत्र भृत्यस्तदुपकलितवान् भूपतिस्तं ननाम ॥१०॥

तस्मै विप्रः स ऊचे-व्यवहृतिरपरा सा परा तत्त्वदृष्टि-
र्नूनं ये वेदवादाः,स्पृशति न खलु तांस्तत्त्ववादो विशुद्धः ।
मोषो वा आत्मनोऽयं ध्रुवमतिसबलः शत्रुरस्त्येधमान–
स्तं हन्तुं दिव्यमस्त्रं हरिगुरुचरणोपास्तिरूपं गृहाण ॥११॥

सौवीरेशोऽवधूतं पुनरपि स नमन्नाह-दृश्यं न तत्त्वम्,
इत्युक्तं तन्मनो मे कलयति न मनाग्याति कौतूहलञ्च ।
भूयः प्रोवाच विप्रः-कथय चरणयोस्तुल्ययोरस्तितायां
कश्चिद्भूमौ चरेन्ना कुत इह शिबिकामन्य आरुह्य यायात् ॥१२॥

एतत्सर्वं त्वजाया रजसि तमसि वा सत्व एव स्थिताया,
मार्गे भ्राम्यज्जनानां भवति न तु परे ब्रह्मरूपे स्थितानाम् ।
सौवीरेशोऽथ भूयो नरजनिफलितां वक्ति तं वन्दते च,
श्रुत्वा चैतत्परीक्षिद् भवसरणिमुदारं प्रवक्तुं स आह ॥१३॥

कर्मक्षेत्रं गृहस्थाश्रम इति न कदाचित्स रिक्तत्वमेति,
तस्मिन्नानाप्रयोगाननयनयकृतानाचरत्येष जीवः ।
लब्ध्वा नानानुभूतीः सुखमिति मनुते दुःखमित्येव वायं,
लाभालाभावभासैर्जननमरणयोरेति चक्रे निपातम् ॥१४॥

ज्येष्ठः पुत्रोऽस्य नाम्ना सुमतिरिह कलौ देवता कल्प्यते यो-
ऽनार्यैः पाषण्डिभिश्चोदभवदथ ततो देवताजित्कुलेऽस्मिन् ।
विद्याशुद्धः प्रतीहो यजनविधिविदः प्रातिहर्त्रादयश्च,
राजर्षीन्द्रो गयश्चाभवदिह विरजश्चान्तिमो भूमिपालः ॥१५॥

जम्बूद्वीपेऽत्र वर्षाणि नव, परिगतं मेरुणेलावृतं यद्-
वामे नीलोऽथ दक्षे निषध इतरयोर्माल्यवद्गन्धमादौ ।

अन्यैर्वा मन्दराद्यैः शिखरगसहकारादिभि, र्दुग्धमुख्यै,
जम्ब्वाद्याभिश्च युक्तं विलसति नगरी शातकौम्भी यदङ्के ।।१६।।

तत्र श्रीविष्णुपादाम्बुजनखदलितोर्ध्वाण्डरन्ध्रप्रविष्टां
गङ्गामौत्तानपादिः शिरसि हरिपदाम्भोजवारीति धत्ते ।
कर्मक्षेत्रन्तु वर्षं भरतकृतममून्यष्टवर्षाणि भौम-
स्वर्गा नारायणोऽस्त्येष्वथ च भव इलायां स सङ्कर्षणाख्यः ।।१७।।

एवं भद्राश्ववर्षे कुलपतिसहितो धर्मपुत्रोऽश्वशीर्षं
प्रह्लादः स्वैरुपेतो भजति स हरिवर्षे नृसिंहं सदैव ।
श्रीलक्ष्मीः केतुमाले प्रणमति मदनं, श्रीमनू रम्यके च,
मत्स्यं, कूर्मं हिरण्ये पितृपतिरथ भूरुत्तरेष्वूद् वराहम् ।।१८।।

रामं सीताभिरामं भजति स हनुमान् किन्नराणान्तु वर्षे
देवर्षिर्भारतेऽस्मिन् प्रणमति नरनारायणौ स्तौति चेमौ ।
शैलैर्भूयोभिरेतत्परिगतमु नदीभिश्च वर्णाश्रमैश्च
देवा गायन्ति गीतं स्तुतिभिरुपगतं, सन्त्युपद्वीपकाश्च ।।१९।।

प्लक्षद्वीपेऽथ वर्षाचलनृपसरितः सप्त वार्यैक्षवश्च,
शाल्मल्यां वै सुरोदं भवति धृतपयोधिः कुशद्वीपमध्ये ।
क्रौञ्चद्वीपे पयोधिर्भवति दधिनिधिः शाकके, पुष्करे तु,
वर्षे वै स्वादुतोयं तदनु भवति चालोकलोकाचलोऽयम् ।।२०।।

एतद्भूमण्डलं वै तदनुगुणमथो मण्डलं स्याद्दिवोऽपि,
तन्मध्येऽर्कस्त्रिलोकीं तपति, कलयते चायने षड्ऋतूंश्च ।
अन्येऽप्येनं ग्रहास्ते निजगतिबलतस्तत्र तत्रानुयन्ति,
अग्रे तं बालखिल्या अरुणरथवहो याति पश्चात्पुरस्तात् ।।२१।।

आदित्यो मेरुमेतं ध्रुवमिममपि चैवोपयन् राशिचक्रे,
चक्रे वै कुम्भकर्त्तुः स्मरयति तदपाश्रित्य संस्थं भ्रमेण ।
चन्द्रो मासेन वर्षं, तुलयति स पदाभ्याञ्च भाभ्यान्तु मासम्,
अह्ना चैवास्य पक्षं द्रुततरगमनो भुङ्क्त एव ग्रहोऽन्यः ।।२२।।

सर्वेषाञ्चोपरिष्टाद् ध्रुवपदमुदितं ह्याश्रयो यः समेषां,
ज्योतिश्चक्रं तु केचिज्जगदुरिह बुधाः शिशुमाराख्यचक्रम् ।
यत्पुच्छाग्रे ध्रुवोऽयं विधिशुचिहरयो, धर्म एतस्य पुच्छे,
धाता पुच्छस्य मूले वसति ऋषिगणश्चास्य कटचां यथावत् ॥२३॥

सूर्यस्याधश्च राहुश्चरति स कुरुते वैरबन्धानुरूपं,
तस्याधस्ताच्च विद्याधरप्रभृतिग्रहाणामवस्थानमाहुः ।
यक्षा रक्षांसि तस्मादध इह जलदा यावता धावमाना-
स्तस्याधस्ताद्धरेयं त्वतलवितलमुख्यान्यधो वै धरायाः ॥२४॥

पातालादप्यनन्तोऽध इति सुविदितो योऽत्र संकर्षणाख्यः
सोऽयं नीलाम्बरः सन् भवति हलधरो लोककल्याणकामः ।
तञ्च ब्राह्मचां सभायामभिवदति नवैः संस्तवैर्नारदोऽयं-
"मूले तिष्ठन् रसायाः स्ववश इह भुवं देव ! मूर्ध्ना विभर्षि:" ॥२५॥

त्रैलोक्यस्यान्तराले यमदिशि वसुधाया अधस्ताज्जलस्य,
चोपर्यास्ते पितॄणां पदमिह पितरः कामयन्ते शुभानि ।
यस्मिन्वैवस्वतोऽयं दमयति दुरितं, तत्र तामिस्रमुख्यान्,
सैकां वै विंशतिं तेऽभिदधति नरकान्, पापिनस्तान्नयन्ति ॥२६॥



## षष्ठः स्कन्धः

नानोग्रा यातना न स्युरिह कथमिति प्रश्नमाकर्ण्य राज्ञो
नो वाक्कायान्तरङ्गैरघमुपचिनुयादित्यवादीन्महर्षिः ।
प्रायश्चित्तं त्वपार्थं तदिति नरपतेः प्रश्नमुत्तर्तुमाह
नामोपास्तिस्तु सार्था शुभमथ शुभकृद्याति दासीपतिर्वा ॥१॥

पुत्रं नारायणेत्याह्वयति यमचरैर्नीयमानः कृतान्तं
वैकुण्ठं विष्णुभृत्यैरिति कलिरभवत्कुत्र नेयो द्विजोऽयम् ।

'नामस्मृत्या 'हताघो नहि नरकमयं यातुमर्हत्यपाप'
इत्युक्ते तैर्विमुक्तो नवजनिमुपगम्यैष साधुर्बभूव ॥२॥

देवो वैवस्वतस्तान् किमवददिति भूपोऽभ्यपृच्छत्पुनस्तं,
प्रोचे वैयासकिस्तं—यममुपजगुरेते कियन्तोऽत्र देवाः।
तानाहाथैष—मत्तः पर इह जगतस्तस्थुषश्चाधिनाथ-
स्तद्भक्तान् माऽऽनयध्वं क्वचिदिति कलयन्तश्चरास्तेऽतिबिभ्युः ॥३॥

सर्गं देवादिकानां नरपतिरवदद् वक्तुमाहैष तस्मै
पुत्राः प्राचीनबर्हेर्द्रुमदहनविधौ वायुमग्निं च तेनुः।
सोमेनोद्बोधितास्ते किल तरुतनयायां सुतं दक्षमापु-
र्दक्षस्तेपे तपस्तं हरिरवददये मैथुनी स्तात्प्रजा ते ॥४॥

दक्षोऽयं पाञ्चजन्यामजनयदयुतं पुत्रकांस्ते सुशीला-
स्तीर्थं नारायणाख्यं ययुरिह तपतस्तान् सुरर्षिर्ददर्श।
हर्यश्वा बालिशाः स्थेत्युदितमथ मुनेस्ते विबुध्य व्यरज्यन्
दक्षोऽशोचच्च पुत्रानजनयदपरांस्तेऽपि तद्वद्विरक्ताः ॥५॥

रुष्टो दक्षः सुरर्षिं तमशपदयि ते मा पदं क्वापि तिष्ठेत्,
ब्रह्मादेशादसिक्न्यामजनयदितराः षष्टिपुत्रीः स चायम्।
लोका यासां प्रसूतिप्रसवपरिभृताः का नु संख्यास्तु तेषां,
त्वाष्ट्रेयं विश्वरूपं विमतगुरुपरित्यक्तदेवा अवृण्वन् ॥६॥

देवास्त्यक्ताः कथं ते पुनरिति नृपतिः पर्यपृच्छच्छुकोऽस्मा
आचख्यौ—देवराजः पदमदमहितो नासनादुच्चचाल।
तेन प्रत्यागतोऽभूद् गुरूरपिहितवान् स्वं, सुरास्तत्परास्ता
ब्रह्मादेशादवृण्वंस्तमथ गुरुपदे विश्वरूपं श्रिये ते ॥७॥

प्राप्तं नारायणाख्यं कवचमथ नृपः श्रोतुमैच्छत्तदस्मै,
प्रोचे वैयासकिर्वै सविधि च सरहस्यञ्च मन्त्रान्वितञ्च।
"कुर्यान्मे सर्वरक्षां हरिरथ सलिले मत्स्यमूर्तिः स पायात्,
मायाखर्वः स्थले मामवतु नरहरिर्दुर्गमे," कौशिकञ्च ॥८॥

देवेभ्यश्चासुरेभ्यो वितरति हविरित्याविदन् देवराज–
स्तच्छीर्षाण्यच्छिनत्तान्यथ विहगगतिं प्राप्तवन्ति त्रिधापि ।
त्वष्टुर्यज्ञेन वृत्रः प्रतिपलमवृधच्छक्रशत्रुः सुरास्ते
श्रीवत्साङ्कं प्रपन्नास्तदुदितमनुयाता दधीचोऽस्थि लब्धुम् ।।९।।

पूर्वन्तैः प्रार्थितोऽसौ व्यतरत नहि तद्याचितो धर्मदृष्टया,
ब्रह्मण्याधाय चेतस्तनुमसृजदथो कारयित्वास्थिवज्रम् ।
वृत्रं सोऽभ्यद्रवत्तं किल नमुचिमुखा योद्धुमभ्यागमंस्ते,
शक्रस्यौजःपरास्तानथ समरमुखेष्वाह्वयामास वृत्रः ।।१०।।

वृत्राहूता न चैते समरमुपगतास्तेन रुष्टः स शक्रं
निर्भर्स्योद्धर्धमानोऽजनयदतिभयं, शक्रमेतज्जगाद ।
ब्रह्मघ्नस्त्वं गुरुघ्नो मम करनिहतः कर्तुमेतोऽनृणं मां
भूतेभ्यो वा बलिम्मे तनुशकलकृतां दातुमभ्यागतोऽसि ।।११।।

इत्थं मृत्युं जयादप्यधिकमभिलषन् शूलमादाय वेगा–
दागच्छन्नेष मार्गे सुरपतिकुलिशेनाभवद् व्यर्थयत्नः ।
आयान्तञ्चाथ वृत्रं स परिघसहितं वज्रघातैस्तथाहन्,
येनास्याङ्गानि भिन्नान्यथ किमपि महोऽलोकमस्याभिपन्नम् ।।१२।।

वृत्रे वृत्ते विनेन्द्रं त्रिभुवनमखिलं हृष्टमित्याकलय्य,
तस्याहर्षस्य हेतुं नरपतिरथ वैयासकिं पर्यपृच्छत् ।
स्त्रीभूवारिद्रुमैर्मे द्विजवधदुरितं पूर्वमासीद् विभक्तं,
वृत्रं हत्त्वा तु मार्जिम क्व तदिति मुनयोऽस्याश्वमेधेष्टिमाहुः ।।१३।।

राजापृच्छत्स वृत्रः कथमिव परमे पुंसि भक्तिं तु लेभे,
प्रोचे वैयासकिस्तं सुरमुनिकथितं चित्रकेतोरुदन्तम् ।
पुत्रं लेभेऽङ्गिरस्तोऽसुखसुखजनकं, तन्मृतेश्चारुदन्तीं
राज्ञीं दृष्ट्वा नृपोऽपि व्यलपदथ मुनिः सोऽङ्गिरा आजगाम ।।१४।।

राजानं बोधयन्तौ मुनिरमरमुनिः कस्तवायं नरेन्द्र
राजा तावभ्यपृच्छद् यतिवसनधरौ कौ युवां ज्ञानिनौ स्थः ?

पुत्रेच्छोः पुत्रदोऽहं तव विधितनयो नारदश्चैष शोका-
त्क्रोशन्तं त्वाऽतदर्हं शमयितुमयिताव्यिवादीन्मुनिस्तम् ॥१५॥

देवर्षिर्दर्शयंस्तं न्यगददयि तनुं निर्विश स्वां, स जीवः
प्रोवाचैनौ तु कस्मिञ्जनुषि जनकतां प्राप्तवन्ताविमौ मे।
तच्छ्रुत्वा शोकमुक्तो द्विजवचनविबुद्धः समोहान्धकूपा-
न्निष्क्रान्तः प्राप्य विद्यामजितमयजतास्मै ददौ दर्शनं सः ॥१६॥

अन्तर्भूतस्य काष्ठामनमदथ शिवं साम्बमालोक्य गच्छन्,
उच्चैर्देवीं जहास प्रियतनुमिलितां, सापि धृष्टं रुषाह।
योनिं पापीयसीं त्वं व्रज, महति यथा नैव कर्तासि पापं
तं शापं चित्रकेतुस्त्ववनतशिरसा धारयन्, वन्दितोऽभूत् ॥१७॥

भानोरष्टौ, भगस्य त्रय इह तनया, धातुरष्टौ, जलेशा-
द्वल्मीकाच्चापि मित्रावरुणतनुजनी द्वौ, त्रयश्चेन्द्रमित्रात्।
खर्वादिकस्ततोऽन्ये, दितिजठरजनी कश्यपात्, स्वर्णशय्या-
श्चत्वारः, सैंहिकेयः, कनककशिपुजादेक एकस्ततोऽभूत् ॥१८॥

दित्या एकोनपञ्चाशदिह व्रतरुजा, तद्व्रतं श्रीशुकोऽथ,
राज्ञे प्रोवाच-मार्गे सितदल इदमारभ्यते, श्रूयतेऽदः।
स्नात्वा नारी सुवासा नमतु भगवते षोडशाभ्यर्पयेच्च,
होमं कुर्याच्छ्रियेशं जपतु पठतु च स्तोत्रमैकाब्दिकं तत् ॥१९॥



## सप्तमः स्कन्धः

अङ्गीकर्तुर्गुणानां न दितिजदमनं निग्रहोऽनुग्रहोऽयं,
चैद्यः प्राप्तोऽत्र तत्त्वं भगवति हि वधादिर्न दृष्टोऽस्त्यमानात्।
जीवो वैरानुबन्धादपि भ्रमतितरां तन्मयः कीटवद् वै
कामाद् द्वेषाद् भयाद्वान्वयप्रणयबलाल्लभ्यते सर्वथा सः ॥१॥

चैद्यः पूर्वं जयोऽभूत्कनककशिपुतामाप पुत्रे नृशंसो
भ्रातुर्नाशेन तप्तो हरिमभिकुपितो दानवानादिदेश।
यज्ञस्वाध्यायशीलान्व्यथयितुमथ ते सर्वनाशे प्रवृत्ता,
भ्रातुः पुत्रांश्च पत्नीं दितिमपि च समाश्वासयत्प्रोच्य वार्ताम् ॥२॥

तेपे चोग्रं तपोऽसौ तदिह सुरगणा ब्रह्मलोकन्तु गत्वा,
ब्रह्माणं प्रार्थयन्त, त्वरितमयमगाद्, आशिषाऽयोजयच्च।
दृष्ट्वा कीटाभिभूतं जडमिव विकलं प्रौक्षदङ्गञ्च वार्भिः,
सोऽभ्युत्थायास्तवीत्तं वरमपि विदितं प्रार्थयच्चैनमेषः ॥३॥

ब्रह्मा तस्मै दुरापानपि विषमवरान् प्राददाद् धाम्न्यगाच्च,
दैत्यश्चासौ विशङ्को दिशि दिशि विजयं स्थापयामास सम्राट्।
लोका विष्णुं प्रपन्ना अथ गगनगिराऽसान्त्वयत्तान्, हनिष्ये
प्रह्लादद्रोहिणं तं, सुरमुनिरथ तद्धर्मपुत्रं जगाद ॥४॥

पौरोहित्याय काव्यो वृत इह दनुजैस्तस्य पुत्राविहास्ताम्,
शण्डामर्कौ तु पाठचानुपदिदिशतुरन्यांश्च प्रह्लादमेनम्।
पित्रा पृष्टः कदाचित्पठितमयमवादीद्, गृहन्त्वन्धकूपं,
त्यक्त्वा सेव्यो मुकुन्दोऽभवदहह ! ततः शूलदिग्दन्तिदण्डचः॥५॥

प्रह्लादो दैत्यबालानवददयि पुमान् बाल्य एवात्र धर्मान्
कुर्यात्को वेद कालं हरिपदशरणं सत्वरं संश्रयेत।
आन्वीक्षिक्यादिविद्याः स्वसुहृदि परमेऽधीयते स्वार्पणार्थं,
देवर्षेर्ज्ञातिमेतन्मम तदिति तदा पृच्छतः प्राह सोऽयम् ॥६॥

याते तप्तुं तु ताते सुरपतिरहरन्मातरं मे कयाधूं,
तं देवर्षिर्न्यषेधत्स च भयमवदद् गर्भगाद् बालकात्तम्।
प्राहासौ—बालकोऽयं हरिभजनपरः स्यादथाम्बां मदीयां,
धर्मज्ञानादि सत्त्वं यददिशदिदमेवास्ति चित्तेऽधुनापि ॥७॥

श्रुत्वा दैत्यार्भकास्तज्जगृहुरनघतासद्गुणात्तेन भीता
आचार्या आहुरेतन्नृपतय इति तं हन्तुकामोऽभवत्सः।

आक्रुश्यास्मै च भूयः करधृतकरवालोऽतडत्स्तम्भमाराद्
दृष्ट्वाधावन्नृसिंहं स नखदलितवक्षाः सुरैः स्तूयते स्म ॥८॥

ब्रह्मारुद्रेन्द्रसिद्धर्षिपितृमनुमुखैः स्तूयमानोऽपि मन्यु–
संरम्भं नाजहाच्छ्रीरपि न तमुपयाताऽथ प्रह्लाद एव ।
अस्तौषीद् देवदेवं श्रुतिशतगदितं भक्तिपूर्णान्तरात्मा,
तस्मै तुष्टो नृसिंहोऽभिनववरशतैराह्वयन्नैष चैच्छत् ॥९॥

प्रह्लादः प्राह—देव, त्वदुपगतमिमं कामसक्तं मुमुक्षुं,
मा मामिष्टैर्वरैस्त्वं विकलय भगवन्, आह तस्मै नृसिंहः ।
भक्ता नाशासते मे, त्वमपि धृतयशा मामुपैष्यस्यवश्यं,
ब्राह्मण्यञ्च न्यषेधज्जयविजयजनी, पूर्हतिं चाह वैधः ॥११॥

राज्ञे धर्मात्मजाय प्रदिशति स सनाधर्ममर्मार्थ, सम्यक्,
मूलं धर्मस्य विष्णुः शमदमतपसां, कीर्तनादेश्च नूनम् ।
षट्कर्मा ब्राह्मणः स्यादवनमनुगतः क्षत्रियो विट् सवार्तः,
शूद्रः शुश्रूषुरास्तामृतममृतंमृताद्या वरं न श्ववृत्तिः ॥११॥

वर्णी दान्तो गुरोः स्याद्धितनिरततया नित्यकर्मानुपेक्षी,
वेदाध्यायी च भिक्षुर्व्यवहरतु विनार्थं न नारीजनेषु ।
एवं भूयाद् गृहस्थः किल ऋतुगमनो, माल्यधारी न वा स्याद्,
वानप्रस्थो हिमार्कातपदहनमरुत्संश्रयश्चात्मवेत्ता ॥१२॥

संन्यस्तो भिक्षुरेकश्चरतु, न मरणं चाभिनन्देन्न निन्देद्,
अत्रोदाजह्रुरेतद्यदिह मुनिवरं भूमिशय्यं ददर्श ।
प्रह्लादस्तं प्रणम्यावददयि वपुषः पीनता ते कुतोऽस्ति,
स प्रत्याहास्म्यनीहः क्वचिदणु विगुणं तत्प्रतीपञ्च भुञ्जे ॥१३॥

धर्मं वै पारहंस्यं कथमिव लभतामत्र गार्हस्थ्यवर्ती ?
इत्यापृष्टः सुरर्षिः कथयति—शनकैरेष सङ्गं विमुञ्चेत् ।
काले स्नानं जपं च व्रतमथ पितृदेवार्चनानि प्रकुर्यात्,
देशे पात्रे च दानं सकलहितहरिध्यानमन्तर्विदध्यात् ॥१४॥

पित्र्येषु ज्ञाननिष्ठा अधिकगुणकराः कर्मनिष्ठाश्च दैवे,
दैवे द्वौ त्रींश्च पित्र्ये वरयतु न कदाचित्तु विस्तारमिच्छेत् ।
कर्मत्यागी गृहस्थो व्रतविमुखवटुर्ग्रामवासी मुनिश्च,
भिक्षुश्चैवेन्द्रियार्थी न भवति कुशली, भक्तिमानेति शान्तिम् ॥१५॥

---

## अष्टमः स्कन्ध

तेपे स्वायम्भुवो वै शतमिह शरदामेकपादेन तिष्ठन्,
तं जग्धुं यातुधानान् विहितपरिकरान् वीक्ष्य यज्ञो विजघ्ने ।
एवं स्वारोचिषोऽभून्मनुरथ समभूदुत्तमस्तामसश्च,
तैस्तैर्देवैः सुतैर्वा, हरिरिह समभूद्येन मुक्तो गजेन्द्रः ॥१॥

क्षीरोदाब्धौ त्रिकूटो गिरिरतिसुषमावान् द्रुमैः पक्षिभिश्च,
तत्रायातः करेणूशतपरिवृत एको गजेन्द्रोऽतिमत्तः ।
आगत्यासौ सयूथो विमलजलसरस्तीरमापीय नीरं,
मज्जन् ग्राहेण पादे ग्रहणपरवशः कञ्चिदीशं जगाम ॥२॥

"यस्मादेतच्चिदात्माखिलमपि भुवनं यः परेशः समेषां,
तस्मा आश्चर्यकर्मामितबलनिलयायात्मदीपाय नित्यम् ।
शान्ताय ज्ञानरूपाय किल भगवते स्यान्नमः, पात्वसौ मा"–
मित्यार्त्तं तं विदित्वा त्वरितमिह हरिस्तं ग्रहादुज्जहार ॥३॥

ब्रह्मेशानादयस्तत्सकुसुमकिरणं कर्म भूयः शशंसु–
र्नेदुर्वै दुन्दुभीनां सुखदसमुदयास्तुष्टुवुस्तज्जनाश्च ।
इन्द्रद्युम्नाख्ययासौ द्रविडनरपतिस्तापसेनाभिशप्तः
प्राप्तः पूर्वं गजत्वं हरिकरकलितोऽसौ गतिं प्राप दिव्याम् ॥४॥

जातो वै रैवताख्यो मनुरिह भगवान् शुभ्रगेहे विकुण्ठा–
गर्भाद् वैकुण्ठनाम्नाऽजनि परिकलितं येन वैकुण्ठधाम ।
षष्ठो वै चाक्षुषोऽभूदिह च स भगवान् आस सम्भूतिगर्भाद्,
वैराजस्याजिताख्योऽसुरसुरकलहे कार्थितो यः सुधादः ॥५॥

सोऽयं तोष्टूयमानः सविधिसुरगणैराविरासार्ककोटि–
कान्तिस्तं ब्रह्मशम्भू स्तुतिनतिततिभिर्भूय एवैडयेताम् ।
देवानाहाथ सोऽयं–दनुजदितिजनैः सन्धिरादौ विधेय–
स्तैः साकं क्षीरसिन्धुः सपदि च मथनीयोऽमृतप्राप्तिकामैः ।।६।।

देवाः सन्धाय दैत्यैः परमयतनमालम्ब्य चोत्पाट्य मन्थ–
मारोप्यैनं गरुत्मत्यथ जलधिमगुर्नागराजेन साकम् ।
ना देवैर्मथ्यमानादमृतमुदभवत्तर्हि तं निर्ममन्थ,
मेघश्यामस्ततोऽभूद्विषमथ विकलांस्तान् शिवः साध्वरक्षत् ।।७।।

पीते हालाहलेऽथादितिजदितिजनैर्मथ्यमानात्पयोधे–
रासन्नुच्चैःश्रवाश्चाप्सरसुरतरवः कौस्तुभैरावतौ च ।
श्रीराविर्भूय वव्रे सकलगुणनिधिं श्रीहरिं, प्रादुरासी–
द्बिभ्रद्धन्वन्तरिश्चामृतकलशमहार्षुः परे, नार्यभूत्सः ।।८।।

दैत्यास्तद्रूपमुग्धाः सविनयमवदन्-सुभ्रु विश्राणयेद–,
माश्वास्य क्ष्वेलितैस्तानमृतकलशमादाय मन्दस्मिता सा ।
देवान् दैत्यांश्च पूर्वाभिमुखमुपगतान् पङ्क्तिशश्चोपवेश्य
राहुं चक्रेण कृन्तन्त्यमृत मियमदाद् देवताभ्यो न तेभ्यः ।।९।।

पीयूषं पाययित्वा गरुडपरिकरोऽसौ ययौ, किन्तु दैत्या
देवानुत्येतुरार्ताः प्रतियुयुधुरथो ते मिथो दारुणं तत् ।
देवास्ते दैत्यमायाविकलितमनसो विष्णुमेव प्रपन्ना–
स्तेनासौ प्रादुरास प्रलयमुपगताश्चाभवन् सर्वमायाः ।।१०।।

इन्द्रो निर्भर्त्स्य वैरोचनमभिकुलिशं प्राहरत्, सोऽपतत्त–
न्मित्रं जम्भो गदां न्यस्यदथ गजवरो व्याकुलोऽभूत्तदानीम् ।
आरुह्य स्यन्दनं तं समुपगतमयं शूलपाणिर्जगाम,
वज्री वज्रेण सर्वान्व्यकलयदथ तान्वारयामास वेधाः ।।११।।

काव्यस्पृष्टे बलौ जीवितवति, गिरिशोऽभ्येत्य विष्णुं बभाषे,
योषिद्रूपं दिदृक्षे तव दनुदितिजा येन मुग्धास्त्वयेति ।
तद्रूपं पश्यतोऽभूदपि मदनजितः काचिदुन्मादसंस्था,
रेतश्चस्कन्द मह्यां रजतकनकतां प्राप, माया हरेः सा ।।१२।।

नाम्नासीच्छ्राद्धदेवो मनुरथ कथयन्त्यस्य पुत्रा दशासन्,
अस्मिन्मन्वन्तरेऽभूददितिजठरतो वामनस्यावतारः ।
सूर्यच्छायातनूजोऽष्टममनुरुदितो यत्र सावर्णिनामा,
तस्मिन्वैरोचनः स्यात्सुरपतिरयिता याचितुं वामनो यम् ॥१३॥

दक्षः सावर्णिनामा मनुरिह नवमो वारुणो वै स भावी,
ब्रह्मा सावर्णिनामा मनुरिह दशमः स्यादुपश्लोकपुत्रः ।
धर्मः सावर्णिरेकादशमनुपदवीं प्राप्स्यतीहात्मवान् स,
रुद्रो देवस्तथेन्द्रो मनव इव भविष्यन्ति सावर्णिसंज्ञाः ॥१४॥

युद्धे देवैः परास्तो बलिरिह भृगुभिर्जीवितो याजितश्च
वह्नेरिष्टात्स लेभे ध्वजरथहयतूणीरचापांश्च वर्म ।
तैर्युक्तो देवधानीं स तु परिरुरुधेऽथाह शक्रं सुराणा-
माचार्यो यात शीघ्रं भृगुभिरुपभृतात्तोजसो रक्षत स्वम् ॥१५॥

पुत्रा नष्टाधिकारा अदितिरतितरां तापमापाथ दीनां,
तां दृष्ट्वा कश्यपोऽपृच्छदपि सकुशला, साब्रवीत्पुत्रदुःखम् ।
स प्रत्याहार्चय त्वं परमपुरुषमेष त्वदर्तिं निहन्ता,
शुक्ले वै फाल्गुने द्वादशदिवसपयोमात्रमत्राहरन्ती ॥१६॥

सातिष्ठद् द्वादशाहं व्रतमथ भगवान् दर्शयामास रूपं,
तं यज्ञेशं परार्त्ताऽदितिरतिविनयात्प्रार्थयामास दीनम् ।
तच्छ्रुत्वा पुत्रचिन्ताहरणमिह भवेत् पुत्रलाभेन मात-
रित्युक्ता तेन सागात्पतिमथ जठरेऽभ्याययौ सोऽपि तस्याः ॥१७॥

गर्भस्थोऽपि स्तुतोऽसौ सुरगुरुविधिना, प्रादुरासाथ देवः,
सर्वे हर्षं प्रपन्नाः क्षितिगगनदिशो, वाद्यवृन्दानि नेदुः ।
पित्रोर्मोदः कियान् स्यान्मुदमयुरखिलाश्चोपनिन्युर्महान्तः
श्रुत्वा यज्ञं बलेश्चागमदथ मुनिभिः स्वागतं सोऽस्य चक्रे ॥१८॥

भूपं तुष्टाव देवः श्रुतकुलगुणतो भूमिमभ्यार्थयच्च,
स्वैः पादैः सम्मिता वै त्रिभिरिति स बलिर्दातुमैच्छद्विशिष्टाम् ।
देवः सन्तोषमाहात्म्यमभिदधदलं, सोऽथ दातुं समुत्कः,
शुक्रेणोक्तः–किलासौ तव हरति समं तेन नेत्यस्य वाच्यम् ॥१९॥

आचार्येणोपदिष्टः स पुनरकथयन्नाधुना नेति वाचां
कालस्तच्छृण्वतोऽभूदतिरुषितगिरा भ्रश्यतां श्रीस्तवेति ।
शप्तोऽप्येवं स विन्ध्यावलिधृतकलशान्नीरमानीय तस्य
पादौ प्रक्षाल्य मूर्ध्न्यक्षिपदथ विममे स क्षितिं स्वश्च पद्भ्याम् ॥२०॥

आदुर्ब्रह्मादयोऽस्मै बलिमथ विजवो जाम्बवान्दिक्षु घोषं,
चक्रे दैत्या अकुप्यन्नदितिजदितिजान् युध्यमानानरौत्सीत् ।
बद्धं तार्क्ष्येण पाशैर्बलिमथ भगवानाह पादं तृतीयं,
नादास्तेनाविश त्वं निरयमिह रसायां कियन्तन्तु कालम् ॥२१॥

तच्छ्रुत्वासौ बभाषे शिरसि मम विभो धेहि पादं तृतीयं
प्रह्लादोऽभ्येत्य तस्मिन्क्षण इदमवदत्-साधु नाथाकृथास्त्वम् ।
ब्रह्माविन्ध्यावलिभ्यां प्रणत इह बलिं चाब्रवीद्वामनो यत्
स्वर्गिप्रार्थ्यं व्रज त्वं सुतलमयि बले ! ज्ञातिभिः साकमाशु ॥२२॥

व्यञ्जन् कार्तज्ञ्यमाह प्रणतजनहितो नाथ, किं किं न दत्से,
यातश्चाशु प्रसन्नः सुतलमथ हरिं वन्दते स्मास्य तातः ।
अस्तौषीच्छुक्र एनं-प्रभुवचनसमालम्बनं श्रेय एकं,
मायाखर्वो महेन्द्राय दिवमतनुताब्जस्तथास्मै पतित्वम् ॥२३॥

मायामत्स्यावतारं नृपतिरथ शुकं वक्तुमभ्यार्थयत्सः,
सोऽपि प्रत्याह कल्पान्तविलयसमये सागरोपप्लुतेषु-
लोकेषु श्राद्धदेवो मनुरिह शफरीं वर्धमानामपश्यत्,
तच्छृङ्गे नावमाबध्य स हरिमभजत्तं स सांख्यं दिदेश ॥२४॥

---

## नवमः स्कन्धः

ब्राह्मो जज्ञे मरीचिस्तत इह समभूत्कश्यपोऽस्माद्विवस्वान्,
तस्माच्च श्राद्धदेवो गुरुरयजत तत्पुत्रकामेष्टिमस्मै ।
श्रद्धा होतारमाह-प्रभवतु दुहितेति त्विलाभूत्स चक्रे,
सुद्युम्नं तामथैषा पुनरपि महिलाभूत् पुनः स्त्री पुमांश्च ॥१॥

तेपे वैवस्वतोऽथ स्वसदृशतनयाँल्लेभ इक्ष्वाकुमुख्यान्,
तेषां गोघ्नः पृषध्रो हरिभजनपरो दावतो ब्रह्म चाप्नोत् ।
धृष्टाद्धार्ष्टं द्विजत्वं गतमथ च वणिग्दिष्टपुत्रोऽभवत्स,
तद्वंशेऽभून्मरुत्तो धृतयजनयशा बान्धवोऽलम्बुषेशः ॥२॥

शर्यातिर्वै सुकन्या च्यवनपतिपरा तज्जरामुक्तिकाले-
ऽस्तौषीत्स्ववैद्ययुग्मं, पतिपरिचयमाप्नोच्च लक्ष्माणि दृष्ट्वा ।
शर्यातिस्तां विलोक्य प्रथमममुदितो बोधने मोदमाप्त-
स्तस्यानर्तादभूद्रेवत इह दुहितुर्यो वरं काद्विवेद ॥३॥

दायेऽदुर्भ्रातरो वै पितरमु कवये, तं पिता प्राह सूक्ते,
स्वर्यन्तः सत्रिणोऽस्मै धनमधिकमदुस्तं तु पर्यैक्षतेशः ।
नाभागादम्बरीषोऽभवदतिथिरिहाभ्याययौ यं महात्मा,
दुर्वासाः, क्रोधरूक्षं यमिह भगवतश्चक्रमन्वाससार ॥४॥

दुर्वासःप्रार्थितोऽसावरिणमभिवदन् स्तोत्रतोऽशामयत्तं,
दुर्वासास्तं शशंसाथ च स नरपतिः प्राणमत्तत्पदाब्जम् ।
आतिथ्यं कारयित्वा वरमिदमुपलेभे प्रसन्नाच्च तस्माद्
एतत्कर्मावदातं शरदयनशतं कीर्तयिष्यन्ति विज्ञाः ॥५॥

इक्ष्वाकोर्वै विकुक्षिर्विपिनमुपगतः श्राद्धमांसं ग्रहीतुं,
तत्र श्रान्तः शशं कञ्चन स च बुभुजे, तेन पित्रा विसृष्टः ।
तत्पुत्रोऽभूत्ककुत्स्थः सुरपतिसहकृद्, धुन्धुमारश्च धुन्धुं
पुत्रैः साकञ्जघानाध्वरनिशि युवनाश्वो जलेनास गर्भी ॥६॥

मान्धातास्याम्बरीषोऽस्य स तमवरयत् पुत्रतायां, ततोऽभूद्-
हारीतो नर्मदा तं भुजगपतिगिरा वै रसामानिनाय ।
गन्धर्वानेष हत्वाऽभयवरमुपलेभे निजस्मर्तृकाणां
वंशेऽस्मिञ्जज्ञिरे ते सुविदितयशसोऽन्ये त्रिशङ्कुर्हरीन्दुः ॥७॥

तत्पौत्राद्रौहिताश्वादजनि स हरिताच्चम्पको यस्य चम्पा,
वंशेऽस्मिन्बाहुकोऽभूदरिहृतधरणिर्यो वनं भार्ययाऽगात् ।
तत्पत्न्यै तत्सपत्न्यो गरमदुरभवत्सोऽत्र यस्याश्वमिन्द्रो,
जह्रे पुत्राश्च दग्धाः कपिलमुनिरुषा, तस्य पौत्रोंऽशुमांश्च ॥८॥

गङ्गालाभाय भूयोऽयतत स च दिलीपो भगीरथ्यन्दनोऽपि,
गङ्गा प्राहैनमेषा नहि धरणिमहं पापभीता प्रयामि ।
प्रत्याहैनां स सन्तो मलहरणकरास्ते भविष्यन्ति तत्र,
तस्माज्जज्ञे श्रुतोऽस्मान्नलसख उदभूद्वं शकर्ता सुदासः ॥७॥

अस्मिन्वंशे च नारीकवच इति नृपोऽभूच्च खट्वाङ्गयोगी,
खट्वाङ्गाद्दीर्घबाहू रघुरभवदितोऽजस्ततो रामतातः ।
रामो मारीचमुख्यान् हरिहरधनुषी चापि भङ्क्त्वा, वनानि
पित्रादेशेन गत्वा खरमुखदनुजांश्चापि हत्वा स्वराज्ये ॥१०॥

यज्ञे भूमिं समग्रां द्विजकरकमलेष्वर्पयित्वाऽपवादाद्
भीतः सीतां जहौ चान्तरधृतकदनोऽदर्शयत्स्त्रीप्रभावम् ।
भ्रातॄनाशा विजेतुं प्रहितवति विभौ पौरलोकास्तमीयु-
र्धर्मेणाराध्य लोकान् कुशलवजनकः शासनं स्वीचकार ॥११॥

योगाचार्योऽत्र जज्ञेऽध्यगमदिह यतो याज्ञवल्क्योऽपि योगं
जज्ञे चास्मिन्मरुर्यः कलियुगविरतौ सूर्यवंशं प्रणेता ।
राजन् पित्रा हतो यो महति रणमुखे तस्य वंश्या भवेयुः
शुद्धोदोऽप्यत्र वंशे स च सुरथसुतः स्यात्सुमित्रोऽन्तिमोऽत्र ॥१२॥

इक्ष्वाकोर्वै निमिर्यः स गुरुवरमवृतारभ्य सत्रं स शक्रं,
यातस्तेनान्य ऋत्विक्कृत इति गुरुणासौ विदेहत्वमाप्तः ।
तस्मै शापं ददौ यत्पततु तव तनुः सोऽथ जज्ञेऽप्सरस्तो,
नेत्रेष्वासीन्निमिस्तन्मथनजमिथिलश्चात्र सीरध्वजोऽभूत् ॥१३॥

पुत्रोऽत्रिर्ब्रह्मणोऽभूदथ च नयनतस्तस्य सोमो बभूव,
तारागर्भाद्बुधोऽभूदथ बुधतनयोऽप्युर्वशीवल्लभोऽभूत् ।
स्थालीं गन्धर्वदत्तामपि दयिततमेत्येव सम्मन्यमान-
स्तन्मन्थाज्जातवेदं कृतकसुततयाऽऽकल्प्य यज्ञेशमीजे ॥१४॥

ऐलस्यौर्वश्यकुक्षेर्जयविजयमुखाः षट् किलासन्नपत्या-
न्येषां वंशे स जह्नुः सुरसरितमसौ पीतवान्, गाधिपुत्रीम्—
ऐच्छत्सत्यामृचीकः श्रवणशितहयानानिनायाथ पत्न्यै
श्वश्र्वै चादाच्चरुं तद्विनिमयवशतो विश्वमित्रो बभूव ॥१५॥

आर्चीकाज्जामदग्न्योऽभवदयमवधीद्धैहयानामधीशं,
तीर्थेष्वाटत्स चाज्ञां पितुरवहदहन् मातरं बान्धवांश्च ।
दृष्ट्वा शून्याश्रमं हैहयकुलजनुषो निन्युरुत्कृत्य शीर्षं,
तद्रोषादेकविंशत्यवसरमवधीत्तैष ताञ्जामदग्न्यः ॥१६॥

आयोर्वंशे च धन्वन्तरिरभवदहोऽलर्कराजा ततोऽभू-
ज्जज्ञे ब्रह्माक्रियक्षेत्रमधि रजिरथेन्द्राय नाकं विजिग्ये ।
प्रह्लादाद्बिभ्यताथ प्रतिकलितमिदं नो ददुस्तस्य पुत्रा-
स्तानग्नौ हूयमाने सति, रजितनयान्मारयामास शक्रः ॥१७॥

नाहुष्येष्वादिमो नैच्छदिह नृपपदं मन्यमानो दुरन्तं,
प्राप्ते ताते निपातात्परमजगरतां तद्ययातिः प्रपेदे ।
शर्मिष्ठादेवयान्यौ यदुमुखतनयान् पञ्च तस्याप्यदत्तां,
शुक्रस्याथापराधादुपगतजरतः पुत्रतारुण्यमाच्छैत् ॥१८॥

कामैस्तृप्तो न चासावकथयदितरस्यै कथां बस्तकस्य
कूपादुद्धृत्य योऽजामुदवहदितरा अप्यजा यं विवव्रुः ।
अन्यासक्तं तमेनं व्यषहत न परा, तत्प्रसादक्षणेऽस्याः,
स्वामी बस्ताण्डयोगानकृत स कृपणो नाद्य यावत्तु तृप्तः ॥१९॥

पूरोर्वंशेऽथ दुष्यन्त इति सुविदितः कण्वकन्याप्रियोऽसौ
तस्माज्जज्ञेऽथ राजा भरत इह स यश्चक्रपद्माङ्कितोऽभूत् ।
पञ्चाशत्पञ्च मेध्यान् सुरसरिति तथाष्टौ च सप्तत्युपेतान्,
कालिन्द्यां यस्तु चक्रेऽददुरिह मरुतो वै भरद्वाजमस्य ॥२०॥

जातोऽस्मिन् रन्तिदेवो द्विजवृषलगणिभ्यस्तथा पुल्कसाय,
योऽन्नं पानं च दत्त्वा सकलजनसुखापेक्षितां स्म व्यनक्ति ।
वैष्णव्यस्तस्य मायाः पुरत उपगतास्ता नमन् भक्तिमैच्छद्,
भर्म्याश्वान्मुद्गलाऽभूदथ च कृपकृपीजन्मदोऽस्माच्छरद्वान् ॥२१॥

देवापिः पैतृकञ्चात्यजदथ नृपतिः शन्तनुस्तत्र जात-
स्तद्राज्ये द्वादशाब्दं नहि जलदगणो यद्ववर्षेति तं सः ।
राज्येनापूजयत्सोऽस्य यजनमदिशत्तर्हि वृष्टिर्बभूव,
तस्माद्भीष्मोऽभिजातः कुरुकुलमहितः सर्वधर्मैकवेत्ता ॥२२॥

जातो वै रोमपादो दशरथतनयां पुत्रिकां यश्चकार,
वंशेऽस्मिन्वै स जज्ञेऽधिरथ इति बभारैष कर्णं शिशुत्वे ।
ख्यातोऽस्मिन् कार्तवीर्यो भृगुपतिनिहतो रावणस्यापि रोद्धा,
वंश्याख्याहेतवस्तेऽपि च यदुमधुवृष्णीतिसंज्ञा इहासन् ॥२३॥

शूराद्वै देवमीढादजनि दशसुती पञ्च पुत्र्यश्च तासां
कुन्तीं कुन्तेस्तु पुत्रीमकृत सखितया याऽध्यगाद्देवविद्याम् ।
रोहिण्याद्यासु पुत्रानलभत वसुदेवो बहून् राममुख्यान्,
देवक्या अष्टगर्भेऽष्टममिह स हरिं तत्कनिष्ठां सुभद्राम् ॥२४॥



## दशमः स्कन्धः

भाराक्रान्ता धराऽगाच्छतधृतिमथ सेशः स विष्णुञ्जगाम,
तुष्टास्ते व्योमवाचा, परमतिकुपितः कंस आकर्ण्य तां सः ।
दृष्ट्वा हन्तुं स्वसारं तमुदितमथ शौरिः समाश्वासयत्तं,
पूर्वं पुत्रं व्यमुञ्चत्सुरमुनिवचसाऽहन् बबन्धाथ तांस्तान् ॥१॥

चाणूराद्यैर्यदूनां कदनमकुरुतान्यांश्च पञ्चावधीत्सः,
शेषाख्यं सप्तमञ्चाहरदिह हरिमायाऽनयद्रोहिणीञ्च ।
याशोदेयी भविष्यन्त्यवसदथ व्रजे, देवकीगर्भवासी,
ब्रह्माद्यैर्देवमुख्यैः स्तुत इह भगवांस्तेषु लोकं गतेषु ॥२॥

काले शान्तर्क्षताराग्रहपरमशुभे चाविरासीत्स देवो
दृष्ट्वा चित्रं शिशुन्तं गतभयवसुदेवोऽस्तवीत्कंसशंसी ।
कंसाद् भीतापि माता त्रिभुवनमहितं तं ववन्देऽथ सोऽपि
पित्रोः प्राग्जन्म शंसन् व्रजनयनमवोचत् पिता तच्चकार ॥३॥

श्रुत्वा बालध्वनिञ्चाखिलगृहपजनैरुत्थितैः कंस उक्त-
स्तूष्णीं त्यक्त्वा स तल्पं प्रसवगृहमगाद् बालिकां तां ययाचे ।
अप्यङ्घ्र्योरुद्गृहीतां दृषदि सरभसं न्यक्षिपद् व्योमगा सा,
हन्तारं तस्य चोक्त्वा निरगमदथ तन्मन्त्रिणस्तं शशंसुः ॥४॥

जाते पुत्रे तु नन्दः प्रमुदितमनसा ब्राह्मणैर्जातकर्म-
गोदानादीनि कुर्वन् सकलसुरभिगोगोपगोपीसमेतः ।
तन्वंस्तत्तच्च नानाविधमुपकरणं सूतबन्दिद्विजेभ्यः
सम्पत्प्रेमानुरूपं, करमथ नृपतेर्दातुमायात् पुरीं सः ॥६॥

शौरेर्वाचं विचिन्वन् शरणमुपगतः श्रीहरिं, गोकुलञ्च
प्रत्यायातः स तावत्सविषमिह कुचं पूतना पाययन्ती ।
श्रीकृष्णेनापिता तां गतिमतिशयितां यां जनन्योऽस्य यायु-
र्गावश्चैतद् विलोक्यातिचकितमनसो नन्दमुख्या बभूवुः ॥६॥

जन्मर्क्षे स्वापयित्वा भृतशकटतलेऽभ्यागतान् पूजयन्त्यां
निद्राणोऽसौ जनन्यां सपदि चरणघातेन तद्व्याक्षिपद्व
भूमौ संस्थापितश्च क्वचन गुरुतयाऽसौ तृणावर्तनीत-
स्तं हत्वापातयच्चात्मवदनविवरेऽदर्शयत्तां त्रिलोकीम् ॥७॥

गर्गाचार्येण शिश्वो रहसि च विधिवन्नामनी रामकृष्णा-
वित्येते कारयित्वा विदितगुणगणौ कारितौ बालकौ तौ ।
वत्सांस्तौ मोचयन्तौ क्वचन च नवनीताद्युपायैर्हरन्ता-
वानन्दं तावदत्तामथ च मृदमदंश्चित्रकारी परोऽभूत् ॥८॥

द्रोणो नन्दो यशोदा स्म च भवति धरा, जातयोनौ च भक्ति-
र्दत्तासीत्केन ताभ्यामथ दधिमथने जातु विघ्नं व्यधत्त ।
दुग्धे तूत्सिच्यमानेऽधिधरणि निहितोऽभञ्जयन्मन्थभाण्डं,
मात्रा चागृह्य दाम्ना कथमपि यमितोऽपश्यदेषोऽर्जुनौ द्वौ ॥९॥

पूर्वं रुद्रस्य भृत्यौ किल धनदसुतौ वार्विहारे प्रवृत्तौ
नग्नौ देवर्षिणा तौ तरुभवमुपनीतौ तु शापेन मत्तौ ।
उद्धर्तुं तौ स दामोदरशिशुरनयोरन्तरोलूखलं त-
न्नीत्वाऽकर्षत्ततस्तौ सरवमपततां, प्रार्थयेतां च देवम् ॥१०॥

तं नन्दोऽमोचयद्वै शिशुजनवचसि प्रत्ययं नोपगच्छन्,
गोप्युक्तो गायति क्वापि स वहति भरं नृत्यति क्रीडतीह ।
मात्राहूतोऽपि नैति क्वचन च फलदायै स रत्नानि दत्ते,
वृन्दारण्ये शरण्ये विविधविहरणेऽसौ बकं सन्ददार ॥११॥

बालैर्यातो वनाशे व्यहरदजगरस्तत्र चैवाघनामा
व्यादादास्यं शयानः शिशुजनगिरणं कामयानोऽभ्यतिष्ठत् ।
कृष्णास्थाः शङ्कमाना अपि व्रजशिशवस्तन्मुखं ते प्रविष्टाः
सोऽप्यस्यान्तः प्रविष्टो गलबिलमिदमीयं निरुध्यावधीत्तम् ॥१२॥

कृष्णत्रातास्तु गोपा हरिततृणचरास्तर्णकांस्तत्र मुक्त्वा,
शिक्येभ्यो भोज्यमादाय च सरुचि समेऽश्नन्त आसुर्हसन्तः ।
दूरे यातांस्तु वत्सानहरत विधिरत्रागते नन्दसूनौ,
तत्रोपेतः स गोपानिति हरिरखिलात्माऽभवद् वर्षमेकम् ॥१३॥

तेनाश्चर्यं च लज्जामपि हृदि दधता ब्रह्मणा ब्रह्मरूपान्,
वत्सान् गोपांश्च दृष्ट्वा पुनरपि च पुनः पादयोरस्य नत्वा ।
स्तुत्वा च त्रिः परिक्रम्य च विधिरुदगादिष्टधाम स्वकीयं,
गोपान्वत्सांश्च कृष्णो यमस्वसृपुलिनं भूय एवानिनाय ॥१४॥

पौगण्डेऽरण्यशोभां कथयति भगवांश्चारयन् धेनुवत्सान्
गायन्नृत्यंश्च कूजन्ननुकरणपटुः सेवते स्माग्रजं सः ।
श्रीदामाद्यैस्तथोक्तो बल इह हतवान् धेनुकं नाम दैत्यं,
पीत्वा चाम्भो विषाक्तं व्यसुमथ स गणं जीवयामास कृष्णः ॥१५॥

कृष्णां कृष्णाहिनाथो विषमयसलिलां वीक्ष्य तां कालियेन,
शुद्धिं वाञ्छन्पपात ह्रदमधि, जगृहे तेन भागेन कृष्णः ।
उत्पातान् वीक्ष्य गोपा उपययुरथ तं मूर्ध्नि नृत्यन्तमीक्ष–
माणास्तत्पत्न्य आरात् स्तुतिभिरुपजगुर्निर्ययौ चापि नागः ॥१६॥

नागोऽयं वैनतेयोपहृतमपि बलिं खादति स्मेति तेन,
पक्षाघातैर्हतोऽयं ह्रदमिदमुदगात्तं विदन् शापरुद्धम् ।
सोऽयं कृष्णेन निर्वासित इति मुदिता भीतपूर्वाः समेऽपि,
तत्रैवैतांस्तु नक्तं वनदहनभयान्मोचयामास कृष्णः ॥१७॥

वासन्तीमेव कान्तिं दधदथ महतीं रामकृष्णोपसेवी,
ग्रीष्मो नामर्त्तुरायात्कुसुमितमखिलं तद्वनं तेन जातम् ।
गोपान् पक्षद्वयेऽथ व्यभजत भगवान् वाह्यवाहिक्रमेण,
रामं वोढा प्रलम्बो द्रततरममुना मुष्टिनान्तन्तु नीतः ॥१८॥

क्रीडासक्तेषु गोपेष्वथ विविशुरजा धेनवो वै महिष्यो,
गोपैः साकं वनान्ते दवदहनवृताः क्रन्दनं कुर्वतेस्म ।
कृष्णोक्त्या मीलिताक्षा विपद उदगमन्, पीतदावानलेन
भाण्डीरं तेन नीताः किल विरणयता वेणुमेते व्रजञ्च ॥१९॥

गोगोपालैरुपेतः कुसुमितविपिनं निर्विशन् नन्दसूनु-
र्वेणुं सङ्कूजयन्यद्युवतिजनमनः क्षोभयामास सद्यः ।
तद्वै ता वर्णयन्त्यो जगुरिदममलं वेणुगीतं मनोज्ञं,
साफल्यं कल्यमक्ष्णां व्रजपतिसुतयोराननालोकनेति ॥२१॥

हेमन्ते मार्गशीर्षे व्रतमिदमचरंस्ता व्रजस्थाः कुमार्यो
कात्यायन्यर्चनाढ्यं किल रवितनयावारि नग्नास्तु सस्नुः ।
तासां वासांसि नीत्वा द्रुममधिरुरुहे प्रोक्तवांस्ताश्च यूयं,
देवावज्ञां व्यधत्त क्षमयत च मया रंस्यथेमाः क्षपाश्च ॥२२॥

गोपैरावेदितः क्षुच्छमनमकथयद् दीक्षितान्यात विप्रान्,
तैस्ते सम्प्रार्थिता अप्यभिदधुरिह नैवोन्न नैवेति दर्पात् ।
प्रोक्ता वै यज्ञपत्न्यः सपदि सकलसम्भारयुक्तास्तमायन्,
तासु प्रीतान्तरासु स्वशरणमुपगतास्वातपंस्तेऽथ पश्चात् ॥२३॥

गोपान् देवेन्द्रयागोद्यमपरिकलितान्वीक्ष्य कर्म स्तुवन् सः
कर्माधीनैः स्वकर्मार्चनमिह करणीयन्तु युक्त्या प्रसाध्य ।
गोविप्रादीन् स्वकर्मव्यतिकरनियतान् पूजयिष्यन् स निन्ये,
सर्वान् सम्भारयुक्तान् गिरिवरमथ च स्वेन जग्राह तत्तद् ॥२४॥

इन्द्रः पूजाविघातात्कुपित इति गणं प्रेष्य सांवर्तकं स्वं,
वर्षासारैः समस्तं व्रजमतिविकलं कर्तुमैच्छत्तडिद्भिः ।
तद्दृष्ट्वैकेन हस्तेन स समुदधरच्छ्रीलगोवर्धनाद्रिं,
तच्छायारक्षितास्ते सुरभियुवतिभिस्तुष्टुवुस्तं सुराश्च ॥२५॥

गोपाः कृष्णस्य कर्माण्यतिशयचकिताः पूतनामारणादी-
न्यत्याश्चर्याण्यगायन् करतलगिरिसन्धारणान्तानि तानि ।
नन्दस्तान् गर्गवाक्यान्यकथयदखिलान्येव तत्तद्युगोद्य-
न्नानानामाकृति-प्राकृतबुधहृदयावर्जकान्याह नम्रान् ॥२६॥

शैले गोवर्धनेऽस्मिन् व्रजभुवि च धृते रक्षितायां क्रमेण,
देवेन्द्रः कामधेन्वा सह हरिशरणं प्राप्य तुष्टाव भक्त्या ।
अस्तौषीत्कामधेनुस्तमथ सुरसरिद्वारिणा स्वैश्च दुग्धै–
रभ्याषिञ्चत्तथैनं सकलजगति गोविन्द इत्याख्ययाऽऽख्यत् ।।२७।।

एकादश्या व्रतान्तेऽधियमुनगतं नन्दमागृह्य कश्चिद्–
भृत्यो निन्ये जलेशान्तिकमिति स हरिस्तस्य लोकञ्जगाम ।
तेनासावर्चितोऽभूत्सविनयमथ चाराधितोऽभूत्तदेतद्–
दृष्ट्वा नन्देन चोक्तानानयत परमं धाम गोपः स गोपान् ।।२८।।

उत्फुल्ला मल्लिकास्ता युवतय इव संवीक्ष्य कृष्णो घनान्ते,
प्राच्याश्चन्द्रेण शृङ्गारकमनुविदधद् राधिकां शोभयित्वा ।
वंशीनादेन दोहं शिशुपतिपयआदीनि च त्याजयित्वा,
गोपीराकर्षयत्ता गृहगमनगिरा दुःखितास्तुष्टुवुस्तम् ।।२९।।

तेन प्रेष्ठेन चाङ्गीकृत इह सहसात्मन्यगुर्मानमन्त–
स्तेनान्तर्धानमागाद्धरिरथ विकलास्तास्तमन्विष्यमाणाः ।
तत्तत्तं चाप्यपृच्छन्नथ पथि वनितासङ्गतस्याङ्घ्रिचिन्हैः–
रुद्विग्ना राधया तद्विरहविकलया हंसजाकूलमायन् ।।३०।।

कृष्णाभ्याशाभिलाषा जगुरिदममृतं सङ्गतास्तास्तु गोप्य–
"स्त्वज्जीवास्त्वां विचिन्मो, बहुविधभयतो रक्षिता नो वधीर्मा ।
मूर्धन्याधेहि पाणिं यदुवर, वदनं दर्शय, च्छिन्धि कामं,
पीयूषं पाययास्मानधरमधुमयं, क्लान्तविभ्रान्तचित्ताः' ।।३१।।

इत्थं गोप्यः प्रलापैः सह रुरुदुरथाविर्बभूवासु शौरिः,
स्रग्वी पीताम्बरो मन्मथमपि मथयन् सस्मितेनाननेन ।
तं दृष्ट्वोत्थाय रङ्का निधिमिव परितोऽवेष्टयंस्ताः, स चैताः,
कालिन्दीमानिनायाकथयदहह वो नानृणः स्यां कदाचित् ।।३२।।

एवं गोप्यः सुवाचा विरहजकदनं तत्यजुः श्र्यङ्गसङ्गात्,
ताभिः साकं स रासं व्यरचयदभवद्यावतीस्ताः स तावान् ।
तद् दृष्ट्वा देवनार्यो मनसिजविकलाश्चन्द्रमा विस्मितोऽभूत्,
राज्ञा पृष्टः शुकोऽथाकथयदिह पुमान् स्यात्सदादेशवर्ती ।।३३।।

गोपाला देवयात्रावसर इह गता अम्बिकारण्यमारात्
स्नात्वा ध्यात्वार्चयित्वा पशुपतिसहितान्तामिहावात्सुरेते ।
नन्दं कश्चिन्महाहिर्न्यगरदधिनिशं कृष्णपादाम्बुजस्पृक्,
प्राप्तो विद्याधरत्वं, तदनु च भगवान् शङ्खचूडं न्यरौत्सीत् ॥३४॥

यातेऽरण्यं मुकुन्दे व्यथितमथ मनो रञ्जयन्त्यस्तदीयां
गाथां गायन्ति गोप्योऽखिलमपि दिवसं यापयन्त्येवमेव–
"वामे बाहौ कपोलं दधदधरपुटे वेणुमावल्गितभ्रू–
र्मार्गं संश्रित्य वेणोः सुविशदनिनदैरीरयत्येष सोऽस्मान्" ॥३५॥

गोष्ठेऽरिष्टः कदाचिद्वृषभतनुधरः प्राविशद्भीतिदायी,
श्रीकृष्णस्तीव्रश्रृङ्गं व्रजभुवि विचरन्तं तमञ्जो जघान ।
देवर्षेः कृष्ण-कन्याविनिमयमविदत् कंस आहानुगांश्च,
सन्नद्धा रामकृष्णौ घ्नत मधुपुरमानेष्यते गान्दिनेयः ॥३६॥

केशी कंसप्रयुक्तो हयवपुरगमत्कम्पयन् गोपवासं,
श्रीकृष्णस्तं गृहीत्वा सपदि पदयुगे पोथयामास भूमौ ।
देवर्षिः कृष्णमेत्य प्रणिहितमनसं सर्वभाष्याचचक्षे,
व्योमं चाजीघतत्तं निजसहचरचौरं हरिर्जन्तुघातम् ॥३७॥

अक्रूरोऽथाधिरूढो रथमिह पथि कुर्वन् विकल्पानयासी–
त्तत्पादाङ्कश्रि गोष्ठं समनमदथ तत्पादयोर्दण्डवच्च ।
श्यामेनालिङ्गितं तं निजगृहमनयत्प्रीतिमांस्तन्तु रामो
नन्दः सत्कारपूर्वं कुशलमखिलमापृच्छदार्द्रार्द्रचित्तः ॥३८॥

पर्यङ्के सूपविष्टं तमथ स भगवान् बन्धुवृत्तं विवित्सुः,
कंसे वंशामयेऽस्मिन् स्थितवति कुशलं क्वेति सान्त्वैरुपागात् ।
अक्रूरो नेष्यतीमं व्रजजनहृदयञ्चेति विज्ञाय गोप्यः
खिन्नाः क्रूरन्तमाहुः, स च पथि यमुनायां हरिं तं ददर्श ॥३९॥

अक्रूरः स्तौति–नारायण, परपुरुषं त्वान्नतोऽहं समस्तं,
विश्वं त्वत्तस्त्वमाकाशमरुदनलवार्भूर्मनोबुद्धिरूपः ।
वन्दे त्वां वासुदेवं चतुरवयविनं क्लृप्तनानावतारं,
द्वन्द्वारामैरवेद्यं, प्रणतजनपरित्राणसन्नद्धकक्षम् ॥४०॥

दृष्ट्वा गोपालरूपं पुनरथ चकितो गान्दिनेयो रथस्थं,
रामोपेतन्तु कृष्णं पुरपरिसरमानीतवान् प्रीयमाणः।
स त्यक्तौ गोपवृन्दैः सममुपवनभूमौ क्लमञ्चापनीय,
कृष्णः पुर्यां प्रविष्टो रजकमदमयद् वायकार्यानुकम्पी ॥४१॥

मध्येमार्गं प्रयान्तीमथ कुटिलतनुं पर्यपृच्छत्स कासी–
त्येषा प्रत्याह–दासी मधुपुरनृपतेर्गन्धवाहिन्यहन्तु।
आलिप्ताङ्गस्तयासावसरलयदिमां, चापभङ्गं च कृत्वा,
दुष्टानाहत्य रात्रावुपवनमयितोऽह्नागतस्तत्र भूयः ॥४२॥

रामः कृष्णश्च रङ्गोपगतकुवलयापीडमापीड्य हत्वा,
गोपै रङ्गं प्रविष्टौ, हरिरिह बहुधाऽऽलक्षितः सोऽक्षिमद्भिः।
पौरैः संस्तूयमानोऽप्यथ सकलकले तत्र चाणूरनाम्ना,
मल्लेनाहूयमानः शिशुरहमिति वादी सदुक्तः स तेन ॥४३॥

श्यामश्चाणूरमर्दी मधुपुरजनताभीतिहारी बभूव,
रामो वै मुष्टिकार्दी शलमुखखलमल्लप्रहारी स चैषः।
कंसं तं कत्थमानं झटिति गरुडवन्नागमाक्रम्य कृष्ण–
स्तुङ्गान्मञ्चान्निपात्य व्यसुमकृत सबन्धुं स्त्रियोऽसान्त्वयच्च ॥४४॥

पित्रोर्माभून्ममैश्वर्यपरिचय इति स्फारयामास मायां
सूक्त्या तौ मोहयित्वा नरपतिपदवीमुग्रसेनाय दत्त्वा।
नन्दादीन् सान्त्वयित्वा यदुमुखकुलजान्माथुरे वासयित्वा
गर्गाचार्योपनीतोऽधिगतनिगम आनीय सान्दीपनेयम् ॥४५॥

एकान्ते मन्त्रिवर्यं प्रियसखमवदद्–गम्यतां गोकुलेषु
गोपीनां मद्वियोगादतिशयविकलानां समाश्वासनाय।
स त्वायातोऽत्र नन्दादिभिरतिशयसत्कारमाप्यातिहृष्टो,
ऽस्तौषीन्नन्दं यशोदामपि च समुदिते भास्करेऽन्यैः स दृष्टः ॥४६॥

जानीमस्त्वां यशोदातनयपरिकरं तस्य पित्रोर्हितार्थं,
को वान्यस्तस्य यस्मै स नयनसुभगं त्वादृशं दूतमिच्छेत्।
काचिद्भृङ्गं प्रकल्प्य प्रियवचनहरं, भूर्युपालम्भयत्तं,
गोपीस्तुष्टाव सोऽपि प्रियवचनशतैः सान्त्वयित्वा जगाम ॥४७॥

सैरन्ध्रीं कामतप्तां स्वचरणरजसा पावयित्वा मुकुन्दो
विष्णुं सर्वेश्वरेशं कथमपि सुमुखीकृत्य कामान् क इच्छेद् ?
इत्यादर्श्याथ गेहं गत इह विधिवत्पूजितोऽक्रूरकेण,
मृद्वीर्वाचः प्रयुञ्जंस्तमकथयदहो, हास्तिनं तात गच्छ ॥४८॥

अक्रूरो हास्तिनाख्यं पुरमगमदथापश्यदत्राम्बिकेयं,
भीष्मं द्रोणञ्च कुन्तीमथ स बहुतिथं कालमत्र न्यवात्सीत् ।
कुन्तीवाक्यैर्विदित्वा व्यवहृतिविषमं पुत्रपक्षाग्रहिष्णुं
राजानं पथ्यमाख्यत्, परमयमवशोऽस्तीति कृष्णे शशंस ॥४९॥

इति पूर्वार्धः



# अथोत्तरार्धः

अस्तिप्राप्त्यौ तु कंसे त्रिदिवमुपगते ते जरासन्धमेते,
तेन क्षुब्धस्त्रयोविंशतिभिरयमगात्कृष्णमक्षौहिणीभिः ।
दिव्यास्त्रस्यन्दनाद्यैः सपदि जगृहतू रामकृष्णौ तमन्या-
नक्षिण्वातामथ स्वे निशि मधुरिपुणा द्वारकां निन्यिरे च ॥५०॥

श्रीवत्साद्यैस्तु चिह्नैः परिचितमथ तं म्लेच्छराजो ग्रहीतुं
धावन्तं सोऽन्वधावद् गिरिबिलमविशत्तत्र तस्मिन्निविष्टे ।
सुप्तं तत्रावलोक्याक्षिपदथ मुचुकुन्दं मुकुन्दन्तु मत्त्वा,
तत्क्रोधाग्नौ स दग्धः स्तुतिमथ नृपतेराप कृष्णो विदग्धः ॥५१॥

श्रीकृष्णानुग्रहाढ्यः सपदि स बदरीधाम शान्तः प्रपेदे,
कृष्णोऽपि स्वां पुरीमागमदनयदथ म्लेच्छसैन्यं प्रणाशम् ।
रुक्मिण्या दूतमेतं सविधि परिचचाराथ सन्देशमेष
प्राह-"श्रुत्वा गुणांस्ते भुवनसुभग, सा त्वां विना नैव जीवेत्" ॥५२॥

तच्छ्रुत्वा प्राह कृष्णो-"ध्रुवमहमनुरक्तां प्रियामानयिष्ये,"
इत्युक्त्वा स्यन्दनस्थस्त्वरिततगतिहयैरागतोऽसौ विदर्भान् ।
क्लृप्त्वा तस्यारिभिस्तं समरमथ बलोऽप्यcraft्याययौ स्वैर्बलैस्तान्,
गौरीपादाब्जपूजाप्रमुदितमनसं श्रीहरिस्ताञ्जहार ॥५३॥

क्षुब्धांस्तान् मागधाद्यान् यदुकुलमहिमानो युवानो रुरुन्धुः
प्रत्यायन् हन्यमानाः सपदि तु शिशुपालस्य दैवं शशंसुः ।
रुक्मी संरब्धचेता हरिमभिकुपितस्तेन बद्धो निहन्तुं,
रुक्मिण्या मोचितोऽसौ विकृतमुखशिरोरुड् बलेन न्यवर्ति ॥५४॥

प्रद्युम्नं जातमाभ्यां स्मरमहरदथो शम्बरः क्षिप्तमब्धौ,
तं मीनो निर्जगाराथ स सुरमुनिना बोधितोऽभूत्तु रत्याः ।
शिक्षित्वा सर्वमायाविलयनकुशलां दिव्यमायान्तु तस्या–
स्तं दैत्यं निर्जघान स्वपुरमुपगतो बन्धुभिः सत्कृतोऽभूत् ॥५५॥

सत्राजित् सूर्यभक्तो मणिमधिभवनं स्थापयामास भक्त्या
कण्ठे बिभ्रत्प्रसेनो हत इह हरिणा सोऽपि ऋक्षेण भिन्नः ।
कृष्णस्तस्मात्तु ऋक्षान्मणिरमणिमणी प्राप युद्धेन तुष्टात्,
सत्राजिच्चापि तस्मै दुहितरमददाल्लोकलज्जावशेन ॥५६॥

विज्ञातार्थोऽपि कृष्णः सविदुरसकृपं भीष्ममाख्यत्पृथार्तिं,
सत्राजिद्घातकश्चाहरदथ शतधन्वा मणिञ्चैष धावन्–
श्रीकृष्णेनाहतोऽभून्मणिमथ कृतवर्माभ्युपेते तु नीत्वा,
ऽक्रूरे काशीं प्रयातेऽग्रजमथ स मणिं दर्शयामास तस्मात् ॥५७॥

इन्द्रप्रस्थं प्रयातो मिलितुमथ पृथापुत्रकांस्ते च कृष्णं,
दृष्ट्वा प्रेम्णाभ्यपृच्छन् कुशलमखिलतोऽस्तौच्च तं धर्मपुत्रः ॥
भ्राम्यन् पार्थेन साकं रविदुहितृकरं चोररीकृत्य सोऽग्नेः ।
खाण्डव्यं खादयित्वा, वृषदमनकरो मित्रविन्दां विविन्द ॥५८॥

भद्रां श्रीलक्ष्मणां चाप्युपयमितवता तेन भौमासुरस्य,
वीरान् हत्वा मुरादीन् गरुडहतबलं तञ्च हत्वा जवेन ।
भूम्या संस्तूयमानोऽभयमतनुत सोऽस्यै सहस्राणि कन्याः,
स्वस्मिन्नासक्तचित्ताः स्व्यकुरुत त्रिदिवात्पारिजातञ्जहार ॥५९॥

भैष्म्या संसेव्यमानः प्रणयकलहकृत्तामुवाचायि मुग्धे,
राजानः कामयन्तेस्म तदपि भवती मामयोग्यं गतासि ।
तेनोद्विग्नां च सान्त्वैरशमयत नवैर्भाषणैरेष भावं,
विज्ञायास्याः प्रसन्नोऽरमत गृहगतो धर्मतो लोकवृत्तः ॥६०॥

एकैकस्यां दशास्याजनिषत तनयास्तत्र प्रद्युम्नमुख्या
रुक्मिण्यां, भानुमुख्या मणिपतिदुहितुः, साम्बमुख्यास्तथार्क्ष्याम् ।
वीराद्या नाग्नजित्यामथ श्रुतप्रमुखा हंसजायां, प्रघोषा-
द्यास्ते माद्र्यां, वृकाद्या वृषजयविजितायामथास्यानिरुद्धः ॥६१॥

प्रद्युम्नाद्रुक्मिजायामभवदथ स वीरोऽपि बाणस्य कन्या-
मूषां स्वप्नेन मुग्धां सहचरिचरितोऽन्तःपुरे स्वीचकार ।
बाणः कन्याभिमर्शादतिशयकुपितस्तं जिघृक्षुर्यदागात्,
सोऽहन् सैन्यं तदास्येति स बलितनयो नागपाशेऽरुणत्तम् ॥६२॥

चातुर्मास्यं व्यतीतं तदनु मुनिमुखात्तस्य वार्तां विदित्वा,
श्रीकृष्णो यादवैस्तैः सह शरनगरं प्रस्थितो योद्धुकामः ।
शम्भोर्विष्णोश्च तत्राभवदतिसमरः संज्वरप्रेषणाभि-
र्देवौ शान्तौ तदान्ते चतुर इह भुजान् शेषयामास शत्रोः ॥६३॥

प्रद्युम्नाद्याः कदाचिच्चिरविहरणजां शामयन्तः पिपासां,
कूपेऽपश्यन्नृगन्तं भगवति विदितं चक्रुरेनं स चागात् ।
सोऽस्तौन्नम्रेण मूर्ध्ना स्वचरितकथनो, विप्रपूजां जनेभ्यो,
नैवोपेक्ष्यां बभाषे, हरिरपि चरितं तस्य दृष्टान्तयंस्तत् ॥६४॥

रामः सोत्को व्रजेऽगात्पितृचरणनतश्चाशिषस्तत्र लब्ध्वा,
गोपीभिः पृच्छ्यमानः सकुशलमखिलं तासु सोऽन्वाचचक्षे ।
वृक्षोत्थां वारुणीञ्चापिबदयमखिलाभिः समं गोपिकाभि-
र्वाञ्छन्वारां विहारं हलमुखकलितां हंसजामाचकर्ष ॥६५॥

बालैः प्रस्तोभितः स्वं कलयति कुटिलो वासुदेवं तु पौण्ड्र,
इत्याज्ञायास्य दूताद्धरिरपि समरार्थं तदा तत्परोऽभूत् ।
काशीशेनाथ साकं तमुपगतमसौ मर्दयामास मूढं,
तत्पुत्रोत्पादिताग्निं समहरदरिणा दग्धकाशीपुरेण ॥६६॥

रामो भूयो द्रवन्तं द्विविदमतिखलं वारुणीपानमत्तः,
कूर्दन्तं दर्शयन्तं दुरवयवमथो युध्यमानं क्रमेण ।
शालेनोद्यन्तमाराद्धलमुसलधरस्तच्छिलावर्षरोधी,
मुष्ट्या घ्नन्तं स मुष्ट्या सपदि निहतवान् स्तूयमानो जनौघैः ॥६७॥

साम्बो दौर्योधनीं तामहरदिति भृशं रोषिताः कौरवास्तं,
बद्धुं सज्जाः समीयुः स च सहजभटस्तैश्चतुर्भिर्युयोध ।
रामस्तैस्तं गृहीतं स्ववशमिह विधातुं पुराऽबोधयत्ता-
नन्ते लाङ्गूलकृष्टार्कदुहितृसलिलः कौरवैस्तोषितोऽभूत् ॥६८॥

कन्या भौमासुराद् या अलभत भगवंस्ता दिदृक्षुः सुरर्षि-
र्यद्यद्धाम प्रपेदे तदिह भगवताधिष्ठितं सन्ददर्श ।
तं सम्मान्याथ वाचा सविनयमवदत्किन्नु कुर्यां वदैतद्,
देवर्षिस्तं ववन्दे हरिरपि गृहिणां संग्रहार्थं स्वमाख्यत् ॥६९॥

प्रातः प्रोत्थाय कृष्णः स्पृशति जलमसौ ध्यायति ब्रह्म शुद्धं,
सूर्योपस्थानपूर्वं सुरऋषिपितृविप्रार्यपूजां विधत्ते ।
तं राज्ञां दूत आगात्कृतसलिलक्रियं मागधेनाहृतानां,
तद्दुःखं तत्र तस्मिन्ब्रुवति सुरऋषिः प्राह यज्ञे प्रवेष्टुम् ॥७०॥

कार्यद्वय्याकुलोऽयं सपदि कृतमतिं पृष्टवानुद्धवं यत्
किं कार्यं सम्प्रतीति न्यदिशदथ स तं राजसूयं प्रवेष्टुम् ।
प्रस्थानं सोऽपि चक्रे नृपतिचरमथाज्ञापयच्चास्मि शीघ्रं,
मागध्यं घातयिष्ये, सपरिजनमिमं चागतं त्वासयत्सः ॥७१॥

आसीनोऽयं सभायां मुनिभिरथ भटैर्बान्धवैश्चापि राज्ञा,
'यक्ष्ये दिव्या विभूती' रिति भृशमुदितः साधुवादानुवाद ।
कौन्तेयौ माद्रिकेयावपि सकलदिशो जेतुमीयुः समन्ताद्,
युक्तो भीमार्जुनाभ्यां मगधमुपगतो घातयामास तं सः ॥७२॥

तत्कारागारतोऽथाययुरवनिपतीनां सहस्राणि यानि,
तान्यानेमुहरिन्तं स च सदयमिमान् सान्त्वयामास वाग्भिः ।
क्षौराद्यं कारयित्वा मगधनृपसुतेनार्चयित्वा च सर्वान्,
दिव्यान्नं भोजयित्वा विकसितवदनान् ज्ञापयित्वा निवृत्तः ॥७३॥

तत्कर्मास्तौच्च पार्थः समुचितसमये याजयन्तो द्विजेन्द्राः,
पूजामग्र्ये सदस्ये रचयितुमभितश्चिन्तयामासुरत्र ।
तेभ्यो माद्रीसुतोऽथाकथयत भगवानेव तद्योग्य आस्ते,
सर्वेषां सम्मतं तद्व्यरुणदथ शिशुस्तं स चक्रेण चाहन् ॥७४॥

तत्र स्थित्वा स यज्ञं सविधि विरचयन् सर्वमानन्दयच्च,
सर्वे सेवासु लग्ना व्यदधत नियतं कर्म तद्बान्धवाश्च ।
विप्रास्तृप्ताः सुराश्च स्वयमथ नृपतिः कृष्णदृष्ट्या न तृप्तो-
ऽन्तर्गच्छन् धार्तराष्ट्रः स्थलजलकुमतिर्भीमहासास्पदोऽभूत् ॥७५॥

शाल्वः क्षोणीं चिकीर्षुर्यदुगणरहितां रुद्रतो यानमाप्य,
द्वार्वत्या व्योम्नि तिष्ठन्नहितरुदृषदां वर्षणैस्तां बभञ्ज ।
प्रद्युम्नाद्यास्तु पौरानभयमिव वचः प्रोच्य तं ते न्यरुन्धन्,
शाल्वामात्यो गदाया हतिभिरनयत ज्ञानशून्यामवस्थाम् ॥७६॥

संज्ञां लब्ध्वा तु कार्ष्णिः सपदि स समरं गन्तुकामो बभूव,
श्रीकृष्णोऽपि स्वबन्धूनवितुमथ पुरं स्वां तदाभ्याजगाम ।
शाल्वो मायाभिरेनं व्यधित स विकलं, किन्तु देवः स मोहं,
हित्वा चक्रेण चक्रे परिहृतशिरसं शाल्वमेनं ससैन्यम् ।७७॥

अभ्यायाद् दन्तवक्त्रः स्वसखिगणप्रतीकारमादाय दिव्यां,
भीमामेकां गदां चाह्वयदथ भगवन्तं रुषा चाजघान ।
चक्रेणास्यापि चक्रे प्रभुरिह सदृशीं तां गतिं योगिकाम्यां,
रामो हत्वा च सूतं मुनिभिरभिहितस्तीर्थयात्रासु लग्नः ॥७८॥

पर्वण्यासीत्प्रचण्डः पवन इह किलामेध्यवृष्टौ त्रिशूलं,
बिभ्रद्वै बल्वलोऽदृश्यत विकटतनुस्तं च दृष्ट्वैव रामः ।
सस्मार स्वे स शस्त्रे, हलमुसलहतोऽसौ व्यसुः सन् पपात,
तैः सम्मानं च लब्ध्वा सकलशुभपदं सङ्गरं चाप्यपश्यत् ॥७९॥

राजास्तौत्कृष्णलीला अथ च शुकमुनिः प्राह-कश्चिद्दरिद्रो
विप्रः पत्न्या प्रयुक्तो निजसुहृदममुं कृष्णमभ्याजगाम ।
सोऽनेनाभ्यर्चितोऽभूद् गुरुकुलकथया बोधितोऽभूच्च हार्दं,
प्राह-त्वं सर्वविद्यानिधिरिति गुरुषु त्वं व्यवात्सीर्नृलीलः ॥८०॥

इत्थं वार्ताप्रसङ्गे हरिरिममवदत्-किं ममानीतवांस्त्वं
नास्मै सोऽदात्तदासौ वसननियमितांस्तण्डुलानाजहार ।

मुष्टिं जग्ध्वा द्वितीयां स्वदयति तु हरौ रुक्मिणी तं न्यषेधद्,
भग्नाशोऽसौ निवृत्तो बहुविभवमयं स्वं गृहं वीक्ष्य तुष्टः ॥८१॥

जाते सूर्योपरागे ययुरिह यदवः पाण्डवा गोपगोप्यः,
क्षेत्रं चित्रं कुरूणां, ददुरिह सुरभीः स्वन्नवासो द्विजेभ्यः।
कुन्तीभ्रात्रा च गोपा, यदुभिरथ हरिर्गोपिकाभिश्चिरस्य,
सन्दृष्टेरुत्कचित्ता अभिदधुरयमध्यात्मविद्यामुवाद ॥८२॥

गोपीनाथः सपार्थं सकलसखिगणं चाप्यपृच्छद्विशोकं,
द्रौपद्याहाथ राज्ञीः प्रभुचरितममूषां च पाणिग्रहन्तम्।
भैष्मी भामा तथार्क्षी स्वपरिणयकथां हंसजा मित्रविन्दा
सत्या भद्रा तथोचे सकलमपि निजं लक्ष्मणोद्वाहवृत्तम् ॥८३॥

गान्धारी याज्ञसेनी श्रुतसकलकथा मग्नचित्ता च कुन्ती,
ताः सर्वा अप्यथैयुर्मुनिगणसहिता द्रष्टुकामास्तु कृष्णम्।
ता आहैष प्रसन्नः सफलमिह जनुर्वोऽद्य सन्दर्शनेन,
ते प्रत्यूचुर्विचित्रं किल विभुचरितं, तैरियाजाथ शौरिः ॥८४॥

विज्ञातार्थोऽथ शौरिः शरणमुपगतः पुत्रयोरीशबुद्ध्या,
तौ तां दृष्टिं स्तुवन्तौ जननिविनयतो बान्धवानानिनाय।
प्राह्लादिस्तौ विलोक्य स्तुतिभिरुपगतः श्रीहरिस्तान् जनन्याः
सन्दर्श्य प्राह पूर्वं जनुरथ जननी प्रस्नुतोरोजकाऽऽसीत् ॥८५॥

भूमौ भ्राम्यंस्तु जिष्णुर्हरिपुरमगमत्तत्र दुर्योधनेष्टां
लिप्सुर्भूत्वा त्रिदण्डी बलकृतपरिचर्यः सुभद्रां जहार।
तेन क्षुब्धं बलन्तु स्वजनपरिगतः सान्त्वयामास कृष्णः,
पूजाङ्गीकारतश्च श्रुतसुरबहुलाश्वौ कृतार्थीचकार ॥८६॥

राज्ञाऽनिर्देश्यतत्त्वं श्रुतय इह कथं निर्दिशन्तीति पृष्टः,
श्रीकीरोऽवोचदेकं प्रवचनमिह कृत्वा कुमारा अशृण्वन्।
श्रुत्युक्तं स्तोत्रमेतज्-जय-जय जहि मायामिमां दोषपूर्णां,
यस्यां सर्वे विकारा मृदि घटघटिकावद् भवन्ति प्रयन्ति ॥८७॥

राज्ञा शैवादिसौख्ये हरिजनविकलत्वे च हेतुं स पृष्टः,
प्राहास्मा-आशुतोषो हर इह न हरिर्भक्तकल्याणकामः।
वृत्तान्तं शाकुनेयं गमयति स हरः स्वात्मरक्षासमर्थ-
स्त्रातश्छद्मेषु वेत्रा सकरुणहरिणेत्यादि चास्याचचक्षे ॥८८॥

देवानां को महिष्ठः ? क्वचिदपि मुनयोऽचिन्तयन्प्रश्नमेनं,
देवान् पर्यैक्षताथो भृगुरिह स हरिं श्रेष्ठमाह क्षमाढ्यम्।
द्वार्वत्यां जातजातान् सपदि मृतमृतान् विप्र पुत्रान्निशम्य,
पार्थस्त्रातुं प्रयेते, विफलमथ सखा दर्शयामास विष्णुम् ॥८९॥

साहस्रैः षोडशैर्यो विहरति रमणीनां, स ताभिः कदाचिद्,
व्यग्राभिः स्मर्यमाणो जलधिविधुखगोमारुताद्यांस्तु पृष्टः।
तद्भावास्तास्तदीयां गतिमगुरनघां चार्वनिर्वाच्यपुण्या-
स्तासां प्रत्येकमासन् दश दश तनयास्तस्य प्रद्युम्नमुख्याः ॥९०॥



## एकादशः स्कन्धः

कृत्वा दैत्यौघनाशं यदुभिरथ कुरून् पाण्डुपुत्रैर्विनाश्य,
भूभारं दूरयिष्यन् यदुकुलमहरद् विप्रशापेन कृष्णः।
ब्रह्मण्या अप्यशप्यन्त कथमु यदवः ? पार्थिवेनेति पृष्टे
साम्बस्त्रीवेषक्लृप्तिं मुनिशपितयदूनां क्षयश्चर्षिराह ॥१॥

गोविन्दस्याथ दोर्भ्यामवितपरिसरद्वारकायां वसन्तं,
देवर्षिं प्राह शौरिः प्रदिश मम भयान्मुक्तिमञ्जो महात्मन्।
प्रत्याहास्मै स-सद्यः पवनमिह सतां धर्ममाहुर्मुनीन्द्राः
श्रीमत्पादाम्बुजोपासनमिह निमयेऽदात्कविः श्रीहरिश्च ॥२॥

नं प्रत्याहान्तरिक्षः—सकलतनुगतोऽजो गुणैः सेवते तान्,
प्रोवाचैनं प्रबुद्धः—सुखकरमिह नैवास्ति दुःखाय सर्वम्।

प्रत्यूचे पिप्पलौका—स्तमयि नरपते विद्धि तत्त्वं परं तत्,
आविर्होत्रो दिदेश-श्रुतिषु निगदितं कर्म मोक्षाय धीरैः ॥३॥

पप्रच्छाथो विदेहो—हरिरिह कुरुते कानि कर्माणि धीमन्,
एनं प्रत्यब्रवीत्तु द्रुमिल—इह गुणान् को मिमीतेऽस्य धीरः ।
ब्रह्मा विष्णुः शिवोऽसौ ऋषिवरनरनारायणावुर्वशीदौ,
हंसोऽश्वग्रीवमत्स्यौ कमठनरहरी वामनो रामकृष्णौ ॥४॥

राज्ञा पृष्टे यदेस्मिन्नविजितमनसां कास्ति निष्ठा जनानां,
तस्मै प्रोवाच धीमांश्चमस—इह गुणैर्वर्गवैविध्यमासीत् ।
तेषां मध्ये पुराणं पुरुषमभजतां स्यादधःपात एषां,
सत्ये त्रेतायुगे द्वापरकलियुगयोर्ध्यायितात्पाणिपात्रः ॥५॥

देवा आगत्य कृष्णं प्रणिजगदुरथैनं विधिः प्रार्थयद्यद्
भूभारोत्तारणाय त्वमुपगत इहासीर्न शिष्टः सुरार्थः ।
धाम स्वीयं गमिष्यन्नथ स विलयिनीं द्वारकां त्याजयित्वा,
नीत्वा बन्धून्प्रभासं समचकथदयं चोद्धवेनाप्तकामः ॥६॥

ऊचेऽसौ द्वारकेशः परिहृतधरणिः—पश्य सर्वं मदात्म,
गीतां ध्यायावधूताद् यदुनृपकलितां क्षान्तिमीक्षस्व भूमौ ।
वायौ प्राणावलम्बं, नभसि विमलतामप्सु माधुर्यमग्नौ,
सर्वाशित्वं, प्रियत्वं, विधुगतममलत्वं रवौ, खं कपोते ॥७॥

निष्कर्मत्वं महाहौ, जलधिषु विचयं, रूपदुःखं पतङ्गे,
भृङ्गे स्तोकग्रहित्वं, गजमधि युवतित्यागमर्थं मधुघ्नि ।
शब्दाधैन्यं कुरङ्गे, रसनविवशतां चात्र मीने, निराशां
कान्ताशाजागरेण क्षुभितहृदि गतायां हरिं पिङ्गलायाम् ॥८॥

अर्थत्यागं तथैवामिषभृति कुररे, बालकेऽचिन्तितत्वम्,
एकाकित्वञ्च कन्यावलय इह मनोयोजनं बाणकारे ।
गेहाक्लृप्तिं भुजङ्गे जगदुदयलयौ चोर्णनाभौ स्वतन्त्रे,
सात्म्यं पेशस्करे चेत्यथ तनुकरणादीन्यवादीद् गुरून् सः ॥९॥

कृष्णः प्राहोद्धवञ्च—स्वकृतिमवहितो वर्णवंशाश्रमार्हां,
कुर्वीताकामचेता यमनियमपरो मानमात्सर्यहीनः ।
वैशारद्या हि बुद्धया तरति गुणमयीं गुर्वनुज्ञानुसारी,
मायामायासहीनो निदहति च गुणान्नित्यनानात्ववेत्ता ॥१०॥

वद्धो मुक्तश्च जीवो भवति हि गुणतो वस्तुतो नैव जातु,
वैलक्षण्यं तयोश्च प्रणिगदतितरां द्वा सुपर्णेति वेदः ।
दुग्धा गौर्दुष्टभार्या परवशगतनुर्दुष्प्रजाऽदत्तवित्तं,
मद्धीना वाक्च मिथ्या सुमतिविरहितैर्दुःखितैर्धार्यतेऽत्र ॥११॥

योगैः सांख्यैश्च धर्मैर्व्रतयमनियमैस्त्यागतीर्थैस्तपोभि—
रिष्टापूर्तैश्च वेदाध्ययनमखमुखैर्दक्षिणाद्यैश्च कृत्यैः ।
नाहं कृष्ये तथैतैः सकलमलहरैः साधुसङ्गैर्यथेति
च्छेत्तुं संसारवृक्षं व्यतरत सुहृदे ब्रह्मविद्याकुठारम् ॥१२॥

सत्त्वादीनां गुणानां जयमथ कथयन्युक्तिमुक्त्वाऽऽगमादीन्,
हेतूनूचे गुणानां दश तदनु च तां सत्त्वसंचीतिमाह ।
भ्रान्त्या लोकः प्रमत्तोऽहितमपि च हितं सेवते मन्यमानो
भङ्गश्चेतोगुणानां भवति तु विधया हंसरूपोक्तया मे ॥१३॥

श्रेयोमार्गेषु मुख्यं कथयति भगवान् भक्तियोगं, यतोऽस्मिन्
कामैरस्पृष्टबुद्धिर्भगवति रतिमान् नैरपेक्ष्यं कमीयात् ।
ध्यायेद्धृत्पुण्डरीके समसुमुखचतुर्बाहुसुग्रीवकर्णं,
मेघश्यामं सुपीताम्बरमतिसुभगं हृद्यरूपं मदीयम् ॥१४॥

सिद्धीरष्टादशायं कलयति कलिता मूर्तिगाश्चाणिमाद्याः,
प्राप्त्याद्या इन्द्रियोद्गा वशिमप्रभृतयो बुद्धिगास्ताः किलाष्टौ ।
दूरादाकर्णनाद्याः परतनुगमनाद्याश्च देहानुबद्धाः
कालज्ञत्वादयश्चान्तरसमुपगता धारणाया बलेन ॥१५॥

भूयः प्रोचे विभूतीर्गतिरिह गतिमत्प्राणिनामस्मि शक्रो,
देवानामस्मि सूर्यस्त्रिजगति तपतां भूपतिर्मानवानाम् ।

धिष्ण्यानामस्मि मेरुर्मनुरिह च नृणां वासुदेवः प्रभूणां,
रत्नानां पद्मरागः, सकलमपि ममैवांश एतज्जगत्याम् ॥१६॥

भक्तिप्राप्त्यै स्ववर्णाश्रमनियतकृतिः शस्यते तत्र शान्ति—
र्दान्तिः क्षान्तिश्च विप्रे, बलधृति पुरुषार्थाः स्थितिः क्षत्रिये च ।
आस्तिक्यं दाननिष्ठा विशि, परिचरणं गोद्विजानां च शूद्रे,
वर्णिन्याचार्यसेवा गृहिणि च शुचिता पारधर्म्यं विपत्सु ॥१७॥

वानप्रस्थिन्यथ स्यात्कठिनमिह तपः पञ्चवह्न्यावह्न्यादियुक्तं,
संन्यासिन्यस्तु दण्डस्तनुवचनमनोवश्यतात्मा विशेषात् ।
भिक्षोर्धर्मः शमादिर्वनवसतिजुषो, गेहिनो भूतरक्षा—
दिस्तेनायं भजेन्मां सपदि परपदप्राप्तियोग्यत्वकामः ॥१८॥

भक्त्या ज्ञानाश्रयिण्या भजति यदि जनोऽनन्यचेताः स भूयात्,
तच्छ्रुत्वाहोद्धवस्तं—कथय, मम विभो भक्तियोगं स्वकीयम् ।
श्रीकृष्णस्तं दिदेश—प्रथममिह पृथासूनवे भीष्म आख्यत्
सत्याहिंसाभयाद्यान्यिह नियमयमांस्तान्निषेवस्व सम्यक् ॥१९॥

ज्ञानं भक्तिश्च कर्म त्रयमिदमुदितं योगनाम्ना पुरस्ता—
न्निर्विण्णानामिहाद्यश्चरम इह मतश्चाप्यनिर्विण्णकानाम् ।
नासक्ता नो विरक्ता मम गुणकथनश्रद्धया विद्धचित्ता
मध्यस्थे भक्तियोगे विदधति तु रतिं ते मदीये च धर्मे ॥२०॥

भक्तिज्ञानक्रियात्मा मम सरणिरियं यैर्जनैस्त्यज्यतेऽत्र
ते क्षुद्राः कामकामा जगति परिसरन्तो न शान्तिं लभन्ते ।
धर्मार्थं मोक्षहेतुं व्यवहृतिकरणं विद्धि चाचारमेनं
सेवन्ते सौख्यकामास्तदितरमनुजा दुःखदुःखं श्रयन्ते ॥२१॥

षड्विंशत्या तु कश्चिद् गणयति कथयत्यन्य एतानि पञ्च
विंशत्या तत्र जीवेश्वरभिदि न मतिः कर्हिचिद्योजनीया ।
अव्यक्ताद् व्यक्तमेतद् भवति महदहङ्कारशब्दादि चेतः—
श्रोत्रादिज्ञानकर्मेन्द्रियमथ गगनादीति सांख्येषु सिद्धम् ॥२२॥

दुष्टानां यो दुरुक्तैर्नहि विचलति स ज्ञानवान्नैव लभ्यः
कश्चिद् भिक्षुस्तु लोकैरवमत इदमुद्गीतवानत्र गीतम् ।
नायं लोको न देवो न च मम समयः सौख्यदो दुःखदोऽयं,
सत्यं संसारचक्रं कलयति यदिदं तन्मनः सर्वमूलम् ।।२३।।

सांख्यं सम्यक्प्रवक्ष्यन्नथ कथयति देवः प्रियायोद्धवाया–
व्यक्तं साम्यं गुणानामथ महदुदितं तस्य मध्यादहञ्च ।
तस्माद्वैकारिकाच्चाभवदिह किल तन्मात्रसर्गो द्वितीया–
च्छ्रोत्रादीनोन्द्रियाणि व्यननुत तमसाढ्यान्मनः संबभूव ।।२४।।

सत्त्वस्याहुः शमाद्यानिह किल रजसः काममुख्यांस्तथेह
क्रोधाद्यान्वं तमस्तः प्रकटितविभवांश्चित्तजान्वा अमूंस्त्रीन् ।
दैवं सत्त्वे विवृद्धे रजसि च बलमासुर्यमेवं तमस्या–
वृद्धं रक्षोबलं स्यादिह च भवति नो जीवनं तैस्त्र्यवस्थम् ।।२५।।

मद्दृष्टेः साधनं यः श्रयति तु वपुषा धर्ममेतं मदीयं,
मामेवोपैति सोऽयं परमिह विमुखोऽतृप्तचेता विषीदेत् ।
नायान्तीर्नापि यान्तीरगणयत निशः कामसक्तः स ऐलः,
प्रोवाचाहो विमोहस्तनुपतिरिह कश्चेति मत्त्वा विरक्तः ।।२६।।

व्याख्यास्यन् कर्मयोगं हरिरिदमवदद्–वैदिकस्तान्त्रिकश्च
मिश्रश्चेति त्रिधास्ते वितत इह मखः कर्मकाण्डाभिधानः ।
पाद्योपस्पर्शनादीन् सविधि तु विविधानर्पयन्नर्चयन्मां,
गायन्नृत्यन् गृणंश्चाभिनयति सुगुणान् भक्तियोगस्य सिद्ध्यै ।।२७।।

पारक्यञ्च स्वभावं क्वचिदपि न विनिन्देन्न चैवाभिनन्देत्
पश्यन्नेकात्मकं चाखिलमिह भुवनं सङ्गहीनः प्रसीदेत् ।
व्योमेदं भूमिवार्यादिभिरिव स रजोध्वान्तसत्वैर्न सज्जेत्,
सेवेत श्रद्धयेमं मम सरलतरं भक्तियोगं मुमुक्षुः ।।२८।।

योगो दुश्चर्य एवेत्यभिहितवति तस्मिन्पुनः कृष्ण ऊचे–
कुर्वन् कर्माणि मह्यं मयि विहितरतिः पुण्यदेशाश्रयः सन् ।

मद्भक्तानां चरित्रं श्रवणपुटभृतं संपिबन् गीतनृत्यै-
र्यात्रापर्वोत्सवानारचयत इति श्रुत्वोद्धवोऽगात्कृतार्थः ॥२९॥

तस्मिन्याते‌ऽन्तरिक्षे दिवि भुवि महतः सङ्कटाञ्जायमानान्
दृष्ट्वा प्रोवाच कृष्णो यदुगणमयि, संत्यज्यतां द्वारिकेयम् ।
सस्नुर्गत्वा प्रभासं ददुरिह कुशलं तत्तदाचर्य मद्यं
पीत्वान्योन्यं विजघ्नुर्हरिरपि जरसा विद्धपात्सूतमौज्झत् ॥३०॥

ब्रह्माद्यास्तत्र देवा अभिययुरपरे चास्य लीलां गृणन्तो
वर्षन्तः पुष्पपुञ्जं सकलमपि नभः सङ्कुलीकृत्य यानैः ।
तेषामग्रेऽम्बुजाक्षः स्वतनुमुपजहौ स्वीयधामोद्ययौ च
प्रोक्ताः सूतेन सर्वे ययुरुपनिधनं चार्जुनोऽन्त्येष्टिनार्चत् ॥३१॥

---

## द्वादशः स्कन्धः

प्रद्योताः पञ्च भूपा इह दश शिशुनागा नवाथेह नन्दा
भाव्या मौर्या दशाथो दश नरपतयो शुङ्गजाः पञ्च काण्वाः ।
आन्ध्रास्त्रिंशच्च सप्ताप्यवभृततनया गर्दभिल्ला दशाथो
कङ्काः स्युः षोडशास्यां भुवि यवनतुरुष्का गुरुण्डाश्च मौनाः ॥१॥

पश्चान्म्लेच्छावनीशावनिरनुदिवसं धर्महीना च दीना,
स्यात्पाषण्डेष्वधीना खरहृदयजना स्यात्कलेर्दुष्प्रभावात् ।
धर्मत्राणाय कल्किः स्वयमवतरिता शम्भले म्लेच्छहन्ता
भूयः संस्थापयिष्यत्यथ च कृतयुगं भूपदेवापिमुख्यैः ॥२॥

दृष्ट्वा व्यग्रान्नृपालानुपहसति धरा-क्रीडनान्येव मृत्यो-
रेते भूपा मृषाशाः पृथुनहुषककुत्स्थादिकान्न स्मरन्ति ।
एकैकः क्षीयतेऽत्र प्रतियुगमपि यद् धर्मपादोऽप्यधर्मो
वृद्धिं यातीति भव्यैरिह स हि भगवान् कीर्तनीयः कलिस्थैः ॥३॥

ब्रह्माहस्त्वेककल्पो भवति च विलयो नैकरूपस्तदन्ते,
तस्तिन्नैमित्तिकाख्ये जगदहिशयनः स्वात्मसात्कृत्य तिष्ठेत् ।

सङ्घातश्चाण्डकोशः प्रकृतिजविलये लीयते कारणे स्वे,
यायादात्यन्तिकेऽस्मिन्प्रकृतिरपि लयं शिष्यते चैक आत्मा ॥४॥

अस्यां सत्संहितायामनुकथितमुदात्तं हरेस्तस्य वृत्तं,
यस्याह्लादाद्विरञ्चिर्जनित इह महेशश्च यस्यानुरोषात् ।
त्यक्त्वा देहात्मबुद्धिं त्यज निजनिलयं ब्रह्म सम्पद्यमान
इत्यूचे व्याससूनुः शपितभुजगदंशाय भूपाय तस्मै ॥५॥
तेनोक्तां संहितां तां सविनयमनसाऽधीतवाञ्छ्रीपरीक्षित्
प्रोचे—सिद्धोऽस्मि धन्योऽस्मि च मुनिवर, तेऽनेन गाथामृतेन
याते वैयासकावागमदथ भुजगो दष्टवांश्चावनीशं,
सर्पाणां सत्रमाधादुपरतजनको वारितोऽसौ सुरार्च्यैः ॥६॥
व्यासात्पैलस्त्वृचस्ता यजुरधिगतवांस्तद्विशम्पस्य सूनुः,
सामागाज्जैमिनिश्चाङ्गिरसश्रुतिमपि प्राप्तवांस्तां सुमन्तुः ।
आदित्याद्याज्ञवल्क्यः पुनरधिगतवान्नूतनं याजुषं सः,
तस्मात्त्रय्यारुणाद्यैरथ परिपठिता या मयाप्ता पुराणी ॥७॥

इत्युक्त्वा मौनमाप्तं शुनकसुतमुखाः सूतमाहुर्मुनीन्द्रा—
जीव्याः साधो चिरं त्वं कथय कथमभूदन्तकाले महर्षिः ।
सोऽपि प्रोवाच—धन्याः, कथयथ विमला यत्कथाः प्रश्नवृन्दै—
मर्किण्डेयो यथातप्यत कठिनतपो दृष्टवांश्चेशमायाम् ॥८॥

मार्कण्डेयेन दवः स्तुत उपगतवांस्तं मुनीन्द्रं प्रसन्नः
प्रोचे—ब्रह्मर्षिवर्य त्वमसि कृतकृतिर्नाथ किञ्चिद्वरं माम् ।
सोऽप्येनं संययाचे—तव दुरधिगमां द्रष्टुमिच्छामि मायां,
कालेनासौ ददर्श क्षितिसलिलनभःसूर्यवायूत्थमायाम् ॥९॥

दृष्ट्वा तां योगमायां शरणमुपययौ तं हरिं सर्वभावात्
शम्भुस्त्वागाद् भवान्या सह तमृषिवरं छन्दयन् सद्वरेण ।
प्रत्याहैषोऽपि—चेशं—दुरवगमपरा प्राणिनामीशमाया,
याचे कामाभिवृष्टेस्तदपि भगवति त्यक्तरन्ध्रां तु भक्तिम् ॥१०॥

सूतः पृष्टो विभूतोरकथयत विभोर्वेदतन्त्रोपदेष्टा,
मायाद्यैर्यत्र तत्त्वैर्नवभिरुपहिता भासतेऽसौ त्रिलोकी ।
भूः पादौ द्यौः शिरो नाभिरियमथ नभोऽनाद्यविद्याधिपस्य,
तस्यात्मा सूर्य एकः प्रणिगदित ऋषीशैरनेकस्वरूपः ॥११॥

अस्मिन्दिव्ये पुराणे जगदुदयलयौ ज्ञानविज्ञानयुक्तौ,
भक्तिर्वैराग्ययुक्ता, सुरमुनिकथया श्रीपरीक्षित्कथोक्ता ।
उत्क्रान्तिर्योगधृत्याऽवतरणचरितानि प्रधानोत्थसर्गः,
इत्याद्या नैकविद्या विपुलकुलकथा कृष्णगाथा तथोक्ताः ॥१२॥

यं ब्रह्मा साङ्गवेदोपनिषद उपगायन्ति, पश्यन्ति यं ते,
योगीन्द्रा ध्यानकालेऽसुरसुरनिचया यं भजन्ते, नमोऽस्मै ।
तद्गाथा गातुमष्टादश विमलपुराणानि वै कल्पितानि,
तेषामासन्नपञ्चायुतदशकमितश्लोकसंख्या प्रसिद्धा ॥१३॥



# अध्यात्म-दर्शनम्

## अवतरणिका

भगवान् सच्चिदानन्दः प्रतिदेहं निजांशतः ।
जीवो भवति तत्तस्य स्वभावोऽध्यात्ममुच्यते ।।१।।

अंशेंऽशिधर्मा दृश्यन्ते तस्मिञ्जीवेऽपि केचन ।
तथा भूयासमित्यादि सदाद्यंशतयेप्सितम् ।।१।।

अथास्य जीवभावस्य साङ्गोपाङ्गं निरूपणम् ।
भ्रान्तिसंशीतिनिर्मुक्तं यत्तदध्यात्मदर्शनम् ।।३।।

इह चर्चितमप्येतत् सर्वभूतहिते रतैः ।
महर्षिभिर्भारतीयैर्रचितश्च विदेशजैः ।।४।।

कलिकाले करालेऽस्मिन्महामोहान्धकारिते ।
भारतेऽपि न तद्दिव्यं ज्योतिः प्रायः प्रकाशते ।।५।।

इति ग्रथ्नामि तात्पर्यमर्हिंसासत्यवर्तिनाम् ।
विश्वबन्धुतया राष्ट्रपितॄणाम् तु महात्मनाम् ।।६।।

कायेन मनसा वाचाऽऽचरितैश्चारुकर्मभिः ।
तेषामिध्यात्मवादोऽज्ञान्नानावादतया प्रथाम् ।।७।।

ब्रह्म सत्यमिति ख्यातिर्वेदवेदान्तसम्मता ।
यत्रानुभूता प्रोक्ता च सत्यनारायणात्मना ।।८।।

## अथ भगवदधिकरणम् ।।१।।

"भगवान् सच्चिदानन्दः सत्योऽस्तीत्यादिकल्पना ।
गवेषणां रञ्जयन्ती वञ्चयत्येव वास्तवात् ।।९।।"

इति मा वादिषुर्विज्ञा मतिरेषा न कल्पना ।
विनैनां पदमप्यग्रे सरेन्नैषा गवेषणा ।।१०।।

अस्मासु सत्सु सोऽस्त्येव तस्मिन्नसति नो वयम् ।
इत्येषा मतिरज्ञानां सुज्ञानां चास्ति शाश्वती ॥११॥

गृणन्तोऽपि बहून् देवान् मन्त्रैः साक्षात्कृतैः स्वयम् ।
यत्किञ्चिदेकं सद्विप्रा ऋषयो बहुधाऽवदन् ॥१२॥

नासदीयादिसूक्तैश्च यदेव प्रतिपाद्यते ।
येनैवोपनिषद् ब्रूत ईशावास्यमिदं जगत् ॥१३॥

दहरादिप्रतीकेषु यदेव समुपास्यते ।
यस्मिन्नेव च तिष्ठन्ति सर्वे नाभावरा इव ॥१४॥

यत्प्रज्ञानं, य आनन्दमयो, यश्च प्रजापतिः ।
यदेव चक्षुषश्चक्षुर्यदेव मनसो मनः ॥१५॥

अणोरणीयानपि यो महीयान् महतोऽपि यः ।
यथोर्णनाभिः सृजते य एव ग्रसते पुनः ॥१६॥

तमेवाहुर्हिततमं, शुद्धं शान्तञ्च शाश्वतम् ।
तमेवाभिष्टुवन्त्यन्ये मायिनन्तु महेश्वरम् ॥१७॥

स एव वेदवेदान्तवाक्यैरेव न वर्ण्यते ।
यावत्संसाध्यते युक्त्या दर्शनैरास्तिकैरपि ॥१८॥

प्रकृतेर्विकृतेर्भिन्नः पुरुषः कैश्चिदुच्यते ।
क्लेशाद्यैरपरामृष्टोऽन्यैः स ईश्वर इष्यते ॥१९॥

गुणक्रियाश्रयत्वेन द्रव्यमात्माऽपरैः स्मृतः ।
शेषशेषितया सैकेरनुमेयतयाऽऽस्थितः ॥२०॥

इतरैः फलदत्वेन कर्मैवेश्वर ईरितः ।
'जन्माद्यस्य यतो' मुख्यैर्लक्षणैर्ब्रह्म तत्परैः ॥२१॥

न केवलं भारतीयैः श्रौतैः स्मार्तैश्च पण्डितैः ।
अपि वैदेशिकैर्विज्ञैरीश्वरः स समर्थ्यते ॥२२॥

अनक्षिमन्थरः प्राह यदनन्तमनिश्चितम् ।
प्रथागौरश्च यत्संख्याब्रह्मनाम्नोपदिष्टवान् ॥२३॥

क्षीणफेनोऽप्यकायं यं प्रोक्तवानीश्वरं परम् ।
जयनश्च यदद्वैतमचिन्त्यञ्चाप्यतीन्द्रियम् ॥२४॥

अफलातूश्च विज्ञानं यदेकरसमूचिवान् ।
अरस्तुः कारणेष्वन्तर्निमित्तमिति यज्जगौ ॥२५॥

यमन्तर्यामिणं शक्तिरूपेण स्तावकोऽस्तवीत् ।
यूदियो यमुवादाप्तुं शक्यं देवसहायिभिः ॥२६॥

सन्ततं सृष्टिकर्तारमगस्ती यमभाषत ।
यवनानीविदामेष भूयसामिष्ट ईश्वरः ॥२७॥

इस्लामिकानां विज्ञानां सम्प्रदाया भवन्तु ते ।
किन्तु सर्वेऽपि मन्यन्ते सपैगम्बरमीश्वरम् ॥२८॥

हावशो नृभिरज्ञेये तस्मिन्नस्त्यर्धसम्मतः ।
स्वनौजास्तु स्वयंसिद्धं स्वाधारं मनुते च तम् ॥२९॥

तं परोक्षापरोक्षाभ्यां परं लाकोऽभिभाषते ।
दकार्तोऽपि स्वयंसिद्धं स्रष्टारं वदतीश्वरम् ॥३०॥

लापनज्ञोऽपि कर्तारमसीमं जगतोऽवदत् ।
अविनाशिनमात्मानं तञ्च वर्चस्वलोऽब्रवीत् ॥३१॥

कान्तश्च सीमपारीणं वस्तुसारं तमुक्तवान् ।
स्फटिको ज्ञातृ च ज्ञेयं परमात्मानमंशिनम् ॥३२॥

हिगैल् सर्वविकासानां लक्ष्यमाह सनातनम् ।
स्पन्त्सरः परमं तत्त्वमज्ञेयमवदीच्च तम् ॥३३॥

विश्वाधारं श्वेतशीर्षा यूकेन् आत्मिकजीवनम् ।
बेर्गसा ईश्वरं वक्ति तं निरन्तरजीवनम् ॥३४॥

जिमसस्तं शक्तिमन्तं महान्तं सहचारिणम् ।
इत्याङ्गलविदामिष्टोऽनेकेषां पुनरीश्वरः ॥३५॥

येऽपि विप्रतिपद्यन्ते प्रतिपद्यन्त एव ते ।
असंख्यनामरूपस्य नामरूपान्तरोक्तिभिः ।३६॥

गवेषणं यत्सत्यस्य नूनमस्तीश्वरस्य तत् ।
सत्यमेवेश्वरो यस्मात्सत्यमीश्वर एव यत् ॥३७॥

सूर्यादपि यथार्थेयं प्राचीना चाधिकं मतिः ।
विनिहन्ति प्रतिव्यक्ति बहून् जीवनसंशयान् ।।३८।।

इयं गवेषणां सूते पुरुषार्थस्य च स्पृहाम् ।
इमामेव मतिं श्रद्धां मान्यतां च प्रचक्षते ।।३९।।

वैदेशिका भारतीया अपि दार्शनिकाः परे ।
वैज्ञानिकाश्च नैवैनमीश्वरं जातु मन्वते ।।४०।।

## अथ प्रमाणाधिकरणम् ।।२।।

एकत्र विषयेऽनेका प्रतीतिर्येयमीक्षते ।
किं नु तत्र प्रमाणं वा प्रमेयं वाऽपराध्यति ।।४१।।

यदि कश्चिद्रसं साक्षात्कर्तुं नेत्रे प्रयोजयेत् ।
तदा स विद्यमानं तं नास्तीत्येवाभिधास्यति ।।४२।।

प्रमाणस्यापरिग्राही प्रमेयास्तित्ववारकः ।
विराध्यति प्रमातैव न तु तेऽत्रापराध्यतः ।।४३।।

प्रमाणेन प्रमेयन्तु प्रमाता यः प्रमास्यति ।
सोऽवश्यं तत्प्रमासिद्धां प्रसिद्धां सिद्धिमाप्स्यति ।।४४।।

सिद्धिर्भवति धर्मेण धर्मः कर्मात्मकः स्मृतः ।
कर्म संजायते ज्ञानादथ ज्ञानं प्रमाणजम् ।।४५।।

प्रमाणमिन्द्रियं बुद्धिः श्रद्धा चेति त्रयं मतम् ।
प्रत्यक्षेऽनुमितौ शाब्दे ज्ञाने तत्साधनं स्मृतम् ।।४६।।

केवलैरिन्द्रियैस्तिर्यङ् मनुष्यस्तु सबुद्धिकैः ।
प्रत्यक्षमश्नुते तेन तारतम्यं तयोः स्थितम् ।।४७।।

अतिदूरादिभिर्दोषैरुपलब्धिर्न जायते ।
सतोऽपि वस्तुनस्तेन मत्त्वा कर्माणि सीव्यति ।।४८।।

बुद्ध्या यन्त्रादि निर्माय दूरस्थान् विषयानपि ।
समीपस्थान्यथा पश्यन् मनुष्य इति कथ्यते ।।४९।।

अन्यानपि पुराणादौ समाख्यातान्, समक्षतः—
वीक्षते स चमत्कारान् बुद्धेरेव प्रभावतः ।।५०।।

प्रत्यक्षरूढया बुद्धयानुमानं लब्धवांस्ततः ।
ताभ्यां कात्स्न्र्येन विज्ञानं स जानात्याधिभौतिकम् ॥५१॥

श्रोत्रादीनामिन्द्रियाणां भूतसाजात्यतः स्वतः ।
लब्धुं तदीयविज्ञानं सामर्थ्यं युज्यते यतः ॥५२॥

तथैव बुद्धिरप्येषा सम्भिन्नेन्द्रियजैर्ग्रहैः ।
यावद् भौतिकविज्ञानं प्रसृत्य विरमत्यतः ॥५३॥

किन्तु भौतिकविज्ञाने कार्यकारणयोः क्रमम् ।
भूयोऽनुभूय यदि सा कदाचित् प्रतिबुध्यते ॥५४॥

एकस्मात् कारणादन्यत्कार्यमुत्पद्यते तु यत् ।
कार्यतः पूर्ववर्तित्वं कारणस्य ततः स्थितम् ॥५५॥

यत् परं कारणं दृष्टं तस्यान्यत् कारणं न किम् ।
अस्ति चेत्तदुपादानं निमित्तं वेति संशये ॥५६॥

यदा सा नेन्द्रियज्ञानैः कञ्चिदुद्धारमृच्छति ।
तदा सा भवति श्रद्धा यद्यद्धा मार्गदर्शिनी ॥५७॥

ततोऽतिभौतिकं हर्षमोहशोकविवर्जितम् ।
सच्चिदानन्दरूपं तं भगवन्तं प्रतीक्षते ॥५८॥

इत्थं भौतिकविज्ञानलाभमात्रकृतार्थितः ।
अज्ञस्तिष्ठति बुद्धोऽपि श्रद्धाहीनस्तु संशयी ॥५९॥

श्रद्धावांल्लभते ज्ञानं तत्परः संयतेन्द्रियः ।
अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति ॥६०॥

## अथ श्रद्धाधिकरणम् ॥३॥

अधिदैवे तथाध्यात्मे विषयेऽतीन्द्रिये यदा ।
आविष्कृतचमत्कारा बुद्धिरप्युपहन्यते ॥६१॥

तदा तद्विषयं ज्ञानं श्रद्धाबद्धान्तरात्मनाम् ।
शब्दादेव भवत्याप्तवाक्यरूपेण विश्रुतात् ॥६२॥

अथ बुद्धेरविषयो यद्यद्वस्तु भविष्यति ।
तत्तत् साधयितुं श्रद्धा यद्यद्धा जागरिष्यति ॥६३॥

तदा वन्ध्यासुतः कश्चित् खपुष्पकृतशेखरः ।
कच्छपीदुग्धपुष्टाङ्गः श्रद्धयाऽध्यवसास्यते ॥६४॥

इत्यादीनां कुतर्काणां विषयो नात्र विद्यते ।
सम्बन्धं प्रतिबध्नन्ती बुद्धिर्जागर्ति तत्र हि ॥६५॥

इन्द्रियोपहिता बुद्धिर्यतस्त्यवग्रे न सर्पति ।
तत्र प्रवर्तते श्रद्धा न बुद्धीन्द्रियगोचरे ॥६६॥

लोकेऽनुभवकाले सा बुद्धिराश्रयतीन्द्रियम् ।
अलौकिके त्वनुभवे श्रद्धामाराधयत्यसौ ॥६७॥

बुद्धिं विनेन्द्रियं यद्वत्तद्वद् बुद्धिर्विनेन्द्रियम् ।
नालं किमपि कर्तुं यत्प्रमाणं वस्तुतोऽद्वयम् ॥६८॥

श्रद्धां विना न सा बुद्धिः श्रद्धा बुद्धिं विना न सा ।
न किञ्चिदपि कुर्वाणा प्रमाणं वस्तुतोऽद्वयम् ॥६९॥

इन्द्रियोपहिता बुद्धिर्यद्वल्लोके प्रवर्तते ।
अतिलोके तथा श्रद्धोपहितेत्यवधार्यताम् ॥७०॥

अन्धश्रद्धेति यामाहुर्मूढविश्वास इत्यथ ।
तादृशं वस्तुतो वस्तु न किञ्चिदिह विद्यते ॥७१॥

यस्य कस्यचनादेशे न वयं श्रद्दधामहे ।
आप्तानान्तु वचः सत्यं प्रत्यक्षमिव मन्महे ॥७२॥

आप्ता यथार्थवक्तारः सर्वभूतहिते रताः ।
महात्मानः स्वसन्तानहितार्थाय जगुर्गिरः ॥७३॥

तासु श्रद्दधते केचित्केचित्संशेरते पुनः ।
केचिन्मिथ्येति मन्वाना निवर्तन्ते तु दूरतः ॥७४॥

तत्र श्रद्धावतां ज्ञानमज्ञानं च निवर्तिनाम् ।
सम्मोहं संशयानानां फलमाहुर्मनीषिणः ॥७५॥

आप्ता यथार्थवक्तारस्तद्वाक्यं शब्द उच्यते ।
तस्य शब्दस्य सम्माने श्रद्धा भवति कारणम् ॥७६॥

इन्द्रियं श्रोत्रनेत्रादि, बुद्धिर्मस्तिष्कवर्तिनी ।
श्रद्धा हृदयनिष्ठेयमिति भेदः परस्परम् ॥७७॥

श्रुतेर्यथार्थवक्तृत्वमायुर्वेदादिषु स्फुटम् ।
प्रत्यक्षवत्परोक्षेऽपि तत्तथेत्यनुमीयते ॥७८॥

ब्राह्मणैः क्षत्रियैर्वेदाः स्वप्रभावदृढीकृतेः ।
इच्छायां रचिताः काले प्राचीन इति येऽवदन् ॥७९॥

तेऽवहेलितजातीनामुद्धाराय तथाऽभ्यधुः ।
नतु श्रुतिनिरुक्तानि तानि तेऽपोदितुं क्षमाः ॥८०॥

वस्तुतो विस्मृताशेषस्वार्थानां परमार्थिनाम् ।
ऋषीणां तानि वाक्यानि सर्वोद्धाराय मन्महे ॥८१॥

तथाहि 'यामिमां वाचं कल्याणीमावदान्यहम् ।
इत्यादिषु समत्वेन सर्वस्वागतमिष्यते ॥८२॥

चातुर्वर्ण्यं समाजस्य सुव्यवस्थार्थमेव तत् ।
न तु वर्णविशेषस्य गुरुलाघवकारणम् ॥८३॥

वयमद्यापि पश्यामश्चातुर्वर्ण्यं स्वभावजम् ।
केवलं तद्व्यवस्थार्थं राजयत्नः प्रतीक्षते ॥८४॥

सन्त्येव शिक्षकाः केचित्सन्ति केचिच्च रक्षकाः ।
सन्ति व्यापारिणश्चान्ये परे च परिचारिणः ॥८५॥

एतान् विना न राष्ट्रस्य समाधानं क्वचित् क्षमम् ।
समत्वं त्वधिकाराणां न कर्तव्यानामिहेष्यताम् ॥८६॥

अन्येऽपि केचिदाक्षेपाः श्रुतौ केषाञ्चन श्रुताः ।
समन्वयधियोऽभावादुद्भूतास्ते न वस्तुतः ॥८७॥

समन्वयधियं सूते, परोक्षं दर्शयन्त्यसौ ।
श्रद्धैवांशानंशिनञ्च प्रमापयति तं परम् ॥८८॥

बुद्ध्या पश्यति यद्यादृक् तदन्यादृङ् न सोऽनया ।
तथाविधा तु लोकेऽस्मिन्नन्धश्रद्धेति विश्रुता ॥८९॥

वयन्तु सर्वथा बुद्धेः सेन्द्रियाया अगोचरम् ।
प्रमातुमेव श्रद्धाख्यामिमां युक्तिमुपास्महे ॥९०॥

न वयं, सर्व एवेमे लोकाः श्रद्धामुपासते ।
विना ह्येनां स्वपितरं निश्चेतुमनलं हि ते ॥९१॥

यथा हितमयी माता शिशवे पितरं दिशेत् ।
तथैव सच्चिदानन्दं भगवन्तं श्रुतिर्जगौ ॥९२॥

यस्तु बुद्धवचोबद्धश्रद्धस्तन्मानयन्नपि ।
वेदप्रामाण्यमित्यादि जगौ जाड्यस्य लक्षणम् ॥९३॥

श्रद्धा-विषयमात्रेऽसाववमन्ता श्रुतीषिणाम् ।
श्रद्धाया अनिवार्यत्वं स्वदृष्टान्तादवेदयत् ॥९४॥

त्रिविधा भवति श्रद्धा देहिनां सा स्वभावजा ।
सात्त्विकी राजसी चैव तामसी चेति नः श्रुतम् ॥९५॥

श्रद्धा स्वतो गुणातीता गुणातीतप्रमापिका ।
उपचारेण सगुणा त्रिगुणा वा प्रकीर्तिता ॥९६॥

तत्र सर्वेऽपि ऋषयः प्रबुद्धा अन्तरात्मनि ।
स्वस्वानुभवमाचख्युः सर्वभूतहिते रताः ॥९७॥

तेषामनुभवा भान्ति विरुद्धा इव ये मिथः ।
श्रद्धावतां समस्तेषु तेषु दृष्टः समन्वयः ॥९८॥

अन्यत्रान्यमतिर्भ्रान्तिः सा न श्रद्धा कदाचन ।
सा हि तद्वति तद्बुद्धेरेव नित्योपकारिणी ॥९९॥

श्रद्धापहन्ति दुःखानि, श्रद्धा रक्षति जीवनम् ।
श्रद्धैव मृत्युकालेऽपि, सान्त्वं वितनुते परम् ॥१००॥

श्रद्धाबुद्धिविहीनानामविज्ञातं विजानताम् ।
श्रद्धाबुद्धिसमेतानां विज्ञातञ्चाविजानताम् ॥१०१॥

## अथ स्वभावाधिकरणम् ॥४॥

द्विरुक्तो यः स्वभावोऽयं प्रथमोऽध्यात्मनामकः ।
द्वितीयस्तु यतो जाता श्रद्धा प्रोक्ता स्वभावजा ॥१०२॥

तयोः कश्चन सम्बन्धो नास्ति वास्तीति संशये ।
प्रस्तूयते स्वभावस्य साङ्गोपाङ्गं निरूपणम् ॥१०३॥

आब्रह्मस्तम्भपर्यन्तं प्रतिवस्तूपवर्ण्यते ।
यः स्वो भावः स एवात्र स्वभाव इति कथ्यते ॥१०४॥

अस्ति भाति प्रियञ्चेति स्वरूपं परमेशितुः ।
स्वभावोऽस्याधिभूताधिदेवाध्यात्ममयं जगत् ॥१०५॥

इमानि तस्य नामानि रूपाणि च वदन्ति ये ।
तेऽप्यभेदं विवक्षन्ति न जगद्ब्रह्मणोर्भिदाम् ॥१०६॥

भूतेषु वर्तमानोऽसावधिभूतमिति श्रुतः ।
तथैवैष स देवेषु वर्तमानोऽधिदैवतम् ॥१०७॥

अधिभूतं क्षरो भावः पुरुषश्चाधिदैवतम् ।
योऽयमादित्यवर्त्ती सन् सर्वेन्द्रियगुणावहः ॥१०८॥

इन्द्रियाणि च बुद्धिश्च तस्य भासैव भासनात् ।
सूर्यस्य दीपा इव नो क्षमन्ते तस्य भासने ॥१०९॥

सच्चिदानन्दरूपस्य ब्रह्मणः प्रत्यगात्मता ।
येयं स एव देहेऽस्मिन् स्वभावोऽध्यात्ममुच्यते ॥११०॥

न केवलं स भगवान् प्रतिदेहं निजांशतः ।
जीवो भवति किन्तर्हि देहोऽपि स्वयमेव सः ॥१११॥

भूमिरापोऽनलो वायुः खमित्येतेषु सोऽस्ति यत् ।
मनो बुद्धिरहङ्कार इत्येतेषु च भात्यपि ॥११२॥

इयं देहात्मिका तस्य प्रकृतिः प्रथिताऽपरा ।
परा जीवात्मिका यस्यां प्रीणात्यपि स वै प्रियः ॥११३॥

जीवभावः स्वभावोऽयं यथा भगवतः परः ।
तथा भूम्याद्यहङ्कार–पर्यन्तः प्रथितोऽपरः ॥११४॥

योऽयं भूतेषु देवेषु स्वभावः कथितोऽपरः ।
स एवायं गुणमयो गुणाः सत्त्वं रजस्तमः ॥११५॥

"आगमोऽपः प्रजा देशः कालः कर्म च जन्म च ।'
ध्यानं मन्त्रोऽथ संस्कारो दशैते गुणहेतवः ॥'११६॥

जायते यादृशे वंशे, देशे यादृशि तिष्ठति ।
काले भवति यादृक्षे, यादृश्यन्नानि सेवते ॥११७॥

अधीते यादृशं शास्त्रं, गृहे वसति यादृशे ।
करोति यादृशं कर्म, सङ्गतिं याति यादृशीम् ॥११८॥

उपास्ते यादृशं देवं, मन्त्रं जपति यादृशम् ।
तादृशं जायते जन्तोर्मनः सत्त्वपराह्वयम् ॥११९॥
श्रोत्रत्वगक्षिरसनघ्राणैश्च ज्ञानसाधनैः ।
जिह्वापाणिपदोपस्थपायुभिः कर्मसाधनैः ॥१२०॥
सहितं प्राणिनां देहं प्रवदन्त्याधिभौतिकम् ।
मनो बुद्धिरहङ्कार इत्यन्तःकरणत्रयम् ॥१२१॥
आधिदैविकमित्याहुः साधनं ज्ञानकर्मणोः ।
देशकालादिजाः प्रोक्ताः संस्काराञ्जनयन्ति यान् ॥१२२॥
सात्त्विका राजसास्ते स्युस्तामसाश्च तदुद्भवाः ।
तैः संस्कारैर्मनः श्रद्धां स्वानुरूपां प्रपद्यते ॥१२३॥
हिन्दुस्थाने हिन्दुवंशे नराणां प्राप्तजन्मनाम् ।
शास्त्रे वेदपुराणादौ श्रद्धा स्वाभाविकी भवेत् ॥१२४॥
ते तया श्रद्धया युक्तास्तदध्ययनतत्पराः ।
ज्ञानं विज्ञानसहितं प्रतिपत्तुमिह क्षमाः ॥१२५॥
ज्ञानकर्मेन्द्रियैरेभिः सममेव कलेवरे ।
सुषुप्तौ लयमापन्ने यः स्वं स्वेनैव पश्यति ॥१२६॥
सुखमस्वाप्समित्युक्त्या सुखात्मा यः प्रतीयते ।
स एव जीव आत्मादिनामभिर्भुवि गीयते ॥१२७॥
जीवो द्विधा जगज्जीवो भगवज्जीव इत्यपि ।
जगद्गुणैर्जगज्जीवः परस्तु भगवद्गुणैः ॥१२८॥
स जीवो जैनबौद्धानां तदनन्तरभाविनाम् ।
सम्प्रादायादनुप्राप्त इति मा मानिषुर्बुधाः ॥१२९॥
सिद्धः पञ्चाग्निविद्यायां यः प्रवाहणजैवलेः ।
गार्ग्यायणेः पुनर्जन्मोपदेशे चापि यः स्थितः ॥१३०॥
उत्क्रान्तिक्रमनिर्देशे प्रसिद्धो यस्तथाऽऽरुणेः ।
ज्ञातश्च याज्ञवल्क्यस्याश्वमेधैर्यजतां गतौ ॥१३१॥
योनीनां रमणीयानां कपूयानाञ्च वर्णनात् ।
पुनर्जन्मापि जीवानां छान्दोग्यादावधीमहे ॥१३२॥

अधिभूतेन भूतानि तोषयन्नथ पोषयन् ।
अधिदेवेनेन्द्रियाणि पालयन्नथ लालयन् ॥१३३॥
सात्त्विको यतते सर्वभूतानां हितकाम्यया ।
राजसः स्वार्थसिद्धचर्थं परनाशाय तामसः ॥१३४॥
सात्त्विक्या सात्त्विको युक्तो राजस्या राजसः पुनः ।
तामस्या तामसः सत्यं यो यच्छ्रद्धः स एव सः ॥१३५॥
सात्त्विकेनाधिभूतेन भूतानां हितकाम्यया ।
जीवनाधायकं वस्तु समुत्पादयते बुधः ॥१३६॥
राजसेन तु स स्वार्थमेव तत् संजिघृक्षते ।
तामसेन च पीडार्थं परेषां नाशयत्यदः ॥१३७॥
सात्त्विकेनाधिदेवेन वस्तु विज्ञानहेतुकम् ।
आविष्करोति विश्वस्य सुखाय स नवं नवम् ॥१३८॥
राजसेन स विज्ञानं सेवते स्वार्थसिद्धये ।
तामसेन च नाशाय परेषां यततेऽबुधः ॥१३९॥
सात्त्विकाः स्वार्थमिच्छन्ति परमार्थाविरोधिनम् ।
राजसास्तु निहत्यापि परार्थं स्वार्थकाङ्क्षिणः ॥१४०॥
स्वार्थं परार्थनाशाय प्रतीक्षन्ते न तामसाः ।
एताः स्वभावयोश्चेष्टा अधिभूताधिदेवयोः ॥१४१॥
अस्तित्वमिच्छन्नपि यः परास्तित्वं विनाशयन् ।
भानं चाभिलषन् सम्यक् परानस्ति प्रवञ्चयन् ॥१४२॥
प्रियं कामयमानश्च परेषां विप्रियं चरन् ।
खल्वसौ मूढ आत्मानं कथञ्चिन्नावबुध्यते ॥१४३॥
यदि सत्ताकाङ्क्षयैव कश्चिद्धिंसां प्रमाणयेत् ।
स नूनं तापनाशाय वह्निज्वालावलीः श्रयेत् ॥१४४॥
हिंस्रस्तात्कालिकेनैव विजयेन महीयते ।
किन्तु तेन स्वनाशाय घातकोऽन्यः प्रसूयते ॥१४५॥
को नाम बोधमाकाङ्क्षमाणोऽसत्यं बुधः श्रयेत् ।
कश्चानन्दोपलम्भार्थं विगृह्णीतां जनैः सह ॥१४६॥

इत्यहिंसा च सत्यं च प्रमा चेति व्रतत्रयम् ।
आध्यात्मिकस्वभावस्य लक्ष्म ज्ञेयं परिस्फुटम् ॥१४७॥
अतो विरुद्धं बुद्ध्यादेराधिभूताधिदैविकैः ।
स्वभावैः परिभूतस्यापराध इति निश्चितम् ॥१४८॥

भौतिकेऽथ शरीरेऽस्मिन् निष्ठा यस्य विशेषतः ।
अस्तित्वं स्वशरीरस्य सर्वथा सोऽभिवाञ्छति ॥१४९॥
स शरीरस्थभूतानां पालने पोषणे रतः ।
भुङ्क्ते भोज्यमभोज्यञ्च पेयापेये पिबत्यघः ॥१५०॥

दैविकेष्विन्द्रियेष्वास्था यस्य मुख्यतया पुनः ।
इन्द्रियेभ्यः सुखं भानं विषयाणां स काङ्क्षति ॥१५१॥
लालयन्निन्द्रियाण्येष शरीरमथ पालयन् ।
अस्मरन्न्याय्यमन्याय्यं विषयांश्चरतीत्वरः ॥१५२॥

अनयोः स्वार्थमूलानां प्रवृत्तीनामिदं फलम् ।
यदत्रासत्यहिंसेर्ष्यापापान्युपलभामहे ॥१५३॥
आत्मनिष्ठस्तु हित्वापि सर्वं स्वार्थमपेक्षितम् ।
आत्मवत्सर्वभूतेषु सर्वदा पश्यति प्रियम् ॥१५४॥

भूतान्यहिंसयाऽऽराध्य सत्येनाराध्य देवताः ।
प्रेम्णा च परमात्मानमेष प्रीणयति ध्रुवम् ॥१५५॥
प्रतिभूतं गुणास्ते ते प्रतिदेवं विभूतयः ।
प्रत्यातमश्चापि चैतन्यं तस्यैव परमात्मनः ॥१५६॥

तानि वास्यैव रूपाणि नामानि जगदीशितुः ।
अस्ति भाति प्रियञ्चेति स्वरूपन्तस्य कीर्तितम् ॥१५७॥
तस्यास्तित्वेन सर्वेषामस्तित्वमभिकाङ्क्षितम् ।
तस्य भातितया भानं तत्प्रियत्वेन च प्रियम् ॥१५८॥

प्रत्यगात्मतया ब्रह्म प्रतिदेहं तु यत् स्थितम् ।
क्षराक्षराभ्यामेताभ्यां परमं तत्किलाक्षरम् ॥१५९॥
किञ्चेन्द्रियाणि देहेऽस्मिन्नागतानि न बाह्यतः ।
अपि त्वेतानि सृष्टानि वेधसाभ्यन्तराद् बहिः ॥१६०॥

तस्मादिमानि पश्यन्ति बहिरेव न चान्तरम् ।
इति तं प्रत्यगात्मानं जातु नाम न जानते ॥१६१॥

बुद्धिश्चैषेन्द्रियज्ञानं प्रत्यक्षमुपजीवति ।
इति सापि तमात्मानं कथञ्चिन्नालमीक्षितुम् ॥१६२॥

इन्द्रियागोचरस्याथ बुद्ध्यबोध्यस्य सर्वथा ।
परमस्याक्षरस्यास्य स्वभावोऽपि सनातनः ॥१६३॥

उपजीवन् स्वभावश्च तमेनं स्फुरति स्वयम् ।
धर्मः स्वाभाविको योऽत्र स वै धर्मः सनातनः ॥१६४॥

अध्यात्मस्याविरोधेन ते धर्मा अधिदैवते ।
ये चाधिभूते ते धर्मा उपचारात्सनातनाः ॥१६५॥

सच्चिदानन्दरूपस्य स्वभावोऽध्यात्ममस्ति यत् ।
ततः सत्तां च बोधं च सदानन्दश्च काङ्क्षति ॥१६६॥

सत्ताकाङ्क्षाश्रितं धर्ममहिंसामिह मन्वते ।
'अहिंसा परमो धर्मः' इति वाग्भिः स्तुवन्ति च ॥१६७॥

बोधाकाङ्क्षाश्रितं धर्मं सत्यमित्यत्र जानते ।
'सत्यान्नास्ति परो धर्म' इति गीर्भिर्नुवन्ति च ॥१६८॥

आनन्दाकाङ्क्षा धर्मं प्रेममाहुरकैतवम् ।
'सङ्गच्छध्वं संवदध्वमित्यादौ' तच्च गीयते ॥१६९॥

अयं स्वभावो जीवानां प्रत्यगात्मत्वहेतुकः ।
अस्माद्विरुद्धं बुद्ध्यादेरपराध इति स्फुटम् ॥१७०॥

## अथ मनुष्यत्वाधिकरणम् ॥५॥

यस्याद्याभ्यां स्वभावाभ्यां तृतीयः परिभूयते ।
एतैर्धर्मैः स हीनत्वान्मनुष्योऽपि पशुः स्मृतः ॥१७१॥

भोक्तव्यमिति चेद् भुक्तं पीतं पातव्यमित्यपि ।
पशुनेव मनुष्येण भुक्तं पीतं तदुच्यते ॥१७२॥

शतं वर्षाणि जीवेयं सिद्धिं लब्धुमहं यया ।
इति यद् भुज्यते वात्र पीयते तन्मनुष्यवत् ॥१७३॥

मनुष्येण हि भोक्तव्यं पातव्यञ्च विवेकतः ।
जीवितं स यथा दीर्घं लभेताध्यात्मसिद्धिदम् ॥१७४॥

आहारे च विहारे च तथा स्वप्नावबोधयोः ।
कर्मचेष्टासु योगेन दुःखं हन्ति हि बुद्धिमान् ॥१७५॥

आद्याभ्यां हि स्वभावाभ्यां क्षुत्पिपासादयः क्लमाः ।
पशूनामपि वर्तन्ते निवर्तन्ते क्षणाय च ॥२७६॥

किन्तु भोक्तव्यमित्येव पशुना भुवि भुज्यते ।
मनुष्येण तु दीर्घं मे जीवितं स्यादितीच्छया ॥१७७॥

तथैव कामः क्रोधो वा लोभो वा मोह एव वा ।
पशूनभिभवन्त्येते स्वस्य स्वस्यैव सिद्धये ॥१७८॥

मनुष्येग तु तेभ्योऽपि प्रजादि समपेक्ष्यते ।
तदस्याध्यात्मसिद्ध्यर्थं धर्मत्वेनोपयुज्यते ॥१७९॥

यद्येवं तन्मनुष्येण सर्वथा त्यज्यते न किम् ।
अधिभूतञ्चाधिदैवञ्चेति शङ्का न युज्यते ॥१८०॥

मनुष्यत्वविरुद्धैर्हि पशुधर्मैः समुज्झितः ।
पश्चान्मनुष्यो भवति पूर्वन्तु पशुरेव सः ॥१८१॥

अविविच्य हि यः पश्येत्स एव पशुरुच्यते ।
मत्वा कर्माणि सीव्येद्यः स मनुष्यः प्रकीर्त्यते ॥१८२॥

न च सामान्यतो भेदो भवेत्पशुमनुष्ययोः ।
भोजनं रमणं हिंसा चेत्याद्या ह्युभयोः समाः ॥१८२॥

अशनायापिपासे हि समाने सर्वथा तयोः ।
कामः क्रोधस्तथा लोभो मोहश्चाप्यनयोः समाः ॥१८४॥

सामान्यं न स्वरूपेण नास्वरूपेण सङ्गतम् ।
अन्यथा चित्रगावोऽपि पयोभिर्बिभृयुर्घटान् ॥१८५॥

स्वभावेनैव सर्वेषां सामान्यं व्यपदिश्यते ।
पशुत्वेऽपि ततो गोत्वाद् गवयत्वं विभिद्यते ॥१८६॥

स्वभावः शाश्वतो धर्मः स्वरूपेऽप्यस्ति कारणम् ।
मृषा वदन्ति पितरं मनुष्यस्येह वानरम् ॥१८७॥

चराचरेषु चान्योन्यमचरेषु चरेषु च ।
भेदोऽस्तु भौतिकस्तावदिन्द्रियाद्यतिरेकजः ॥१८८॥

आध्यात्मिकः पुनर्भेदः स्वभावजनितः परम् ।
तिर्यग्भ्यश्च तरुभ्यश्च भिद्यते येन मानवः ॥१७९॥

स्वाभाविको विशेषोऽयं प्रोक्तो धर्मः सनातनः ।
यस्मिन्हेत्वन्तरैर्लुप्ते मानवः पशुरुच्यते ॥१९०॥

क्षुत्पिपासादिवेगानां प्राणिमात्रे सदृक्तया ।
तन्निरासप्रयत्नानां नास्ति मानवधर्मता ॥१९१॥

बुद्धिश्रद्धे हि पूर्वोक्ते विशिष्येते यतो नरे ।
तेन सामान्यतस्तस्मिन्निमे धर्माः समासते ॥१९२॥

धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः ।
धीर्विद्या सत्यमक्रोधो दशाप्येते दयोद्भवाः ॥१९३॥

स्वस्मिन्दया धृतिं शौचं दममिन्द्रियनिग्रहम् ।
विद्याञ्च जनयत्येषाऽन्यस्मिन् पञ्च क्षमादिकान् ॥१९४॥

दुःखत्रयविघाताय सुखत्रयफलाय च ।
इह वस्तुत्रयं बुद्ध्वा बुधः कर्मत्रयञ्चरेत् ॥१९५॥

तत्राधिभौतिकं सर्वं विज्ञानविषये स्थितम् ।
तथाधिदैविकं तत्तद् वैदिकाचारगोचरः ॥१९६॥

भूतानि देवानात्मानं चाधिकुर्वंच्च तत्त्रयम् ।
आध्यात्मिकं वदन्त्याधिदैविकं चाधिभौतिकम् ॥१९७॥

आध्यात्मिकन्तु कालेन महता शिथिलीकृतम् ।
अपि दर्शनसन्दृष्टं दर्शितं वः समन्वितम् ॥१९८॥

अत्राधिभौतिके ज्ञाने नराः सर्वेऽधिकारिणः ।
आधिदैवाध्यात्मिकयोः श्रद्धावन्तस्तु ते परम् ॥१९९॥

तत्तज्ज्ञानानुसारेण सर्वभूतहितात्मकम् ।
अहिंसासत्यसहितं कर्म धर्म इतीर्यते ॥२००॥

तत्राधिभौतिकज्ञानकृतैस्तु सुकृतैर्नरः ।
लभतेऽभ्युदयं भूयोऽनिच्छन्नप्यैहलौकिकम् ॥२०१॥

अथाधिदैविकज्ञानमर्मज्ञेन च कर्मणा ।
विन्दत्यभ्युदयं लोकः स्वभावात्पारलौकिकम् ॥२०२॥

आध्यात्मिकज्ञानजन्यैर्धर्मैरथ विवेकिनाम् ।
निःश्रेयसपदप्राप्तिरिति धर्मेण सिद्धयः ॥२०३॥

न न भूयासमिति यज्जीवात्मा नित्यमिच्छति ।
अपि दुःखशताकीर्णोऽप्यथवा वञ्चितः सुखैः ॥२०४॥

तत्र किन्तेन कर्तव्यमिति जिज्ञासते सदा ।
यस्मिन् कृते न म्रियेत जीवेदेव निरन्तरम् ॥२०५॥

विजानीयादविज्ञातं लभेतालब्धमीप्सितम् ।
इत्याद्यानभिलाषांश्च न मुञ्चति जरन्नपि ॥२०६॥

अस्तित्वस्याधिकाराय परास्तित्वं विनाशयन् ।
भानस्य लब्धये सम्यक् परानेष प्रवञ्चयन् ॥२०७॥

प्रियस्य काम्यया चायं सर्वेषां विप्रियं चरन् ।
सर्वथा मूढमात्मानं कथञ्चिन्नावबुध्यते ॥२०८॥

अन्यस्त्वहिंसयाऽस्तित्वं भानं सत्येन भावयन् ।
प्रेम्णा प्रियत्वं संसाध्य परमात्मनि लीयते ॥२००॥

## अथ भक्त्यधिकरणम् । ६॥

योऽयमाध्यात्मिको धर्मः प्रेमा प्रोक्तः सनातनः ।
स एव भगवद्रूपे प्रयुक्तो भक्तिरुच्यते ॥२२०॥

प्रकृतिश्च महांश्चैवाहञ्च तन्मात्रपञ्चकम् ।
इत्येवं याऽपरानाम्ना भिन्ना प्रकृतिरष्टधा ॥२११॥

अधितिष्ठन्ति तत्रैषां प्रत्येकमधिदेवताः ।
ताः प्राप्ता भगवद्रूपतयाऽत्र भजनीयताम् ॥२१२॥

परस्याः प्रकृतेश्चापि जीवाख्यायाः स चिन्मयः ।
अधिष्ठातृतया साक्षाद् भजनीयतया स्थितः ॥२१३॥

यद्यद्विभूतिमत्सत्वं श्रीमदूर्जितमेव वा ।
तत्तदप्यत्र भगवद्रूपमित्येव मन्यते ॥२१४॥

ख्यातानामवताराणां मत्स्यादीनामुपास्यताम् ।
प्रतिपद्याश्रयन्ते तान् भजनीयतया जनाः ॥२१५॥

इदमत्राभिसन्धेयं जीवा रूपे च नामनि ।
व्यवहारान् प्रकुर्वाणास्तथाशीला भवन्ति ते ॥२१६॥

रूपं वा नाम वालम्ब्यालम्ब्य वा रूपनामनी ।
ते भजन्ति प्रियं देवं तमरूपमनामकम् ॥२१७॥

तत्र रूपाश्रयानाहुः सगुणोपासकान् बुधाः ।
नामाश्रयांस्तु निपुणा निर्गुणोपासकाञ्जगुः ॥२१८॥

सगुणे निर्गुणत्वस्य सगुणत्वस्य निर्गुणे ।
असम्भवमवेत्यान्ये तान् मन्यन्ते विरोधिनः ॥२१९॥

वस्तुतस्तु यथारूपं सगुणस्यैव सम्भवेत् ।
नामापि सगुणस्यैव निर्गुणस्य न कर्हिचित् ॥२२०॥

ओमित्येकाक्षरं ब्रह्म व्याहरन्तोऽपि पण्डिताः ।
अवतीत्योमिति प्राहुर्विग्रहं तत्र नामनि ॥२२१॥

अवनं स गुणस्तस्यानुबध्नाति दयागुणम् ।
दया च शनकैस्तत्र मृदुतामनुरुध्यते ॥२२२॥

रामेत्यादीनि नामानि व्युत्पत्तीनामनेकताम् ।
पुरस्कृत्यात्र भगवद्गुणानां बहुतां जगुः ॥२२३॥

आख्यातजञ्च यत्प्रोक्तं सर्वं नाम मनीषिभिः ।
तत्राख्यातं वदेत्पूर्वापरीभूताङ्गिकां क्रियाम् ॥२२४॥

इति नामाश्रया भक्ता अपि तस्य गुणान् क्रियाः ।
श्रद्दधाना भजन्ते तं नतु निर्गुणनिष्क्रियम् ॥२२५॥

अस्ति भाति प्रियञ्चेति तत्स्वरूपं यदुच्यते ।
सत्यं ज्ञानमनन्तं वा ब्रह्मरूपं यदिष्यते ॥२२६॥

सच्चिदानन्दलक्ष्मा स इति यत्परिचीयते ।
'घटे घटे स रमत' इति यत्परिभाष्यते ॥२२७॥

तदेव रूपं ध्यायन्तः स्मरन्तस्तस्य तान् गुणान् ।
चिन्तयन्तः क्रियास्तस्य जपन्तो नाम ते स्थिताः ॥२२८॥

नाम रूपञ्च लीला च धाम चेति चतुष्टयम् ।
यथा रूपाश्रया भक्ताः प्रतीकमिति संश्रिताः ॥२२९॥
तथा नामाश्रया एते महान्तोऽपि चतुष्टयम् ।
प्रतीकमिति संश्रित्य भजन्ते निष्प्रतीककम् ॥२३०॥
अयमर्थोऽस्य सर्वस्य ग्रन्थस्य स्पष्टतां गतः ।
न प्रतीकं विना जीवा भगवन्तमुपासते ॥२३१॥
समानेऽपि प्रतीकानामाश्रये विवदन्ति ते ।
इत्येव महदाश्चर्यं मुखरीकुरुते मुहुः ॥२३२॥
सम्प्रदाया भवेयुस्ते कर्मज्ञानभिदा कृता ।
प्रेमिणान्तु कथन्ते स्युर्मुदा मत्तान्तरात्मनाम् ॥२३३॥
वसन्ति हि प्रेम्णि गुणा न वस्तुष्विति जानताम् ।
अन्योन्यवस्तुनिन्दायां प्रवर्तेत कथं मनः ॥२३४॥
अम्बेत्येके स्वजननीम्, अक्केत्यन्येऽभ्यधुश्च ताम् ।
अल्लेति चापरे प्रोचुर्वस्तुभेदो न कश्चन ॥२३५॥
यश्च विद्वद्भिरुक्तोऽयं 'गुडो गोलेक्षुसारयोः' ।
ततः सम्पद्यते 'गौडो' ब्रह्मगोलाश्रयः प्रभुः ॥२३६॥
इति भाषाभिदा वस्तुभेदो नैवोपजायते ।
न वा गुणक्रियाभेदो जायमानो विरुध्यते ॥२३७॥
सकलानां स कल्याणगुणानां निलयो मतः ।
तस्य क्रिया न गण्यन्ते धराधूलिकणा इव ॥२३८॥
अयन्तु सहजो भेदः साधकेषु प्रतीयते ।
द्रुतचित्ता भवन्त्येके चान्ये त्वद्रुतचेतसः ॥२३९॥
सत्यं ज्ञानमनन्तं ते श्रयन्त्यद्रुतचेतसः ।
ये तिष्ठन्ति जगद्रङ्गे काष्ठकुड्याश्मसन्निभाः ॥२४०॥
प्राणित्यनिति यं लब्धुमात्मा नन्दति यं श्रितः ।
तमेव रसमेकान्तं श्रयन्ति द्रुतचेतसः ॥२४१॥
पूर्वे नामाश्रयेणैव यान्ति देवमनामकम् ।
अपरे तु तदीयेन रूपेणैव रसार्थिनः ॥२४२॥

तस्य माहात्म्यमालक्ष्य स्वस्य चालक्ष्य लाघवम् ।
एके भीता इव प्रीतेः शान्तं रसमुपासते ॥२४३॥

अन्ये तु सन्निधिं तस्य कामयानाः शनैःशनैः ।
नीतियुक्ता इव प्रीतेर्दास्यं रसमुपासते ॥२४४॥

परे भीतिश्च नीतिश्चापुरस्कृत्य स्वभावतः ।
रीतिमालम्ब्य तत्प्रीतेः सख्यं रसमुपासते ॥२४५॥

अपरे च सुखे दुःखे न काङ्क्षन्ते सहायताम् ।
तत्सुखे सुखिनः प्रीतेर्वात्सल्यरसलिप्सवः ॥२४६॥

एके तत्रापि वार्धक्ये सेवासौख्याभिलाषिताम् ।
सूक्ष्मां वीक्ष्येह गोपीनां माधुर्यं भुञ्जते रसम् ॥२४७॥

अन्ये गोपीषु राधायाः सुखेष्वीर्ष्यामिवेक्ष्य ताम् ।
श्रीराधापदकैङ्कर्यात् स्वदन्ते रसमुज्ज्वलम् ॥२४८॥

इत्थमेषा रसोपास्तिस्तावदेषां प्रवर्तते ।
यावदत्रैव लीनास्ते न यान्ति तदधीनताम् ॥२४९॥

भक्ते रसत्वं तु मया 'रसकल्पतरौ' स्वके ।
प्रत्याख्यातं तत्तु तत्र वेदनीयं विदां वरैः ॥२५०॥

एवमेवापरे धामोपासकाः स्वस्वधामनि ।
अधिष्ठितानि युग्मानि भजन्ते स्वस्वसंविदा ॥२५१॥

रस एवैषु रूपे द्वे समाश्रित्य स्वयं क्वचित् ।
राधामाधवतां प्राप्य प्रयाति स्वादनीयताम् ॥२५२॥

कृष्णे प्रेमा क्वचित्स्वाद्यः श्रीराधायां स च क्वचित् ।
एकेषान्तु स्वयं प्रेमा राधाकृष्णतया स्थितः ॥२५३॥

एष सन्दर्शितः पन्था उपास्तेर्द्रुतचेतसाम् ।
अथ प्रस्तूयते रीतिर्भक्तेरद्रुतचेतसाम् ॥२५४॥

पातञ्जले योगशास्त्रे योगाङ्गानां विवेचने ।
बहूनां योगरीतीनां सूचनानि लभामहे ॥२५५॥

पलालधूननन्यायात्तत्रापि द्रुतचेतसाम् ।
शक्यते भक्तिमर्यादा काचिद् दर्शयितुं बुधैः ॥२५६॥

मुख्यतस्तु तदुक्तानां योगाङ्गानां क्रमः क्रमात् ।
सत्यं ज्ञानमनन्तं तत् तत्त्वमेवावगाहते ॥२५७॥

अहिंसा सत्यमस्तेयं ब्रह्मचर्यापरिग्रहौ ।
यमास्तदुक्ताः साध्यन्ते यदि कैश्चिद्युयुक्षुभिः ॥२५८॥

तपः शौचञ्च सन्तोषः स्वाध्यायेश्वरचिन्तने ।
नियमाश्चापि पाल्यन्ते यदि कैश्चन साधकैः ॥२५९॥

तदैव तैः सुसाध्यः स्यात्सासनः प्राणसंयमः ।
तेन प्रत्याहृतिः सर्वेन्द्रियाणां सुकरा भवेत् ॥२६०॥

अथास्य देशबन्धः स्याच्चित्तस्य धारणात्मकः ।
ततश्च ध्यानसंसिद्धौ समाधिरभिराध्यते ॥२६१॥

संप्रज्ञातस्य भेदाश्च समाधेः क्रमसाधिताः ।
असंप्रज्ञातसिद्धिन्तामुपकुर्वन्ति सर्वदा ॥२६२॥

सोऽयमध्वा पुरा क्षुण्णोऽस्माकं पितृपितामहैः ।
अद्याज्ञानतृणाच्छन्नः सर्वथा न प्रकाशते ॥२६३॥

अन्येऽपि बहवो योगाः श्रूयन्ते तत्र तत्र ये ।
तेऽद्य प्रायोगिकाभावाल्लुप्ता इव धरातले ॥२६४॥

गीतासु चर्चितोऽप्येष योगाध्वा सद्भिरर्चितः ।
अपि नाद्य यथापूर्वमार्यैरपि विचार्यते ॥२६५॥

एतदुद्धारयत्नानां महत्त्वं जानते बुधाः ।
इति सम्भाव्यते कश्चिद्यत्नवान् स्यात्कदाचन ॥२६६॥

श्रवणे कीर्तने लग्नैरर्चने पादसेवने ।
वन्दने नमने दास्ये सख्य आत्मनिवेदने ॥२६७॥

साधनात्मिकया भक्त्या भक्तिं साध्यात्मिकां गतैः ।
तया प्रेमाख्यया प्रेयान् श्रेयानिष्टः स राध्यताम् ॥२६८॥

मायाम्बुधिं समुत्तीर्य तीर्त्वा ब्रह्माम्बुधिं परम् ।
स्वादं स्वादं तरेद् धीरो भगवद्भावनाम्बुधिम् ॥२६९॥

प्रेमाम्बुनिधिमध्यस्थे दिव्यद्वीपे नवन्नवम् ।
वृन्दावनेऽस्मिन् स प्रेम्णा विन्देद्युगलमुज्ज्वलम् ॥२७०॥

# को वेदाधिकारी ?

कोऽत्र वेदाधिकारीति विषये प्रस्तुते बुधाः ।
वेदः पूर्वं चिन्तनीयोऽधिकारी तदनन्तरम् ॥१॥

न लक्षणप्रमाणाभ्यां विना सिद्धिर्हि वस्तुनः ।
इत्युच्यते लक्षणं प्राक् प्रमाणं तदनन्तरम् ॥२॥

**वेदलक्षणम्—**

तत्र वेदः शब्दराशिर्यो मन्त्रब्राह्मणात्मकः ।
ऋचो यजूंषि सामानि तत्र मन्त्रास्त्रिधा स्मृताः ॥३॥

विध्यर्थवादमुख्यैश्च भेदैस्ते ब्राह्मणा अपि ।
षोढा तेषु प्रधानत्वाद् विधयोऽङ्गितया मताः ॥४॥

अज्ञातज्ञापका वा स्युरप्रवृत्तप्रवर्तकाः ।
इति वेदविदां वर्यैरुक्तास्ते विधयो द्विधा ॥५॥

ज्ञानार्थकाद् विदेर्वेदो व्युत्पत्त्या ज्ञानवाचकः ।
प्रवृत्त्या तु स मन्त्राणां ब्राह्मणानाञ्च बोधकः ॥६॥

व्युत्पत्तेरन्यदेवेह निमित्तं भवति ध्रुवम् ।
अन्यदेव प्रवृत्तेश्च शेते गौरिति दर्शनात् ॥७॥

ज्ञाने व्युपत्तिलभ्येऽपि वेदो वक्ति न तत्परम् ।
तथा सत्यस्मदादीनां ज्ञानानां वेदता भवेत् ॥८॥

अतिव्याप्त्या तथाऽव्याप्त्याऽसम्भवेन च वर्जितम् ।
इह मन्त्रब्राह्मणात्मा शब्दौघो वेदलक्षणम् ॥९॥

**वेदास्तित्वे प्रमाणम्—**

वेदास्तित्वे मानचिन्ता ततः कैश्चित्प्रवर्तिता ।
स्वतः प्रामाण्यतः सार्कदृष्टान्तेन निवारिता ॥१०॥

अर्कोऽस्तीति नवेत्यत्र प्रमाणं स स्वयं यथा ।
वेदोऽस्तीति नवेत्यत्र प्रमाणं स स्वयं तथा ॥११॥

वेदस्यापौरुषेयत्वात् प्रत्यक्षस्य प्रमाणता ।
तत्र नो युज्यते, नापि तन्मूलानुमितेरपि ॥१२॥

तत्समानेतरज्ञानाभावाद् उपमितेरपि ।
तदनन्तरभावित्वाद् ऐतिह्यादेरपि स्फुटम् ॥१३॥

न कश्चिदात्मनः स्कन्धं क्वचिदप्यधिरोहति ।
इति वेदः कथं स्वस्य सत्त्वे प्रामाण्यमर्हति ॥१४॥

इत्यादीनां कुतर्काणां विनिवृत्त्यै बुधैरयम् ।
आहृतः सूर्यदृष्टान्तः स्वपरैकप्रकाशनात् ॥१५॥

अस्तु, स्वतः प्रमाणत्वमिदं वेदास्तितां वदेत् ।
अर्कस्येवास्य विज्ञानं त्विह शास्त्राण्यपेक्षते ॥१६॥

**वेदविज्ञानसाधनम्—**

शिक्षा कल्पो व्याकरणं निरुक्तं ज्योतिषन्तथा ।
छन्दश्चेति षडङ्गानि वेदविज्ञानसाधनम् ॥१७॥

वेदास्तित्वे यथा वेदः स्वतः प्रामाण्यमृच्छति ।
विज्ञानेऽपि तथा चेत्स्यादङ्गोच्छेदस्तदा भवेत् ॥१८॥

यथा च वेदविज्ञाने षडङ्गान्युपकुर्वते ।
तथा वेदाधिकारेऽदः स्मृतितन्त्रमपेक्षते ॥१९॥

स्वं पूर्वं विद्यमानं सत् स्वामित्वमभिकाङ्क्षति ।
अविद्यमाने स्वे जातु स्वामित्वं न विचिन्त्यते ॥२०॥

तथा वेदे विद्यमानेऽधिकारोऽयं विचार्यते ।
वेदानन्तरभावित्वात् स वेदे नोपलभ्यते ॥२१॥

वेदे नैवास्ति निर्देशोऽनधिकार्यधिकारिणोः ।
स्मृतितन्त्रे त्वसौ सद्भिः साङ्गोपाङ्गः समीक्ष्यते ॥२२॥

**वेदाधिकारविचारः—**

ज्ञानेऽधिक्रियते बुद्धिः सा च मस्तिष्कवर्तिनी ।
इति मस्तिष्कसामान्यान्नरमात्रेऽधिकारिता ॥२३॥

इत्येष तर्को यत्कैश्चिद् विपश्चिद्भिरुदाहृतः ।
स न क्षोदक्षमो नूनमविचारमनोरमः ।।२४।।

तुल्येऽपि क्षुन्निवृत्त्यर्थे भक्ष्याभक्ष्ये विनिर्दिशन् ।
तुल्ये च खेदापगमे गम्यागम्ये निरूपयत् ।।२५।।

शास्त्रं वृथा भवेदेवंविधे तर्के प्रतिष्ठिते ।
इति तर्कोऽप्रतिष्ठोऽयं शास्त्रप्रामाण्यमिच्छताम् ।।२६।।

किञ्च मस्तिष्कसामान्ये सत्यपीह विलोक्यते ।
वेदवाग् भेदभाक् तत्र नरोत्पत्तिनिरूपणे ।।२७।।

ब्राह्मणोऽस्य मुखादासीद् बाहुभ्यां क्षत्रियोऽभवत् ।
ऊरुभ्यामभवद् वैश्यः शूद्रः पद्भ्यामजायत ।।२८।।

मुखेनोच्चार्यते वेदो हस्ताभ्यां गृह्यतेऽपि च ।
ऊर्वोरुपरि विन्यस्तो भवत्येष न पादयोः ।।२९।।

यत्तु कैश्चिदयं मन्त्रः समाजेश्वरवर्णनः ।
तदङ्गानि प्रकल्प्यैवं वक्तीत्युक्तं विदांवरैः ।।३०।।

तेऽपि मन्यन्त एवैनच्चातुर्वर्ण्यविभाजनम् ।
समाजस्य हितायैव पुरुषेण प्रकल्पितम् ।।३१।।

अयमत्राभिसन्धिः स्यात् समाजो मण्डपायते ।
स्तम्भायन्तेऽस्य वर्णाश्च रज्जूयन्ते तथाश्रमाः ।।३२।।

स्तम्भानां दिग्विनियता वर्णानां च क्रियोचिता ।
तत्तत्क्रियापेक्षिता च योग्यता तेषु काङ्क्षिता ।।३३।।

समाजस्येह शिक्षाया ब्राह्मणेन धृतो भरः ।
क्षत्रियेण च रक्षाया वैश्येन भरणस्य च ।।३४।।

अथ शूद्रेण सर्वेषां बाह्यावश्यकताभरः ।
धृतो येन समाजस्य सर्वं कार्यं निरुह्यताम् ।।३५।।

तत्रान्तरावश्यकता ज्ञानं तत्तदपेक्ष्यते ।
बाह्यावश्यकता चात्र विज्ञानमिति निश्चितम् ।।३६।।

ज्ञानविज्ञानयोरन्तर्बहिरावश्यकत्वयोः ।
उभयोरप्यधिकृता बुद्धिर्मस्तिष्कवर्तिनी ।।३७।।

तत्राधिदैवाध्यात्मानां ज्ञाने याधिकृता भवेत् ।
सा सूक्ष्मविषया भूत्वा तत्रैव रमतां मुहुः ।।३८।।

या चाधिभूतविज्ञानेऽधिक्रियेत स्थवीयसि ।
सा स्थूलविषया भूत्वा तत्रैव रमतां सदा ।।३९।।

इति हेतोर्मनुमुखैः स्मृतिकारैर्विभज्यते ।
यथापेक्षं तु विषयो बुद्ध्योः स स्थूलसूक्ष्मयोः ।।४०।।

अद्यापि शिक्षाशास्त्रीयैर्मनोविज्ञानकोविदैः ।
विश्वविद्यालये भागौ कलाविज्ञानयोः कृतौ ।।४१।।

ब्राह्मणक्षत्रियविशां ज्ञाने स्यादधिकारिता ।
शूद्रस्य च स्याद् विज्ञाने समाजावश्यकत्वतः ।।४२।।

**जन्मतो वर्णव्यवस्था कर्मतो वा—**

नन्वयं वर्णभेदोऽस्तु कर्मणा न तु जन्मना ।
येनावश्यकता सा सा यथायोग्यं विभज्यताम् ।।४३।।

शिक्षका ब्राह्मणाः सन्तु रक्षकाः क्षत्रियास्तथा ।
वणिजः सन्त्विमे वैश्याः शूद्राः सन्तु च सेवकाः ।।४४।।

इति वाच्यं न, संस्कारबलाबलविशारदैः ।
मातापित्रो रजोवीर्यगतशक्तेः समीक्षकैः ।।४५।।

संस्कारा यादृशा यत्र पारम्पर्यक्रमागताः ।
सामर्थ्यं तादृशं तत्र भूयिष्ठं स्यात् स्वभावतः ।।४६।।

जामदग्न्ये चरोर्दोषात् क्षात्रं तेजः प्रकाशते ।
विश्वामित्रे गुणात्तस्य ब्राह्मं तेजः प्रतिष्ठितम् ।।४७।।

"आगमोऽर्थः प्रजा देशः कालः सङ्गः कुलन्तथा ।
ध्यानं मन्त्रोऽथ संस्कारो दशैते गुणहेतवः ।।४८।।

इति भागवते प्रोक्ताः स्वभावस्य विपर्यये ।
हेतवस्तेन बन्धूनामपि भेदो भवेन्मिथः ।।४९।।

हिरण्यकशिपोः कश्चित्प्रह्लादश्चेत्प्रजायते ।
तत्र हेतुर्नारदस्य सत्सङ्ग इव दृश्यते ।।५०।।

अपवादा भवन्त्येव सामान्यं तु विधीयते ।
जन्मना वर्णभेदोऽयं मन्तव्यः श्रुतिसम्मतेः ।।५१।।

"आ ब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी जायतामिति ।"
मन्त्रे "शूर इषव्योऽतिव्याधी राजन्य" इष्यते ।।५२।।

अप्राप्तं प्रार्थ्यते लोके न प्राप्तं प्रार्थ्यते क्वचित् ।
जन्मना ब्राह्मणे ब्रह्मवर्चस्वित्वमिहार्थ्यते ।।५३।।

तेन वर्णव्यवस्थेयं वेदानां जन्मतो मता ।
तथाश्रमव्यवस्था सा निर्वर्त्या कर्मतो बुधैः ।।५४।।

**त्रैवर्णिकस्य वेदाधिकारः—**

स्मृतितन्त्रेऽपि वेदार्थानुसारिणि तथैव सा ।
अत एवाष्टवर्षस्य ब्राह्मणस्योपनायनम् ।।५५।।

तथैकादशवर्षस्य क्षत्रियस्य तदुच्यते ।
एवं द्वादशवर्षस्य वैश्यस्यैतद् विधीयते ।।५६।।

वेदाध्यापनतः पूर्वं नियतञ्चोपनायनम् ।
तच्च त्रैवर्णिकस्यैव यथाकालं निरूप्यते ।।५७।।

इति शूद्रो न वेदेऽस्मिन्नधिकारीति मन्महे ।
निष्प्रयोजनताहेतोस्तथाऽशक्यत्वहेतुतः ।।५८।।

**शूद्रस्य वेदाध्ययने निष्प्रयोजनत्वाशक्यत्वे—**

इष्टसाधनता यत्र यत्र चैवास्ति शक्यता ।
तदेव कार्यं कर्तव्यमिति बुद्धिमतां मतम् ।।५९।।

स्थापत्यं शिक्षमाणस्य रथकारत्वमेव वा ।
वायकत्वं तथा कुम्भकारत्वमधिगच्छतः ।।६०।।

तत्तच्छिल्पं कलयतो वेदो नास्तीष्टसाधनः ।
न चाध्येतुं स शक्योऽस्ति कालस्यान्यत्र सद्व्ययात् ।।६१।।

यस्तु सामाजिकीं तान्तामपेक्षां नानुपश्यति ।
उपेक्षते च विज्ञानं राष्ट्रसर्वर्द्धिकारणम् ।।६२।।

ज्ञानापेक्षी च भूत्वा यो वेदानधिजिगांसते ।
राष्ट्रविद्रोहिणस्तस्य कार्या क्रूरानुशासना ।।६३।।

इति तैस्तैर्जगत्क्षेमचिन्तासन्दानितान्तरैः ।
मन्वादिभिः स्ववाक्येषु दण्डोऽप्यस्य निरूपितः ।।६४।।

यथा च शूद्रो वेदानां स्वाध्यायेऽधिकृतो न सः ।
तथा त्रैवर्णिकोऽन्यत्र स्वाध्याये वेदवर्जिते ।।६५।।

**त्रैवर्णिकस्यापि वेदानध्ययने प्रत्यवायः—**

"योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम् ।
स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः" ।।६६।।

**शूद्रस्य वेदाध्ययने भूयान् प्रयासः—फले चाविशेषः—**

अस्यायमर्थ आभाति द्विजो वेदमधीत्य सः ।
अन्यत्र नाम विज्ञानेऽपि श्रमं कर्तुमर्हति ।।६७।।

तथा विज्ञानमार्गेषु गतो यः सार्थवाहताम् ।
स शूद्रोऽध्येतु तं वेदं, तद्विज्ञानं द्विजो यथा ।।६८।।

सा सूक्ष्मविषया बुद्धिर्द्विजस्यात्राधिभौतिके ।
यथा चरति विज्ञाने रथकारादिसंस्तुते ।।६९।।

तथास्य स्थूलविषया बुद्धिः शूद्रस्य वैदिके ।
अधिदैवे तथाध्यात्मे चरतु द्विजसंस्तुते ।।७०।।

न दोषः, किन्तु वेदोक्ते ते अध्यात्माधिदैवते ।
इतिहासपुराणाभ्यामप्येष ज्ञातुमर्हति ।।७१।।

तदा किमिति वर्षीयान् स बालैः सुकरे परम् ।
वेदाक्षराणां ग्रहणे यत्नं कुर्वीत निष्फलम् ।।७२।।

**वेदाक्षरग्रहणे कीदृशोऽयं यत्नः ?**

ज्ञानार्थत्वेऽपि वेदस्य नार्थप्राधान्यमिष्यते ।
आनुपूर्वीनियमनाच्छब्दप्राधान्यमस्य यत् ॥७३॥
शब्दप्रधानो वेदोऽयं स्वरवर्णप्रयोगतः ।
सर्वथा शुद्धपाठेन यथेष्टफलदायकः ॥७४॥
अन्यथा तु स वाग्वज्रो हिनस्ति दुरुपासकम् ।
यथेन्द्रशत्रुर्वर्धस्वेति स्वरस्य प्रमादतः ॥७५॥
इत्थं वेदेऽवधानेनाध्येतव्ये यत्नवानपि ।
साङ्गोपाङ्गश्रुतेरद्धा विज्ञोऽप्यत्रापराध्यति ॥७६॥
तदा महान् भरो यस्मिन् शिल्पशिक्षान्वितः स्थितः ।
स कथं वेदविद्याया भारमेनं वहेज्जनः ॥७७॥
शब्दप्रधाने वेदे स्यादक्षरग्रहणं परम् ।
अक्षरग्रहणे भूयान् समयः स्यादपेक्षितः ॥७८॥
तत्रैव कालं भूयांसं शूद्रोऽसौ व्यतियापयन् ।
कदा नवनवान् राष्ट्रे शिल्पानाविष्करिष्यति ॥७९॥
नित्यं हि वेदाध्ययनं काम्यं नैमित्तिकं न तत् ।
अतो निष्कारणो धर्मो ब्राह्मणानां स उच्यते ॥८०॥

**वेदाध्ययनस्य दुष्करत्वम्—**

अद्यत्वे च यदा विप्रा अपि वेदाधिकारिणः ।
क्वचिन्नाधीयते वेदं नितरां वृत्तिकर्शिताः ॥८१॥
मृदङ्गान्वादयन्तस्ते वायुवाद्यानि वा मुहुः ।
मञ्चानारुह्य गायन्तोऽनुकुर्वन्ति नटान् विटान् ॥८२॥
तदा निष्कारणो धर्मः कथं शूद्रेषु रोप्यते ।
षडङ्गो वेदोऽध्येयोऽयं ज्ञेयश्चेति द्विजन्मनाम् ॥८३॥
ननु घोरोऽयमन्यायः समाजेन समाश्रितः ।
यदीश्वरीयज्ञानेन शूद्रस्तेनास्ति वञ्चितः ॥८४॥
इति चेदुच्यते नायमन्यायः सुविधा हि सा ।
अक्षरग्रहणान्मुक्ताः शूद्रा न त्वर्थसंग्रहात् ॥८५॥

**वेदाध्ययनमन्तरापि पुराणेतिहासाभ्यां तत्प्रयोजनसिद्धिः—**

स चार्थसंग्रहस्तेभ्योऽस्ति पुराणेतिहासयोः ।
ययोः श्रवणमात्रेण श्रोतॄणां स्यात्कृतार्थता ।।८६।।

वैदिकं लौकिकञ्चेति द्विधाऽऽसोत्संस्कृतं पुरा ।
विदुर्द्विजा वैदिकं तल्लौकिकञ्चाखिला जनाः ।।८७।।

"अहं ह्यतितनुश्चैव वानरश्च विशेषतः ।
यदि वाचं प्रदास्यामि द्विजातिरिव संस्कृताम् ।।८८।।

रावणं मन्यमाना मां सीता भीता भविष्यति ।
इति वाचं प्रदास्यामि लौकिकीमिह संस्कृताम् ।।८९।।"

इत्यादिकाव्ये भगवान् वाल्मीकिरनुगीतवान् ।
अस्त्याञ्जनेयवचनं प्रमाणं तद्-द्वये स्थिरम् ।।९०।।

तत्र शूद्रस्य सुगमं पुराणादिनिरूपितम् ।
स हि तज्ज्ञातुमर्हः स्याल्लौकिकं संस्कृतं विदन् ।।९१।।

पूरयन्तीह वेदार्थं पुराणैस्तैः कथानकैः ।
पुराणानां पुराणत्वमेतदुक्तं मनीषिभिः ।।९२।।

इतीति कथितं वस्तु हेति प्रचितनिश्चितम् ।
आसेत्यभूदियं प्रोक्तेतिहासस्येतिहासता ।।९३।।

तेन प्रमाणभूताभ्यां ताभ्यां यत्किञ्चनोच्यते ।
तच्छ्रद्धाराद्धगुरुभिः सम्यगेवावबुध्यते ।।९४।।

"इतिहासपुराणाभ्यां वेदार्थमुपबृंहयेत् ।
बिभेत्यल्पश्रुताद् वेदो मामयं प्रहरिष्यति ।।९५।।"

इत्येतद् वचनं वेदाध्यायिनामपि तद्-द्वये ।
प्रयत्नमाह तेनात्र न किञ्चित्परिहीयते ।।९६।।

इत्थं वेदार्थविज्ञानसाधनत्वेन सम्मते ।
इतिहासे पुराणे च शूद्रोऽप्यधिकृतो बुधैः ।।९७।।

"स्त्रीशूद्रद्विजबन्धूनां श्रुतिर्न श्रुतिगोचरा ।
कर्मश्रेयसि मूढानां श्रेय एवं भवेदिह ।।९८।।

इति भारतमाख्यानं कृपया मुनिना कृतम्।''
''यदिहास्ति तदन्यत्र यन्नेहास्ति न कुत्रचित् ।।९९।।''

इति यज्ज्ञानविज्ञानपूरितं सुगमं परम् ।
तदाश्रित्य परं श्रेयः शूद्रः साधयतु द्रुतम् ।।१००।।

निम्बादिसाध्यरोगस्य सितशर्करया शमे ।
प्रवृत्तिः शर्करायां स्यात्तद्वच्छूद्रस्य भारते ।।१०१।।

द्विजैस्तु वेदस्वाध्यायो नित्यत्वान्नैव हीयताम् ।
तेषाञ्च प्रखरः पन्था न शूद्रेणानुगम्यताम् ।।१०२।।

अक्षरग्रहणे दत्त्वाऽपि कालं स कथञ्चन ।
यावन्न वेद वेदार्थं तावद्भारवहः परम् ।।१०३।।

स्थाणुर्भारहरो नूनं स द्विजोऽपि निरूपितः ।
अधीत्य वेदं वेदार्थं न विजानाति यः पुमान् ।।१०४।।

अर्थज्ञ एव सकलं भद्रमत्राश्नुते यतः ।
अज्ञं निन्दति शुष्कैधोऽनग्निन्यायेन च श्रुतिः ।।१०५।।

किञ्च सा नाधिभूतार्थमात्रज्ञानेन तुष्यति ।
अपुष्पामफलां वाचं शुश्रुवांसं विगायति ।।१०६।।

अधिदेवं तथाध्यात्मं वाचः पुष्पफले मते ।
तेऽपि सम्यक्तया ज्ञेये वेदाध्ययनतत्परैः ।।१०७।।

नैतावतैव विश्रान्तिमितिकर्तव्यता गता ।
वेदे ह्यधीतिषु भरो वेदाङ्गानामपि स्थितः ।।१०८।।

स्वरवर्णादिविज्ञानं विना वाग्वज्रता श्रुतेः ।
इति शिक्षाधिगम्या स्यादधीयानेन तां श्रुतिम् ।।१०९।।

किञ्च वेदोक्तमन्त्राणां विनियोगं विनिर्दिशन् ।
कल्पोऽप्यवश्यमध्येयोऽन्यथा सर्वं निरर्थकम् ।।११०।।

आम्नायस्य क्रियार्थत्वादक्रियाः स्युरनर्थकाः ।
क्रिया च वाजपेयादिराजसूयादिरीरिता ।।१११।।

ब्राह्मण-क्षत्रियविशां श्रुता तत्राधिकारिता ।
अतोऽपि वेदाध्ययनं शूद्राणां निष्प्रयोजनम् ॥११२॥

रक्षोहागमलघ्वर्थासन्देहार्थमथ श्रुतेः ।
कृत्स्नं व्याकरणं तेन पठनीयं गुरोर्मुखात् ॥११३॥

अग्न्यादिदेवपत्न्यन्ताः शब्दा ये वैदिका मताः ।
विना निर्वचनं तेषामर्थज्ञानं न सम्भवेत् ॥११४॥

ततो निरुक्ताध्ययनमनिवार्यतया स्थितम् ।
नैतावतैव लभते वेदाध्यायी स विश्रमम् ॥ ११५॥

ऋषिच्छन्दोदेवतादिज्ञानं नित्यमपेक्षितम् ।
अतश्छन्दोऽपि विज्ञेयं नानालक्षणलक्षितम् ॥११६॥

क्रियाणां कालापेक्षित्वात् कालं कलयतां सदा ।
ग्रहाणां गणितं नाम ज्यौतिषं त्यज्यते कथम् ॥११७॥

इत्थं यथा शिखासूत्रधारिणः स्यच्छ तेर्भरः ।
तथा श्रुतिमधीयानस्याङ्गानां दुर्भरो भरः ॥११८॥

"कन्थां वहसि रे मूढ गर्दभैरपि दुर्वहाम् ।
शिखायज्ञोपवीताभ्यां कस्ते भारो भविष्यति ? ॥११९॥

कन्थां वहामि रे मूढ तव पित्रापि दुर्वहाम् ।
शिखायज्ञोपवीताभ्यां श्रुतेर्भारो भविष्यति॥११०॥"

इत्यादि संव्यवदतां श्रीमन्मण्डनशङ्करौ ।
श्रुतेर्भरं ख्यापयन्तौ शिखासूत्रवतां सताम् ॥१११॥

तथाद्य मा भूद् विदुषोर्वेदाध्ययनशालिनाम् ।
भारं प्रख्यापयन् वादो वेदाङ्गाद्युत्थसंविदाम् ॥१२२॥

ब्राह्मणक्षत्रियविशः शिल्पादिज्ञानवञ्चिताः ।
अपि यन्नैव दुष्यन्ति तेन तैर्नैष दुर्धरः ॥१२३॥

शूद्रस्तु शिल्पविज्ञानेनैव धर्मञ्च जीविकाम् ।
वक्ष्यतीति कथं वेदानधीयीत स तापसः ॥१२४॥

बिभेत्यल्पश्रुताद् वेदो मामयं प्रहरिष्यति ।
इति नाल्पश्रुतो वेदेष्वाद्रियेत स चापलम् ।।११५।।

यो हि भीषयिता वेदं तं स भाययिता ध्रुवम् ।
भवतीह भयं भीतादिति नीतिज्ञसम्मतम् ।।१२६।।

यथेमां वाचं कल्याणीमावदानीति वेदवाक् ।
पञ्चभ्योऽपि जनेभ्यः साऽऽवदनीयेति भाषते ।।१२७।।

इत्यवाच्यं, यतो वाणी कल्याणी नात्र वेदवाक् ।
राजसूये प्रयोज्यत्वादस्य मन्त्रस्य कल्पतः ।।१२८।।

पीयतां भुज्यताञ्चेति कल्याणी वागिहोच्यते ।
पञ्चानां सा जनानां स्यात्प्रेयसी श्रेयसी यतः ।।१२९।।

दीयमानं हि मानेन भोजनं कस्य न प्रियम् ।
यज्ञशिष्टामृतभुजश्चेयुर्ब्रह्म सनातनम् ।।१३०।।

तस्मान्न भोजनं पानम् 'ईट्ड्रिङ्के' त्यादिभिः समम् ।
आसुरं भावमाहेति मन्तव्यं यज्ञवेदिभिः ।।१३१।।

स्वदेशजा एव शूद्रा नाधिकारिणो वैदेशिका अपि वा–
ननु स्वदेशजाः शूद्रा वञ्चिता वेदतो बुधैः ।
वैदेशिकास्तु वेदानां स्वाध्यायं कुर्युरेव ते ।।१३२।।

नेदं वाच्यं, यतः सर्वे शूद्रा एव विदेशजाः ।
ब्रह्मावर्तादिदेशानां वर्णनाज्ज्ञायते त्विदम् ।।१३३।।

ब्राह्मणक्षत्रियविशो वसन्तीहैव भारते ।
एतान् द्विजातयो देशान् श्रयेरन्निति वाक्यतः ।।१३४।।

अन्यांस्तु देशांस्ते शूद्रा गता अध्यासते चिरात् ।
शूद्रस्तु यस्मिन्कस्मिन्वा निवसेदिति वाक्यतः ।।१३५।।

केचित्तेषां जन्मशूद्राः कर्मशूद्रास्तथापरे ।
द्विजानां कर्मशूद्रत्वं व्रात्यादीनां किलोच्यते ।।१३६।।

अल्पेनाप्यपराधेन द्विजत्वं हीयते नृणाम् ।
निपात्यते शिला शैलाद्यथा स्वल्पप्रयासतः ।।१३७।।

उत्कृष्टवर्णप्राप्तिस्तु महायत्नमपेक्षते ।
आरोप्यते शिला शैले यत्नेन महता यथा ।।१३८।।

विश्वामित्रादयस्तत्र दृष्टान्ताः साधयन्ति यत् ।
अत्युत्कटैः सत्प्रयत्नैर्ब्राह्मीयं क्रियते तनुः ।।१३९।।

"त्रिभिर्वर्षैस्त्रिभिर्मासैस्त्रिभिः पक्षैस्त्रिभिर्दिनैः ।
अत्युत्कटैः पापपुण्यैरिहैव फलमश्नुते ।।१४०।।'

विहीनद्विजभावानां कर्मशूद्रत्वमीयुषाम् ।
तथा च जन्मशूद्राणां वृत्तिकर्शितचेतसाम् ।।१४१।।

आर्यावर्ताद् विदेशेषु गमनं मनुरब्रवीत् ।
न तु मध्यैशियाभागाद् वोल्गाया वा तटादयम् ।।१४२।।

आर्याणां भारते वर्षे क्वचिदप्याख्यदागमम् ।
इति मा विश्वसीदार्यो नवीनानैतिहासिकान् ।।१४३।।

कृकलासवदेतेषां रङ्गभङ्गः क्षणे क्षणे ।
अनिश्चितत्वमैतिह्ये प्रमापयति सन्ततम् ।।१४४।।

अमर्षाद् भारतीयायाः संस्कृतेर्येऽत्र गौरवम् ।
न सहन्ते कथन्तेषां वचांसि भुवि मन्महे ।।१४५।।

अमर्षश्चैष सैन्धव्याः सभ्यतायाः समर्थने ।
असत्यया वचोयुक्त्या सुस्पष्ट इति दर्श्यते ।।१४६।।

ते वदन्ति—न ऋग्वेदे नगरं श्रूयते क्वचित् ।
तन्मोहञ्जोदरो नाम नगरं नार्यसंस्कृतेः ।।१४७।।

किन्तु ऋग्वेदगीतानि सभाशालादिकानि किम् ।
विनैव नगरं तस्थुररण्ये निर्जने क्वचित् ।।१४८।।

यच्चोक्तमार्या मूर्तीनां न मन्यन्त उपासनाम् ।
सिन्धुतीरे स्थितास्तस्मान् मूर्तयो नार्यसंस्कृतेः ।।१४९।।

इन्द्रमूर्तिप्रकरणाद्विरुद्धं वचनं त्विदम् ।
तत्रेन्द्रमूर्तेर्विक्रेता निन्द्यते न तु पूजकः ।।१५०।।

यच्चार्या वैष्णवा आसन्, शैवा आसंश्च सैन्धवाः ।
इत्यार्यसंस्कृतेर्भिन्नामाहुस्ते सिन्धुसंस्कृतिम् ।।१५१।।

तन्मिथ्याभाषितं तेषां—वेदे हि स्तूयते शिवः ।
रुद्रः पशुपतिः क्वापि मृडोऽथ गिरिशः क्वचित् ।।१५२।।

अमांसभोजिनश्चार्याः सैन्धवा मांसभोजिनः ।
इत्येतदपि मिथ्याहुर्भोजनं संस्कृतेः पृथक् ।।१५३।।

व्यवस्थितं देशकालभेदाद् भवति भोजनम् ।
न विरुद्धं ततः सिन्धौ मत्स्यकोलास्थिदर्शनम् ।।१५४।।

यच्चाहुरार्यसाहित्ये पठ्येते खड्गवर्मणी ।
न गदा न शिरस्त्राणं, यन्मोहन्जोदरे स्थितम् ।।१५५।।

तन्न, वेदेषु मा भूत्सा गदा, किन्तु पुरातने ।
साहित्ये तदुपालब्धेर्नैषा भेदप्रमापिका ।।१५६।।

यच्च जल्पन्ति ते—सप्त सिन्धवोऽभिहिताः श्रुतौ ।
वोल्गान्तिके वाल्टिकाब्धौ विद्यन्ते—तेन सिद्ध्यति ।।१५७।।

यदार्या वाल्टिकाम्भोधेः पार्श्वाद् भारतमागताः ।
तेभ्यः पूर्वं सिन्धुतीरेऽजागरीत् सिन्धुसंस्कृतिः ।।१५८।।

तन्मृषा, नामसादृश्यं कारणान्तरतो भवेत् ।
आर्यशिष्या गुरुस्मृत्यै तानि नामान्यरक्षयन् ।।१५९।।

आङ्पूर्वकाद् ऋधातोश्च निष्पन्नो गतिवाचकात् ।
आर्यशब्दोऽयमार्याणां वदत्यागमनं यतः ।।१६०।।

ततस्ते नूनमायाताः कुतश्चिदपि भारते ।
इति भाषाविदां वाचोऽप्ययुक्ता इति मन्महे ।।१६१।।

आगन्तव्याः स्युरार्यास्ते न कुतश्चित्समागताः ।
आगन्तव्यत्वमेतेषां भवेद् गुरुतया मतम् ।।१६२।।

अथवा भगवत्सार्ष्टिसामीप्यैकत्वशालिनः ।
आगन्तव्याः स्युरार्यास्त इति ते किन्न मन्वते ।।१६३।।

किञ्चागता वहिर्देशादार्या इत्यपि वादिनाम् ।
न मतैक्यं प्रपश्यामो मृषाकल्पनकारणात् ॥१६४॥

न मोहञ्जोदरो नाम क्वचिदप्यार्यवाङ्मये ।
श्रूयते तेन नगरं तदार्याणां न सिद्ध्यति ॥१६५॥

इति यत्तैरुपन्यस्तं तदसन्मन्वतां बुधाः ।
शाकद्वीपं पुराणेषु सिन्धुतीरे प्रगीयते ॥१६६॥

इत्यार्यसंस्कृतिर्नूत्ना प्राचीना सिन्धुसंस्कृतिः ।
भाविता मिश्रसंस्कृत्या प्राचीनतमया भुवि ॥१६७॥

इत्यनर्गलमेवाहू रुद्रो यः सिन्धुसंस्कृतौ ।
स नास्ति मिश्रसंस्कृत्यां तन्नेयं भाविता तया ॥१६८॥

यावच्च कालो वेदानां विद्वद्भिर्नावधार्यते ।
तावन्न कालनिर्धारो भविष्यत्यार्यसंस्कृतेः ॥१६९॥

अब्दानां द्वादशशतीं व्यतीतां मोक्षमूलरः ।
वेदोत्पत्तेर्यदाभाणीत्तिलकैस्तन्निराकृतम् ॥१७०॥

जैकोबीतिलकाभ्याञ्च वेदकालविनिर्णये ।
शताब्दाः पञ्चचत्वारिंशद् व्यतीता इतीरितम् ॥१७१॥

एतन्मताधारभूतो मन्त्रो व्याख्यायते बुधैः ।
नैकधा, तेन विमतं भवत्येतन्मतं सताम् ॥१७२॥

भूगर्भशास्त्रविज्ञानाधारेणास्त्यवधारितः ।
कालोऽविनाशचन्द्रेण शास्त्रिणा लाक्षवार्षिकः ॥१७३॥

एतत्सर्वं समालोच्य वयन्तु श्रद्धया मनौ ।
आर्याणां व्रात्यभूतानां वहिर्गमनमीमहे ॥१७४॥

शूद्राणाञ्च विदेशेषु गमनं वृत्तिलिप्सया ।
शब्दप्रमाणसिद्धं तन्मन्महे नतु कल्पनात् ॥१७५॥

तत्र शूद्रस्य वेदानां स्वाध्याये विनिवारिते ।
सर्वेषामन्यदेश्यानां विनिवृत्तिः प्रसिद्ध्यति ॥१७६॥

श्रूयन्ते ये हि ऋषयः, ऋषिपुत्रास्तथा श्रुतौ ।
तेषु नैकोऽपि शूद्रो वा शूद्रपुत्रोऽथवा श्रुतः ॥१७७॥

पुराणे चेतिहासे च वक्तृश्रोतृतया क्वचित् ।
श्रुता अपि न दोषाय तत्र तेऽधिकृता यतः ॥१७८॥

ननु वेदे ऋषित्वेन स्त्रीणामधिकारिता भवेदेव–

ननु वेदे ऋषित्वेन स्त्रीणां नामानि सन्ति यत् ।
तेन तासां भवेदेव तत्र वेदेऽधिकारिता ॥१७९॥

ऋग्वेद एव यल्लोपामुद्राऽपाला तिरश्चिका ।
विश्ववारा, यमी चैव सिकता च निवावरी ॥१८०॥

घोषा काक्षीवती, माता बन्ध्वादीनां, स्वसा मुनेः ।
दाक्षायणी चाप्यदितिः सूर्या सवितुरात्मजा ॥१८१॥

इन्द्राणी चोर्वशी ब्रह्मजाया जूहूश्च दक्षिणा ।
वागाम्भृणी भरद्वाजपुत्री रात्रिः पुलोमजा ॥१८२॥

श्रद्धा कामायनी चेन्द्रमातरो देवजामयः ।
सार्पराज्ञीप्रभृतयः श्रूयन्ते ऋषयः स्त्रियः ॥१८३॥

एवमेव यजुर्वेदे सामाथर्वणयोरपि ।
तासां नामानि पठ्यन्ते ऋषित्वेन विदांवरैः ॥१८४॥

यदा स्त्रियोऽत्र मन्त्राणां साक्षाद् द्रष्ट्र्यो भवन्ति ताः ।
तदा कथन्न वेदानां स्वाध्यायेऽधिकृता मताः ॥१८५॥

इति चेच्छ्रूयतां तत्त्वं श्रुत्वा चैवावधार्यताम् ।
स्त्रीभिर्दयावशादेषोऽधिकारो हापितः स्वयम् ॥१८६॥

गीयते हि पुराणेषु विश्वरूपवधोद्भवाम् ।
"ब्रह्महत्यामञ्जलिना जग्राह यदपीश्वरः ॥१८७॥

संवत्सरान्ते तदघं भूतानां स विशुद्धये ।
भूम्यम्बुद्रुमयोषिद्भ्यश्चतुर्धा व्यभजद्धरिः ॥१८८॥

भूमिस्तुरीयं जग्राह खातपूरवरेण वै ।
ईरिणं ब्रह्महत्याया रूपं भूमौ प्रदृश्यते ॥१८९॥

द्रव्यभूयोवरेणापस्तुरीयं जगृहुर्मलम् ।
तासु बुद्बुदफेनाभ्यां दृष्टं तद्धरति क्षिपन् ॥१९०॥

तुर्यंछेदविरोहेण वरेण जगृहुर्द्रुमाः ।
तेषां निर्यासरूपेण ब्रह्महत्या प्रदृश्यते ॥१९१॥

शश्वत्कामवरेणांहस्तुरीयं जगृहुः स्त्रियः ।
रजोरूपेण तास्वंहो मासि मासि प्रदृश्यते ॥१९२॥"

इत्थं यद्ब्रह्महत्यायास्तुरीयांशं स्त्रियोऽभजन् ।
तेन ता वेदविद्याया अधिकारं समत्यजन् ॥१९३॥

"ब्रह्महा हेमहारी च सुरापो गुरुतल्पगः ।
महापातकिनः प्रोक्तास्तत्संसर्गी च पञ्चमः ॥१९४॥"

अयमत्राभिसन्धिः स्यात् स्वाध्यायो नैत्यिकः स्मृतः ।
नैत्यिके नास्त्यनध्याय इति चास्त्यनुशासनम् ॥१९५॥

मैथुनी तु यतः सृष्टिः प्रारब्धा तत्प्रभृत्यमूः ।
मासे मासे पुष्पवत्यो भवन्त्यशुचयस्त्र्यहम् ॥१९६॥

तत्रानध्यायपातेन नैत्यिकत्वं निहन्यते ।
काम्यत्वादि च वेदानां स्वाध्यायस्य निषिध्यते ॥१९७॥

नन्वियं नार्युपब्रूते यल्लाजानावपन्तिका ।
आयुष्मानस्तु मे पतिरेधन्तां ज्ञातयो मम ॥१९८॥

इत्याद्या बहवो मन्त्राः स्त्रिया पत्या सहोदिताः ।
श्रूयन्तेऽद्यापि विधिनाऽऽदृते वैवाहिके विधौ ॥१९९॥

अतः स्त्रियो न दुष्यन्ति मन्त्रपाठेन तत्र यत् ।
नापि मन्त्रा विदुष्यन्ति, तेनासामधिकारिता ॥२००॥

इति सत्यं, परन्त्वेष मन्त्रपाठो निमित्ततः ।
स्थपतिं याजयेतेतिवत् स्थितो न तु नैत्यिकः ॥२०१॥

वैवाहिको विधिः स्त्रीणां संस्कारो वैदिकः स्मृतः ।"
इत्यादिवचनैश्चायमर्थः शास्त्रैः समर्थितः ॥२०२॥

ननूपनीता बटवो यथा वेदमधीयते ।
तथा विवाहिता नार्योऽप्यधीयीरन् सुसंस्कृताः ॥२०३॥

ता वसन्त्यो गुरुकुले कुर्युश्चाग्निपरिक्रियाम् ।
नेदं वाच्यं, विवाहार्हे काल एवाशुचित्वतः ॥२०४॥

अत एवाह भगवान् मनुः स्त्रीणां कृते पुनः ।
"पतिसेवा गुरौ वासो गृहार्थोऽग्निपरिक्रिया ॥२०५॥"

इति स्त्रीशूद्रयोरुक्ता वेदेष्वनधिकारिता ।
न स्त्रीशूद्रावधीयातामित्युक्तिर्विशदीकृता ॥२०६॥

न स्त्रीशूद्रावेव, अपितु द्विजबन्धवोऽपि वेदेऽनधिकृताः–
न च स्त्रीशूद्रयोरेवाधिकारोऽयं निवार्यते ।
अन्येषां द्विजबन्धूनामपि स प्रतिषिध्यते ॥२०७॥

"आषोडशाद् ब्राह्मणस्य सावित्री नातिवर्तते ।
आद्वाविंशात् क्षत्रबन्धोराचतुर्विंशतेर्विशः ॥२०८॥

अत ऊर्ध्वं त्रयोऽप्येते यथाकालमसंस्कृताः ।
सावित्रीपतिता व्रात्या भवन्त्यार्यविगर्हिताः ॥२०९॥

नैतैरपूतैर्विधिवदापद्यपि हि कर्हिचित् ।
ब्राह्मान् यौनांश्च सम्बन्धानाचरेद् ब्राह्मणः सह ॥२१०॥"

द्विजबन्धुपदेनान्येऽप्युच्यन्ते वर्णसङ्कराः ।
तत्रानुलोमजातानामधिकारो न हीयते ॥२११॥

प्रातिलोम्येन जातास्तु सूताद्याः सर्व एव ते ।
वेदाधिकारहीनत्वात् पुराणं यान्ति भूतये ॥२१२॥

स्त्रीशूद्रद्विजबन्धूनां श्रुतिर्न श्रुतिगोचरा ।
कर्मश्रेयसि मूढानां श्रेय एवं भवेदिह ॥२१३॥

इति भारतमाख्यानं कृपया मुनिना कृतम् ।
इत्यादिवचनान्येनमेवार्थं स्पष्टयन्ति नः ॥२१४॥

व्रात्यास्ते ब्राह्मयौनाभ्यां सम्बन्धाभ्यां पृथक्कृता ।
न शिष्यतामप्यवापुर्गुरुता दूरतः स्थिता ॥२१५॥

तथा तेषामपत्यानि नापुरुद्वाहबन्धनम् ।
इति ते हीनजातीयैः सह सम्बन्धमाश्रिताः ॥२१६॥

क्रमेण शूद्रतां प्राप्य समवाप्याप्यवृत्तिताम् ।
दूराद् दूरतरान् देशाञ्जग्मुरज्ञातवासिताम् ॥२१७॥

एवंविधैस्तथा चान्यैः शूद्रैरथ विलोमजैः ।
व्याप्तं भूमितलं सर्वं चातुर्वर्ण्येन भारतम् ॥२१८॥

नास्मिन्निरूपणे मोहो देशं प्रति ममोह्यताम् ।
नाप्यार्यसंस्कृतेः पक्षपातो वा मम कल्प्यताम् ॥२१९॥

बहिष्कृतादिशब्दानां सामर्थ्यान्मनुवाक्यतः ।
वैदेशिका मया ज्ञाता भारतात्ते बहिष्कृताः ॥२२०॥

**वैदेशिकेष्वपि वाऽऽस्तां चातुर्वर्ण्यम्, तथापि—**

सन्तु तत्रापि वा लोका ब्राह्मणाः क्षत्रियास्तथा ।
वैश्याः शूद्राः परं तेऽद्य सन्ति संस्कारवर्जिताः ॥२२१॥

**भारतीयसंस्कृतिप्रचाराय वैदेशिका अपि वेदान् अध्यापनीयाः—**

नन्वद्य विश्वे विश्वस्मिन् स्वस्वसंस्कृतिगायने ।
संस्कृतेर्भारतीयायाः प्रसारोऽप्यभिकाङ्क्ष्यते ॥२२२॥

मन्यते चेद्युष्मदुक्तिस्तदा देशः प्रवञ्च्यते ।
दक्षिणोऽप्येष वामः स्यात्प्राच्योऽपि स्याच्च पश्चिमः ॥२२३॥

इति पर्यनुयुञ्जीरन् केचिदस्मान् विपश्चितः ।
तेषां पवित्रसेवायां किञ्चिदत्र निवेद्यते ॥२२४॥

संस्कृतेर्भारतीयायाः प्रसाराय महोदयाः ।
रामायणं भारतञ्च किन्न पर्याप्तमीक्ष्यते ॥२२५॥

**भारतीयसंस्कृतिप्रचाराय चरित्रशिक्षणमपेक्षितम्, न तु वेदाध्ययनम्—**

"एतद्देशप्रसूतस्य सकाशादग्रजन्मनः ।
स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः ॥२२६॥"

इत्यत्रापि चरित्रस्य शिक्षा मुख्यतयोच्यते ।
न तु सूक्ष्मविचाराणां वेदानामुपदेशनम् ॥२२७॥

**भारतीयसंस्कृतेराचारप्रधानत्वम्—**

भारतीया संस्कृतिर्हि न विचारान् नियन्त्रयेत् ।
आचारांस्तु नियम्यैव साद्य जागर्ति भूतले ॥२२८॥

अन्याः संस्कृतयो लोके विचाराणां निरोधने ।
निरताः साम्यवादं वा वादान्तरमुपासते ।।२२९।।

वयं विचारस्वातन्त्र्ये बद्धश्रद्धा उपास्महे ।
निराकारं नराकारं नोराकारं यथारुचि ।।२३०।।

नास्तीश्वरो नास्ति वेदो नासौ लोक इतीरयन् ।
अपि भारतवर्षेऽस्मिन्नवतारतयार्च्यते ।।२३१।।

किन्त्वाचारमुचं सर्वे विगायन्ति जुगुप्सितम् ।
अपि वेदविदां श्रेष्ठं दहन्ति प्रतिवत्सरम् ।।२३२।।

दुर्जनोऽपि प्रयत्नेन विन्देद्विद्यां बलं धनम् ।
सा विवादाय, तत्पीडाजननाय, मदाय तत् ।।२३३।।

सज्जनस्तु विना विद्यां विनैव च बलं धनम् ।
शरीरमात्रेणाप्यन्यानुपकृत्य प्रशस्यते ।।२३४।।

"विद्यया विनयावाप्तिः सा चेदविनयावहा ।
किङ्कुर्मः कम्प्रति ब्रूमो गरदायां स्वमातरि ।।२३५।।"

इत्याद्या भारतीयाया उद्‌गाराः संस्कृतेः श्रुताः ।
आचारमेव परमं साध्यं ये व्यञ्जयन्ति नः ।।२३६।।

वेदः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः ।
एतच्चतुर्विधं प्राहुः साक्षाद् धर्मस्य लक्षणम् ।।२३७।।

तत्र वेदानधीत्यापि भूयोऽधीत्यापि च स्मृतीः ।
धर्ममार्गे विमूढानां सदाचारो निदर्शकः ।।२३८।।

सदाचारः स चायं नः स्थितो रामायणे तथा ।
भारते चेति तद्‌द्वारा संस्कृतिः ख्याप्यतां भुवि ।।२३९।।

वैदेशिकाः स्वदेश्या वा यावन्नाचारमाश्रिताः ।
तावत्तु ते न गीतायाः श्रवणेऽप्यधिकारिणः ।।२४०।।

"इदं ते नातपस्काय नाभक्ताय कदाचन ।
न चाशुश्रूषवे वाच्यं न च मां योऽभ्यसूयति ।।२४१।।"

इत्यूचिवान् स भगवानर्जुनस्य निमित्ततः ।
बोधयन् वस्तुनस्तत्त्वं पृथिव्याः सर्वमानवान् ॥२४२॥

यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः ।
आत्मन्येव च सन्तुष्टस्तस्य कार्यं न विद्यते ॥२४३॥

इत्यादिषूत्तमावस्थाद्योतकेषु वचःस्वपि ।
प्रतिमानवमेवात्मरतौ ब्रूतेऽधिकारिणम् ॥२४४॥

तपो भक्तिश्च मनसः शुश्रूषा वपुषः क्रिया ।
अनसूया च वचसस्तत्त्रयं शुद्धमिच्छति ॥२४५॥

'विद्या ह वा' इति श्रौते वाक्येऽपि त्रिविशेषणी ।
असूयकायानृजवेऽयतायेति त्रिशुद्धिवाक् ॥२४६॥

यो न वेत्त्यस्मदाचारं न चैनमभिनन्दति ।
न चानुकुरुते भक्त्या सोऽस्मान्नूनमसूयति ॥२४७॥

विद्या ब्राह्मणमेत्याह शेवधिस्तेऽस्मि रक्ष माम् ।
असूयकाय मां मा दास्तथास्यां वीर्यवत्तमा ॥२४८॥

इति स्वसंस्कृतेरात्माऽऽचारः पूर्वं प्रसार्यताम् ।
कृण्वद्भिर्विश्वमार्यञ्च वेदाज्ञा प्रतिपाल्यताम् ॥२४९॥

यदा तु शुचिता लोके वितताऽस्त्वप्रमत्तता ।
मेधाविता-ब्रह्मचर्ये जागृयेतां समन्ततः ॥२५०॥

तदा यमेवाप्रमत्तं शुचिं मेधाव्रतान्वितम् ।
विद्याद् विद्वानभिब्रूयात्तस्मै तस्याधिकारतः ॥२५१॥

**आचारे प्रतिष्ठितैर्वर्णपरीक्षा कार्या—**

पूर्वं जबालातनयं सत्यकाममिव द्विजम् ।
सत्यादिभिः सम्परीक्ष्य संस्कुर्वीरन् द्विजोत्तमाः ॥२५२॥

कैश्चिद् वैज्ञानिकैर्यद्वा यन्त्रसाहाय्यतो नृणाम् ।
कायेभ्यः किरणा दृष्टा निर्यान्तो भिन्नवर्णकाः ॥२५३॥

तत्र शुक्लैर्ब्राह्मणस्य क्षत्रियस्य तथारुणैः ।
पीतैर्विशोऽथ शूद्रस्य कृष्णैः कृत्वा विनिर्णयम् ॥२५४॥

मोक्षप्रधानो वै विप्रः क्षत्रियो धर्मतत्परः ।
अर्थप्रधानो वै वैश्य इति वा श्रुतिसम्मताम् ॥२५५॥

**वर्णपरीक्षां कृत्वा च वैदेशिका अपि त्रैवर्णिका वेदान् अध्यापनीयाः—**

तेषां परीक्षां कृत्वैव संस्कर्तव्या द्विजातयः ।
तदनन्तरमेवैतेऽध्यापनीया यथार्हतः ॥२५६॥

**आचारप्रतिष्ठानानन्तरं वेदप्रचारे कृते विदेशेषु भारतीयसंस्कृतिर्बद्धमूला स्यात्**

एवं कृते भारतीया संस्कृतिर्बद्धमूलताम् ।
प्राप्य विश्वोपकर्त्री स्याद् भारतोत्कर्षदर्शिका ॥२५७॥

अन्यथा तु यथाऽऽयातो भारतेऽलिकसुन्दरः ।
झञ्झावात इवाकस्मात् प्रतियातश्च कुत्रचित् ॥२५८॥

तथाऽस्माकं प्रचारोऽपि क्षणिकः स्मान्न शाश्वतः ।
अशाश्वते च नैवार्या आस्थावन्तो भवन्त्यमी ॥२५९॥

**भारतीयानाम् आर्याणाम् अशाश्वतेऽनास्था—**

अशाश्वतं शरीरं ते न रक्षन्ति गुरोरपि ।
भस्मसादेव कुर्वन्ति भस्म गङ्गां नयन्ति च ॥२६०॥

शाश्वतं पुनरात्मानं मत्त्वा श्रद्धापुरस्सरम् ।
आयन्तु नस्ते पितर इति मन्त्रैर्ह्वयन्ति च ॥२६१॥

इति नित्यस्य वेदस्य नित्यं स्वाध्यायमीप्सुभिः ।
नित्यः प्रचारः कर्तव्यो भारतीयसुसंस्कृतेः ॥२६२॥

**को वेदाधिकारो ? इत्यस्योपसंहारः—**

ब्राह्मणक्षत्रियविशामधिकारनिरूपणात् ।
स्त्रीशूद्रद्विजबन्धूनाञ्चाधिकारनिषेधनात् ॥२६३॥

अन्वयव्यतिरेकाभ्यामुक्तिभिः शास्त्रयुक्तिभिः ।
कोऽत्र वेदाधिकारीति प्रश्नोऽयं सुसमाहितः ॥२६४॥

**श्रोतृजनं प्रति कृतज्ञताप्रकाशः—**

समाहितेन मनसा भवद्भिरिह मद्गिराम् ।
गुम्फोऽकर्णि, तदाकर्ण्य मग्नोऽहं मोदसागरे ।।२६५।।

'चीयते बालिशस्यापि सत्क्षेत्रपतिता कृषिः ।
न शालेः स्तम्बकरिता वप्तुर्गुणमपेक्षते ।।२६६।।'

तथा ममापि वचनं श्रीमत्कर्णगतं परम् ।
फलेग्रहित्वमासाद्य सफलं मां करिष्यति ।।२६७।।

विद्याविद्योतमानानां मानोन्नतमहात्मनाम् ।
श्रीमतां तत्रभवतां यदि मोदाय मे कृतिः ।।२६८।।

तदास्मि धन्यमात्मानं मंस्ये वन्द्यैः समर्थितः ।
आसन्तोषाद्धि विदुषां प्रयोगो नैव शोभते ।।२६९।।

**कृतिसमर्पणम्—**

इदं तिलोदकं कुञ्जवासिने हितधर्मिणे ।
स्वधा श्रीतुलसीरामवर्मणे ज्येष्ठबन्धवे ।।२७०।।



श्री राधावल्लभो जयति

# रसकल्पतरुः

## प्रथमो विटपः

सर्वार्थसाधिका कृष्ण-कन्दर्पोत्ताप-बाधिका।
अगाधिका प्रेमसिन्धुर्हृदि स्फुरतु राधिका ॥१॥

फलं ग्रहीतुकामस्य रसकल्पतरोरलम्।
बालस्य मे सहायोऽस्तु हरिवंशः समुन्नतः ॥२॥

सत्यं ज्ञानमनन्तं ते श्रयन्त्वद्रुतचेतसः।
ये तिष्ठन्ति जगद्रङ्गे काष्ठकुड्याश्मसन्निभाः ॥३॥

प्राणित्यनिति यं लब्धुमात्मानन्दति यं श्रितः।
तमेव रसमेकान्तं भजन्ति द्रुतचेतसः ॥४॥

विभावस्यानुभावस्य तथा च व्यभिचारिणः।
संयोगाद्रसनिष्पत्तिरित्याह भरतो मुनिः ॥५॥

संयोगादिति निष्पत्तिरिति चात्र विशेषतः।
विवृण्वानै रसाचार्यैर्नैकधावसितो रसः ॥६॥

केचिदत्र विभावस्यानुभावव्यभिचारिणाम्।
समुदायाद् रसपदव्यवहारमुदाहरन् ॥७॥

नेष्यते रसिकैः किन्तु व्यवहारस्तु केवलः।
इत्यन्येऽनुमितिं प्राहुर्नटे पक्षेऽनुमानतः ॥८॥

आभासत्वेन हेतूनां नानुमानं रसानुगम्।
इत्याहुरेके सम्बन्धादारोपं स्थायिनो नटे ॥९॥

परं नारोपमात्रेण तुष्यत्यन्तः सचेतसाम्।
इति ज्ञानात्मनो ज्ञानादुत्पत्तिमितरे जगुः ॥१०॥

इयं तु भविता बुद्धावपि नद्रुतचेतसाम् ।
इत्यात्मभावनादोषादुत्पत्तिमितरे विदुः ॥११॥

अखण्डश्चिन्मयानन्दः किमुदेष्यति दोषतः ।
इति केचिद्भावकत्वाद् भोजकत्वं बभाषिरे ॥१२॥

रसास्वादोत्सुकैः सह्ये व्यापृती द्वे न खल्विति ।
प्रकाशनं स्वरूपेण व्यञ्जनाज्जगदुः परे ॥१३॥

ज्ञानात्मना व्यञ्जनेन ज्ञानरूपं रसं विदन् ।
ज्ञानानां स्वप्रकाशत्वं बन्धुरन्धौ निपातयेत् ॥१४॥

इति योगं समीचीनं संयोगमिह मन्महे ।
नासौ कश्चिच्चमत्कारो न चमत्कारकारकः ॥१५॥

संयोगः सन्निकर्षोऽयमिति मास्तु मतिभ्रमः ।
अतीन्द्रिये रसे तस्य कास्ति शक्तिस्तपस्विनः ॥१६॥

चित्तवृत्तिनिरोधाख्यो योगः सम्यक् प्रयोजितः ।
नात्र युक्तः शिलाकुर्वन्नपि स द्रुतचेतसः ॥१७॥

व्यासोदितैः कर्मभक्तिज्ञानयोगैः समुज्ज्वलैः ।
मोहो नश्यतु, लभ्येत स्मृतिर्गच्छतु संशयः ॥१८॥

केचित्तु कर्मयोगेन कर्मणामीश्वरेऽर्पणात् ।
प्रीतेः प्रतीयमानाया रसतां प्रत्यपीपदन् ॥१९॥

अन्ये च ज्ञानयोगेन तन्माहैश्वर्यचिन्तनम् ।
स्वदास्यमननं चाहुः शान्तं दास्यं रसं कमात् ॥२०॥

किंत्वेतादृशभावानां नीतिभीत्यादिमुख्यता ।
प्रीतेर्हन्ति समुद्रेकमिति नेमे रसा मताः ॥२१॥

ये चापि भक्तियोगेन गीताः सख्यादयो रसाः ।
तेऽपि चिन्त्या, यतस्तेषु न भक्तिः प्रेमलक्षणा ॥२२॥

सख्ये प्रेमप्रधानत्वं, वत्सले स्नेहमुख्यता ।
मधुरे रतिधुर्यत्वं न तु भक्तिलवस्पृहा ॥२३॥

सत्यां भक्तावपि भवेद्यदि प्रेमादिमुख्यता ।
तदा रसत्वे मुख्यानां न भक्ते रसता स्थिता ।।२४।।

अतएव पुराचार्या देवादिविषयां रतिम् ।
भावमाहुर्विभावाद्यैस्तदुन्मेषैकदर्शिनः ।।२५।।

किन्तु सूक्ष्मदृशां तेषां किमभूद्रसनिर्णये ।
यत्तेऽत्र वासनामेव रसमद्राक्षुरीश्वराः ।।२६।।

पद्मोच्चयलसच्छोभे मुक्तोत्करमनोहरे ।
पल्वलानाश्रयन् हंसाः सति मानसरोवरे ।।२७।।

शृंगार--वीर--करुण--हास्य--रौद्र--भयानकाः ।
बीभत्साद्भुतसंज्ञौ चेत्यष्टौ नाट्ये रसाः स्मृताः ।।२८।।

इत्येतदविमृश्यैव कथं नाम रसोक्तिषु ।
वावदूकायते लोको न च मूकायते मनाक् ।।२९।।

'भवेदभिनयो नाट्य'मिति नाट्यस्य लक्षणे ।
कृतेऽपि को न जानीतां भरतस्य मुनेर्मनः ।।३०।।

सत्यं सत्यं निकुञ्जेऽस्ति नित्यमेको महारसः ।
व्रजाद्यभिनये सोऽयं व्रजतीवाष्टरूपताम् ।।३१।।

इति नान्यगतत्वेन कर्तव्या रससङ्कथा ।
आलम्बनोऽस्त्येक एव श्रीराधावल्लभः प्रियः ।।३२।।

स एकोऽपि द्विधाभूतो रसनिष्पत्तये वने ।
व्रजे श्रयति नानात्वं विस्तरीतुं रसं पुनः ।।३३।।

तस्यैवाश्रीयतां योगो रसनिष्पत्तये बुधैः ।
न हि योगपरीक्षायां स्यात्समीचीनताऽन्यगा ।।३४।।

योगः संबन्ध इत्युक्तः संबन्धः स्नेहमूलकः ।
ममतामूलकः स्नेहो ममताऽऽसक्तिमूलिका ।।३५।।

स्वार्थत्यागपराऽऽसक्तिस्त्यागः प्रेमपरायणः ।
प्रेमा हितमयस्तेन सम्यग्योगं हितं विदुः ।।३६।।

कर्मयोगेऽस्ति सम्बन्धः शान्ते स्नेहाङ्कुरोद्गमः ।
ममताऽभ्युदयो दास्ये सख्ये चासक्तिसम्भवः ॥३७॥

किन्त्वेतेषु समस्तेषु स्वार्थत्यागो न विद्यते ।
य एव सर्वसम्बन्धजीवातुरभिधीयते ॥३८॥

वत्सले वर्तते त्यागो, मधुरे प्रेम निर्भरम् ।
एतैः सर्वैरनुस्यूतं वृन्दावनरसे हितम् ॥३९॥

ससीमः प्रणयः प्रेम, निःसीमः प्रणयो हितम् ।
परात्परं च तत्तत्त्वं नित्यनूतनमुज्ज्वलम् ॥४०॥

सहजं, मधुरं, स्वाद्यमनाद्यन्तं सुकोमलम् ।
रुचिवीचिसमुल्लासोत्पादकं मादकं परम् ॥४१॥

अपि सौहित्यसहितं तर्षोत्कर्षकमद्भुतम् ।
स्वच्छन्दैकरसामन्दानन्दसन्दोहदोहदम् ॥४२॥

स्पृहापि स्पृहयत्यस्मै स्निह्यति स्निग्धताप्यहो ।
उत्कण्ठोत्कण्ठते चास्मै त्वरापि त्वरते पुनः ॥४३॥

अस्मिन्सरसता पातुं रसं प्रविशति स्वयम् ।
अधीनताप्यधीनत्वं लब्धुं श्रयति दीनताम् ॥४४॥

एतस्य हिततत्त्वस्याधिष्ठात्री करुणामयी ।
हितरूपा हितसखी यमेवानुजिघृक्षति ॥४५॥

स एव सहसा पुण्योपचयैरपि दुर्लभाम् ।
श्रीराधावल्लभालम्बां लभते भक्तिमुत्तमाम् ॥४६॥

सा च भक्तिः सखीभावं भावयन्ती सचेतसाम् ।
हृदयेऽनुग्रहोद्भूतहितयोगे निलीयते ॥४७॥

समानहृदयत्वात्ते सुखिनः प्रियसौख्यतः ।
अन्तर्निलीनभक्तित्वाद्विस्मृतैश्वर्यभावनाः ॥४८॥

अनुग्रहारुणच्छिन्नान्यरसभ्रमतामसाः ।
हितसूर्योदये न्यास्तङ्गतरागान्तरोडवः ॥४९॥

यथाक्रमं सहृदया इतीमे भावुका इति ।
रसिका इत्यथानन्या इति चादधतेऽभिधाम् ॥५०॥

एतेषां लाडिला-लाल-लालना-मनसां हृदि ।
अखण्डहितधारायां स्थायी निष्पद्यते रसः ॥५१॥

जन्यमानो नवीनाभ्यां किशोराभ्यामनारतम् ।
वर्ध्यमानो लसत्कुञ्जशरच्चन्द्रादिशोभया ॥५२॥

अनुभूतिं नीयमानोऽपाङ्गभङ्गस्मितादिभिः ।
सञ्चार्यमाणश्चापल्यहर्षश्रममदादिभिः ॥५३॥

हितेन तैः स्वाद्यमानो जाग्रत्स्वप्नसुषुप्तिषु ।
स्थायी निष्पद्यते प्रेमा वृन्दावनरसो ध्रुवः ॥५४॥

## द्वितीयो विटपः

आलम्बनोद्दीपनात्मा विभावः कारणं द्विधा ।
आलम्बनोऽपि द्विविधो विषयाश्रयभेदतः ॥१॥

उभयोः प्रेमतुल्यत्वेऽप्येकस्यासक्तिदर्शनात् ।
आसज्यं विषयं प्राहुरासक्तं त्वाश्रयं बुधाः ॥२॥

श्रीश्यामा विषयस्तत्र श्रीश्यामस्त्वाश्रयो मतः ।
क्वचिद्रसं परिष्कर्तुं कल्प्यते तद्विपर्ययः ॥३॥

**श्रीराधा**—

तत्र श्यामा गुणाम्भोजसौरभ्यं सिच्यते मनाक् ।
को हि साकल्यतः सिन्धोर्वीचीर्गणयितुं क्षमः ॥४॥

नवतारुण्यकारुण्यावर्ण्यलावण्यधन्यताः ।
नैपुण्यपुण्यसाद्गुण्यासीमवैदग्ध्यमुग्धताः ॥५॥

प्रेमप्राचुर्यगाम्भीर्यौदार्यमाधुर्यधुर्यताः ।
सौकुमार्यातिनागर्यानन्तसौन्दर्यभीरुताः ॥६॥

कर्मयोगेऽस्ति सम्बन्धः शान्ते स्नेहाङ्कुरोद्गमः ।
ममताऽभ्युदयो दास्ये सख्ये चासक्तिसम्भवः ॥३७॥

किन्त्वेतेषु समस्तेषु स्वार्थत्यागो न विद्यते ।
य एव सर्वसम्बन्धजीवातुरभिधीयते ॥३८॥

वत्सले वर्तते त्यागो, मधुरे प्रेम निर्भरम् ।
एतैः सर्वैरनुस्यूतं वृन्दावनरसे हितम् ॥३९॥

ससीमः प्रणयः प्रेम, निःसीमः प्रणयो हितम् ।
परात्परं च तत्तत्त्वं नित्यनूतनमुज्ज्वलम् ॥४०॥

सहजं, मधुरं, स्वाद्यमनाद्यन्तं सुकोमलम् ।
रुचिवीचिसमुल्लासोत्पादकं मादकं परम् ॥४१॥

अपि सौहित्यसहितं तर्षोत्कर्षकमद्भुतम् ।
स्वच्छन्दैकरसामन्दानन्दसन्दोहदोहदम् ॥४२॥

स्पृहापि स्पृहयत्यस्मै स्निह्यति स्निग्धताप्यहो ।
उत्कण्ठोत्कण्ठते चास्मै त्वरापि त्वरते पुनः ॥४३॥

अस्मिन्सरसता पातुं रसं प्रविशति स्वयम् ।
अधीनताप्यधीनत्वं लब्धुं श्रयति दीनताम् ॥४४॥

एतस्य हिततत्त्वस्याधिष्ठात्री करुणामयी ।
हितरूपा हितसखी यमेवानुजिघृक्षति ॥४५॥

स एव सहसा पुण्योपचयैरपि दुर्लभाम् ।
श्रीराधावल्लभालम्बां लभते भक्तिमुत्तमाम् ॥४६॥

सा च भक्तिः सखीभावं भावयन्ती सचेतसाम् ।
हृदयेऽनुग्रहोद्भूतहितयोगे निलीयते ॥४७॥

समानहृदयत्वात्ते सुखिनः प्रियसौख्यतः ।
अन्तर्निलीनभक्तित्वाद्विस्मृतैश्वर्यभावनाः ॥४८॥

अनुग्रहारुणच्छिन्नान्यरसभ्रमतामसाः ।
हितसूर्योदये चास्तङ्गतरागान्तरोडवः ॥४९॥

यथाक्रमं सहृदया इतीमे भावुका इति ।
रसिका इत्यथानन्या इति चादधतेऽभिधाम् ॥५०॥

एतेषां लाडिला-लाल-लालना-मनसां हृदि ।
अखण्डहितधारायां स्थायी निष्पद्यते रसः ॥५१॥

जन्यमानो नवीनाभ्यां किशोराभ्यामनारतम् ।
वर्ध्यमानो लसत्कुञ्जशरच्चन्द्रादिशोभया ॥५२॥

अनुभूतिं नीयमानोऽपाङ्गभङ्गस्मितादिभिः ।
सञ्चार्यमाणश्चापल्यहर्षश्रममदादिभिः ॥५३॥

हितेन तैः स्वाद्यमानो जाग्रत्स्वप्नसुषुप्तिषु ।
स्थायी निष्पद्यते प्रेमा वृन्दावनरसो ध्रुवः ॥५४॥

## द्वितीयो विटपः

आलम्बनोद्दीपनात्मा विभावः कारणं द्विधा ।
आलम्बनोऽपि द्विविधो विषयाश्रयभेदतः ॥१॥

उभयोः प्रेमतुल्यत्वेऽप्येकस्यासक्तिदर्शनात् ।
आसज्यं विषयं प्राहुरासक्तं त्वाश्रयं बुधाः ॥२॥

श्रीश्यामा विषयस्तत्र श्रीश्यामस्त्वाश्रयो मतः ।
क्वचिद्रसं परिष्कर्तुं कल्प्यते तद्विपर्ययः ॥३॥

**श्रीराधा—**

तत्र श्यामा गुणाम्भोजसौरभ्यं सिच्यते मनाक् ।
को हि साकल्यतः सिन्धोर्वीचीर्गणयितुं क्षमः ॥४॥

नवतारुण्यकारुण्यावर्ण्यलावण्यधन्यताः ।
नैपुण्यपुण्यसाद्गुण्यासीमवैदग्ध्यमुग्धताः ॥५॥

प्रेमप्राचुर्यगाम्भीर्यौदार्यमाधुर्यधुर्यताः ।
सौकुमार्यातिनागर्यानन्तसौन्दर्यभीरुताः ॥६॥

लास्यहास्यपरीहासविलासोल्लासकेलयः ।
रसाकूपार-सुषमापारावारैकरूपताः ॥७॥

अमीषां श्यामसर्वस्वविलुण्ठनयशोजुषाम् ।
विलक्षणानां कृपया गुणानां लक्षणं ब्रुवे ॥८॥

किशोरतैव तारुण्यं कारुण्यं च कृपार्द्रता ।
तच्च प्रतिक्षणं चेतश्चमत्कारितया नवम् ॥९॥

लावण्यमङ्गमुक्तान्तश्छाया तरलतोच्यते ।
तदवर्ण्यं विचित्रत्वादवाङ्मनसगोचरम् ॥१०॥

सौभाग्यमेव धन्यत्वं, नैपुण्यं कर्मकौशलम् ।
पुण्यं भवेत्पावनत्वं, साद्गुण्यं गुणवेदिता ॥११॥

वैदग्ध्यं स्वमनोभावगुप्तिप्राकट्यचातुरी ।
असीमं तु भवेल्लोकशास्त्रोपायातिशायि तत् ॥१२॥

मुग्धतान्यमनोभावग्रहणापाटवं रसात् ।
प्रेमप्रवणता प्राणावधिक्लृप्तावधीरणा ॥१३॥

प्राचुर्यं तस्य संश्लेषेऽपि प्रवासवदुत्कता ।
गाम्भीर्यमतिदुर्बोधाभिप्रायत्वं स्वभावतः ॥१४॥

वदान्यता किलौदार्यं माधुर्यं नित्यचारुता ।
स्वराज्यकार्यनिर्वाहावहितत्वं च धुर्यता ॥१५॥

स्वराज्यकार्यं कुञ्जान्तःकेलिकल्पनमीरितम् ।
सौकुमार्यं म्रदीयस्त्वं मृदुस्पर्शेऽपि निःसहम् ॥१६॥

अग्राम्यमथ नागर्यं वाग्वेषाकारसौष्ठवम् ।
सौन्दर्यमङ्गविन्यासो नयनानन्ददायकः ॥१७॥

हर्षप्रकर्षकारित्वे कथ्यते तदनन्तता ।
भीरुता मृदुशीलत्वात्त्रासः प्रियसमागमे ॥१८॥

नृत्ये गीते च वादित्रे वैदुष्यं लास्यमीरितम् ।
अत्र हासपरीहासो मनोरञ्जनमुच्यते ॥१९॥

नेत्रवक्त्रादिचेष्टानामिष्टं प्रति मनोहरः ।
सुविन्यासो विलासः स्यादुल्लासस्तस्य विस्तरः ॥२०॥

केलिर्विहारः सामान्यबाल्यकौमारयौवनः ।
रसाकूपारता त्वङ्गैस्त्वङ्गद्भिस्तत्तरङ्गवत् ॥२१॥

आपादतलमाकेशपाशान्तं च तनुश्रियाम् ।
अमानादेव सुषमापारावारत्वमीरितम् ॥२२॥

इत्थं नानाविधाकारविधानैरपि सद्गुणैः ।
नित्येमकरसत्वेनावस्थानादेकरूपता ॥२३॥

**श्रीश्यामसुन्दरः—**

अथ श्यामगुणादर्शं कञ्चिदत्र प्रदर्शये ।
यं पश्यतां रसज्ञानां सुप्रभातं भविष्यति ॥२४॥

दीनताऽधीनता तृप्तिहीनताऽह्लीणता तथा ।
नित्यं नवीनता प्राणप्रियारूपाम्बुमीनता ॥२५॥

काकुकोविदता, चाटुपटुता, चटुलात्मता ।
कृतार्थम्मन्यता स्वल्पेऽनल्पे लाभेऽपि लुब्धता ॥२६॥

दीनतात्मनि कारुण्यास्पदताप्रतिपादनम् ।
अधीनता स्वभावेन प्रियाचित्तानुवर्तनम् ॥२७॥

रसे पेपीयमानेऽपि तृषार्तिस्तृप्तिहीनता ।
अह्लीणता तर्जनेऽपि रसावेशादलज्जनम् ॥२८॥

नित्यं नवीनता नानारसलम्पटता कृता ।
आत्मनश्च प्रियायाश्च सर्वथानन्ददायिनी ॥२९॥

क्षमते न क्षणायापि प्रियाविश्लेषमेष यत् ।
तदुच्यते तद्बुभूषोः प्रियारूपाम्बुमीनता ॥३०॥

भिन्नकण्ठध्वनीन् शब्दान् प्रियायाः किङ्करीषु यत् ।
अर्थी प्रयुङ्क्ते विविधान् काकुकोविदतास्य सा ॥३१॥

प्रयुञ्जानश्च चाटूनि प्रकृत्यैव प्रियंवदः ।
यत्प्रियां प्रीणयत्येष स्याच्चाटुपटुतास्य सा ॥३२॥

शपथैरपि विश्वास्य प्रार्थितादधिके सुखे ।
भूयः प्रवर्तमानस्य प्रकटा चटुलात्मता ॥३३॥

क्वचिच्चेलाञ्चलोद्भूतपवनेनापि तुष्यति ।
पारम्पर्यात्प्रियागात्रपरिरम्भाप्तिसद्धिया ॥३४॥

कृतार्थम्मन्यता स्वल्पे सेयमस्य प्रकीर्तिता ।
अन्यत्र च प्रियाश्रोत्रनेत्रवक्षःसु काङ्क्षतम् ॥३५॥

पङ्कजाञ्जनकस्तूरीभावं नावाप्य ताम्यति ।
सेयमस्य प्रियाश्लेषेऽनल्पे लाभेऽपि लुब्धता ॥३६॥

सन्ति चात्र गुणादर्शे तारुण्यादिगुणा अपि ।
सम्मुखीनतया श्यामागुणानां प्रतिबिम्बवत् ॥३७॥

तेष्वपि प्रियरूपेषु कांश्चिद्योग्यानुदाहरे ।
विशेषेणोपयोक्तव्यानालम्बनविपर्यये ॥३८॥

उद्दीपनः पात्रदेशकालगामितया त्रिधा ।
पात्रं प्रियौ, वनं देशः, कालः सन्ध्ये दिवानिशम् ॥३९॥

पात्रगामी मिथः प्रेष्ठालम्बिचेष्टाचमत्कृतिः ।
उभयोरतिधन्या च गुणग्रामाभिरामता ॥४०॥

देशगामी समुत्कर्षोऽन्यत्रैकान्तादितोदितः ।
अत्र तूचितसामग्रीसामग्र्यमपि तत्कृतम् ॥४१॥

**श्रीवृन्दावनम्**—

देशो वृन्दावनं धाम रामणीयकमन्दिरम् ।
कुञ्जमञ्जुलसद्वीथि कालिन्दीकूलसुन्दरम् ॥४२॥

सन्ततं संततशरद्वसन्तं पूर्णचन्दिरम् ।
नानाविधसुमामोदप्रमोदभरतुन्दिलम् ॥४३॥

वृन्दावनविशेषाणामधर्मणमिदं जगत् ।
शुद्धिमिच्छति तन्नाम्ना निर्दिश्य प्रकृतं रसम् ॥४४॥

अघ्रातेश्वरतागन्धौ मधुरिम्णि निजे स्थितौ ।
प्रियाप्रियतमौ कस्मादाददाते परिच्छदम् ॥४॥

अस्यैव कल्पतरवल्लवताकुञ्जानि मञ्जुलाम् ।
ललितादिसखीकान्तां फलन्त्युज्वलसम्पदम् ।।४६।।

अस्यैव चिन्तामणयद्रजःकणलवश्रियाः ।
सुदुस्तर्का रसोदर्काः समुद्भूताः समृद्धयः ।।४७।।

पूर्वरागं प्रबालानां रागेणेव निवर्तयन् ।
विरहं रहयत्तेषां मिथः श्लेषैर्घनत्वजैः ।।४८।।

मानमुद्भिन्नमुकुलाभिमानेन निवारयत् ।
प्रवासं नवपुष्पाणां शोभया स्तोभयत्पुनः ।।४९।।

शेषं फलविशेषाणां शोभया लोभयत्पुनः ।
विप्रलम्भमनालम्बं विप्रलम्भयदञ्जसा ।।५०।।

इदमेव नवीनाभ्यां किशोराभ्यां दिवानिशम् ।
सन्ध्ययोश्चापि संभोगं वितनोति हितोदितम् ।।५१।।

गुञ्जन्मधुपपुञ्जासु निकुञ्जघनराजिषु ।
रहस्यदर्शनेनेव सम्मीलन्तीषु वीथिषु ।।५२।।

शीतलेन सुगन्धेन मन्देन मरुता मुहुः ।
सुखमूलेषु कालिन्दीकूलेषु हितशालिषु ।।५३।।

कालगामी विशेषस्तु निमेषेष्वपि राजते ।
सानुबन्धः स विस्पष्टमष्टयामेषु गीयते ।।५४।।



## तृतीयो विटपः

**युगलकेलिः—**

सत्त्ववागङ्गजस्त्रेधाऽनुभावः कार्यमुच्यते ।
सत्त्वं मनस्तद्भवोऽसौ सात्त्विकोऽष्टविधः स्मृतः ।।१।।

स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरभङ्गोऽथ वेपथुः ।
वर्णभेदोऽथ वाष्पश्च प्रलयश्चेति नामतः ।।२।।

चेष्टाभावो भवेत्स्तम्भः स चेष्टावाप्तिहेतुकः ।
वपुर्जलोद्गमः स्वेदः सुखसारसमुद्भवः ।।३।।

रोमाञ्चो जनितं हर्षप्रकर्षाद्रोमहर्षणम् ।
स्वरभङ्गः किलोत्कण्ठादिजा गद्गदकण्ठता ।।४।।

वेपथुः पृथुरागादेरङ्गप्रत्यङ्गकम्पनम् ।
वर्णभेदो मदाद्युत्थं वर्णान्यत्वमुदीरितम् ।।५।।

वाष्पो विलोचनजलं विश्लेषभ्रमहर्षजम् ।
प्रलयो निलयश्चेष्टाज्ञानादीनां महासुखात् ।।६।।

एते निकुञ्जरन्ध्रेभ्यः पश्यन्तीनां रहो रतिम् ।
सखीनामपि जायन्ते सुखितानां तु तत्सुखैः ।।७।।

प्रियाभ्यां सह सर्वासां तासामप्यष्टमो भवेत् ।
लीलासञ्चालिनीमेकां हितां हितसखीं विना ।।८।।

वाचिको वाग्भवो द्वेधा वयस्यासु मिथोऽथवा ।
प्रियश्लाघा, रहस्योक्तिः, सन्देशो मन्त्रणार्थने ।।९।।

वयस्यासु प्रयुज्यन्ते पञ्च पञ्च मिथः पुनः ।
विधिः प्रलापो मधुरालापो गानं निषेधनम् ।।१०।।

प्रियश्लाघा प्रियप्रेमरूपाद्याधिक्यवर्णनम् ।
रहस्योक्तिश्च तत्कर्मस्वचिकीर्षादिसूचनम् ।।११।।

सन्देशस्तु यथास्थानकालं प्रियनिमन्त्रणम् ।
मानापनोदनोपायचिन्तनादि च मन्त्रणम् ।।१२।।

अर्थनं तु वयस्यासु नितान्तनिपुणातमसु ।
कैतवेनापि मुग्धायाः कैङ्कर्यावसरार्थनम् ।।१३।।

विधिः प्रियाभिलषितेऽभिमतिद्योतकं वचः ।
प्रलापः सत्यपि श्लेषे हा प्रियेत्यादिजल्पनम् ।।१४।।

अक्रमः प्रणयालापो मधुरालाप ईरितः ।
गानं मग्नतया कण्ठमाध्व्या प्रियविनोदनम् ।।१५।।

निषेधनमभीष्टेऽपि सुखे वामतया कृता ।
मेति नेति वचोधारा सैव मानेति संज्ञिता ॥१६॥

अत्रार्थनं प्रियस्यैव प्रियायाश्च निषेधनम् ।
अन्यदप्यवधर्तव्यं वृन्दावनरसोचितम् ॥१७॥

आङ्गिकोऽङ्गभवस्त्रेधा श्यामाश्यामोभयानुगः ।
स चैकगोऽपि नो गण्यः का कथोभयगामिनः ॥१८॥

पूर्णानुरागजलधी जडधीरवगाहितुम् ।
स्वचापलादुत्सहतां सहतामपि तत्कणम् ॥१९॥

वदिष्यन्ति ममोद्योगं प्रसमीक्ष्य विचक्षणाः ।
रससेको विवेकस्य प्रोञ्छनायेति नान्यथा ॥२०॥

किन्तु श्यामसुधासिन्धुः श्यामारसमहोदधौ ।
मिलन्नुदीचीर्या वीचीरातनोति मनोहराः ॥२१॥

ये चोत्तुङ्गतरङ्गानामभङ्गा उद्गमा इमे ।
सन्ति श्यामसुधासिन्धौ श्यामारसमहोदधेः ॥२२॥

तानिमानभिवीक्ष्याहं न प्रकम्पे मनागपि ।
हरिवंशमहापोताश्रयणं श्रेयसे यतः ॥२३॥

यदि नामात्र मग्नः स्यां को लाभस्तत्परो भवेत् ।
यदि स्यां रक्षितस्तर्हि तस्य स्यादक्षतं यशः ॥२४॥

सखीकुमुद्वतीश्याम-चन्द्रकान्तसुधाकरान् ।
अत्र श्यामानुगानष्टादश स्पष्टान्निरूपये ॥२५॥

शोभनं लोभनं सौख्यवर्षणं वपुषोऽर्पणम् ।
तापनिर्वापनं नाट्याध्यापनं गात्रगोपनम् ॥२६॥

अपाङ्गभङ्गीभ्रूभङ्गौ वशीकरणमोहने ।
विबोधनप्रसादौ च रासारम्भप्रकाशने ॥२७॥

कलाकलापकलनं प्रियस्य परिचारणम् ।
सुधाभिषेचनं चेति दिङ्मात्रमुपदर्शितम् ॥२८॥

शोभनं वल्लभाकल्पभूषणादिप्रकल्पनम् ।
लोभनं निजसर्वाङ्गपरिकर्म प्रियं प्रति ॥२९॥

स्वरूपादिभरैश्चेतोहर्षणं सौख्यवर्षणम् ।
प्रियाय प्रेमभारेण स्वार्पणं वपुषोऽर्पणम् ॥३०॥

तापनिर्वापनं स्पर्शैर्निजाङ्गोत्थैः सुशीतलैः ।
प्रियस्यानङ्गसन्तापवारणेन विनोदनम् ॥३१॥

नाट्यं तौर्यत्रिकं तस्य प्रियकीर्तिप्रसारिणी ।
वयस्यादिषु संक्रान्तिर्नाट्याध्यापनमीरितम् ॥३२॥

यद्यद् गात्रं महोत्कण्ठातुरः कान्तो दृशा स्पृशेत् ।
प्रतिकूलतया तत्तल्लोपनं गात्रगोपनम् ॥३३॥

अपाङ्गभङ्गी दयिते साक्षान्मन्मथमन्मथे ।
कोटिकन्दर्पकोदण्डविस्फारी वक्रिमा दृशोः ॥३४॥

भ्रूभङ्गः प्रियचापल्यार्गलः कुटिलता भ्रुवोः ।
रूपादिरज्ज्वा तद्बन्धो वशीकरणमुच्यते ॥३५॥

भव्यैर्भावादिभिः संज्ञाहरणं मोहनं स्मृतम् ।
विबोधनं निजाङ्गानां स्पर्शमात्रेण बोधनम् ॥३६॥

प्रसादोऽनुनयैर्मानपरित्यागः प्रकीर्तितः ।
रासारम्भः स्वानुरागरससिन्धुच्छटालवान् ॥३७॥

वितीर्य गोपिकावृन्दद्वारा तस्याभ्युपक्रमः ।
वृषभानुगृहाद्येषु प्रादुर्भावः प्रकाशनम् ॥३८॥

कलाकलापकलनं प्रियचित्रादिकल्पना ।
(आसज्यत्वेन च प्रेममग्नत्वेन च न स्वयम्)
संवाहनादिरालीभिः प्रियस्य परिचारणम् ॥३९॥

सुधाभिषेचनं स्वाङ्गैः प्रियसञ्जीवनं पुनः ।
सखीषु हितपीयूषवर्षि चाद्भुतदर्शनम् ॥४०॥

ग्रथ श्यामगता मुख्या निर्दिश्यन्ते चतुर्दश ।
अन्वेषणानुगमने केलिकुञ्जप्रवेशनम् ।।४१।।
अपराधाविगणनं प्रसादनप्रसाधने ।
तल्पाधिरोपणं वस्त्राकर्षणं स्पर्शनं क्वचित् ।।४२।।
पादसेवाथ व्यजनक्रिया दन्तनखक्षते ।
ग्रन्तिकोपासनं चेति स्पष्टत्वेन न लक्षिताः ।।४३।।
चतुर्विंशतिरेवात्र संगृह्यन्ते च युग्मगाः ।
निगदेनैव ये व्यक्ता न तेषां लक्षणं कृतम् ।।४४।।
अभिसारोऽथ कुसुमावचयः कलहः स्मितम् ।
दर्शनं चुम्बनं लीलागतिरंसभुजार्पणम् ।।४५।।
ताम्बूलवीटिकादानं भूषादिपरिवर्तनम् ।
आलिङ्गनाधरसुधापानाङ्काध्यासनानि च ।।४६।।
विविधं खेलनं वाद्यवादनं स्वरमेलनम् ।
मादनं मोदनं वीथिभ्रमणं रमणं पुनः ।।४७।।
उज्जागरोऽथ शयनं ग्लपनं प्रतिबिम्बने ।
मुहुरुल्लसनं चेति विज्ञेयास्तेऽभिधानतः ।।४८।।
कलहो मानलोभाभ्यां जनितो भुजसम्भ्रमः ।
विविधं खेलनं रासो होला दोलाधिरोहणम् ।।४९।।
रागासवादिदानेन मादनं रञ्जनं मिथः ।
मुहुरुल्लसनं हर्षः प्रतिबिम्बादिनिर्णये ।।५०।।
वाचिकेषु प्रियश्लाघा मन्त्रणं नवमर्थनम् ।
मधुरालाप इत्येते संभवन्ति सखीष्वपि ।।५१।।
शोभनं लोभनं सौख्यवर्णनं च विबोधनम् ।
ग्रन्वेषणानुगमने केलिकुञ्जप्रवेशनम् ।।५२।।
तल्पाधिरोपणं चाथ प्रसादनप्रसाधने ।
अन्तिकोपासनं पादसेवाथ व्यजनक्रिया ।।५३।।
ग्राङ्गिकेष्वपि दृश्यन्ते प्रियामभि रसोचिताः ।
हितानुबद्धहृदये साक्षिभूते सखीजने ।।५४।।



## चतुर्थो विटपः

आवेगदैन्यजडतामोहस्वप्नमदश्रमाः ।
गर्वालस्यबिबोधाश्च निद्रौत्सुक्ये मतिः स्मृतिः ॥१॥

अवहित्था चपलता शङ्कोन्मादौ धृतिह्रियौ ।
चिन्तासूयाग्लानितर्कविषादत्रासहृष्टता ॥२॥

सप्तविंशतिरित्येते कथ्यन्ते व्यभिचारिणः ।
चारयन्ति स्थायिभावं विशेषेणाभितो यतः ॥३॥

निर्वेदमरणामर्षोग्रतानां व्यभिचारिता ।
व्याध्यपस्मारयोश्चैवमविचारमनोहरा ॥४॥

निर्वेदस्थायिभावोऽस्ति शान्तोऽपि नवमो रसः ।
इति संचारिताचार्यैर्निर्वेदस्य निवारिता ॥५॥

मरणं प्राणहीनत्वं विषये करुणस्य यत् ।
अमर्षोऽभिनिवेशाख्यः क्रोधस्य विषये पुनः ॥६॥

उग्रता चण्डतारूपा भयस्य विषये स्थिता ।
इत्येतेनैव युज्यन्ते संख्यातुं व्यभिचारिषु ॥७॥

विषयस्थायिनामेषां कथं नाम न सा भवेत् ।
यद्वाश्रयगतत्वेन निर्वेदस्थायिता मता ॥८॥

द्विविधालम्बनस्यायी स्थायी स्यादिति नोच्यताम् ।
रत्युत्साहौ विना कोऽन्यो भावः स्थायी तदा भवेत् ॥९॥

न चाश्रयगतः स्थायी संचारी विषयानुगः ।
इत्यादिको विवेकोऽस्तु रसस्थितिविकारकः ॥१०॥

तथाहि रतिरेकैव स्थायिसंचारिणी सती ।
विषयाश्रययोस्तुल्यरूपतां विनिवारयेत् ॥११॥

विषयानुगते चास्मिन् संचारिणि विनिश्चिते ।
हासस्य विषये विद्यमानं वाग्वेषवैकृतम् ॥१२॥

जुगुप्सायाश्च विषये पूतिगन्धादिकं स्फुरत् ।
विस्मयस्यापि विषयेऽलौकिकं किंचिदावसत् ॥१३॥

शमस्य विषये चापि वर्तमानामनित्यताम् ।
संख्यावन्तोऽपि संख्यान्ति कथं न व्यभिचारिषु ॥१४॥

युद्धवीरं परित्यज्योत्साहस्याप्यस्ति केवले ।
आश्रये स्थितिरन्यत्र दृश्यते पात्रतादिकम् ॥१५॥

यौ चैतौ व्याध्यपस्मारौ व्यभिचारितयोदितौ ।
तत्र व्याधेरपस्मारः किमयं पृथगुच्यते ॥१६॥

न च संचारिभावेषु व्याधिरप्युपयुज्यते ।
कायिकः कार्यरूपोऽसौ न पुनर्भावरूपकः ॥१७॥

उभयालम्बनस्थायो स्थायी स्यादिति नान्यथा ।
रत्युत्साहादृते चान्यः स नैवास्तीति सत्यवाक् ॥१८॥

केचिद्रतिं निरुत्साहामुत्साहं नीरतिं परे ।
कीर्तयन्तोऽतिमोदन्ते बहवो भक्तपुंगवाः ॥१९॥

वयं तु मृदुभक्तित्वाद्वियोगं न सहामहे ।
न राधाकृष्णयो रासे न रत्युत्साहयो रसे ॥२०॥

वृन्दावनरसे तस्माद्रत्युत्साहः सनातनः ।
योऽयं सुरतसंग्रामे राजते रतिशूरयोः ॥२१॥

स्थायिभावं विशेषेणाभितोऽमी चारयन्ति यत् ।
तदमीषामपि मतो द्विविधालम्बनाश्रयः ॥२२॥

विषयाश्रययोरेकतरमाश्रित्य यः स्थितः ।
तस्येह चर्चया किंचिन्नाम नास्ति प्रयोजनम् ॥२३॥

किं च त्रासविषादाद्यैर्भयशोकादिसङ्ग्रहे ।
कर्तुं शक्येऽपि को मोहादमङ्गलरुचिर्भवेत् ॥२४॥

इत्यनेनानुबन्धेन त्यक्त्वा नवरसीरुचिम् ।
अनन्यरसिकैः कार्या नित्यं नवरसे रुचिः ॥२५॥

अथानयोर्नवलयोर्नवसङ्ग्रामशूरयोः ।
समानप्रीतिबलयोर्लक्ष्यन्ते सहकारिणः ॥२६॥

आवेगः प्रतिबिम्वादिदर्शनादिह सम्भ्रमः ।
स च वैकल्यवैपुल्यकातर्यधैर्यमानकृत् ॥२७॥

दैन्यं तु प्राणसर्वस्वादर्शनाद् द्युतिहीनता ।
तत्वमालिन्यसन्तापगात्रगौरववाष्पकृत् ॥२८॥

जडता विषयाज्ञानं हर्षाद्युत्कर्षकारणात् ।
सा च नैस्पन्द्यमौनित्वनिर्निमेषाक्षितादिकृत् ॥२९॥

मोहो विचित्तता दुःखसुखावेगानुचिन्तनैः ।
मूर्छनाज्ञाननिष्पन्दघूर्णन्नयनतादिकृत् ॥३०॥

स्वप्नो निद्रामुपेतस्यानुभवो नित्यशीलनात् ।
स चावेगभयग्लानिसुखदुःखादिकारकः ॥३१॥

रूपाद्यासवपानेन सम्मोहानन्दनं मदः ।
स च हासपरीहासस्खलत्पदगतित्वकृत् ॥३२॥

श्रमो रतिक्लमः स्वेदश्वासोच्छ्वासाङ्गखेदकृत् ।
सौभाग्यादिकृतो गर्वो मदोऽवज्ञादिकारकः ॥३३॥

आलस्यमङ्गशैथिल्यकरं जाड्यं श्रमादिजम् ।
निद्रामोहाद्यपगमो विबोधश्चेतनागमः ॥३४॥

अन्योन्यदर्शनस्वाङ्गावलोकप्रमुदादिकृत् ।
चेतःसंमीलनं निद्रा श्रमक्लममदादिजा ॥३५॥

जृम्भाक्षिमीलनोच्छ्वासगात्रभङ्गादिकारणम् ।
इष्टानवाप्तेरौत्सुक्यं कालक्षेपासहिष्णुता ॥३६॥

स च प्रियप्राप्त्युपायत्वरानिःश्वसितादिकृत् ।
प्रीतिमार्गानुसृत्यादेरर्थनिर्धारणं मतिः ॥३७॥

सा च स्मेरत्वसन्तोषबहुमानादिकारिणी ।
पूर्वानुभूतविषयानुसन्धानं भवेत्स्मृतिः ॥३८॥

नेत्रस्फारशिरः कम्पभ्रूसमुन्नमनादिकृत् ।
विकसन्मुखतादीनां यत्नैरन्यत्वकल्पनम् ॥३९॥

लज्जादिनावहित्था स्याद्धर्षाद्याकारगोपनम् ।
रागोद्रेकाच्चपलताऽनवस्थानमुदीरितम् ॥४०॥

सा चाविचार्यकारित्वस्वच्छन्दाचरणादिकृत् ।
अनर्थतर्कणं शङ्का भवेदात्मापराधजा ॥४१॥

सा च वेपथुवैस्वर्यवर्णभेदादिकारिणी ।
उन्मादश्चित्तसम्मोहः कामाद्यभिनिवेशजः ॥४२॥

स चास्थानप्रलपनगीतहासोपवेशकृत् ।
अभीष्टाद्यागमात्पूर्णस्पृहताऽभिमता धृतिः ॥४३॥

सा चोल्लाससहासत्वप्रोज्ज्वलत्वादिकारिणी ।
ह्रीः स्वतो धृष्टताभावो वदनानमनादिकृत् ॥४४॥

ध्यानं चिन्ता प्रियानाप्तेः शून्यता श्वासतापकृत् ।
असूया स्वगुणर्द्धीनामपि नैयून्यवर्णनम् ॥४५॥

ग्लानिर्हर्षक्षयश्चित्तसन्तापात्कृशतादिकृत् ।
तर्को विचारः सन्देहाद् भ्रूशिरोङ्गुलिनर्तकः ॥४६॥

उपायाभावजन्मा तु विषादः सत्वसंक्षयः ।
निःश्वासोच्छ्वासहृत्तापसहायान्वेषणादिकृत् ॥४७॥

त्रासो भीतिः प्रियामानादितो दुरपनोदनात् ।
स च वेपथुरोमाञ्चस्तम्भभ्रमकरः परः ॥४८॥

हृष्टता तु भवेद्धर्षोऽभीष्टलाभे विनोद्यमम् ।
परमानन्द-मग्नत्वबाष्प-गद्गदतादिकृत् ॥४९॥

रसमार्गे बुधैर्दृष्टा येषामासज्यवर्तिता ।
श्यामायां ते विराजन्ते विशेषादिति नान्यथा ॥५०॥

तथा श्यामे विशेषेण लसन्त्यासक्तवर्तिनः ।
प्रेम्णस्तु वक्रगामित्वान्न तथाऽस्त्यवधारणा ॥५१॥

गर्वावहित्थे श्यामायां राजेते श्यामसंश्रयात् ।
श्यामे चपलतादैन्ये श्यामालम्बादिति स्फुटम् ॥५२॥

हितयोगेन तत्सौख्यसुखिनीनामनारतम् ।
एतेषु केचिज्जायन्ते सखीनामपि ते पुनः ।।५३।,

नामपर्यायिसादृश्यमात्रात्प्रायोऽभ्युदाहृताः ।
ये विभावानुभावाभ्यां भिद्यमाना अपि स्फुटम् ।।५४।।

## पञ्चमो विटपः

इह संयोगशब्देन हितयोगो विवक्षितः ।
यतः स सर्वसम्बन्धमूर्धन्यत्वव्यवस्थितः ।।१।।

द्वन्द्वान्ते श्रूयमाणत्वात्प्रत्येकमभिसंहितः ।
कारणं रसनिष्पत्तेर्हितयोगो विमृश्यते ।।२।।

श्यामाश्यामौ तयौ रस्या गुणा वृन्दावनं दिनम् ।
आलम्बनोद्दीपनाख्यविभावस्यैष विस्तरः ।।३।।

अनुभावा दयितयोस्तयोश्च व्यभिचारिणः ।
इत्येषां वक्तुमिष्टोऽस्ति रसाचार्यैः समुच्चयः ।।४।।

तैः सर्वैरेव रसिकाः सखीत्वाद्युञ्जते हितम् ।
असीमं प्रणयं नामेत्यत्र नैवास्ति संशयः ।।५।।

अन्तरा हितयोगं स्याद्रसास्वादो न कर्हिचित् ।
भावनाकल्पितैः साधारणीकृतिशतैरपि ।।६।।

यत्परात्मगतत्वेन रसास्वादेऽस्ति दूषणम् ।
साधारणीकरणतोऽपि स्यात्तदिति निश्चितम् ।।७।।

स्वस्यैव नायकत्वं स्यान्नायकस्याथ वा स्वता ।
इति स्वकीयतादोषस्तदवस्थो न किं बुधाः ।।८।।

नायिकायाः स्वप्रियात्वं सामान्यात्वं ब्रुवंस्तया ।
स मज्जत्यन्धतामिस्रे नीरसे न रसे पुनः ।।९।।

परकीयस्वकीयत्वे रसस्वादक्षणे स्वयम् ।
निवर्तेते विगलितज्ञेयान्तरतया यदि ।।१०।।

तदापि यदुदासीनानामप्येवं प्रमोददम् ।
तन्मामकीनस्यैवेदमित्याकलयतां न किम् ।।११।।

प्रत्युतैतद्रसोत्कर्षद्वारमेव भविष्यति ।
यावच्च मामकीनत्वं तावत्स्यात्सा रसस्थितिः ।।१२।।

मदीयतानुसन्धानधारा धावति सन्ततम् ।
अनन्यरसिका येन रसे माद्यन्त्यहर्निशम् ।।१३।।

इदं तद्धितमाहात्म्यं जानीयुश्चेत्सचेतसः ।
तदा किमिति मज्जेयू रसाभासेषु मोहिताः ।।१४।।

**हितस्य रसरूपता—**

वस्तुतस्तु हितं राधा हितं कृष्णो हितं रसः ।
हितं गुणा हितं धाम हितमेवाखिलं जगत् ।।१५।।

तस्यैव हिततत्त्वस्य विवर्तोऽयं विराजते ।
स्नेहानुरागप्रणयप्रेमभक्तिमयोऽद्भुतः ।।१६।।

हितेनैव धृता भावा हितेनैव च पोषिताः ।
ते भवन्ति हितादेव लीयन्ते च हिते ततः ।।१७।।

हितमेव श्रुतेरात्मा हितमेव श्रुतेः प्रियम् ।
हितमेव श्रुतेस्तत्त्वं हितमेव श्रुतेर्हितम् ।।१८।।

राध्यते प्रेयसा राधा प्रेयांसं राधयत्युत ।
राधाया इति राधात्वं हिततत्वान्न भिद्यते ।।१९।।

प्रेयस्या कृष्यते कृष्णः प्रेयसीमेष कर्षति ।
इति कृष्णस्य कृष्णत्त्वं हिततत्त्वं च नो पृथक् ।।२०।।

रसिकै रस्यमानस्य स्थायिनो रसतां जगुः ।
हिततत्त्वातिरिक्तं नो तद्रसत्वमिति स्फुटम् ।।२१।।

परस्परं निबध्नन्तो गुणाश्चेत्प्रिययोर्गुणाः ।
तदा गुणत्वमेकान्तं हिततत्त्वं विनिश्चितम् ।।२२।।

प्रेयांसो यद्दिदं धत्ते प्रेयोभ्यां धीयते च यत् ।
इति धाम्नोऽपि धामत्वं हिततत्त्वाविलक्षणम् ॥२३॥

सुखदुःखसमानत्वे सखित्वं व्यपदिश्यते ।
सखीजनस्तादृशोऽयं हिततत्त्वान्न रिच्यते ॥२४॥

पितरौ स्निह्यतः पुत्रे लघौ स्निह्यत्यथो गुरुः ।
हितार्थमेव तस्येति स्नेहो हितमयः स्मृतः ॥२५॥

अनुरज्यति यद्रागी सर्वस्वमपि संत्यजन् ।
रागास्पदहितायैवेत्यनुरागोऽपि तन्मयः ॥२३॥

स्वीकारणं स्वीकरणं प्रणयो द्विविधोऽप्ययम् ।
कर्तृकर्महितायैवेत्ययं हितमयः स्फुटः ॥२७॥

प्राणानप्यवधीर्योक्ता प्रेमप्रवणता पुनः ।
प्रेमपात्रहितायेति प्रेमा हितमयो मतः ॥२८॥

यस्यै साधनसम्पत्तिर्यस्यै रागानुगामिता ।
यस्यै च वैधरागोत्थभावोद्भावनमुच्यते ॥२६॥

सा भक्तिरास्थिता यस्मै, भुक्तये न च मुक्तये ।
तदेव हितमित्येषा भक्तिर्हितमयी स्थिता ॥३०॥

ध्रियते येन यद्वस्तु येन यद्वस्तु पोष्यते ।
तत्र सर्वत्र जागर्ति हितमेवेति नान्यथा ॥३१॥

हितबुद्ध्याखिलं वस्तु जन्यते हन्यतेऽथवा ।
हितं विना न पवनो वाति नास्तीर्यते नभः ॥३२॥

सर्वं कर्म हितायैव हितायैवास्त्युपासना ।
हिताय ज्ञानविज्ञानं हितायैवेहितं हितम् ॥३३॥

इतीदं हिततत्त्वस्य मनागेव निरूपणम् ।
रसमार्गोपयोगित्वात्कृतं न स्वैरभावतः ॥३४॥

इदं व्योम मिमीतेऽयं जनोऽप्यङ्गुलिमानतः ।
न त्वयं हिततत्त्वस्य कलांशमपि संस्पृशेत् ॥३५॥

वृन्दावनरसे प्रेमा स्थायी निष्पद्यते रसः ।
इत्युक्ते भावनादक्षा आचक्षीरन्नसङ्गतिम् ॥३६॥

वस्तुतो यो विभावेन द्विविधेन विभाव्यते ।
विविधैरनुभावैश्च वैविध्येनानुभाव्यते ॥३७॥

विशेषादभितो यश्च चार्यते व्यभिचारिभिः ।
स एव रसशास्त्रेषु स्थायिभावोऽनुशिष्यते ॥३८॥

तच्चेदमखिलं प्रेम्णि सङ्गतिं याति नो हिते ।
हितं ह्यनाद्यनन्तत्वान्नावृतं तैरुपाधिभिः ॥३९॥

परं वृन्दावनरसे हितेनैव विभावितः ।
विभावः केलिकुञ्जेषु केलीः श्रयति मञ्जुलाः ॥४०॥

हितेनैवानुभावश्च कश्चिदत्रानुभावितः ।
हितेन व्यभिचारी च विशेषेणाभिचारितः ॥४१॥

अनेन हितयोगेन स्थायितां प्रतिपद्य तत् ।
प्रेम निष्पद्यते सद्यो वृन्दावनरसो नवः ॥४२॥

किञ्च स्थायीति कथनात्क्वचिदस्थायितां श्रयेत् ।
वृन्दावने यथा प्रेम स्थायि चास्थायि तद्बहिः ॥४३॥

उदेति हितसूर्यस्तु सकृन्मनसि कस्यचित् ।
त्रितापहरणस्तत्र चाहोरात्रं प्रकाशते ॥४४॥

हितस्य व्यापकत्वेन वृन्दावनरसः पुनः ।
अनन्यरसिकेष्वास्तेऽनुकार्येऽप्यनुकर्तरि ॥४५॥

केचिज्जाग्रति काव्यादेः केचित्स्वप्नेऽनुचिन्तनात् ।
सुषुप्तावपि तं स्वात्मभावात्केचित्तु भुञ्जते ॥४६॥

इति न स्थायिभावाख्यां रसस्याख्यां विचक्षणाः ।
सर्वभावानुयोगित्वाद् योगं तु तदमानिषि ॥४७॥

अभाषिषि च योगस्य तस्य सम्यक्प्रकारताम् ।
समस्तयोगदुर्ग्राह्यरसग्राहितया बुधाः ॥४८॥

सत्यं वृन्दावनरजोधूसरीकृतविग्रहः ।
बालात्मा मान्यवृद्धानां वचनाङ्कानदूषयम् ।।४९।।

ते नूनं ममताक्रान्तस्वान्ता रुष्यन्ति नो मयि ।
वृन्दावनरजःस्पर्शाद्धन्त तुष्यन्ति मत्कृतात् ।।५०।।

धन्यास्तद्वचनश्रद्धाः शुद्धान्तःकरणा बुधाः ।
मामाक्षिपन्तु बहुशः कलिताकाण्डताण्डवम् ।।५१।।

तैः किलाक्षिप्यमाणश्चेद्वृन्दावनरजस्यहम् ।
विशेषेण लुठिष्यामि भविष्यामि तदा सुखी ।।५२।।

वृन्दावनरसज्ञानां यद्यनेन मनागपि ।
भविष्यति मनस्तोषः फलिष्यति तदा श्रमः ।।५३।।

रसकल्पतरोरस्य तद् भवेन्मधुरं फलम् ।
तेनैवामरचन्द्रोऽयं हितानन्दं गुरुं भजेत् ।।५४।।

(गुरुपूर्णिमा २००७)



श्रीहितराधावल्लभो विजयतेतराम् ।
श्रीहितहरिवंशचन्द्रो विजयतेतमाम् ।

# हितकल्पतरुः

## श्रीराधावल्लभीयसिद्धान्तकारिका

### प्रथमोऽध्यायः

सर्वार्थसाधिका कृष्णकन्दर्पोत्तापबाधिका ।
अगाधिका प्रेमसिन्धुर्हृदि स्फुरतु राधिका ॥

फलं ग्रहीतुकामस्य हितकल्पतरोरलम् ।
बालस्य मे सहायोऽस्तु हरिवंशः समुन्नतः ॥१॥

सम्यक् प्रदीयते यस्तु सम्प्रदायः स कथ्यते ।
प्रदाता च प्रदानञ्च प्रदेयं तत्र चिन्त्यते ॥२॥

प्रदातैव प्रमाता स्यात्, प्रदानञ्च प्रमाणकम् ।
प्रदेयं च प्रमेयं स्यात्, सम्प्रदायस्य चिन्तने ॥३॥

इदमेव त्रयं प्रायः सम्प्रदायप्रवर्तकैः ।
शङ्करादिभिराचार्यैः स्वस्वदृष्ट्या प्रभाषितम् ॥४॥

श्रीमद्भगवद्गीतासु प्रमाता परिकीर्तितः ।
एकादशोपनिषदां निचये च प्रमाणकम् ॥५॥

ब्रह्मसूत्रेषु निर्दिष्टं प्रमेयं तत्सयुक्तिकम् ।
श्रीमद्भागवतेऽप्येकैः प्रमेयं प्रतिपाद्यते ॥६॥

एतांस्त्रिचतुरान् ग्रन्थान् यथामति यथारुचि ।
व्याख्याय तैस्तैराचार्यैः सम्प्रदायाः प्रवर्तिताः ॥७॥

आचार्याणां मतिरुची उपाश्रित्य प्रवर्तनात् ।
ते सम्प्रदायास्तत्तेषामेव नाम्नात्र विश्रुताः ॥८॥

यत्र श्रीराधया स्वस्य वल्लभस्य च नित्यदा ।
सम्प्रयोगः सम्प्रदत्तः सम्प्रदायः स एव नः ॥९॥

श्रीराधया वल्लभस्य सम्प्रयुक्ततया वने ।
श्रीराधावल्लभीयेतिनाम्नेष्टस्य प्रकीर्त्यते ॥१०॥

कः प्रमाता, किं प्रमाणं, किं प्रमेयमिति क्रमात् ।
प्रश्नत्रयं सम्प्रदायेऽस्मिन्नपि प्रतितिष्ठति ॥११॥

यद्यप्येषां समस्तानां प्रश्नानामेकमुत्तरम् ।
अलं राधेति राधेति राधेति पारमार्थिकम् ॥१२॥

यतो ह्याद्यः प्रदाता वा प्रमाता वस्ति राधिका ।
प्रदानं वा प्रमाणं सा प्रदेयं वा प्रमेयकम् ॥१३॥

लोके प्रथमतः श्रीमानाचार्यः सन्नुपस्थितः ।
अतः प्राहुः प्रमातारं हरिवंशं प्रवर्तनात् ॥१४॥

प्रमाणं हरिवंशस्य वाणी, तदनुगाऽपरा ।
प्रमेयं हिततत्त्वं च, सर्वोऽन्योऽस्यैव विस्तरः ॥१५॥

तत्र प्रमातुर्व्याख्यानमाख्यानात्मकमुज्ज्वलम् ।
पृथगेव करिष्यामि श्रीमतश्चरितामृते ॥१६॥

**प्रमाणनिर्धारणम्**

अत्रोच्यते प्रमाणानां ग्राह्याग्राह्यत्वनिर्णयः ।
स्वतः श्रीहरिवंशस्य वाण्याः प्रामाण्यमप्युत ॥१७॥

इह प्रमेयभूतस्य हितत्त्वस्य मापकम् ।
यत्साधनं तदस्माकं प्रमाणं ग्राह्यमुत्तमम् ॥१८॥

भद्रं कर्णेभिरित्यादौ वेदे 'देवहितं' श्रुतम् ।
तदस्य हिततत्त्वस्यैकदेशस्याभिधायकम् ॥१९॥

"सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः ।
सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखभाग् भवेत् ॥२०॥"

इत्यादौ स्मर्यते या च सर्वभूतहिते रतिः ।
न सापि हिततत्त्वस्य कृत्स्नस्यास्त्यभिधायिनी ॥२१॥

श्रीमद्भागवते शास्त्रे गोपीप्रेमापि विश्रुतम् ।
हिततत्त्वच्छटामात्रं न व्याप्नोति हि तन्महत् ॥२२॥

श्रीमद्भागवतं यावद्धरिवंशानुमोदितम् ।
तावदेव प्रमाणत्वे ग्राह्यं श्रीहितधर्मिभिः ॥२३॥

श्रीमद्भागवतं शास्त्रं श्रीमद्राधासुधानिधिः ।
उभयं व्याससूनुभ्यां रसिकेभ्यः प्रकाशितम् ॥२४॥

भेदस्तु सुमहानत्रोभयत्र परिलक्ष्यते ।
अविरोधी ततो ग्राह्यः क्वचिद्भेदोऽपि भावुकैः ॥२५॥

आचार्यहरिवंशस्य वाणी नः प्रमिता स्वतः ।
अत एवात्र गीतादौ भाष्यादि न विधीयते ॥२६॥

आपीयापीय जलधेर्हरिवंशगिरः सुधाम् ।
ववृषुः केऽपि वर्षन्ति वर्षिष्यन्ति तथा परे ॥२७॥

श्रीमच्चतुरशीतौ वा श्रीमद्राधासुधानिधौ ।
स्फुटवाण्याश्च विद्वद्भी रसटीका अपीरिताः ॥२८॥

न वेदेषु न शास्त्रेषु पुराणेष्वपि भावुकैः ।
अनन्यरसिकैर्नेदं हिततत्त्वं गवेषितम् ॥२९॥

तुषावघातलब्धैर्वा तेभ्यो हितकणैरपि ।
कथन्नु शाम्यति क्षुत्तृड् वर्धमाना प्रतिक्षणम् ॥३०॥

अथवा हरिवंशाब्दे रसं वर्षति निर्भरम् ।
जलान्तरं कथं यामो वयं रसिकचातकाः ॥३१॥

विपद्भिः प्राज्यराज्योत्थविरोधाल्लब्धजन्मभिः ।
अभिभूता अपि वयं न प्रस्थानानि संश्रिताः ॥३२॥

वाणी श्रीहरिवंशस्य राधाकृष्णावलम्बिनीम् ।
प्रेमकाममयीं लीलां वर्णयन्ती विराजते ॥३३॥

अन्यैरपि स्ववाणीभिः सेयं लीलोपगीयते ।
किन्तु कृत्रिममुद्रेव साञ्जसा परिचीयते ॥३४॥

सम्बन्धः प्रतिपन्नोऽयं यः प्रमाणप्रमेययोः ।
स वाणीवर्ण्ययोस्तुल्योऽपि न तुल्यो विलोक्यते ॥३५॥

'सिद्धे शब्दार्थसम्बन्धे' वाणीवर्ण्यघनिष्ठता ।
यादृङ् निरूपिता तादृङ् न प्रमाणप्रमेययोः ॥३६॥

तादात्म्यं सम्मतं सर्वाचार्याणां नामनामिनोः ।
तदा कथन्नु वाणीतो वर्ण्यं तद् भेदितुं क्षमम् ॥३७॥

मनो वृन्दावने वाणी प्रेयांश्च प्रेयसी स्वयम् ।
रसनाकुञ्जपुञ्जेषु प्रेयांसौ क्रीडतोऽनिशम् ॥३८॥

ननु त्रीणि प्रमाणानि चत्वारि षडिमानि वा ।
श्रूयन्ते तेषु शास्त्रेषु न शब्दः केवलः क्वचित् ॥३९॥

प्रत्यक्षमनुमानञ्चोपमानं सर्वमेव नः ।
आचार्यहरिवंशाप्तवाणीपाणिस्थितं सदा ॥४०॥

विशिष्टरसरीतौ नः प्रमाणं हरिवंशगीः ।
सामान्ये भक्तिसिद्धान्ते श्रीमद्भागवतं पुनः ॥४१॥

'रसो वै स' इति प्रोक्तं नित्यकेलिरसं यदि ।
बोधयेत्तर्हि वेदोऽपि वन्द्यतां नतमूर्धभिः ॥४२॥

अयं हि वेदः सामान्यात्तमेवार्थमसूसुचत् ।
वाणी श्रीहरिवंशस्य विशेषाद्यं प्रभाषते ॥४३॥

वाणी श्रीहरिवंशस्य धत्तां वेदानुकूलताम् ।
किन्तु वेदानुरूपत्वान्न प्रामाण्यं स्वतस्तु तत् ॥४४॥

किं वा नस्तैः सुशास्त्रैः स्याद्यत्र राधा न गीयते ।
इति प्रमाणचिन्तायाः सारः सत्सु निवेदितः ॥४५॥

प्रमाणे चिन्तिते चिन्त्यं प्रमेयं भवति क्रमात् ।
दीपे प्रदीप्तेऽभीष्टस्य वस्तुनो दर्शनं यथाः ॥४६॥

आचार्यहरिवंशस्य वाणी दीपशिखेव नः ।
अखण्डस्नेहवृत्तिभ्यां ज्वलन्ती यददर्शयत् ॥४७॥

## द्वितीयोऽध्यायः

**प्रमेयचिन्ता**

प्रमेयं हिततत्त्वं तत्प्रेमाद्यपरनामकम् ।
उपासनासु सर्वत्र तन्माहात्म्यमुदीर्यते ॥४८॥

श्रवणादिनवोपाय्याऽभ्युपेयं प्रेम कथ्यते ।
किन्तु प्रेम्णापि तेनैके देवं स्वेष्टमुपासते ॥४९॥

प्रेमप्रेमिद्वये शक्तिशक्तिमद्रूपदर्शनम् ।
केषाञ्चिदिष्टमन्येषां पुनर्गुणगुणिस्थितिः ॥५०॥

गुणो गुणिन्यधीनः,स्याच्छक्तिः शक्तिमति ध्रुवम् ।
परन्तु प्रेमाधीनत्वं प्रभोः प्रायः प्रकीर्तितम् ॥५१॥

ननु प्रेम्णि प्रभुर्यद्वत् तद्वत्प्रेम प्रभौ स्थितम् ।
परस्पराधीनतेयं न दोषाय प्रकल्पताम् ॥५२॥

सत्यं, परं प्रभोः प्रेमाधीनत्वं श्रूयते यथा ।
तथा प्रभावधीनत्वं प्रेम्णः क्वचन न श्रुतम् ॥५३॥

यत्तु प्रीतः प्रभुः प्रेम प्रददाति प्रतापवान् ।
तदपि प्रेमबद्धः सन् व्यञ्जयन् प्रेम्ण्यधीनताम् ॥५४॥

प्रेमाधीनेन भक्तेन प्रेमाधीनः प्रभुः कृतः ।
प्रेमाधीनेन प्रभुणा प्रेमपीनो जनः कृतः ॥५५॥

इति भक्ते भगवति द्वये प्रेमप्रगल्भताम् ।
प्रेक्ष्य श्रीहरिवंशेन प्रेमतत्त्वं प्रकाशितम् ॥५६॥

प्रेमैव भक्तो भजनात् प्रेमैव भगवान् स्वयम् ।
प्रेमैव भक्तिरित्युक्ता प्रेमतत्त्व–प्रधानता ॥५७॥

नानानामानि रूपाणि धारयित्वा तदद्भुतम् ।
परिक्रीडति प्रेमैव ज्ञानं ज्ञेयं स्वयं भवत् ॥५८॥

आत्मनः खलु कामाय भवेत्सर्वं प्रियं नृणाम् ।
इत्यात्मापि प्रेमरूपः परमात्मापि तादृशः ॥५९॥

राधा प्रेमस्वरूपा सा प्रेमरूपश्च वल्लभः ।
प्रेमरूपस्तथा मन्त्रः सज्जा प्रेमस्वरूपिणी ॥६०॥

राधायाः प्रेमरूपायाः प्रेममन्त्रमुपेयिवान् ।
हरिवंशो गुरुतया प्रेम्णो दर्शनमाचरत् ॥६१॥

तस्य प्रेमगुरोश्चायं 'हित' मित्यभिधां व्यधात् ।
यस्यार्थोऽन्यसुखाकाङ्क्षि परं प्रेमेति कथ्यते ॥६२॥

हितमेव गुरुर्यस्य हितमेवेष्टदेवता ।
अनन्यरसिकाचार्यो हरिवंशः स नो गुरुः ॥६३॥

इष्टदेवे निरीक्षन्तामितरे गुरुमात्मनः ।
श्रीराधावल्लभीयास्तु गुरौ देवं विचक्ष्महे ॥६४॥

गुरोर्भजनविक्रान्तेर्महिमानं महात्मना ।
गायता हरिवंशेन गुरुभक्ता वयं कृताः ॥६५॥

प्रेमलक्ष्मीरमन्देति श्लोकादौ प्रेमरूपताम् ।
प्रतिपाद्य च राधायाः, प्रेमोपास्तिः प्रशासिता ॥६६॥

प्रेमोपास्तौ परन्त्वस्यां लौकिकं प्रेम लङ्घ्यत् ।
वर्तते सर्वतो दूरे प्रेम सर्वत्र सन्ततम् ॥६७॥

ननु लौकिकवत्सर्वे भावा अस्मिन्नपि स्थिताः ।
लौकिक्या परिपाट्या च क्रियतेऽस्यापि वर्णनम् ॥६८॥

तत्कथं तदिदं प्रेम दूरे वर्तेत सर्वतः ।
दूरे च वर्तमानं सत्सन्ततं तत्कथन्तराम् ॥६९॥

इति चेत्सत्यमेवास्मिन् भावाः केचन लौकिकाः ।
अलौकिकास्तु बहवः प्रथयन्त्यस्य शुद्धताम् ॥७०॥

भेदेऽप्यभेदं पश्यन्ति जीवात्मपरमात्मनोः ।
तथा वयं प्रपश्यामोऽभेदं प्रेम्णोरिदन्तयोः ॥७१॥

ब्रह्मवद्धि प्रेमतत्त्वं परात्परमिदं मतम् ।
अखण्डमद्वयं शुद्धं हरिवंशस्य दर्शने ॥७२॥

प्रेम सम्बन्धमात्रं तत् सम्बन्धश्च सदा द्विगः ।
द्वाभ्यां हि समवेताभ्यां प्रेम्णः पन्थाः प्रदर्श्यते ॥७३॥

द्वाभ्यां प्रदर्शितोऽप्येष एकः प्रेमपथोऽद्वयः ।
प्रेमी च प्रेमपात्रं च द्वे स्तां, प्रेम तदेककम् ॥७४॥

त्रयाणामेव योगेऽसौ प्रेमा कृत्स्नस्वरूपभाक् ।
भूत्वा प्रकाशते साम्यात् प्रत्येकस्मिन् समास्थितः ॥७५॥

प्रेमिणि प्रेम्णि चैतावानेव भेदः प्रकीर्तितः ।
यावांस्त्रिंशतौ चात्र षष्टौ च परिदृश्यते ॥७६॥

लौकिकं प्रेम नैकाभिर्विधाभिर्बहिरावृतम् ।
अन्यस्येहान्यवद् भाति न विशुद्धं प्रकाशते ॥७७॥

अलौकिके पुनः प्रेम्णि जाड्यमान्द्यादि दूरयन् ।
उपासको विशुद्धं तत्स्वरूपं द्रष्टुमर्हति ॥७८॥

अत्र प्रेमी प्रेमपात्रं प्रेम चेति त्रयं बुधाः ।
अद्वैतस्य प्रेम्ण एव प्रकारांस्त्रीन् प्रचक्षते ॥७९॥

श्रीराधावल्लभीयाश्च त्रयाणामपि सङ्गमे ।
पश्यन्त्यन्यसुखाकाङ्क्षि परप्रेमात्मकं हितम् ॥८०॥

हितस्य वृत्तयस्तिस्रो भोक्तृभोग्यप्रयोजकाः ।
प्रेम भोक्ता, प्रेमपात्रं भोग्यं, प्रेमा प्रयोजकः । ८१।

प्रयोजकं तं प्रेमाणं व्यनक्ति रतिरेतयोः ।
स भोक्तृभोग्ययोः सन्धौ 'हितसन्धि'रितीर्यते ॥८२॥

अद्वयब्रह्मणस्त्रैधात्मकत्वं ववतुकामया।
भोक्ता भोग्यं प्रेरितारञ्चेति श्रुत्यापि भाषितम् ॥८३॥

तत्र जीवस्य भोक्तृत्वं, भोग्यत्वं जगतः पुनः ।
प्रेरितृत्वं चेश्वरस्य विद्विद्भिरभिभाष्यते ॥८४॥

किन्तु भोक्तृत्वभोग्यत्वप्रेरितृत्वानि वस्तुतः ।
प्रेम्णि स्वां स्वां प्रकाशन्ते परमानन्दरूपताम् ॥८५॥

प्रेम्णो हि भोक्ता भोग्यं च स्वतन्त्रेऽपि स्वरूपतः ।
परस्परमधीनत्वं निर्वहातेऽनुरोधतः ॥८६॥

प्रेरिता चानयोः प्रेमा दासो भवति वा सखा ।
न प्रभुर्भवतीत्यत्र स्थिता तदनुकूलता ॥८७॥

नानानामसु रूपेषु भावेषु च परात्परः ।
प्रकटो भवति प्रेमा ज्ञेयरूपेण केवलम् ॥८८॥

भोक्तृभोग्यप्रेरकात्मा शुद्धा च सहजा स्थितिः ।
तस्य प्रेम्णो ध्येयरूपं निरूपयति शाश्वतम् ॥८९॥

अस्य प्रेम्णो नामरूपे सहजे परिकीर्तिते ।
कृत्रिमादन्यदेवेदं क्रियया निर्वृतं नहि ॥९०॥

नाम स्मरन्ति मुनयो भगवद्रूपदृष्टये ।
वयन्तु रूपमालोक्य प्रेम्णो नाम श्रयामहे ॥९१॥

अभिलाषामयं प्रेम भोक्ता-श्यामः स्वरूपतः ।
उदारं प्रेम भोग्यं तद् गौरमेव स्वभावतः ॥९२॥

येन येन स्वरूपेणावतीर्णं प्रेम भूतले ।
तेषु सर्वेषु जयति श्रीराधाकृष्णरूपता ॥९३॥

अतः स भोक्तृप्रेमाऽत्र नन्दनन्दनसंज्ञया ।
वृषभानुसुताह्वेन भोग्यप्रेम च विश्रुतम् ॥९४॥

प्रेरकं प्रेम च तयोर्हितसन्धिरितीरितम् ।
जाड्यं वृन्दावनं तस्य, चापलञ्च सखीजनः ॥९५॥

प्रेरकस्यास्य जडिमा क्वचिच्चपलिमा पृथक् ।
क्वचिच्च मिलितौ भूत्वा कुर्वाते प्रेरणां तयोः ॥९६॥

भोक्तुर्भोग्यस्य यः सन्धि'हितसन्धि'रिति स्मृतः ।
तत्र सन्धौ श्यामगौरं द्वयं रूपं विराजते ॥९७॥

इत्थमेकं हितं नन्द-नन्दनो वृषभानुजा ।
सखीजनस्तथा वृन्दा-वनं भूत्वाऽत्र शोभते ॥९८॥

भोक्तृभोग्यप्रेरकेति त्रिविधस्य हितस्य च ।
सदोज्ज्वलरसा क्रीडा याति 'नित्यविहार'ताम् ॥९९॥

रसो नित्यविहारोऽयं हितस्यैव हितैषणात् ।
उद्भूतमद्भुतं किञ्चिद्वैभवं कौतुकोज्ज्वलम् ॥१००॥

हितखेलं हितक्षेत्रे हितमेवात्र खेलति ।
रसो नित्यविहारोऽसौ हितवाणीषु वेल्लति ॥१०१॥

अद्य प्रभातेऽद्य वनेऽद्य निकुञ्जेऽद्य नागरी ।
अद्य मत्कथनेनाद्य पश्येत्यादिषु यन्मुहुः ॥१०२॥

श्रीमच्चतुरशीतिस्थपद्येष्वद्येति गीयते ।
तद् वर्तमानतामेव विहारस्य प्रभाषितुम्॥१०३॥

अनादिरेषाऽनन्ता च लीला प्रेमात्मनः प्रभोः ।
प्रभुस्वरूपप्रेम्णोऽपि लीला ज्ञेयात्र तादृशी ।।१०४।।

परन्तु हितलीलेयं नित्यमारम्भशालिनी ।
इत्यनादिरिति प्रोक्ता हितं यन्नित्यनूतनम् ।।१०५।।

क्षणे क्षणे-नूतनत्वात्प्रेमा याति प्रवाहताम् ।
प्रेमप्रवाहश्चानादिरनन्तश्च प्रवर्तते ।।१०६।।

अभिव्यनक्ति सौन्दर्यं विहारो नित्यनूतनः ।
क्षणे क्षणे हि नवता रामणीयकलक्षणम् ।।१०७।।

नवः स्नेहो नवः श्यामो नवा राधा नवो रसः ।
नवं पीताम्बरं नीलाञ्चलं नवममी कणाः ।।१०८।।

नवा, वृन्दावनं नव्यं नवाश्चातकबर्हिणाः ।
नवो वेणुर्नवो रङ्गो मल्लारस्य नवा गतिः ।।१०९।।

नवा भूषा नवो वेषो नृत्ये चारभटी नवा ।
सर्वं सदा नवं पश्यन्त्याली प्राह शुभाशिषम् ।।११०।।

"चिरञ्जीवत्विद द्वन्द्वं वृन्दावनमहीतले ।
वितन्वत्परमानन्दमन्योन्यस्मिन् सखीजने ।।१११।।"

नित्यं विहरतादेतद् द्वन्द्वमाद्यन्तवर्जितम् ।
परस्परं पर्यचिनोन्नाद्यापीति नवं नवम् ।।११२।।

हितमेकं विना द्वन्द्वं विवशं न प्रकाशते ।
द्वन्द्वीभूय प्राप्तसंज्ञं चैतन्यमुपधावति ।।११३।।

वैवश्ये वाथ वैचित्त्ये विस्मरेत् स्वकलेवरम् ।
व्यक्ते नित्यविहारे तु तदेकं द्वित्वमश्नुते ।।११४।।

भोक्तुर्भोग्यस्य चान्योन्यरतिः सम्मिलिता सती ।
अद्वयं हितभावं सा प्राप्नोतीति प्रकाशितम् ।।११५।।

सा चात्र हितसन्धिर्वा सखी वा प्रेरकं हितम् ।
भोक्तृभोग्यं मिथो मग्नदशायां व्याकुलीभवेत् ।।११६।।

तदैकप्राणकं देहद्वयमद्वयमानसात् ।
उत्थितं प्रतिभातीह पद्मभृङ्गस्वरूपतः ।।११७।।

गौरवर्णं प्रियापद्मं प्रियभृङ्गः शितद्युतिः ।
पूर्वं भोग्यं परो भोक्तेति वर्णाभ्यां प्रकाशते ।।११८।।

श्रीराधामाधवौ चेमौ सदाव्यक्तौ सनातनौ ।
इति ज्ञापयितुं व्यक्तावद्येति पदमुद्धृतम् ।।११९।।

'अद्यानन्दो नन्दद्वारे' इतिवर्धापनश्रुतौ ।
अद्येति विद्यमानार्थो नित्यव्यक्तिमुदीरयेत् ।।१२०।।

विहार इव जन्मापि राधामाधवयोः सदा ।
वर्तमानेन कालेन वर्णितत्वात् सनातनम् ।।१२१।।

अजन्मनोस्तु जन्मेदं नित्यारम्भस्य वाचकम् ।
पौराणिकं हिताचार्यैः स्वरूपमुररीकृतम् ।।१२२।।

अनन्यरसभक्त्यर्थमपेक्षितमिहैनयोः ।
पौराणिकं हिताचार्यैः स्वरूपमुररीकृतम् ।।१२३।।

किन्तु नानावताराणां भजने न प्रकाशते ।
तथा प्रीतिर्यथा कृष्णे चित्तमाकर्षतीह सा ।।१२४।।

व्रजेन्दनन्दनेऽप्यस्मिन्नानालीलाप्रपञ्चनम् ।
प्रतिभातीव भव्यानां केवलं चित्तवञ्चनम् ।।१२५।।

इति श्रीहरिवंशीया रसरीतिः प्रतीतिगा ।
हरते हृदयन्तेषां हरिवंशीरिता तथा ।।१२६।।

हरिवंशी पुरा यैव प्रमदास्ता अमूमुहत् ।
अद्यास्मान्निर्मदान् सैव हरिवंशोऽन्वमूमुहत् ।।१२७।।

अनङ्गवर्धनं श्रुत्वा हरिवंशीयगीतकम् ।
व्रजाङ्गना गतास्तत्र, वयमत्रागताः परम् ।।१२८।।

कं भजामः क्व गच्छामो मनो न लगति क्वचित् ।
अन्तर्यामिणि न प्रेम, प्रेम हि प्रकटागमम् ।।१२९।।

बहिर्यामिनि चादर्शि याशोदेयेऽखिलं जगत् ।
तस्मादपासरत्प्रीतिर्वत्सलाख्या परेश्वरात् ।।१३०।।

इयमेव दशा तासां प्रीतीनां परिलक्षिता ।
नाऽऽसन् या हरिवंशीजा हरिवंशेन रक्षिताः ।।१३१।।

हरिवंशीजनितया प्रीत्या गोप्यः कृतार्थिताः ।
तस्यामेकरसायां हि नैवास्त्यन्यरसस्पृशा ।।१३२।।

किशोरयो रासलीला, कैशोरे प्रेम नूतनम् ।
इति श्रीहरिवंशेन स्वोपास्तिस्तत्र केन्द्रिता ॥१३३॥

प्रकटाऽप्रकटा चेति लीला पौराणिकी द्विधा ।
प्रेमाश्रिता तु प्रकटाऽप्रकटा प्रभुताश्रिता ॥१३४॥

प्रेम गुप्तीकृतं यत्नादपि प्रकटतां व्रजेत् ।
को नु कस्तूरिकामोदं शपथैरपलापयेत् ॥१३५॥

स्तोकं लोकगतं प्रेम यदा गुप्तं न तिष्ठति ।
तदा महिष्ठं दिव्यं तत्को नु गुप्तीकरिष्यति ॥१३६॥

हितोपास्तौ रसोपास्तौ वाऽस्यां नानाहितात्मनाम् ।
प्राकट्यं हितनाम्नैव समाम्नातं महात्मभिः ॥१३७॥

नामिनि प्रकटं नाम, नाम्नि नामी च गोचरः ।
कथन्तु नामप्राकट्ये, नामी स्यत्प्रकटेतरः ॥१३८॥

श्रीराधावल्लभीयाध्वा श्यामाश्यामादिनामसु ।
गुणेष्वौदार्यदैन्यादिष्वपि पश्यति तौ स्फुटौ ॥१३९॥

न तावेव स्फुटौ लीला अपि स्युः प्रकटास्तयोः ।
भक्तास्यनिर्गतं नाम भासयत्येव नामिनम् ॥१४०॥

नामवाणोनिकटतो भावप्रीतिवशङ्गतौ ।
श्यामाश्यामौ प्रकटतोऽहर्निशं सम्मुखे स्थितौ ॥१४१॥

रससिन्धोः समुत्था हि चन्द्राश्चत्वार उज्ज्वला ।
श्रीराधा, माधवश्चालीजनो वृन्दावनन्तथा ॥१४२॥

नाम्नः प्रकटिता एते नाम चैभ्यः प्रकाशितम् ।
यन्नामनामिनोर्न्यायो बीजवृक्षसमो मतः ॥१४३॥

नन्वेतस्याश्चतुश्चन्द्रया येयं प्रकटता मता ।
सा नूनमवताराणां प्राकट्यात् स्याद्विलक्षणा ॥१४४॥

अवतारा हि तत्कालं सर्वेषामक्षिगोचराः ।
भवन्त्येषा तु लोकानामवाङ्मनसगोचरः ॥१४५॥

अत्रोच्यतेऽवताराणामपि नैवास्ति दर्शनम् ।
अवजानन्ति तान् मूढा मानुषीं तनुमाश्रितान् ॥१४६॥

स्वर्गकामा अहो विप्रा बालिशा वृद्धमानिनः ।
अवमत्यः हरेराज्ञां गोपेभ्योऽन्नं न ते ददुः ।।१४७।।

अतः प्रकटता सेयं द्रष्टुर्दृष्टिमपेक्षते ।
प्रेम्णः प्रकटतायां हि प्रमाणं प्रेमिणां मनः ।।१४८।।

स्वे स्वे नाम्नि प्रकटितं हितरूपचतुष्टयम् ।
हितनाम्नि च तत्तद्वद् 'हरिवंशे'तिनाम्न्यपि ।।१४९।।

हितस्वरूपः स श्रीमान् हरिवंशोऽपि चात्मनः ।
प्रकटः प्रतिभात्येव तस्मिन् रूपचतुष्टये ।।१५०।।

हरिवंशस्य वाणीषु सर्वास्वेवानुशीलनात् ।
प्रत्यक्षीक्रियतेऽस्यात्मप्रीतिवैभवविस्तरः ।।१५१।।

यस्य नित्यविहारस्य ऋषिरेष द्विजोत्तमः ।
सोऽप्येतस्य स्वरूपान्नो भिद्यमानो निरूप्यते ।।१५२।।

उपास्योपासकत्वाभ्यां द्वाभ्यामपिहितं हितम् ।
उपासकस्य भोक्तृत्वे चाश्रितत्वे च बुध्यते ।।१५३।।

तथोपास्यस्य भोग्यत्वे चाश्रयत्वेऽपि गोचरः ।
भवत्येवोपास्य'राधा'पादप्राधान्यतो हितम् ।।१५४।।

सुखधाम श्याममन्ये श्रयन्ते स इहाश्रितः ।
तस्याश्रयस्तु राधेयमिति राधाप्रधानता ।।१५५।।

'आधाराधार' इत्यत्र यो राधानामसंश्रवः ।
'अधिकाराधिकारे' तिपदे या राधिकाश्रुतिः ।।१५६।।

स संश्रवः सा श्रुतिश्च व्यक्तं कथयतीह नः ।
पराधिकारपरमाधारत्वे भोग्यसङ्गते ।।१५७।।

सर्वाधारस्तथा सर्वाधिकारः श्यामसुन्दरः ।
तस्याधारोऽधिकारश्च श्रीराधा राधिका स्वतः ।।१५८।।

हितात्मा हरिवंशोऽत्राविर्भूतः सन्नुपासकः ।
स्वमेवोपास्यरूपञ्चोपासानञ्च स लक्षितः ।।१५९।।

रसस्य रसिकानाञ्च स आधारः प्रकीर्तितः ।
अथास्य हितधर्मोऽपि सर्वसाध्यतया स्मृतः ।।१६०।।

'यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ।'
पालयन्त इमामाज्ञां श्रीश्वेताश्वतरश्रुतेः ॥१६१॥

बहवो वैष्णवा लोके गुरुं हरिवदार्चयन् ।
अन्ये त्विष्टाददतितरां गुरवे गौरवं ददुः ॥१६२॥

गौडीयाः श्यामवद् गौरचैतन्यमप्युपासते ।
लीला धामादिकं सर्वमुभयोश्च भजन्त्यमी ॥१६३॥

किन्तु क्वचित्सम्प्रदाये सिद्धान्तानां विनिर्णयः ।
संस्थापकस्वरूपेण सङ्गतो न विलोक्यते ॥१६४॥

श्रीराधावल्लभीयास्तु श्यामाश्यामस्थकेलिषु ।
आचार्यहरिवंशस्य केलीः पश्यन्ति सादरम् ॥१६५॥

तत्राद्वयं हितं भोक्ता भोग्यश्च प्रेरको भवत् ।
नित्यं प्रकटरूपेण निर्व्रीडं क्रीडति ध्रुवम् ॥१६६॥

परस्माद् भवति व्रीडा न परस्त्विह, कश्चन ।
हरिवंशः स्वयं सर्वं 'हरिवंशं श्रयामहे' ॥१६७॥

हिततत्त्वं तदेवेदं हरेर्वंश्यभवत्पुरा ।
अधुना कार्यवैशिष्ट्याद् 'हरिवंशः' पुमानभूत् ॥१६८॥

हितमद्वयमित्युक्ते हरिवंशोऽद्वयः स्थितः ।
हो हरी रिश्च राधा, वं, वनं शश्च सखीजनः ॥१६९॥

राध्यते प्रेयसा राधा, प्रेयांसं राधयत्यसौ ।
राधाया इति राधात्वं हिततत्त्वान्न भिद्यते ॥१७०॥

प्रेयस्याकृष्यते कृष्णः प्रेयसीमेष कर्षति ।
इति कृष्णस्य कृष्णत्वं हिततत्त्वं च नो पृथक् ॥१७१॥

परस्परं निबध्नन्तो गुणाश्चेत्प्रिययोर्गुणाः ।
तदा गुणत्वमेकान्तं हिततत्त्वं विनिश्चितम् ॥१७२॥

प्रेयांसौ यदिदं धत्ते प्रेयोभ्यां धीयते च यत् ।
इति धाम्नोऽपि धामत्वं हिततत्त्वाविलक्षणम् ॥१७३॥

सुखदुःखसमानत्वे सखित्वं व्यपदिश्यते ।
सखीजनस्तादृशोऽयं हिततत्त्वान्न रिच्यते ॥१७४॥

इत्याद्यैः किल राधादिस्वरूपाणां हितात्मता ।
रसकल्पतरौ पूर्वं मयाऽस्ति प्रतिपादिता ।।१७५।।

## तृतीयोऽध्यायः

### हितस्य रसरूपता

प्रेमोपास्तिर्हितोपास्तिररिति नार्थान्तरं ततः ।
हितोपास्ती रसोपास्तिः कथं स्यादिति कथ्यते ।।१७६।।

प्रश्नमेतं समाधातुं, हितस्य रसरूपताम् ।
समाम्नातुन्तथाध्यायं, तृतीयन्त्वारभामहे ।।१७७।।

प्रेमैवान्यसुखाकाङ्क्षि परप्रेमात्मना हितम् ।
हिताचार्यैरभिहितं तन्न प्रेम्णि हिते भिदा ।।१७८।।

प्रेमोपास्तिर्हितोपास्ती रसोपास्तरिति त्रिभिः ।
नामधेयैरेकमेवाभिधेयं, वा पृथक् पृथक् ? ।।१७९।।

हितमन्यसुखाकाङ्क्षि नित्यं क्रीडासु तत्परम् ।
अनन्तभावैश्चानन्तरूपैः क्रीडत्यहर्निशम् ।।१८०।।

क्रीडावैचित्र्यमालोच्य हिततत्त्वस्य पण्डितैः ।
दास्यं सख्यञ्च वात्सल्यं माधुर्यञ्च रसाः कृताः ।।१८१।।

किन्तु नैतेषु कस्मिंश्चित्कृत्स्नं सन्निहितं हितम् ।
रसे तत्त्वेति तत्त्वेन परिपाकं किलोज्ज्वले ।।१८२।।

शृङ्गारः शुचिरित्याख्याप्रथितः सोज्ज्वलोरसः ।
भरतादिभिराचार्यैं रसराजतया स्मृतः ।।१८३।।

उज्ज्वलेऽस्मिन् रतिः स्थायी, वृत्तिः सा मौलिकी नृणाम् ।
आत्मनीव विवर्तानां रसानामत्र संस्थितिः ।।१८४।।

गौडीयेष्वपि शान्ताद्याः पञ्च भक्तिरसाः किल ।
श्रीकृष्णविषयायास्ते परिणामा रतेर्मताः ।।१८५।।

इत्थमत्रैष निष्कर्षः स्वोत्कर्षमनुकर्षति ।
सदैव स्वाद्यते नानारसेषु प्रेम वा रतिः ।।१८६।।

सेयं रतिः स्याल्लोके वा काव्ये वा भक्तमानसे ।
तत्र लोकरतिः काव्ये प्रयाति रसरूपताम् ।।१८७।।

अहो काव्यस्य महिमा यज्जुगुप्सादिकारिका ।
लौकिकी रतिरेवात्र प्रयाति रसनीयताम् ।।१८८।।

लौकेषु कारणं कार्यं सहकारि च यद्रतेः ।
काव्येषु तद्विभावश्चानुभावो व्यभिचार्यपि ॥१८९॥

विभावस्यानुभावस्य तथा च व्यभिचारिणः ।
संयोगाद्रसनिष्पत्तिरित्याह भरतो मुनिः ॥१९०॥

साहित्याचार्यवर्गेण किल काव्यगतं रसम् ।
विवेचयितुमस्यैव वचनस्याश्रयो धृतः ॥१९१॥

"कारणान्यथ कार्याणि सहकारीणि यानि च ।
रत्यादेः स्थायिनोलोके तानि चेन्नाटचकाव्ययोः ॥१९२॥

विभावाअनुभावाश्च कथ्यन्ते व्यभिचारिणः ।
व्यक्तः सतैर्विभावाद्यैः स्थायी भावो रसः स्मृतः ॥१९३॥"

"सत्त्वोद्रेकादखण्डस्वप्रकाशानन्दचिन्मयः ।
वेद्यान्तरस्पर्शशून्यो ब्रह्मास्वादसहोदरः ॥१९४॥"

"लोकोत्तरचमत्कारप्राणः कैश्चित्प्रमातृभिः ।
स्वाकारवदभिन्नत्वेनायमास्वाद्यते रसः ॥१९५॥"

रसः सहृदयैः काव्यरसज्ञैरनुभूयते ।
इत्युक्त्वानुभवैस्तेषां प्रमाणीकृत्य वर्णितः ॥१९६॥

किन्तु नित्यतयोक्तस्य तस्य संवेदनक्षणात् ।
पृथक् सत्तैव नास्तीति क्व स्थिता तस्य नित्यता ॥१९७॥

अहा कथं स्वप्रकाशोऽखण्डोप्येष च चिन्मयः ।
रसो न नित्यस्तत्रास्ते कारणं तस्य कार्यता ॥१९८॥

विभावनादिपदभाग् व्यापारः कोऽपि त रसम् ।
निवर्तयति तेनायं कृत्रिमो भवति ध्रुवम् ॥१९९॥

नियतेर्नियमैर्हीनामेकाह्लादमयीं कृतिम् ।
रसै रम्यां हि बिभ्राणा राजते कविभारती ॥२००॥

कृत्यानया कृत्रिमत्वं नीतस्य कविकर्मणः ।
आत्माऽपि कृत्रिमोपायैः कृत्रिमत्वमुपेयिवान् ॥२०१॥

लौकिकीं व्यक्तिगां कृत्वाऽलौकिकीं विश्वगां रतिम् ।
तस्यान्तु कवयो बभ्रुः कृत्रिमत्वादनित्यताम् ॥२०२॥

इति लोके तथा काव्ये दर्शितास्ति रतेर्दशा
भक्तमानसगामेतां वीक्षन्तां भावुका रतिम् ॥२०३॥

"रसो वै स," "रसं ह्येव लब्ध्वानन्दी भवत्ययम् ।
कः प्राण्यादथ को वाऽन्यादात्माऽऽनन्दो न चेदयम् ॥२०४॥

इत्यादि तैत्तिरीयायां श्रुतौ या परमात्मनः ।
रसस्वरूपता प्रोक्ता भक्तमानसगैव सा ॥२०५॥

अखण्डरसमूर्तिं हि भक्ताः पश्यन्ति तं प्रभुम् ।
स नित्योऽनाद्यनन्तत्वाद् भक्तानां सुलभोऽनिशम् ॥२०६॥

श्रुतावस्यां परं तत्त्वं रसरूपतया श्रुतम् ।
परन्तु रसरूपत्वसिद्धिः कुत्रापि न श्रुता ॥२०७॥

श्रीमद्भागवतादौ च पुराणेऽपि न वर्ण्यते ।
केवलं स्मर्यते किञ्चदाग्नेये भरतादिवत् ॥२०८॥

कृष्णभक्तिप्रवाहे तु पूरेणोच्छलिते स्फुटम् ।
ऊहापोहा रसेऽप्यस्मिन्विद्वद्भिर्बहवः कृताः ॥२०९॥

भरतस्य मुनेः शैलीं श्रीरूपेण वितन्वता ।
निरूपितो भक्तिरसो हरिभक्तिरसामृते ॥२१०॥

श्रीजीवः प्रीतिसन्दर्भे परिष्कारं तमैरयत् ।
साधारणीकृतिस्तत्र ग्रन्थे नास्त्युररीकृता ॥२११॥

इत्थं निवारिता भक्तौ भक्तैः साधारणीकृतिः ।
अनुभूतेः परं हेत्वादिकं भक्तावपि श्रितम् ॥२१२॥

भावकत्वं भोजकत्वं यतनद्वयमिष्यते ।
पूर्वं विभावादिकृतौ परं साधारणीकृतौ ॥२१३॥

तत्र भक्तिरसाचार्यैः परो यत्नो निवारितः ।
समानवासनत्वाद्धि भक्ता भक्तस्थितौ स्थिताः ॥२१४॥

किन्तु पूर्वेण यत्नेन कारणादीन् विभाव्य ते ।
विभावादीन् विधायासन् निमग्नाः कृत्रिमे रसे ॥२१५॥

काव्ये किलाभ्यां यत्नाभ्यामनुकार्यगता रतिः ।
अनुकर्तृगतत्वेनानुभूतापि न रस्यते ॥२१६॥

सामाजिकानां हृद्येव हृद्येयं या विराजते ।
सैवानुकर्तृयत्नेन व्यक्तेति रसनीयताम् ॥२१७॥

अनुकार्यो यदि रसं स्वरतेः स्वदते क्वचित् ।
लौकिकत्वाद्रसे तस्मिन्न काव्यरसता भवेत् ॥२१८॥

परन्त्वयं भक्तिरसो द्विनिष्ठः परिकीर्तितः ।
अनुकार्यगतश्चैव सामाजिकगतस्तथा ॥२१९॥

भगवान् रसरूपोऽयं यं स प्रेमरसं पिबेत् ।
तस्य रत्यादिहेतूनां रूपं न परिवर्तते ॥२२०॥

अतोऽयं भगवत्प्रेमा भरतोक्तदिशा क्वचित् ।
कथञ्चिदपि नाप्नोति काव्यवद् रसरूपताम् ॥२२१॥

भक्तेः स भगवान् काव्ये भवेदालम्बनं परम् ।
अयं काव्यरसो यायाद्वै सामाजिकनिष्ठताम् ॥२२२॥

इति काव्ये रसस्यास्य भगवन्निष्ठता क्वचित् ।
न शक्यते साधयितुं तस्य लीला हि लोकवत् ॥२२३॥

लोकवद् गोकुलेऽप्यास्ते वात्सल्याख्या रतिर्यथा ।
तस्याश्च कारणं बालान्तरवद् भगवांस्तथा ॥२२४॥

इयं लोकरतौ भगवद्रतौ चास्ति समानता ।
सहजे ह्युभये एते सर्वाप्यन्याऽसमानता ॥२२५॥

भगवान् रसरूपोऽपि रसयत्येव तं रसम् ।
तत्तदीयो रसो लोकरसेभ्यो भिद्यतेतराम् ॥२२६॥

लोके काव्ये च पात्राणां सीम-यत्नोपवेष्टनात् ।
रसस्य स्फुरणं द्वित्रान् क्षणानपि न तिष्ठति ॥२२७॥

भक्तमानसगे पात्रमसीमं भगवान् स्वयम् ।
इति तस्य रसस्यास्ति स्फूर्तिर्विभ्वी च शाश्वती ॥२२८॥

शाश्वत्याश्च रसस्फूर्तेः परा का स्यात्सुखस्थितिः ।
तस्मादेतां रसस्फूर्तिं भगवद्रूपिणीं विदुः ॥२२९॥

अपारिमित्याद्दिव्यत्वादन्तरायविवर्जनात् ।
सरसं हृदयं श्वश्वद्रसं रसयितुं क्षमम् ॥२३०॥

भरतादिभिराचार्यैः काव्यात्मरसदर्शने ।
'रसो वै स' इति श्रुत्या न रसोऽसौ प्रमाणितः ॥२३१॥

भरतादिदिशं श्रित्वा परिष्कृत्य च लेशतः ।
अपि भक्तिरसाचार्यैः श्रुतिरेषा न भाषिता ॥२३२॥

पण्डितेन्द्रो जगन्नाथः काव्यात्मरसलक्षणे ।
उभयोरप्यभेदाय श्रुतिमेतामुदाहरत् ॥२३३॥

"चिद्विशिष्टा न रत्यादिवासना स्यादयं रसः ।
रत्यादिवासनायुक्ता चिदेव रस उच्यते ॥२३४॥"

इति चास्या विवरणं पण्डितेन्द्रेण कुर्वता ।
समन्वयः काव्यरसे चिद्रसस्य प्रदर्शितः ॥२३५॥

अपरेऽप्यथ विद्वांसः पण्डितेन्द्रमनुश्रिताः ।
श्रुतिमेतामुद्धरन्तोऽपृथग् व्याचक्षते रसम् ॥२३६॥

गौडीये भक्तिसाहित्ये रसस्येव निरूपणे ।
तन्नायिकानायकयोर्भेदेऽप्यनुसृतो मुनिः ॥२३७॥

पौराणिकीं कृष्णलीलां व्याख्यातुमुपयुज्यते ।
सा शैली, यत्र सर्वेषां भेदानां लक्ष्म सङ्गतम् ॥२३८॥

नूनं भक्तिरसाचार्यरूपजीवादियत्नतः ।
प्रचारश्च प्रभावश्चाभवद् भक्तिरसस्य सः ॥२३९॥

श्रीराधावल्लभीयास्तु भरतादिपरम्पराम ।
रसव्याख्यानवेलायां नाद्रियन्ते कदाचन ॥२४०॥

भरतादेः काव्यरसेऽस्माकं प्रेमरसे तथा ।
पृथिव्याकाशवद्दूरमन्तरं महदन्तरम् ॥२४१॥

रतिः प्रेम हितं वात्र स्वाद्यमानं रसो भवेत् ।
अद्वयं तद्धितं साक्षात्प्रकटं युगलात्मना ॥२४२॥

हितस्य कारणं सन्तौ श्यामाश्यामावुभावपि ।
हितस्य कार्यावपि यत्तस्मादालम्बने न तौ ॥२४३॥

अन्यत्र कामिनीकान्तौ रसकेलिप्रयोजकौ ।
वृन्दारण्ये रसौ तौ स्तो रसकेलिप्रयोजकौ ॥२४४॥

'नायिका नायको नात्र केलीः कारयते रसः' ।
इति श्रीध्रुवदासेन सिद्धान्तः सूचितो ध्रुवः ॥२४५॥

श्रीहिताचार्यपादस्य समुपास्यौ तु दम्पती ।
ओतप्रोतौ मिथः क्रीडां कुर्वातेऽम्बुतरङ्गवत् ॥२४६॥

प्रियाप्रियतमस्वान्ते प्रेमकामात्मकावुभौ ।
सागरौ वहतो येन क्षणे मुग्धौ क्षणे चितौ ॥२४७॥

प्रेमानादिरनन्तश्चैकरसो नित्यनूतनः ।
उज्ज्वलः सरसः स्निग्धः स्वच्छन्दो मादकस्तथा ।।२४८।।

कामोऽथ नियमः सादिः सान्तः साकार इष्यते ।
'यत्कृतं यच्च फलित' मित्येष परिणामवान् ।।२४९।।

हसनं भाषणं मानं विलासा वा क्रियाऽऽकृतिः ।
परिणामश्चैकरसे नित्ये प्रेम्णीह यन्त्रिताः ।।२५०।।

पात्राकारौ, वस्त्ररागौ, यथा कनककुण्डलौ ।
तथेतौ प्रेमकामौ स्तः स्थाय्यस्थायितया स्थितौ ।।२५१।।

'प्रेम्णि नैवास्ति नियम' इत्येषा च जनश्रुतिः ।
प्रेमोदयक्षणे सर्वनियमास्तमयं वदेत् ।।२५२।।

प्रेम्णीह यन्त्रितानान्तु नियमानां न लोपनम् ।
तैरेव मधुरं प्रेम जायते मधुरो रसः ।।२५३।।

अहो रसपटः कोऽपि लम्पटाभ्यां तथा धृतः ।
प्रतीयाते प्रेमकामौ यथाऽऽतानवितानवत् ।।२५४।।

प्रेम्णा हितेन रत्या वा निष्पन्नस्य रसस्य यत् ।
शृङ्गारसंज्ञाकरणं तदस्मदनुमोदकम् ।।२५५।।

'शृङ्गं हि मन्मथोद्भेदस्तदागमनहेतुकः ।
शृङ्गार इति विख्यातः स रतिस्थायिभावकः ।।२५६।।'

इत्यत्र मन्मथोद्भेदागमनेन तथा रतेः ।
स्थायित्वेन च पूर्वोक्तः सर्वोऽप्यर्थः समर्थितः ।।२५७।।

प्राकृतः खलु कामोऽयमुपरामेऽवसीयते ।
अवसन्ने भवेत्तस्मिन् रतिरप्यवसन्नवत् ।।२५८।।

अतः प्राकृतशृङ्गारोऽशाश्वतः क्षणिकोऽथवा ।
अप्राकृतस्तु नित्योऽयं नित्यमेव च नूतनः ।।२५९।।

नित्यनूतनकामोऽत्र प्रेम्णि यन्नित्यनूतने ।
यन्त्रितस्तेन सुतरां नित्यनूतनता रसे ।।२६०।।

अप्राकृतेऽस्मिन् शृङ्गारे प्रेमाप्यप्राकृतः स्वतः ।
कामोऽप्यप्राकृतः किन्तु स्थिते प्रेमत्वकामते ।।२६१।।

प्राकृताप्राकृते कामे जीवात्मपरमात्मवत् ।
अभेदमिव पश्यामो भेदे महति सत्यपि ॥२६२॥

दग्धमेव पुरा कामं जीवयन्तौ प्रियाप्रियौ ।
न किं पुराणं कुरुतस्तं पुनर्नित्यनूतनम् ॥२६३॥

"दृशा दग्धं मनसिजं जीवयन्ति दृशैव याः ।
विरूपाक्षस्य जयिनीस्ताः स्तुमो वामलोचनाः ॥२६४॥"

रसो निष्पद्यतेऽस्माकं योगेन प्रेमकामयोः ।
कामेनास्वाद्यतां नीतः प्रेम हि स्वद्यते सदा ॥२६५॥

प्रेमतृष्णालतार्थे हि कामकेलिर्नवं जलम् ।
यत्पिबन्तौ नवौ श्यामाश्यामौ कुञ्जेषु जीवतः ॥२६६॥

श्रीश्यामाश्यामयोः प्रेम तत्केलिजलयोगतः ।
उपैति रसतां यद्वत्तद्वद् रसिकचेतसाम् ॥२६७॥

"द्वन्द्वसङ्गमसिन्धौ हि फुल्लं सुरतपङ्कजम् ।
मकरन्दं द्रवत्तस्मात्पिबन्ति रसिकालयः ॥२६८॥"

श्यामाश्यामहृदि प्रेमकामसिन्धू सदावहौ ।
तयोर्विन्दुर्वहत्यत्र रसिकस्यापि चेतसि ॥२६९॥

तत्सिन्धुबिन्दुसम्बन्धान्मधुरोऽयं महारसः ।
श्रीश्यामाश्यामनिष्ठोऽपि यायाद् रसिकनिष्ठताम् ॥२७०॥

नित्यं निष्पद्यमानोऽयं रसो वृन्दावनावनौ ।
वृन्दावनरसेत्याख्यां यातो रसिकसंसदि ॥२७१॥

वृन्दावनरतिः प्रेमरतिः स्थाय्यस्य कीर्त्यते ।
मनोज्ञो हि मिथः प्रेमा व्यक्तो वृन्दावनात्मना ॥२७२॥

अस्मिन्प्रेम्णि किलासक्ता उपास्यौ चाप्युपासकाः ।
इति प्रेमरतिः साम्यादेति तद्रसनीयताम् ॥२७३॥

अस्मिन् वृन्दावनोद्याने रससिक्ते समन्ततः ।
प्रीतिवल्ल्या रूपरङ्गौ पुष्पे फुल्ले प्रियाप्रियौ ॥२७४॥

इमं वृन्दावनरसं प्रकाशयितुमेव नः ।
करुणासागरः श्रीमान् हरिवंशोऽवतीर्णवान् ॥२७५॥

वृन्दावनरसोऽस्मभ्यं तथायं रोचतेतमाम् ।
यथा सा नवधाभक्तिरुद्वेगायेव जायते ॥२७६॥

एतं रसं रसयितुं न्नान्यः पन्थास्तु विद्यते ।
उद्घाटितं भवेद्वातायनं प्रेमानुकम्पया ॥२७७॥

अप्राकृतमिव प्रेम प्राकृतं भोक्तृभोग्यगम् ।
तथापि दृश्यते भूयान् भेदः सम्बन्धगस्तयोः ॥२७८॥

अप्राकृते किल प्रेम्णि भोक्ता भोग्यं च सर्वदा ।
सर्वथाऽन्यसुखाकाङ्क्षि प्राकृते स्वसुखोत्सुकम् ॥२७९॥

इदमन्यसुखाकाङ्क्षि परं प्रेम प्रयोजकम् ।
यस्मिन् भोक्ता च भोग्यं च नित्यमाबद्धमस्ति तत् ॥२८०॥

प्रेम्णः सहजया नूनं कृपयोदितया हृदि ।
प्रेरकं प्रेम केषाञ्चिद् धन्यानां तत्प्रकाशते ॥२८१॥

तस्यैवैकं स्वरूपं श्रीवृन्दावनमिदं स्मृतम् ।
प्रेमाधारस्थितिरपि स्वयं प्रेममयं हि तत् ॥२८२॥

अत एव हिताचार्यैं रसकेलेरुपक्रमे ।
प्रथमं प्रणतं वृन्दावनं रम्यतरं स्वयम् ॥२८३॥

इत्थमन्यरसेभ्योऽस्य रसस्येरितमन्तरम् ।
दृष्टया विचार्यते भेदोऽथ संयोगवियोगयोः ॥२८४॥

सन्त्येवाम्लः कटुस्तिक्तः कषायो लवणस्तथा ।
रसा अन्येऽपि धन्यस्तु मधुरो मधुरो रसः ॥२८५॥

## चतुर्थोऽध्यायः

### द्विदलसिद्धान्तः

काव्यशास्त्रे तथा प्रेमोपास्तौ द्विदल उज्वलः ।
संयोगविप्रयोगाभ्यामाचार्यैः परिभाषितः ॥२८६॥

केचिन्मुधाऽत्र संयोगे, विप्रयोगे तथापरे ।
पुष्टिं रसस्यमन्यन्ते, सम्पूर्णो द्विदलस्तु सः ॥२८७॥

अत एवात्र चक्राह्व-सारसोदाहृतेर्बलात् ।
एकैकदलनैर्बल्यं हिताचार्यैः प्रकाशितम् ॥२८८॥

सरोऽन्तरे तमिस्रासां घनविद्युद्विगर्जने ।
प्रियं विनापि जीवन्तीं चक्रवाकीन्तु सारसः ॥२८९॥

क्षणमेकं वियोगाग्नितापमुग्रं न यत्तनुः ।
सुतनुश्च न सेहाते सारसं तं रथाङ्गिका ॥२९०॥

परस्परं शोचनीयं प्रतिपादयतो मिथः ।
शृङ्गारस्य रसस्यैकैकं दलञ्चेति मन्महे ॥२९१॥

अपूर्णमित्थं प्रत्येकं यत्संयोगवियोगयोः ।
ततः स एव शृङ्गारः पूर्णा यत्र द्वयोः स्थितिः ॥२९२॥

स्थितिर्न पौर्वापर्येण यौगपद्येन सा भवेत् ।
स्वस्वभिन्नप्रभावेण पुष्णीतां तौ यथा रसम् ॥२९३॥

वृन्दावनरसे सेयं स्थितिरस्त्युररीकृता ।
संयोगस्यावधिर्यत्र वियोगस्यावधिस्तथा: ॥२९४॥

अङ्कस्थितेऽपि दयिते किमपि प्रलपेत्प्रिया ।
क्वासि क्वासीति सोप्युच्चैरालपेदेकतल्पगः ॥२९५॥

इतोऽवधिर्भवेन्नाम कः संयोगवियोगयोः ।
मिलितावप्यमिलितौ यत् प्रेमविरहे प्रियौ ॥२९६॥

श्रीवृन्दावनशृङ्गारे संयोगविरहौ प्रियौ ।
गौरश्यामौ हिते मत्तौ परिवृत्तिजुषौ मिथः ॥२९७॥

अस्याः स्थितेः किल प्रेम्णि सूक्ष्मे तीव्रे च सम्भवः ।
स्थूले प्रेम्णि हि संयोगवियोगावपि तादृशौ ॥२९८॥

वीणां करे मधुमतीमाधाय मधुरस्वराम् ।
प्रियलीलां प्रगायन्ती राधा स्थूलवियोगिनी ॥२९९॥

प्रेम्णः सूर्यपरीभाषा रसश्चन्द्र इति स्मृतः ।
रससिन्धोस्तु लेखेनानेन प्रेम्णः क्षणो दिनम् ॥३००॥

दिनं तत्प्रेमवैचित्त्यमित्यर्थश्चे दुदीर्यते ।
तदा सूक्ष्मवियोगेऽस्मिन् राधा सूक्ष्मवियोगिनी ॥३०१॥

विच्छेदाभासमात्राद्धि व्यथितं बाह्यमान्तरम् ।
गात्रविस्रंसने तत्रानयोः सूक्ष्मवियोगिता ॥३०२॥

प्रियामुखाम्बुजे श्यामनेत्रे भृङ्गव्रतं श्रिते ।
अवरुद्धे निमेषाभ्यामप्यातुरतरे इमे ॥३०३॥

तन्वा तनूश्च मनसा मनो दृग्भ्यां तथा दृशौ ।
प्राणैः प्राणाश्च मिलितास्तथापि न मनःसुखम् ॥३०४॥

न सहेते प्रियौ द्वित्वं नास्ति द्वित्वं विना रतिः ।
इति वृन्दावनरसे स प्रेमविरहः स्थितः ॥३०५॥

"न विना विप्रलम्भेन सम्भोगः पुष्टिमश्नुते ।
कषायिते हि वस्त्रादौ भूयान् रागः प्रवर्तते" ॥३०६॥

"दुर्लभालोकयोर्यूनोः पारतन्त्र्याद्वियुक्तयोः ।
उपभोगातिरेको यः कीर्त्यते स समृद्धिमान्" ॥३०७॥

सन्दर्भेऽस्मिन्नभिहितः सम्भोगो यः समृद्धिमान् ।
अस्ति स प्रेष्ठमिथुने विना दुर्लभदर्शनम् ॥३०८॥

प्रेम स्वभावसरलं गत्या वक्रं किलोच्यते ।
क्षणे क्षणे नवनवा ह्युद्यान्ति रुचिवीचयः ॥३०९॥

"नदीनाञ्च वधूनाञ्च भुजङ्गानाञ्च सर्वदा ।
प्रेम्णामपि गतिर्वक्रा कारणं तत्र नेष्यते ॥३१०॥"

पूर्वानुरागो मानश्च प्रवासः करुणस्तथा ।
विप्रलम्भाख्यश्रृङ्गारे चतस्रः कथिता भिदाः ॥३११॥

तेषु वृन्दावनरसे मानस्यैव परिग्रहः ।
प्रेमैकाङ्गप्रकाशार्थं नतु संयोगपुष्टये ॥३१२॥

विहरन्तौ प्रियौ यातौ मानकुञ्जं यदञ्जसा ।
आसीद्राधाभ्रुवोर्भङ्गः कातर्यं श्याममानसे ॥३१३॥

निकुञ्जान्तरमानोऽयं निकटे मान इत्यपि ।
वृन्दावनरसे द्वेधा स मानः परिकीर्तितः ॥३१४॥

अन्तर्गताऽधिकप्रीतिरिति मानवती प्रिया ।
उद्बोधिता सखीभिः सेति साऽभूद् रससागरः ॥३१५॥

निकुञ्जान्तरमानेऽस्मिन् निकुञ्जान्तरमागताम् ।
श्यामप्रियगुणाख्यानैः सख्यः श्यामां नयन्ति तम् ॥३१६॥

परन्तु निकटे माने प्रियस्योत्कटमाग्रहम् ।
विभ्रमं वा विलोक्य स्यात्प्रिया मानवती क्वचित् ॥३१७॥

स्वयञ्च दयते तस्मिन् दयिते दीनताङ्गते ।
आकृष्य च भुजाभ्यां तं हृदये दधतेतराम् ॥३१८॥

यौगपद्येन संयोगवियोगस्थितितुल्यता ।
दृष्टेह प्रेमवैचित्त्येऽस्माभिरस्मिन्नुपक्रमे ॥३१९॥

प्रेमवैचित्यनाम्नीयं प्रेमवीचिः परैरपि ।
गौडीयादिभिराचार्यैः स्वसाहित्येषु वर्णिता ॥३२०॥

किन्त्वस्मिन्वस्तुतो यौगपद्यं नो विद्यते तयोः ।
न संयोगानुभूतिर्हि वियोगानुभवक्षणे ॥३२१॥

वृन्दावनरसे त्वेष विशेषोऽस्माभिरुच्यते ।
यदत्र यौगपद्येन योगायोगौ प्रदीव्यतः ॥३२२॥

वृन्दावनरसे चायं विशेषोऽप्यवधीयताम् ।
यथा रसः समतुलो दम्पत्योर्नवयोरसौ ॥३२३॥

उभावपि यतोऽन्योन्यगुणवृन्दैः पराजितौ ।
सम्भृते एकरागेण काचमञ्जूषिके इव ॥३२४॥

धन्या प्रीतिश्चकोरस्य चन्द्रं यत्सोऽनुपश्यति ।
भवेद्धन्यतरा सेयं यदि चन्द्रो भवेदयम् ॥३२५॥

स्यात्तु धन्यतमा प्रीतिश्चकोरश्चन्द्रमा भवेत् ।
यथा, तथा प्रीतिमयश्चन्द्रो यायाच्चकोरताम् ॥३२६॥

स्वरूपपरिवृत्तेश्च क्रमश्चन्द्रचकोरयोः ।
निबद्धयोः प्रेमपाशे सदैव प्रचलेद्यदि ॥३२७॥

अनन्तः प्रेमपाथोधिस्तदात्रोल्लसितो भवेत् ।
यथा मुकुरयोर्मध्ये प्रदीपो यात्यनन्तताम् ॥३२८॥

एतत्स्वबुद्धिमानेन बुद्धिमानाह—वस्तुतः ।
यदग्रे बुद्धिरुन्माद्येत्स प्रेमा केन गद्यते ॥३२९॥

अत एव हिताचार्यैर्युग्ममम्बुतरङ्गवत् ।
सवयस्कं सरुचिकं सूचितं सानुरागकम् ॥३३०॥

युग्मानुरागं तं वृन्दावनं कुञ्जे स्वभावतः ।
प्रतिबिम्बयतीदं यत्ततो भात्यतिसुन्दरम् ॥३३१॥

क्वचिन्मरकतश्यामे तमाले काञ्चनी लता ।
तमाले काञ्चने लग्ना क्वचिन्मारकती पुनः ॥३३२॥

इत्थं क्वचिद् गौरमेव श्याममाश्रयते, क्वचित् ।
श्याममेवाश्रयेद् गौरं, सौन्दर्यन्तु प्रचीयते ॥३३३॥

भोक्तृभोग्यगतत्वेन समानेयं रसस्थितिः ।
भरतस्यानुकूलास्ति प्रतिकूला च रूपतः ॥३३४॥

श्रीरूपैरनुगैस्तेषां गौडीयैश्च रसस्थितौ ।
तारतम्यं समाम्नातं राधामाधवयोः स्फुटम् ॥३३५॥

माधयापेक्षया राधाप्रेम गाम्भीर्यगौरवात् ।
विलक्षणं, महाभावो मादनोऽस्यां न माधवे ॥३३६॥

प्रेमातिरेकाच्छ्रीराधा जाता वृन्दावनेश्वरा ।
पूर्णः स्वतन्त्रोऽपि भवंस्तदधीनस्तु माधवः ॥३३७॥

श्रीराधावल्लभीयस्तु श्यामाश्यामौ रसाकृती ।
मत्वा न तारतम्यस्यावकाशमपि पश्यति ॥३३८॥

नन्वत्रापि हिताचार्ये राधापादप्रधानता ।
व्यनक्ति राधाप्राधान्यं माधवे तदधीनताम् ॥३३९॥

सत्यं, किन्त्वत्र राधायाः प्राधान्यं नान्य कारणात् ।
अत्रास्ति केवलं तस्याः स्वभावात्सा प्रधानता ॥३४०॥

भोग्यं प्रधानं भवति भोक्तुश्च तदधीनता ।
इत्यस्ति राधाप्राधान्यं माधवापेक्षयात्र नः ॥३४१॥

आसज्या किल राधेयमासक्तो माधवः पुनः ।
इति तुल्यानुरागेऽपि सहजाऽऽसज्यमुख्यता ॥३४२॥

उभयोः प्रेमतुल्यत्वेऽप्येकस्यासक्तिदर्शनात् ।
आसज्यं विषयं प्राहुराशक्तं त्वाश्रयं बुधाः ॥३४३॥

श्रीश्यामाविषयस्तत्र श्रीश्यामश्चाश्रयो मतः ।
क्वचिद्रसं परिष्कर्तुं कल्पितस्तद्विपर्ययः ॥३४४॥

पञ्चमोऽध्यायः

## विशुद्धप्रेमस्वरूपम्

श्रीराधावल्लभीयाध्वा याति यं प्रेमसागरम् ।
सोऽत्युज्ज्वलोऽतिमृदुलः सरसश्चातिदुर्लभः ॥३४५॥
अनङ्गोऽप्येष सर्वाङ्गसुखदो मधुरः परः ।
नानारङ्गतरङ्गोपशोभितोऽप्येककौतुकः ॥३४६॥

तस्य प्रेम्णश्च वृत्ती द्वे सहजे परिकीर्तिते ।
सुखित्वं यत्प्रियसुखे पारवश्यञ्च यत्प्रिये ॥३४७॥
यावद्धि प्रेम्णि कस्याश्चिद् वासनाया लवोऽप्यहो ।
तावन्न तस्य शुद्धत्वं प्रतिपादयितुं क्षमम् ॥३४८॥

वासना स्वसुखाकाङ्क्षा प्रेम प्रियसुखैषणम् ।
सामानाधिकरण्यं स्यात् कुतस्तिमिरतेजसोः ॥३४९॥
अतो नित्यविहारेऽस्मिन् श्रीराधा श्यालमाधवः ।
सखीजनः श्रीवनञ्चान्योन्यस्य सुखकाङ्क्षिणः ॥३५०॥

श्रीराधामाधवावेतत्प्रेमवारितरङ्गवत् ।
न कदापि मिथोभेद्यो हरिवंशस्य दर्शने ॥३५१॥
मिलितौ शीतलयतः सखीनां हृदयञ्च तौ ।
तत्सुखे सुखिता तासामित्यनेन प्रमीयते ॥३५२॥

श्रीवनं सर्वथा तासां तयोश्चानुचरद् रुचीः ।
सेवमानं सदात्मानं कृतार्थमिह मन्यते ॥३५३॥
एतत्तत्सुखसौख्यस्य दृश्यतां नवजृम्भितम् ।
यत्संयोगो वियोगश्च प्रिययोर्युगपत् स्थितौ ॥३५४॥

श्रीमद्भागवते गोपीप्रेम यत्किल वन्द्यते ।
तथोद्धवविरञ्चिभ्यां भूयोभूयोऽभिनन्द्यते ॥३५५॥
तत्रापि दृश्यते काचिद् गोपीनां या सकामता ।
सैवाभूद् विरहे हेतुः, सा हि दुःखाय कल्पते ॥३५६॥

'आत्मानं मेनिरे स्त्रीणां मानिन्योऽभ्याधिकं भुवि ।'
इत्यात्ममान्यता शुद्धप्रेम्णि प्रविशतात्कुतः ॥३५७॥

सुखितायां प्रियसुखे नूनमात्मा विलीयते ।
स्वसुखे सुखितायाञ्च स एवात्माऽभ्युदायते ॥३५८॥

लौकिकप्रेमसदृशं सदपीदं विशिष्यते ।
यत्तदाह्लादिनीगोपी-कृष्णालम्बनगौरवात् ॥३५९॥

तत्सुखे सुखितारूपं विशुद्धं प्रेम तु ध्रुवम् ।
विलक्षणमितो गोपीप्रेमतोऽपीति निश्चितम् ॥३६०॥

अन्यादृशी त्वियं प्रीती रीतिरन्यादृशी त्वियम ।
आत्मा विक्रीयते यस्यामनुरुन्धन् सुहृद्रुचिम् ॥३६१॥

अन्योन्यासक्तयोर्यत्र मिथो हारितचेतसोः ।
रससिक्तस्नेहवल्लीमवलम्बितयोः स्थितिः ॥३६२॥

वक्रस्तु गोपिकाप्रेमा निविष्टोऽनृजु यद्धृदि ।
ते वक्तृश्रोतृनिचया नेदम्प्रेमोपयान्त्यहो ॥३६३॥

इत्थं प्रेम्णः प्रियसुखे सुखित्वे वृत्तिरीरिता ।
अथ प्रिये पारवश्ये द्वितीया वृत्तिरुच्यते ॥३६४॥

स्वभावात्पयसः प्रेम्णः सहजा ज्ञायतां स्थितिः ।
दिशं धावति तामेव यत्र विन्दति निम्नताम् ॥३६५॥

अत एव त्रिलोकैकचूडामणिरपि प्रियः ।
दीनम्मन्यः सदा राधापराधीनतया स्थितः ॥३६६॥

रसास्वादे बुधैर्वृत्तिः सदा माधुकरी श्रिता ।
श्रीमद्भागवतेऽप्येषा गीते माधुकरे स्तुता ॥३६७॥

वाचि श्रीहरिवंशस्य रसिकालीजनोऽप्यमूम् ।
पश्यन् माधुकरीं केलिं सुखमाप्नोति निर्भरम् ॥३६८॥

किन्त्वेषा सगुणाऽपीषत्सदोषा परिदृश्यते ।
प्रसिद्धं यन्मधुकरे सहजं चापलं भुवि ॥३६९॥

नित्यनूतनमास्वादं काङ्क्षमाणः स सन्ततम् ।
नूतनं नूतनं पुष्पं श्रयते भ्रमरो भ्रमन् ॥३७०॥

स्वसुखाकाङ्क्षया भ्राम्यन् अनधीनः स सर्वतः ।
प्रीतिं निर्वोढुममलां न वेत्ति हि मनागपि ॥३७१॥

नायं वेत्ति प्रेमदृष्टेर्माहात्म्यं मधुपो मुधा ।
यया नित्यं नवनवं प्रेमपात्रं प्रतीच्छति ।।३७२।।

अज्ञास्यच्चेदिदं तत्त्वं पर्याटिष्यन्न सर्वतः ।
अस्थास्यदेकपुष्पेऽसावस्वदिष्यत तन्नवम् ।।३७३।।

किन्तु श्रीमद्धिताचार्यैः शिक्षितः प्रेम निर्भरम् ।
नित्यः श्यामो मधुकरः सन्नप्येकाश्रयः स्थितः ।।३७४।।

भ्रूनर्तनमुखाम्भोजस्मितसम्भाषणैरयम् ।
लम्पटोऽलिर्विना मूल्यं क्रीतो दयितया ध्रुवम् ।।३७५।।

श्रीराधानेत्रनलिनकटाक्षशरवेधितः ।
हा ! मोहनमृगो गन्तुं नैकं पदमपि क्षमः ।।३७६।।

मीनो वारिण्यधीनोऽस्ति, नत्वासक्तः श्रुतः क्वचित् ।
पुष्पासक्तो मधुकरो, न त्वधीनः स दृश्यते ।।३७७।।

किन्तु राधासुधाम्भोधौ श्यामो मीनोऽस्त्यलौकिकः ।
तदधीनस्तदासक्तश्चेति चित्राऽस्त्यधीनता ।।३७८।।

तथा श्रीराधिकापुष्पे श्यामो मधुकरोऽद्भुतः
तदधीनस्तदासक्तश्चेति काप्यस्ति दीनता ।।३७९।।

नूनं राधा प्रेमपुष्पं सुगन्धि सुभगाकृति ।
यत्रानन्यतया श्यामभृङ्ग आसज्य तिष्ठति ।।३८०।।

इति रीतौ निजप्रीतेः प्रवीणः परमः प्रियः ।
हारयित्वाऽत्र सर्वस्वं दीनो भूत्वाऽवतिष्ठते ।।३८१।।

इत्थं दीनतयाविष्टं महाप्रेमातिरञ्जितम् ।
प्रियं प्रियाऽभिपश्यन्ती नेव तृप्यति कर्हिचित् ।।३८२।।

न श्याम एव दीनोऽयमधीनो वेति मन्यताम् ।
श्यामा सख्यो वनश्चापि प्रेम्णा तिष्ठन्त्यधीनवत् ।।३८३।।

एतेषां प्रभुता प्रेमपारवश्यमिदं मतम् ।
विजयश्च किलामीषां परस्परपराजयः ।।३८४।।

अयं प्रेमरसो येषां जानते रीतिमस्य ते ।
अत्र हि स्नेहसङ्ग्रामे विजयन्ते पराजिताः ।।३८५।।

इति वृत्तिद्वयेनापि शुद्धं प्रेम प्रकाशितम् ।
यदुत्थाभिरनन्ताभी रेखाभिः सुन्दरं वनम् ।।३८६।।

अत्र नित्यविहारस्य लीलाश्च ललिताः समाः ।
एताभिरेव सौन्दर्यरेखाभिरवभासिताः ।।३८७।।

### षष्ठोऽध्यायः

## प्रेमनिरूपणम्

यथा प्रेम तथा रूपमप्यनिर्देश्यमिष्यते ।
क्षणे क्षणे च नवतामुपयद् रूपमुच्यते ।।३८८।।

भवेत्सौन्दर्यमङ्गानां सन्निवेशो यथोचितः ।
इति रूपेण रूपस्य रूपं चारु निरूपितम् ।।३८९।।

माघोक्तौ रूपसूक्तिर्वा निर्दिशेद् रूपमंशतः ।
कार्त्स्न्येन तूभे ते रूपं निरूपयितुमक्षमे ।।३९०।।

केचिद् वस्तुगतत्वेन हृद्गतत्वेन चापरे ।
अन्येऽतीन्द्रियसत्त्वेन रूपमत्र न्यरूपयन् ।।३९१।।

अत्रातीन्द्रियसत्त्वेन रूपे च भगवत्यपि ।
अभेदं प्रातिपद्यन्त केचिदध्यात्मकोविदाः ।।३९२।।

तावता रूपजिज्ञासा लोकानां नोपशाम्यति ।
भगवत्सन्निधानेऽपि विषमाद् रूपदर्शनात् ।।३९३।।

रूपदर्शनवैषम्यं द्रष्टृहृद्गतताकृतम् ।
भवेन्नाम परं रूपं, वस्तुतो वस्तुनि स्थितम् ।।३९४।।

सामञ्जस्यानुपातैक्यशुद्धिविन्यासचारुताः ।
तथारोहावरोहाद्या गुणा रूपस्य वस्तुगाः ।।३९५।।

इति दृश्यगतत्वेऽपि द्रष्टृहृद्गतमस्ति यत् ।
तदतीन्द्रियसत्त्वाख्यं रूपं रूपस्य युज्यते ।।३९६।।

श्रीराधावल्लभीयैस्तत् तारतम्येऽत्र रूपगे ।
कारणं सरसत्वस्य तारतम्यं निरूपितम् ।।३९७।।

रसिकं प्रेमिकं स्वान्तं रूपास्वादक्षमं भवेत् ।
इत्यस्ति सहजः कोऽपि सम्बन्धः प्रेमरूपयोः ॥३९८॥

प्रेमाणं हि विना रूपं नैव सम्यक् प्रतीयते ।
रूपं विना तथा प्रेमा न साधु परिचीयते ॥३९९॥

कामवृत्तेः परीपाकः प्रेमेति कथयन्ति ये ।
कलाकृतीनां मूले च कामवृत्तिं मिषन्ति ये ॥४००॥

ते तथा कथयन्त्येव मिषन्त्येव मनोविदः ।
वयं स्वाभाविकं रूपं नैतिकं तावदीमहे ॥४०१॥

यत्तु स्वाभाविकं रूपं यन्नैतिकगुणाश्रितम् ।
तदपि प्रेमिके चित्ते भासते न तु नीरसे ॥४०२॥

इत्यालोक्य प्रेमरूपसाहचर्यं वयं किल ।
तत्त्वस्यैकस्य ते कस्याप्यभिव्यक्ती प्रचक्ष्महे ॥४०३॥

तच्च तत्त्वं हितादन्यन्न किञ्चिद् भवितुं क्षमम् ।
भवेद् भोक्तृ हितं प्रेम, रूपं भोग्यं हितं भवेत् ॥४०४॥

भोक्तृभोग्यत्वसम्बन्धो लोकेऽपि प्रेमरूपयोः ।
यो देशकालपात्राणां भेदाद् भिन्नः प्रतीयते ॥४०५॥

कलाविदः स्वप्रतिभाबलात्तु प्रेमरूपयोः ।
एकत्वं साधयन्तीह काव्यसंगीतवास्तुषु ॥४०६॥

तृतीयाऽस्ति स्थितिः प्रेमपयोः सा परात्परा ।
याऽनाद्यन्तानन्दपूर्णप्रेमलीलासु दीव्यति ॥४०७॥

इयं 'नित्यविहाराख्या' वृन्दावनरसाश्रया ।
यस्यामेकरसे प्रेमरूपे नित्यं मिथः स्थिते ॥४०८॥

एकेन भावावेशेन प्रेरिताविच्छयैकया ।
एकेन चैवास्वादेन पूर्णे स्तौ निकुञ्जगे ॥४०९॥

लोके काव्ये च यत्प्रेमरूपयोर्व्यक्तिरेकदा ।
जायते तत्परो लाभो नत्वेकत्वस्य सम्भवः ॥४१०॥

हितवृन्दावने नूनमभिव्यक्तौ हितस्य ते ।
'प्रेमरूपे' रसज्ञैस्ते निबद्धे हितबन्धने ॥४११॥

श्रीराधिका रूपपुष्पं प्रेमपुष्पं च माधवः ।
हितवृन्दावने फुल्ले शोभेते हितरञ्जिते ॥४१२॥

भोग्य—भोक्तृतया चैते स्थिते अपि पृथक्तया ।
ओतप्रोततयाऽन्योन्यं प्रतीयेते किलैकवत् ॥४१३॥

श्यामः प्रेमतमालोऽसौ रूपवल्लिश्च राधिका ।
क्वचिच्छ्लिष्टे रूपवल्ल्यौ प्रेमसीमे क्वचित् स्मृते ॥४१४॥

रूपं च प्रेम चाभ्युक्तं वृन्दारण्ये धृताकृति ।
ब्रह्मानन्दात् प्रेमरूपानन्दो यज्जोऽतिरिच्यते ॥४१५॥

अथ नित्यविहारस्य चत्वारोऽवयवाः पृथक् ।
विवेच्यन्ते वनं श्यामाश्यामौ चात्र सखीजनः ॥४१६॥

नाम, रूपं तथा लीला धाम चेति चतुष्टयम् ।
उपासनाप्रतीकत्वाद् भक्तानामवलम्बनम् ॥४१७॥

तत्राद्यस्य त्रिकस्यास्ते धाम धामेति सर्वतः ।
प्रथमं धाम निर्वर्ण्यमाहुर्वेदादिकोविदाः ॥४१८॥

## सप्तमोऽध्यायः

### हितवृन्दावनम्

'ता वां वास्तून्युश्मसी'ति मन्त्रे धामयियासया ।
धामप्रीतिः प्रकटिता वेदेष्विति सुविश्रुतम् ॥४१९॥

पुराणागममाश्रित्य वैष्णवैः स्वेष्टदेवताम् ।
अनु, तद्धाम वैकुण्ठगोलोकाद्यपि निश्चितम् ॥४२०॥

अथ गोलोकधाम्नोऽस्य भागमेकं मनोरमम् ।
विदुर्वृन्दावनं रासलीलासम्प्राप्तगौरवम् ॥४२१॥

प्रकटाप्रकटत्वाभ्यां भेदाभ्यामिह भिन्वते ।
लीलावदिह तद्धाम वृन्दारण्यमपि स्वयम् ॥४२२॥

भूवृन्दावनमत्रैकं त्रिपाद्वृन्दावनं परम् ।
उभयोरनयोरत्राभेदोऽपि प्रतिपाद्यते ॥४२३॥

ह्लादिनी सन्धिनी संविदिति शक्तित्रयं विभोः ।
सन्धिनीसंहितं तत्र वृन्दारण्यन्तु चिन्मयम् ॥४२४॥

श्रीराधावल्लभोयास्तु प्रेम्णः सहजसुन्दरम् ।
प्रथमं रूपमत्राहुः श्रीवृन्दावनमद्भुतम् ।।४२५।।

प्रेमवद् धाम तन्नित्यं नूत्नमेकरसं स्वयम् ।
नूत्नत्वाद् धामरूपस्य प्रेम्णश्चैकरसत्वतः ।।४२६।।

रूपप्रतीककन्दर्पकोटिभिः सगणैः सदा ।
सेव्यमानस्य धाम्नोऽस्य ब्रूमः कां रूपसम्पदम् ।।४२७।।

काचित्तु सा निगदिता रसकल्पतरौ मया ।
विप्रलम्भः पञ्चविधो वनाच्चात्र निवारितः ।।४२८।।

वैचित्त्यजस्तु विरहो मानश्च सहजो वने ।
श्रूयमाणोऽपि भिद्येत लौकिकात्स ह्यलौकिकः ।।४२९।।

अस्य हेममयी भूमिः खचितानेकरत्निका ।
कर्पूरपूररजसां निचयैरवभासिता ।।४३०।।

इन्दिरा च रतिश्चात्र मार्जयन्ती रजःकणान् ।
इदं वृन्दावनोद्यानं धन्यम्मन्या निषेवते ।।४३१।।

नानासौदमिनीर्बिभ्रन्नववारिदमण्डलम् ।
न घनस्य वनस्यास्य साम्यायोत्सहते क्वचित् ।।४३२।।

यथाऽनुपमरूपस्य धामेदं परिकीर्तितम् ।
तथाऽतुलस्य प्रेम्णोऽपि निधानमिदमीरितम् ।।४३३।।

अस्ति वृन्दावनं राजा नित्यानन्दोपरञ्जनात् ।
एकच्छत्रे प्रेमराज्येऽकण्टके सुप्रतिष्ठितः ।।४३४।।

अत्र वृन्दावने फुल्ले रूपपुष्पे प्रिया-प्रियौ ।
घनानुरागो मधुवद् यतो गलति निर्भरम् ।।४३५।।

प्रेमनीरभृतोत्तीरं गम्भीरं च सरो वनम् ।
यत्रमज्जति मुग्धं तन्मिथुनं विस्मृताखिलम् ।।४३६।।

इत्थं रूपप्रेमपूर्णं धाम काव्यरसाशयात् ।
उद्दीपनं भवेत्किन्तु नस्तु केलिप्रवर्तकम् ।।४३७।।

एतत्प्रवर्तिता लीला रोचते नन्दसूनवे ।
पत्रप्रसूनयोर्ह्यस्य स ाऽत्र राधा प्रतीयते ।।४३८।।

वृन्दावनं रसखनिं स्तुवन् रसिकशेखरः ।
केलितृष्णाप्रेमबन्धान् मनुते स्वानिदङ्कृतान् ।।४३९।।

प्रेम्णि भोग्यप्रधानत्वात्प्रेरके भोग्यमुख्यता ।
इति वृन्दावनं 'राधाविहारविपिनं' श्रुतम् ।।४४०।।

किञ्च राधाऽस्मदाराध्या वृन्दारण्यैकगोचरः ।
इति जन्मान्तरेऽप्याशां वृन्दारण्ये दधामहे ।।४४१।।

सत्सु प्रथमतो नम्यं, रम्यं वृन्दावनं पुनः ।
श्रीराधिकाकृपामात्रगम्यं तेन तथोदितम् ।४४२।।

श्रीराधाङ्घ्रिनखज्योत्स्ना वृन्दारण्ये मुदावहा ।
श्रीवृन्दावननिष्ठा च श्रीराधाकरुणावहा ।।४४३।।

इत्थमन्योन्यदानेन सन्ततं धामधामिनौ ।
रसिकाननुगृह्णीतो हितसेवनचुञ्चुरान् ।।४४४।।

चपलत्व-जडत्वाभ्यां प्रेरकं प्रेम भिद्यते ।
चपलन्त्वालिरूपेण जडं वृन्दावनात्मना ।।४४५।।

सत्यपि प्रमजाड्येऽस्मिन् स्वभावाच्चिन्मयं वनम् ।
सङ्कीर्णवीथिभ्यो निर्यन्मिथुनाय पथिप्रदम् ।।४४६।।

कोमलाः पुष्पिता वल्ल्यो वीक्ष्य केलिं रसात्मनोः ।
संकुचन्तितमां प्रेमविवशाश्च भवन्त्यमूः ।।४४७।।

श्रीमता हरिवंशेन भूवृन्दावनमर्चितम् ।
तद्भिन्नं न त्रिपाद्वृन्दावनं नाम्नापि चर्चितम् ।।४४८।।

भूमौ स्थितमपि श्रीमद्वृन्दारण्यं महत्तमम् ।
यत्स्वयं लोकपतिना श्रीकान्तेनाभिवन्दितम् ।।४४९।।

जगति प्रकटं वृन्दावनं देदीप्यतेऽद्भुतम् ।
मायाजवनिकाच्छन्ननयनानामगोचरः ।।४५०।।

सत्प्रेमोन्मेषशुद्धान्तर्भावुकाक्षणान्तु भासते ।
वल्लीषु तरुषु प्रेम क्रीडत्खगमृगेष्वपि ।।४५१।।

वृन्दावनीयास्तरवस्तेषां प्रियतरा मताः ।
प्रियौ विहरतो येषां तले प्रच्छायशीतले ।।४५२।।

लीलाधारतया वृन्दावनमेतत् स्वभावतः ।
रसोपास्तेरपि महानाधारो मन्यते बुधैः ।।४५३।।

रसस्य धारणाद् वृन्दावनं धर्मो भवेद्यतः ।
'धारणाद्धर्ममित्याहुर्धर्मो धारयते प्रजाः' ।।४५४।।

अत एव निजे धर्मे प्रोच्यमानेऽत्र सेवकः ।
तत्र वृन्दावनं नित्यं पश्यति प्रेमविप्लुतम् ।।४५५।।

वृन्दावनप्रेमधर्मौ नवधाभक्तिसाधनौ ।
एको हि साधनं धर्मः साध्यो धर्मः परः स्थितः ।।४५६।।

धर्मो द्विधा धार्यमाणो धारयंश्चेति भेदतः ।
भक्तिरत्रादिमो धर्मः प्रेमधर्मस्तथान्तिमः ।।४५७।।

इति वृन्दावने साध्ये प्रेमधर्मात्मनि स्वतः ।
हितस्य वैभवं सर्वं प्रकटं भवति स्फुटम् ।।४५८।।

धर्मस्यास्य निवासश्च श्रीराधाचरणद्वये ।
श्रीराधाचरणद्वय्या धर्मेऽस्मिन्वसतिस्तथा ।।४५९।।

धर्मं विना न धर्मी स्यान्न धर्मो धर्मिणं विना ।
इति श्रीहरिवंशस्य मर्म जानन्ति मर्मिणः ।।४६०।।

रसो धर्मः, परन्त्वस्य धर्मोऽप्यस्त्येव कश्चन ।
योऽस्य नानाविलासानां धारणे भवति क्षमः ।।४६१।।

रसोपास्तिरतो धर्मं धर्मिणं च श्रिता भवेत् ।
धर्मो रसस्थितिं धर्मी व्यनक्ति च रसक्रियाम् ।।४६२।।

इति प्रतिकणं शुद्धं रसप्राकट्यमुद्वहत् ।
वृन्दावनमिदं प्रेम्णः सहजो धर्म ईरितः ।।४६३।।

श्रीराधामाधवौ चात्र प्रेममात्रानुचालितौ ।
सहजौ धर्मिणौ प्रेमस्वरूपावपि कीर्तितौ ।।४६४।।

प्रेम्णः सहजयोर्धर्मधर्मिणोरनयोर्युजा ।
आचार्यहरिवंशस्य रसोपास्तिः प्रसिद्ध्यति ।।४६५।।

नवकुञ्जे नित्यकुञ्जे निकुञ्जे निभृते तथा ।
रसं दर्शयता धर्मधर्मिणौ तेन दर्शितौ ।।४६६।।

सुखदं शयनं कुञ्जे कुञ्जे च मदनायनम् ।
संयोगः प्रिययोः कुञ्जे कुञ्जे सुरतलक्षणम् ।।४६७।।

शृङ्गारोऽलङ्कृतः कुञ्जे कुञ्जे नूतनः परिच्छदः ।
भोगानां योजना कुञ्जे कुञ्जे सुलभसौरभम् ।।४६८।।

श्रीरासमण्डलं कुञ्जे कुञ्जे गीतं तरङ्गितम्
वनिताऽगणिता कुञ्जे कुञ्जे वृन्दावनेश्वरी ।।४६९।।

वृन्दावनरसः प्रेमरसो हितरसोऽथवा ।
वृन्दावनरतेः प्रेमरतेर्हितरतेर्भवेत् ।।४७०।।

वृन्दावनं प्रति रतिः प्रेमाणं प्रति वा रतिः ।
स्थायी वृन्दावनरसे स्याद्रतिर्वा हितं प्रति ।।४७१।।

तं च वृन्दावनरसं रसयन्तीह निर्भरम् ।
रसिका, राधिका, श्यामः, सख्यश्चैवाप्युपासकाः ।।४७२।।

वृन्दावननिकुञ्जेषु प्रीतिवल्ली विराजते ।
यस्याः पुष्पद्वयं श्यामाश्यामयुग्मं प्रफुल्लति ।।४७३।।

प्रीतिवल्ली प्रफुल्लेयं न तस्यैवावलम्बनम् ।
यावत्सखीजनस्यापि तद्भावापन्नचेतसः ।।४७४।।

गोष्ठवृन्दावनं, गोप्याक्रीडवृन्दावनन्तथा ।
श्रीमद्राधाकुञ्जवाटीवृन्दावनमिति त्रयम् ।।४७५।।

तृतीयन्त्विह सर्वस्माद्विचित्रं चित्रकारि तत् ।
आद्यो भावो विशुद्धोऽतिपूर्णो यद्रूपमास्थितः ।।४७६।।

वृन्दावनात्मिकामेनां रतिं सत्प्रेमभूमिकाम् ।
शृङ्गारः कुण्डलाकारः कृष्णारूपेण पर्यगात् ।।४७७।।

कुतश्चिन्नैति नो याति क्वचिद् यद्वद् रतौ रसः ।
नायाति नापि यातीदं युग्मं वृन्दावने तथा ।।४७८।।

अपारावारविषमे नित्यमेकरसमराम्बुधौ ।
गौरश्यामं तत्किशोरयुग्मं लुठति सन्ततम् ।।४७९।।

अष्टमोऽध्यायः

**हितयुगलम्**

पुरुषः प्रमदायुक्तः श्रृङ्गार इति संज्ञितः ।
रसोपास्तौ प्रकृत्या तद्युगलं समपेक्ष्यते ।।४८०।।

रसोपास्तिरियं नूनं भारतेऽस्मिंश्चिरन्तनी ।
सा पुराणेतिहासाभ्यां विद्यावद्भिः प्रमीयते ।।४८१।।

किन्तु श्रीमद्धिताचार्यसमकाले महात्मभिः ।
रसोपास्तिः पल्लविता स्वेष्टशैलीषु चाञ्जिता ।।४८२।।

तेषां समेषामाराध्यं राधामाधवयोर्द्वयम् ।
स्वरूप-सम्बन्ध-भिदा पर्याप्तं भिद्यते मिथः ।।४८३।।

अयं स्वरूपसम्बन्धभेदोऽपि प्रतिवक्तृगम् ।
प्रेम्णि वाथ रसे भेदमुपजीव्य प्रतिष्ठते ।।४८४।।

श्रीराधावल्लभीयानामाराध्यं युगलं तु तत् ।
प्रेमाक्रीडनकत्वेन पुरस्तात्परिचायितम् ।।४८५।।

हितमेव प्रेमरूपरूपे व्यक्तमिहाद्भुतम् ।
अनाद्यनन्तक्रीडासु प्रेम्णः पर्यनुषज्जति ।।४८६।।

प्रेमा श्यामस्तथा रूपं श्यामेति सति निर्णये ।
अप्युभौ प्रेममूर्ती स्तो रूपमूर्ती क्वचित्पुनः ।।४८७।।

यथा न प्रेमरूपे ते वियुज्येते भुवि क्षणम् ।
श्यामाश्यामौ तथा वृन्दावनकुञ्जेष्विति स्फुटम् ।।४८८।।

न जातु कामः कामानानुपभोगेन शाम्यति ।
यथा, तथा प्रेमतृष्णा नैव प्रेम्णोऽपिशाम्यति ।।०८९।।

परस्परांसविन्यस्तबाहू सम्पिबतो मिथः ।
अन्योन्यमुखचन्द्रेक्षितृषिताक्षिचकोरकौ ।।४९०।।

पानीयं चेत्तृषार्त्तं स्यात्तदा कूपः करोतु किम् ?
चन्द्रः स्वयं चकोरश्चेत्तदा तं को नु तर्पयेत् ?४९१।।

अनया समया प्रेमतृष्णया युगलं त्विदम् ।
क्रीडास्वरूपसम्बन्धैः सर्वथैवाद्भुतं कृतम् ।।४९२।।

अहो रसिकमूर्धन्ययुगलादिह कः परः ।
प्रेमपानक्रमं नित्यमिममेकरसं वहेत् ॥४९३॥

सम्पृक्तौ नित्यमेवेमौ रसिकैरवलोकितौ ।
प्रियो रूपमयः प्रेमा, रूपं प्रेममयं प्रिया ॥४९४॥

ईदृशोऽङ्गपरिष्वङ्ग ईदृशी रसरञ्जना ।
यथा न शक्यते कर्तुं श्यामगौरत्विडञ्जना ॥४९५॥

इतीतरेतरस्मिन् स्त ओतप्रोतौ प्रियाप्रियौ ।
तथापि रससिद्धयर्थं स्वतन्त्रावपि दर्शितौ ॥४९६॥

एकं काञ्चनचम्पाभं परं नीलाम्बुदप्रभम् ।
नानुकूलं बहिः किञ्चित् कन्दर्पोत्तरलं परम् ॥४९७॥

एकं भूयोमानभङ्गिं कुर्वच्चाटूनि चापरम् ।
निकुञ्जसोम्नि द्रष्टव्यं द्वन्द्वं तदतिमोहनम् ॥४९८॥

श्यामः सदोच्छलत्प्रेमपूरैरावेशितोऽभितः ।
श्यामा सदैव गम्भीरप्रेमसागरतां गता ॥४९९॥

निजामलप्रेमवीचीः संहरन्ती निजात्मनि ।
उल्लसेच्चेदमर्यादं कस्तां रोद्धुमिहार्हति ॥५००॥

नवमोऽध्यायः

## युगलकेलिः

प्रेमतृष्णातुरौ प्रेममार्गेऽग्रे सरतः प्रियौ ।
इतरेतररूपाम्बुपानकेलिपरायणौ ॥५०१॥

तृष्णा प्रेमाश्रिता नित्यं केली रूपाश्रिता मता ।
प्रेमतृष्णालतासेके रूपकेलिर्जलायते ॥५०२॥

कृष्णोऽनन्तप्रेमतृष्णः कामकेलिश्च राधिका ।
तत्संयोगादेकरसो विहारोऽखण्ड ईरितः ॥५०३॥

विहारस्यास्य चारम्भे लोकवच्छ्यामसुन्दरः ।
कोटिकाममनोज्ञोऽपि राधादर्शनविस्मितः ॥५०४॥

मज्जन्निव प्रेमसिन्धौ तद्बाहुभ्यां निपीडितः ।
अधरामृतदानेन बहुधा स्यात् समुद्धृतः ॥५०५॥

तन्महामधु पीत्वाऽयं श्यामो जीवति सन्ततम् ।
अभङ्गानङ्गरङ्गेषु क्रीडन्वारिणि मीनवत् ॥५०६॥

उभाभ्यामपि सिक्तेयं केलिवल्ली विवर्धते ।
उरोजस्पर्शतद्गुप्तिपरिष्वङ्गभ्रु वक्रताः ॥ ५०७॥

नीविमोचन-मानेतिवाचश्चात्राङ्कुरा इव ।
क्रमात्पल्लवयन्ति स्वं पुष्प्यन्ति च फलन्ति च ॥५०८॥

केलिवल्लीघनच्छायां विपरीतरतिः श्रिता ।
चमत्करोति चेतांसि सजनीनां सचेतसाम् ॥५०९॥

अनाद्यनन्तेयं केलिर्नूतना प्रेमरूपयोः ।
प्रकाशते श्रमस्वेदजलार्द्रालङ्कृतास्ययोः ॥५१०॥

अत्र नृत्यञ्च सङ्गीतं शृङ्गारोत्थाश्च सत्कलाः ।
क्षणे क्षणे प्रकाशन्ते तेषामवधिभूतयोः ॥५११॥

तयोर्गुणा रसिकतां रसिकत्वं तयोर्गुणान् ।
उद्दीपयन्ति, जायन्ते यैर्नूतना रसकेलयः ॥५१२॥

इह भानुसुतातीरे वृषभानुसुताऽनिशम् ।
नन्दात्मजेन साकं सा थेईथेईति नृत्यति ॥५१३॥

नृत्यक्षणेषु च श्यामः श्यामाकचकुचाधरान् ।
स्पृशन् स्वरूपलावण्याभिनयैर्जयति स्मरान् ॥५१४॥

नृत्यमुद्वीक्ष्य नटयोर्नवनागरयोस्तयोः ।
चकितः स्थगितश्छन्नस्ताराचन्द्रस्मरोत्करः ॥५१५॥

मन्दहासभ्रूविलासौ यत्र विद्युत्पयोदवत् ।
प्रवर्षतः प्रेमरसं, सा केलिर्गगनायते ॥५१६॥

न केवलोऽत्र रासोऽयं तयो रसमयः स्मृतः ।
यावद्विलासा अपि ते वने रसमयाः स्थिताः ॥५१७॥

प्रेमसौन्दर्यसङ्गीतनृत्याभिनयमञ्जुलान् ।
को नु रासविलासांस्तानंशतोऽपि विनिर्दिशेत् ॥५१८॥

कटिकिङ्कणिकासृष्टाः पदनूपुरनिर्मिताः ।
युगलस्य न सङ्गीतलहर्यो विरमन्ति ताः ॥५१९॥

खगान् मृगान् सरोमाञ्चाञ्जनयन्त्यचलं जलम् ।
तदलङ्कारझङ्काराः क्रेङ्कारानधिकुर्वते ॥५२०॥

सुरतेष्वपि युग्मं तत्किशोरं नागरं नवम् ।
कोमलैः कमलैः क्लृप्ते शयने ददते सुखम् ॥५२१॥

काञ्चने खचितं नीलमणिं तत्राभिपश्यतः ।
सखीजनस्य सौभाग्यं स्पृहणीयं सचेतसाम् ॥५२२॥

अत एव तयोः कल्यः केलिकौतूहलोत्सव; ।
सङ्गतो रागरङ्गाभ्यां साक्षात्प्रेमरसः स्मृतः ॥५२३॥

इत्थञ्च नृत्यसङ्गीनाभिनयैः सहजां युजम् ।
प्राप्य तद्द्वन्द्वसौन्दर्यं मञ्जूयति निकुञ्जकम् ॥५२४॥

तच्च मञ्जुलतानीरं युगलस्याङ्गमम्बरम् ।
अलङ्करणमप्यन्तर्हर्म्यञ्चापूर्य सर्वतः ॥५२५॥

वृन्दावनं प्लावयति ध्रुवमज्ञाततत्परम् ।
सखीनयनमीनानां गणो यत्र प्रसीदति ॥५२६॥

यौवनस्नेहसौन्दर्यकामप्रेमाभिलाषजैः ।
मदैः सङ्क्रीडतः श्यामावुन्मत्तकरिणीगजौ ॥५२७॥

अत्र क्रीडासु सर्वासु सख्यो यदुपकुर्वते ।
ऋतवस्तद्विलोक्येव सर्वेऽप्यायान्ति सेवितुम् ॥५२८॥

प्रियाभ्यामष्टभिर्यामैः परिचर्या तु तत्कृता ।
भुज्यतेऽनुदिनं तासां सखीनां सुव्यवस्थया ॥५२९॥

अनादी अप्यनन्तौ च प्रियौ नववधूवरौ ।
सखीभिर्नित्यमुद्वाहविधानेषु निषेवितौ ॥५३०॥

उद्वाहकेलीः क्रीडन्तौ नवशृङ्गारमण्डितौ ।
सौभाग्यरजनीभोगैः प्रदत्तो रससम्पदम् ॥५३१॥

भङ्क्त्वेव तां तां मर्यादां प्रथितां लोकशास्त्रयोः ।
परस्परं सखीवृन्दञ्चानन्दयितुमुत्सुकौ ॥५३२॥

कामवृत्तिश्रिते प्रेम्णि मर्यादा सा ह्यपेक्ष्यते ।
प्रेमवृत्तिश्रितं कामं सोढुं शक्नोति सा कथम् ।।५३३।।

कामवृत्तिश्रितः प्रेमा द्वयोरेकत्वमिच्छति ।
प्रेमवृत्तिश्रितः कामो हितमेकं द्वितां नयेत् ।।५३४।।

कामोद्भूतः किल प्रेमा स्वपात्रं भोक्तुमिच्छति ।
प्रेमोद्भूते तु कामेऽस्मिन् स्प्रष्टुं सङ्कुचतीव तत् ।।५३५।।

नित्येऽप्यालिङ्गने श्यामो मनोहस्तैरपि प्रियाम् ।
न स्पृष्टवानित्यहो नः प्रेम्णोऽयं महिमाऽद्भुतः ।।५३७।।

अत एव हिताचार्यैः प्रगीता निजवाङ्मये ।
जगन्ति पावयत्येषा तत्सौरततरङ्गिणी ।।५३७।।

इत्थञ्चालौकिके केलिविधाने लौकिकी विधा ।
न युज्यते तथाप्येषा रसकल्पतरौ धृता ।।५३८।।

अलौकिकीनां केलीनां लोकवद्यावती स्थितिः ।
तावती कथ्यमानापि न दोषाय प्रकल्पते ।।५३९।।

सत्त्ववागङ्गजस्त्रेधा विहारः कार्यमुच्यते ।
सत्त्वं मनस्तद्भवोऽसौ सात्त्विकोऽष्टविधः स्मृतः ।।५४०।।

स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरभङ्गोऽथ वेपथुः ।
वर्णभेदोऽथ वाष्पश्च प्रलयश्चेति नामतः ।।५४१।।

वाचिको वाग्भवो द्वेधा वयस्यासु मिथोऽथवा ।
प्रियश्लाघा, रहस्योक्तिः, सन्देशो मन्त्रणार्थने ।।५४२।।

वयस्यासु प्रयुज्यन्ते पञ्च, पञ्च मिथः पुनः ।
विधिः प्रलापो मधुरालापो गानं निषेधनम् ।।५४३।।

सात्त्विकीनां वाचिकीनां केलीनां लक्षणं मया ।
अनुभावप्रसङ्गेन रसकल्पतरौ कृतम् ।।५४४।।

आङ्गिक्यङ्गभवा त्रेधा श्यामाश्यामोभयानुगः ।
सा चैकगापि नो गण्या द्विगामिन्यास्तु का कथा ।।५४५।।

प्रेमतृष्णा-कामकेलिद्वयजे मधुरे रहः ।
विहारेऽस्मिन् द्वयं भाति हितमद्वयमद्भुतम् ।।५४६।।

अतिपल्लवितेनालं, विहारोऽयं सदा नवः ।
वरः श्यामो वधू राधा, सौभाग्यरजनी निशा ।।५४७।।

नो किञ्चित्कृतमेवात्र नेवागो न च सम्भ्रमः ।
राधामाधवयोः कश्चिन्नित्यः प्रेमोत्सवो नवः ।।५४८।।

अद्भुतेऽस्मिन्नुत्सवेऽसौ मदनः पञ्चभिः शरैः ।
आत्मीयैर्नूनमात्मानमेव विध्यति मोहितः ।।५४९।।

एकस्यैवाक्रीडनकौ प्रियौ प्रेमशिशोरिमौ ।
यः प्रतिस्पर्धि-कामस्य स्पर्शं न सहते क्वचित् ।।५५०।।

को नु कामः किल श्यामोऽपि न स्पृशति यां मुधा ।
साऽत्र राधाऽस्ति वल्लीव तत्प्राणच्छायवेष्टिता ।।५५१।।

मन्दहासो विलासानां सारो यद्दर्शनात्प्रियः ।
अतिप्रसद्य सौख्यानि विस्मरत्यखिलान्यपि ।।५५२।।

अत्यासक्ततया दूरात्पश्यन् हृष्यन्मनाः प्रियः ।
पुनः पुनर्विमुग्धः सन् पादयोः पतति स्फुरन् ।।५५३।।

दशमोऽध्यायः

**श्यामसुन्दरः**

अथास्य युगलस्यैकमेकं दर्शयितुं पृथक् ।
प्रथमं चिन्त्यते प्रेम-प्राणः श्रीश्यामसुन्दरः ।।५५४।।

श्रीमद्भागवतादौ तु प्रेमपात्रमयं सताम् ।
श्रीयशोदानन्दगोपीगोपादीनामभिष्टुतः ।।५५५।।

वृन्दावनरसास्वाददानवीरैस्तु भावुकैः ।
रसिकै राधिकासक्तः प्रेमाधीनः स रूप्यते ।।५५६।।

यत्र प्रेमैकसीमां तां रससारसुधाभरैः ।
अगाधां चिन्तयन् राधां न स्मरत्यात्मनोऽप्ययम् ।।५५७।।

राधानेत्राञ्जनीभूय तन्मुखेन्दुचकोरकः ।
कोटिकान्ताकुलेऽधीरो जिजीविषति तद्बलात् ।।५५८।।

पश्यन् श्रीराधिकारूपं गात्रविश्लेषदुःखितः ।
आश्लिष्यन्नथ तां रूपदर्शने विरहोत्सुकः ।।५५९।।

दारुपुत्तलिकाभूतस्तदिच्छामनु नृत्यति ।
सर्वस्वं जीवनं वित्तं बलं हारयतीह सः ॥५६०॥

इत्थं तृषातुरो दीनः प्रेमाधीनः स राधिकाम् ।
आराधयति तन्नाममन्त्रजापनतत्परः ॥५६१॥

प्रेम्णाकर्णयते राधागाथां गायति चासकृत् ।
स्वदेहं राधिकापादपद्मगेहं च मन्यते ॥५६२॥

पादयोर्यावकरसैश्चित्रकल्पनयाऽसकृत् ।
सर्वश्र्यङ्गेषु शृङ्गाररचनामाचरत्ययम् ॥५६३॥

वन्दते, सेवते चैनामात्मानं विनिवेदयन् ।
नवधाभक्तिसिद्धान्ते दृष्टान्तो भवति स्वयम् ॥५६४॥

याचते वरदानञ्च 'मानं मा कुरु भामिनि ।
हस्तालम्बञ्च वितर, प्रतिवाचं प्रयच्छ मे ॥५६५॥'

कृतो गोपीष्वपि प्रेमा स कृतज्ञतया युतः ।
अत्रायं खलु वैवश्यादित्यहो महदन्तरम् ॥५६६॥

तत्र गोप्यो न तच्छायामपि स्प्रष्टुमशक्नुवन् ।
अत्र राधापदच्छायास्पर्शे दृष्टस्तु सङ्कुचन् ॥५६७॥

व्रजलीलास्वयं श्याम आसज्यत्वादुपास्यते ।
कुञ्जलीलासु किन्त्वेष आसक्तत्वादुपासकः ॥५६८॥

कुञ्जलीला बिम्बरूपा नवरङ्गोपरञ्जिता ।
प्रतिबिम्बात्मिकां नूनं व्रजलीलां विरञ्जयेत् ॥५६९॥

किन्तु दर्पणगा छाया विपरीता यथा भवेत् ।
तथाऽऽसज्यासक्तभावो व्रजे कुञ्जाद्विरुध्यति ॥५७०॥

आसज्यायामुपास्यायां श्रीराधायां यथा हरिः ।
आसक्तश्चोपासकश्च तथा तत्सङ्गिवस्तुषु ॥५७१॥

प्रेष्ठानामनुकम्प्येषु भूयः प्रेम विजृम्भते ।
इति राधाङ्गीकृतेषु वस्तुषु प्रेष्ठता हरेः ॥५७२॥

राधापदाङ्कविलसन्मधुरस्थलदर्शिनः ।
राधाकरावचितसत्पत्रपुष्पाङ्घ्रिपस्पृशः ॥५७३॥

राधा-दिगुत्थ-पवनस्तस्य प्रियतमो मतः।
इति श्याममनःप्रेमसुखं कस्यास्ति गोचरः ॥५७४॥

तदीयतानुसन्धानाद् राधारससुधानिधौ।
दिशे महिम्ने चरणरेणवे च नमस्कृतेः ॥५७५॥

अनन्तरं श्रीनिकुञ्जदेवीनमनमाचरन्।
श्रीहिताचार्यभगवान् अस्फुटत् प्रेमपद्धतिम् ॥५७६॥

अस्य श्यामस्य किं ब्रूमो श्रीराधादास्यकामनाम्।
यावत्काङ्क्षितचाटूक्ती श्रुते तत्किङ्करीष्वपि ॥५७७॥

तदीयवस्त्राभरणे रोचेते प्रेयसेऽधिकम्।
परिधाय स ते आलीभवत्यपि नरोत्तमः ॥५७८॥

विहस्य राधिकाप्यस्य स्ववस्त्राभरणे भृतः।
सिन्दूरविन्दुमलिके वेसरं धारयेन्नसि ॥५७९॥

भक्ता मीरादयः श्यामं कान्ताद्यन्वयतोऽभजन्।
राधारागाद्यनुकृतैस्तं प्राप्तुं प्रायतन्त ते ॥५८०॥

किन्तु श्रीमान् हिताचार्यः प्राणनाथं तु राधिकाम्।
मत्वा तदीयसम्बन्धाद् श्यामं प्रियतमं श्रितः ॥५८१॥

अत्यासक्तिं तु राधायां वीक्ष्य वैयासकिर्हरेः।
इदं युगलमाधत्ते हृदि हारमिवाचलम् ॥५८२॥

एकादशोऽध्यायः

**श्रीराधा**

अस्ति राधा पुराणेषु पद्मादिष्विति निश्चितम्।
किन्तु तेषां पुराणत्वे प्रमाणत्वे च विग्रहः ॥५८३॥

गाथासप्तशतीग्रन्थमारभ्येहास्ति राधिका ।
नूनं संस्कृतसाहित्ये यत्र तत्रेति विश्रुतम् ।।५८४।।

हरिरामव्यासनामा हरिवंशानुगो बुधः ।
जयदेवं कथयति प्रथमं राधिकाकविम् ।।५८५।।

निरस्तसाम्यातिशयं राधो भागवते स्मृतम् ।
तद्वेदेष्वपि सान्तेन रूपेणानन्तमाश्रुतम् ।।५८६।।

आनन्दवर्धनाचार्यो ध्वन्यालोकेऽप्युदाहरत् ।
राधां प्रस्मरतः कृष्णस्यात्र वैवश्यमद्भुतम् ।।५८७।।

श्रीहर्षो नैषधीयेऽपि प्राणवत्प्रियराधिकम् ।
माधवं स्तौति, बहवः कवयोऽन्येऽपि तां जगुः ।।५८८।।

किन्तु नित्यां कुञ्जकेलिं वृन्दावनरसोचिताम् ।
गीतगोविन्दकाव्येऽसौ जयदेवोऽभिगीतवान् ।।५८९।।

राधाकृष्णोपासनायां श्रीमद्भागवतं यथा ।
गीतगोविन्दमपि तद् गतमत्रोपजीव्यताम् ।।५९०।।

विद्यापतिस्तु मैथिल्यां चण्डीदासोऽधिबङ्गलम् ।
श्रीराधायाः प्रेमरूपे अद्भुते तावगायताम् ।।५९१।।

विक्रमस्याथ षोडश्यां शताब्द्यां परमोज्ज्वलम् ।
राधारूपं सम्यगगात् तत्र तत्र प्रकाशताम् ।।५९२।।

गौडीये पुष्टिमार्गे च युगलोपासनाजुषि ।
अप्यस्ति कृष्णप्राधान्यं सति तद्रूप उज्ज्वले ।।५९३।।

श्रीराधावल्लभीये तु श्रीराधाङ्घ्रिप्रधानता ।
इह श्रीराधिकायास्तद् रूपमत्युज्ज्वलं स्फुटम् ।।५९४।।

यथाहितं कृष्णरसामृतसारे हि वर्णिते ।
लभ्यते श्रवणेनैव राधापादाम्बुजे रतिः ।।५९५।।

प्राणनाथो मम श्यामेति यः शपथपूर्वकम् ।
परानपेक्षया प्राह वन्दे तं देशिकं हितम् ।।५९६।।

अलं विषयवार्ताभिर्वृथा श्रुतिकथाश्रमः ।
भयं भवति कैवल्यान्नास्तीशभजने रतिः ।।५९७।।

मनस्तु मम राधाङ्घ्रिरस एव निमज्जतु ।
इत्याबाल्यं पक्षपातं श्रीराधायामयं दधौ ।।५९८।।

राधाचार्योऽभवत्तस्याभवद् राधा हि मन्त्रदा ।
यो मन्त्रो रसरीतीनामत्र बीजतया स्थितः ।।५९९।।

मुखपत्रे द्वितीये हि शास्त्रमर्यादया तथा ।
गुरोर्महिम्ना स्वमतं स्वया सत्यापितं गिरा ।।६००।।

व्रजाङ्गनामौलिमणिश्रीराधास्थापितो महान् ।
गुरुमार्गस्तत्र भूयादविश्वासोऽविवेकिनाम् ।।६०१।।

व्यासः श्रीहरिलालोऽपि राधारससुधानिधौ ।
रसकुल्याख्यव्याख्यादावर्थमेनमुदैरयत् ।।६०२।।

आचार्यनाम्ना श्रूयन्ते सम्प्रदाया यथेतरे ।
तथायमपि राधाया नाम्नाऽत्र व्यपदिश्यते ।।६०३।।

अभेदस्य च माहात्म्याद् गुरुदेवेष्टदेवयोः ।
इष्टस्य नाम्नाप्यादिष्टः सम्प्रदायोऽयमुच्यते । ६०४।।

राधाया मन्त्रदानेऽस्मिन्न भ्रमो नापि सम्भ्रमः ।
युज्यते, परदेशेऽपि दिव्यादेशः प्रयुज्यते ।।६०५।।

स्वबाल्ये श्रीहिताचार्यो राधारूपं यदाशृणोत् ।
तेनास्य दूनमनसो राधारूपं प्रकाशितम् ।।६०६।।

राधां साधारणीभूतां तदा कालगतिक्रमात् ।
परात्परस्वरूपेण प्राकाशयदथो गुरुः ।।६०७।।

पुष्टिमार्गे वल्लभेन श्रीराधा नोररीकृता ।
कृता विट्ठलनाथेन हिते वृन्दावनागते ।।६०८।।

राधापदानि सूरेण श्रीमद्विट्ठलनोदनात् ।
उदीरितानि वै पश्चादिति निश्चप्रचं मतम् ।।६०९।।

साधारणं यद्राधाया यच्चासाधारणं स्थितम् ।
तद्द्वयं रूपमुज्झित्य स्थापितं दिव्यमद्भुतम् ।।६१०।।

एतदर्थेषु यत्नेषु सेवाकुञ्जे मनोरमः ।
गुरुपीठस्थापनाया यत्नो विजयतेतमाम् ॥६११॥

अत्र तद्राजते चित्रं, रसखानो यदीक्षणात् ।
चित्रितो गीतवान्राधापादसंवाहकं हरिम् ॥६१२॥

श्रीराधावल्लभस्यापि स्वरूपेण समं गुरुः ।
श्रीराधायाः पीठमेवास्थापयत्प्रतिमां न हि ॥६१३॥

राधा गुरुर्गुरोः पीठं स्थाप्यते शास्त्रवादतः ।
इति मत्त्वा मन्दिरेषु पीठमत्रास्ति कल्पितम् ॥६१४॥

अद्यापि राधारमणे तथा बांकेबिहारिणि ।
राधापीठं स्थापितं तत्पूज्यते सेव्यते तथा ॥६१५॥

इत्थं हितप्रभो राधा कृष्णाराध्या गुरुश्च नः ।
विशेषणद्वयमिदं लीलासेवासु च स्फुटम् ॥६१६॥

गुरुत्वेनैव सा नृत्यं गीतं, चन्दनघर्षणम् ।
मालाग्रथनमप्यासां सखीनां शिक्षयत्यहो ॥६१७॥

न सखीनां, प्रियस्यापि सा गुरुर्गीयते बुधैः ।
हरिदासव्यासमुख्यैर्बहुशस्तत्प्रदर्शितम् ॥६१८॥

श्रीमद्भागवतारम्भे जन्माद्यस्येति पद्यके ।
अप्याद्यस्य रसस्यास्ते जन्म यस्याः प्रकीर्तितम् ॥६१९॥

अन्वयादिति संयोगादितरस्माद्वियोगतः ।
इत्युक्त्या तस्य च द्वेधा रूपमप्युररीकृतम् ॥६२०॥

यस्या रासविलासादिष्वर्थेषु ज्ञानवान् स्वराट् ।
इत्युक्त्या च स्वराजोऽस्य गुरू राधा प्रकीर्तिता ॥६२१॥

विशेषोऽर्थोऽवगम्येत पद्यस्यास्य बुभुत्सुभिः ।
हिन्दीपद्यात्मानुवादकादम्बर्या मदुक्तया ॥६२२॥

राधा भावस्वरूपेयं भावोऽपि प्रकटोऽनिशम् ।
क्वचिद्रहस्यं परमं क्वचित्पुञ्जरसामृतम् ॥६२३॥

इत्याद्युक्तमपि क्वापि वृषभानुकुले मणिः ।
व्रजेन्द्रगृहिणीप्रेमास्पदं गोविन्दवत् स्मृता ॥६२४॥

प्रेमोल्लासैकसीमेयं सीमा रसचमत्कृतेः ।
सौन्दर्यसीमा लावण्यसीमेत्याद्यपि सेरिता ॥६२५॥

किं ब्रूमः सुखलावण्यकारुण्यच्छविरूपतः ।
चातुर्यकेलितः सारं सारमुद्धृत्य सा कृता ॥६२६॥

सुभगां सुन्दरीं शोभां सहजां सर्वतः श्रिताम् ।
सहजानन्दमेघालीं सहजारण्यचन्द्रिकाम् ॥६२७॥

राधां सहजमाधुर्यां त्रिलोक्यामश्रुतोपमाम् ।
कथं कविकुलं नाम वर्णयेत्सहजात्मिकाम् ॥६२८॥

जगतामखिला कान्तिर्जगतामखिला द्युतिः ।
सङ्कुचत्येव पश्यन्ती राधिकाङ्गप्रभां पराम् ॥६२९॥

छविस्तिष्ठति नम्रेव, कलेरयति चामरम् ।
चातुरी चित्रलिखिता, पङ्गूयति च चापली ॥६३०॥

अस्या नाङ्गं स्प्रष्टुमपि मृदुतातिमृदुः क्षमा ।
गुञ्जासुमेरुन्यायेन, किञ्चिद् वागपि गायति ॥६३१॥

बहुनात्र किमुक्तेन श्रीश्यामो रससागरः ।
भ्रूविलासाद् भवत्यस्या निनादचकितो मृगः ॥६३२॥

चन्द्रमुख्योऽपि ता गोप्यो हरिद्युतिहतेक्षणाः ।
हरिश्च श्यामतां याति कीर्तिजान्तिकमागतः ॥६३३॥

श्यामेन तेन हृदयं सर्वं श्यामीकृतं व्रजे ।
राधया त्वनया सर्वं बलाद् गौरीकृतं पुनः ॥६३४॥

स्वर्णरेखाङ्कितं लोके निकषं निकषं स्मृतम् ।
राधारूपाङ्कितं भावे हृदयं हृदयं तथा ॥७३५॥

द्वादशोऽध्यायः

## श्रीराधाचरणप्राधान्यम्

राधाचरणप्राधान्यं हरिवंशे महाप्रभौ ।
तदुक्त्या च सदुक्त्या च रसिकैरवसीयते ॥६३६॥

प्राधान्ये किन्तु काप्यस्मिन् शक्तिवादबिभीषिका ।
वृक्षस्य वैष्णवधर्मस्य कुठाराघातवत् स्थिता ॥६३७॥

शाक्तसङ्गोऽग्नितुल्योऽयमिति सेवकभाषितात् ।
बिभीषिका निवर्तेत सा वै वैष्णववृन्दतः ।।६३८।।

भगवान् श्रीहिताचार्यः प्रेमाध्वानं प्रवर्तयन् ।
शक्तिशक्तिमतोर्भावमभावं नीतवान् भृशम् ।।६३९।।

प्रेमाध्वनि प्रेमपात्रं प्रधानं भवति ध्रुवम् ।
इति श्रीराधाप्राधान्यं स्वभावादिह संस्थितम् ।।६४०।।

राधासुधानिधौ 'शक्तिः स्वतन्त्रे'त्यादि यद् वचः ।
न तस्माच्छक्तिवादस्य कर्तव्या गन्धकल्पना ।।६४१।।

इह शक्तेः स्वतन्त्रायाः परायाः परिकल्पने ।
ईशान्याश्चैव शच्याश्च सम्बन्धोऽपि निरुच्यताम् ।।६४२।।

'केचिद् भजन्त ईशानीं, शचीमन्य उपासते ।
आराधन्ते परे शक्तिं, मम राधैव साखिला ।।६४३।।'

इत्येष एव सम्बन्धो घटते भावनोचितः ।
अनन्योपासनामार्गे नायान्ति बहुदेवताः ।।६४४।।

'यो मां पश्यति सर्वत्र' सोऽत्रानन्यो जनः स्मृतः ।
ततोऽप्यनन्यः स जनः 'सर्वं यो मयि पश्यति ।।६४५।।'

पूर्वस्यानन्यभक्तस्य हरिर्नित्यं पुरः स्थितः ।
परस्त्वनन्यरसिको हरेर्नित्यं पुरः स्थितः ।।६४६।।

इति गीतोक्तसामान्यलक्षणेनाप्यनन्यता ।
श्रीराधायामीशतेशानीशचीशक्तिदर्शिनाम् ।।६४७।।

श्रीराधावल्लभेऽद्यापि नानारूपककल्पना ।
धन्यैरनन्यरसिकैः क्रियते कुशरोत्सवे ।।६४८।।

महापुरुषवाक्येषु द्रष्टव्या मूलभावना ।
अन्यथा स्यान्महोत्पातो विहारे विरहेक्षणात् ।।६४९।।

इमं नित्यविहारं हि हरिवंशोऽभिगीतवान् ।
अन्वगायंश्च रसिका हरिदासादयस्त्रयः ।।६५०।।

तत्र श्रीहरिवंशस्य हरिदासस्य वाङ्मये ।
किञ्चित् प्रबोधानन्दस्य हरिरामस्य चेक्ष्यते ।।६५१।।

यन्न नित्यविहारेण साधु सङ्गच्छते पदम् ।
तत्र सङ्गतिलाभार्थं द्रष्टव्या मूलभावना ॥६५२॥

केचिद्धठात्तथा व्याख्यां कृत्वा रक्षन्ति भावनाम् ।
अपरे परिभाषाभिः कल्पिताभिर्विपश्चितः ॥६५३॥

ध्रुवदासस्तु 'महतां वाणी सर्वहितेरिणी ।
सर्वं ब्रूते, परं मृग्यं तत्स्वारस्य' मितीच्छति ॥६५४॥

अथ नित्यविहारार्हा युगलोपासना मता ।
तस्याञ्च राधाप्राधान्ये न भवेत्कृष्णगौणता ॥६५५॥

'राधापदे रसमये ददातु दयितः स्थितिम् ।
प्राणनाथे स्वकीये च ददातु दयिता रतिम् ॥६५६॥'

इत्यस्मिन्प्रार्थनायुग्मे युगलोपासनोचितः ।
भावः श्रीहरिवंशेन प्रोक्तो राधासुधानिधौ ॥६५७॥

'गोवर्धनधरो राधे तव ध्यानपरः सदा ।
किन्न काञ्चनवल्ली त्वं तमालं श्याममाश्रिता ॥६५८॥

इत्यादौ रससिद्ध्यर्थं युगलस्यानुमेलनम् ।
युगलोपासनामार्गध्वन्यानां सर्वदेप्सितम् ॥६५९॥

हरिवंशोपास्तिरीतिं ध्यायतामथ गायताम् ।
श्यामाश्यामैकसाङ्गत्यमिष्टं सेवकसम्मतेः ॥६६०॥

हरिवंशोपास्तिरीतौ युगले सङ्गते सदा ।
अप्यस्ति राधाप्राधान्यं न तु श्रीकृष्णगौणता ॥६६१॥

इमां परम्परां हित्वा कृत्वा स्वमनसो मतम् ।
वंशी अलि'र्महारासं राधिकाया' अरीरचत् ॥६६२॥

श्रीमद्भागवतोक्तस्य रासस्यैषानुकारणा ।
कृष्णस्थाने व्यधाद् राधादेशं कृष्णं न्यवारयत् ॥६६३॥

शृङ्गारो रसराजोऽस्ति यत्र स स्यात्प्रतिष्ठितः ।
स रासो वा महारास इति शक्तिग्रहः सताम् ॥६६४॥

'वंशी अलि' प्रकथिते महारासे निराशताम् ।
प्राप्य तत्सुकृतं सर्वमादायातिथिवद् गतः ॥६६५॥

प्रमदायुक्तपुरुषे शृङ्गारस्यानुदर्शनात् ।
प्रमदानां न सम्मर्दे शृङ्गारः प्रविवेश सः ।।६६६।।

विना च रसराजं तं शृङ्गारं रासकल्पना ।
अयुक्ता, ऋतुराजेन विना स्यान्नाम्रमञ्जरी ।।६६७।।

मनः श्रीहरिवंशस्य श्यामाश्यामतनू इमे ।
अनुरागकरे धृत्वा ते, चलन्तञ्च तं भजे ।।६६८।।

त्रयोदशोऽध्यायः

## सहचरी

काकुचाटुगिरो यासु पिच्छमौलेर्भवन्ति ताः ।
श्रयामहे ताः श्रीराधाकिङ्करीः शङ्करीः सदा ।।६६९।।

पुराणोक्ताविव नवौ प्रेमात्मानौ प्रियाप्रियौ ।
श्रीराधावल्लभीयेऽस्मिन् सम्प्रदाये प्रतिष्ठितौ ।।६७०।।

तथा पुराणकथिता इव सख्यो नवा नवाः ।
प्रेमस्वरूपा एवात्र विहारे सन्त्यपेक्षिताः ।।६७१।।

प्रेमैव भोक्ता श्यामोऽयं प्रेम भोग्यं च राधिका ।
अथोभयोस्तु यत्प्रेम प्रेरकं स सखीजनः ।।६७२।।

कृष्णस्यानन्ततृष्णत्वं श्रीराधाया उदारताम् ।
हृदि धृत्वा सहचरीगणः सेवासु तत्परः ।।६७३।।

सैव सेवा यथा कान्तौ सुखं किमपि विन्दतः ।
तत्सुखे सुखमेतासां न पृथक् सुखमात्मनः ।।६७४।।

भोक्तृभोग्यतया भिन्ना प्रीतिर्दयितयोरियम् ।
प्रेरकत्वादस्ति सखीरवाप्यैकाप्यनेकवत् ।।६७५।।

उभयोस्तु तयोः प्रीत्योः सङ्गमस्थानतां गताः ।
सख्यस्ता अभिधीयन्ते हितसन्ध्यभिधानतः ।।६७६।।

छायैका न श्रुता तन्वोः प्रिययोस्तु सखी स्मृता ।'
इत्यद्भुता गतिः प्रेम्णो यत्प्रकाशो विलक्षणः ।।६७७।।

यथा नयनयोर्दृष्टिः सन्ध्या वा रात्रिघस्रयोः ।
तथा दयितयोरेका सखी स्यात्सुखदायिनी ।।६७८।।

युगलस्यान्योन्यरते रूपमुक्ता सखी यतः ।
अतो युगलरत्यां सा स्यादासक्ता स्वभावतः ।।६७९।।

सहजौ प्रेमसीमानौ प्रियाप्रियतमौ मतौ ।
तस्मिंश्च प्रेमणि प्रेम सखीनां यात्यसीमताम् ।।६८०।।

किञ्च श्यामाश्यामयोः स प्रेमा कामकलान्वितः ।
सखीनान्तु स निष्काम इत्यसौ सरसोऽधिकः ।।६८१।।

सख्यो भवन्ति हंसिन्यो मुक्ताः कामकलास्तयोः ।
एताश्चिन्वन्ति नेत्राभ्यां तास्ता मुक्ता अहर्निशम् ।।६८२।।

वृन्दावनरसास्वादे सखीनामिह यद्यपि ।
रूपं स्यात्काव्यरसिकैर्नाटकप्रेक्षकैः समम् ।।६८३।।

किन्तु लीलाप्रयोक्तृत्वात्तद्रूपं व्यतिरिच्यते ।
युगलं हि स्वलीलायां सखीच्छामनुवर्तते ।।६८४।।

शिशिरग्रीष्मसन्ध्यात्मा वसन्तो वसतीह यः ।
येन वासन्तिकोल्लासो दृश्यते खे जले स्थले ।।६८५।।

सम्भारयति कुञ्जानि वसन्तस्य सखा स्मरः ।
रजनी सुरतोन्निद्रौ प्रियौ रागानुरञ्जितौ ।।६८६।।

सख्यस्तौ तादृशौ वीक्ष्य नानावाचानुवादनैः ।
सरसस्येह गानस्य सूचयन्ति प्रियां गतिम् ।।६८७।।

आलम्ब्यैतां गानगतिं गौरीचाञ्चरिरागयोः ।
गायन्तावारभेते तौ प्रियौ वासन्तिकोत्सवम् ।।६८८।।

'चतुराशी' पदे चापि ताभिर्लीलाप्रवर्तनम् ।
कथन्नु क्रियते कुञ्ज इत्याद्यर्थोऽस्ति दर्शितः ।।६८९।।

सर्वात्मना सुखं तासां तद्द्वन्द्वसुखसङ्गतम् ।
हितचिन्तकता चासामाधत्ते सावधानताम् ।।६९०।।

आसामसावधानत्वलेशेनापि प्रियाप्रियौ ।
यौवनादिमदोन्मत्तौ निमज्जेतां समन्ततः ।।६९१।।

विवशौ भवतः कान्तौ पतितौ प्रेमवीचिषु ।
कामवीचिषु चानीतौ यातस्तौ सावधानताम् ।।६९२।।

एतद्रहस्यं जानन्त्यः सख्यस्तौ प्रेमवोचितः ।
कामवीचीः समानेनु यतन्ते पोषयन्ति तौ ॥६९३॥

प्रियाप्रेमाम्बुधिं दृष्ट्वोल्लसन्तं ता अपि क्वचित् ।
वैवश्यमावहन्तीमाः प्रियावुद्धरतस्तदा ॥६९४॥

युगलस्य सुखार्थञ्च सखीनां जीवनं धनम् ।
इत्यात्मसुखनिष्कामाः सेवां सेवाभिराश्रिताः ॥६९५॥

सेवाविधौ पुत्रवत्ताः मित्रवत् पतिवत्तथा ।
आत्मवच्चाभिमन्यन्ते प्रियाप्रियतमावुभौ ॥६९६॥

शयनीयनिकुञ्जे वा सख्यो भोजनकुञ्जके ।
वात्सल्यभावप्राधान्यात्सेवन्ते तौ तु पुत्रवत् ॥६९७॥

मानापनोदनायास्याः सान्त्वैर्वैदग्ध्यवाग्भरैः ।
असम्भ्रमात्सख्यभावाद् भजन्ते मित्रवत्प्रियौ ॥६९८॥

यथा हि पुत्रवद्भावः पुत्रभावाद् विभिद्यते ।
तथैव पतिवद्भावः पतिभावाद् पृथक् स्थितः ॥६९९॥

पतिवद्भाव एतासां श्यामाश्यामद्वये स्थितः ।
न गोपीनामिवैकस्मिन् पतिभावस्तु पूरुषे ॥७००॥

कृष्णकान्ता न सन्त्योऽपि पातिव्रत्यधरा इमाः ।
मनसा कर्मणा वाचा श्यामाश्यामद्वयं श्रिताः ॥७०१॥

सौभाग्यमूर्त्योरनयोः सौभाग्यैः सुभगा इमाः ।
तयोरेवानुरागात्मसिन्दूरेण सुमङ्गलाः ॥७०२॥

अथात्मवदिति प्रोक्ते चतुर्थे भावनात्मके ।
सम्बन्धे वेदनीयं तद् युगलं प्रियमात्मवत् ॥७०३॥

आत्मार्थे हि प्रियं सर्वं, तेन प्रियतमोऽस्ति सः ।
परं सखीनां युगलमात्मनोऽपि प्रियं परम् ॥७०४॥

प्रेमप्रतीतिमाहात्म्यं दृश्यतां दृश्यतां परम् ।
आत्मा प्रियमयो येन प्रियश्चात्ममयो भवेत् ॥७०५॥

एतस्मिन्नेव भावे स्यात्प्रियात्मैक्यविधायिनि ।
तयोः सुखं सखीसौख्यं तत्सौख्यञ्च तयोः सुखम् ॥७०६॥

पदं स्खलति, यातश्च वनं, विहरतो रहः ।
मिलितौ दयितौ हन्त मनो हिमयतो मम ॥७०७॥

श्यामसम्मनसां राधां राधासम्मनसां हरिम् ।
पान्तीनां न सुखे भेदः कश्चिदासां तयोः सुखात् ॥७०८॥

युगलासक्तिरूपाणां युगलासक्तिचर्वणा ।
स्वरूपचर्वणैवासां परसौख्यप्रदायिनी ॥७०९॥

तृप्तिस्तृष्णामयी यत्र, तृष्णा तृप्तिमयी तथा ।
तस्य प्रेम्णोऽतुलां केलिं वहाम हृदये कथम् ॥७१०॥

विरहो मिलनात्मास्ति मिलनं विरहात्मकम् ।
विरहे मिलने चैक्यं, तत् कथं वा स्वदामहै ॥७११॥

प्रिया प्रियतमो यत्र, यत्र प्रियतमः प्रिया ।
ओतप्रोतौ मिथो नित्यं तौ कथं योजयामहै ॥७१२॥

हृत्कुञ्जे मिथुनस्यैव मिथुनं यत्र खेलति ।
भूत्वा मिथुनहृद्वृत्ति तत् कथं लालयामहै ॥७१३॥

मनो यन्नोपलभते मतिर्यन्न विशत्यहो ।
तदद्भुतं हितं केन, करेण कलयामहै ॥७१४॥

एषाद्भुतहितस्यास्ति, सेवारीतिर्महाद्भुता ।
अत्रानन्ताः सखीः केन संख्यामानन्तवीचिषु ॥७१५॥

यो मिमीतेऽप्युडुगणान् जलविन्दून् रजःकणान् ।
व्योमान्तरिक्षपृथ्वीषु न स कुञ्जे सखीरिमाः ॥७१६॥

ललिताद्या अष्टसख्यः प्रत्येकाष्टसखीयुताः ।
ताः प्रत्येकाष्टसख्यो मता यूथेश्वरीतया ॥७१७॥

विचित्रवर्णवसना विचित्राभरणक्रियाः ।
सुमूर्ताभी रागिणीभिः सह गायन्ति सौभगम् ॥७१८॥

रात्रिन्दिवं शुक्लकृष्णपक्षयोर्मासि मास्यमूः ।
ऋतुषट्के बद्धहस्ता उपतिष्ठन्ति तद्द्वयम् ॥७१९॥

यथारुचि द्वयस्यास्य सुखयन्ति स्वसेवया ।
वृन्दावने स्थिताः सख्यः खगाद्याकृतयः पराः ।।७२०।।

प्रियापक्षा गौरसख्यः सदा सन्ति सगौरवाः ।
प्रियपक्षाः श्यामसख्यः सदा दैन्यमुपाश्रिताः ।।७२१।।

उन्मर्यादः प्रेमरसः श्यामाश्यामौ निमज्जयन् ।
प्रवहन् हृदयान्यासां नयनानि च संश्रितः ।।७२२।।

इमास्तदवलम्बेन सेवन्ते रागरञ्जिताः ।
यामः शरणमेतास्तत् पिबामश्चाद्भुतं रसम् ।।७२३।।

चतुर्दशोऽध्यायः

**श्रीहितहरिवंशः**

हितञ्च प्रेम च प्रोक्तं तुल्यार्थमिह यद्यपि ।
श्रीराधावल्लभीयानां तथापि व्यापकं हितम् ।।७२४।

हितं हि तेषां सम्पूर्णं ब्रवीति प्रेमदर्शनम् ।
तेषामुपास्तिमार्गोऽपि हितशब्दादुदीर्यते ।।७२५।।

तत एव हितादस्मात् प्रेम भिन्नं प्रतीयते ।
व्याप्यव्यापकयोर्भेदः कथं नाम निवार्यते ।।७२६।।

मूर्तञ्चामूर्तमित्यस्य द्वे रूपे स्तो हितस्य ये ।
तत्र मूर्तं हितं प्राहुर्हरिवंशं हिताह्वयम् ।।७२७।।

'श्रद्धामयोऽयं पुरुष' इति न्यायानुसारतः ।
अयं हितमयः प्रोक्तो हरिवंशो हिताख्यया ।।७२८।।

प्रेमापरपर्यायस्य हितस्याखिलवैभवम् ।
हितस्य हरिवंशस्य विद्यते नेतरस्य तत् ।।७२९।।

जन्मवर्धापनेष्वत्र श्रीहितो मङ्गलेषु च ।
चतुर्भिः कीर्तितो रूपैर्वंश्याचार्यसखीनिजैः ।।७३०।।

निजरूपेऽथवा तस्य हितरूपे तु तात्त्विके ।
अस्ति श्रीहरिवंशस्य विहारो नैत्यिको धनम् ।।७३१।।

हितमङ्गि विहारोऽङ्गं विहारोंऽशोंऽशि तद्धितम् ।
इत्यादि हिततत्त्वस्य प्रतिपत्तौ निरूपितम् ।।७३२।।

हृदये हरिवंशस्य प्रीतेर्लोभोऽभिवर्द्धते ।
स एव सुधृतक्षोभो विहारे भवति प्रियः ।।७३३।।

लोभादनन्तरं लाभ इव राधेतिनामिनी ।
उदेति हरिवंशस्य हृदये कापि भामिनी ।।७३४।।

लोभलाभाकृती एतावुदितावद्भुतौ प्रियौ ।
इति प्रादुर्भवत्यत्र तत्तच्छृङ्गारचेष्टितम् ।।७३५।।

लोभात्मासौ प्रियतमः प्रियाया लाभसात्मनः ।
छबिं पिबति संहृष्टो लाति रङ्को निधिं यथा ।।७३६।।

छबिपानेन मत्तश्च छलेनापि बलेन च ।
प्रियामङ्के समाहर्तुं चेष्टते वेष्टयत्यमूम् ।।७३७।।

अथ सर्वार्थसारस्य रसस्य नववर्षणे ।
हरिवंशः प्रियास्येन गायति श्रीप्रियायशः ।।७३८।।

प्रेमाभिलाषरूपस्यातृप्तपूर्तिस्वरूपया ।
श्यामस्य श्यामया साकं प्रेमकेलीर्विलोक्य च ।।७३९।।

हितात्मा हरिवंशोऽयं प्रसार्य प्रणयाञ्चलम् ।
प्रशंसति प्रियाप्रेष्ठौ यत्कथा प्रेमसिद्धिदा ।।७४०।।

सखीष्वेषा हितसखी प्राप्याऽत्यन्तान्तरङ्गताम् ।
विराजते, ह्यष्टसखीहितं तस्यां समुच्चितम् ।।७४१।।

अस्यामत्यन्तरङ्गायां हितसख्यां प्रसन्नया ।
श्रीराधयापि कुञ्जेषु तस्या जन्मोत्सवः कृतः ।।७४२।।

अथ वंशीस्वरूपेण हितमेवेदमद्भुतम् ।
श्रीहिताचार्यवद्रासरसं प्राकाशयद् भुवि ।७४३।

श्रीमद्भागवते श्याम-रमणेच्छा-प्रकाशिका ।
वंशी यथा गायिकास्ति तथात्र हरिवंशवाक् ।।७४४।।

द्वापरान्ते स्वनादेनाव्यक्तं यद् गीतमेतया ।
तदेव हरिवंशेन कलौ व्यक्तमुदीरितम् ।।७४५।।

द्वापरे वेणुनादेन गोप्य एवाभिमोहिताः ।
दुस्त्यजं स्वजनं चार्यमर्यादादि जहुः किल ।।७४६।।
कलौ श्रीहरिवंशस्य वृन्दावनरसार्द्रया ।
गिरा विमोहिताः सर्वे गता गोपीदशां वयम् ।।७४७।।
आचार्यहरिवंशस्य वाणीं श्रीसेवकादयः ।
वेणुनादतयाऽगायन्नस्मात् साधर्म्यकारणात् ।।७४८।।
साधर्म्ये सति वैधर्म्यमेव सादृश्यलक्षणम् ।
वेणुनादाद्धिताचार्यवाङ्मयं स्याद्विलक्षणम् ।।७४९।।
कान्ताभावादगुः श्यामं वेणुनादविमोहिताः ।
हारिवंशीवाग्विमुग्धाः सखीभावाद्वयं गताः ।।७५०।।
वेणुनादकृते रासे त्वङ्गनाद्वयमन्तरा ।
हरिर्हरिद्वयञ्चैवान्तरा विजयतेऽङ्गना ।।७५१।।
हरिवंशगिरा क्लृप्ते रासे तद्रासमण्डलम् ।
अन्तरामण्डले रम्यं युगलं तद्विराजते ।।७५२।।
मण्डले राधिकाश्यामौ चम्पकेन्दीवरद्युती ।
तडिद्घनाविव स्वर्णमहानीलमणी इव ।।७५३।।
वर्णितौ हरिवंशेन विशेषेण स्ववाङ्मये ।
बर्हिर्मण्डलमप्यत्र विशिष्टरसदृष्टितः ।।७५४।।
बहिर्मण्डलनिर्वेशे कान्ताभावः प्रयुज्यते ।
अन्तर्मण्डलसंवेशे सखीभावः प्रशस्यते ।।७५५।।
वंशीनादे सुन्दरीणां मोहनान्तिकमागमः ।
तेन रासविलासश्च हरिवंशस्य सम्मतः ।।७५६।।
अन्तर्धानं मुकुन्दस्य, सुन्दरीणां वियोगतः ।
सुस्वनं रोदनं चैव हरिवंशो न गायति ।।७५७।।
वैरस्याधायकं नूनमन्तर्धानं हरेरिदम् ।
गोपीमानोत्थविश्लेषकथास्मभ्यं न रोचते ।।७५८।।
'रासो मधुकरक्रीडा' यस्य दर्शनमात्रतः ।
खगा मृगाश्च वल्ल्यश्च प्रेमाधीनाः सुराङ्गनाः ।।७५९।।

वंशीरूपतया रासस्थलानामनुदर्शनम् ।
स्वाभाविकं श्रीहिस्य हरिवंशमहाप्रभोः ॥७६०॥
किन्त्वन्तरङ्ग रासस्याविष्कर्ता श्रीहितप्रभुः ।
इति मत्त्वानुगैरन्तारास एवानुवर्णितः ॥७६१॥

वंशीरूपेऽप्यथ हिते न वंशीं हितधर्मिणः ।
तथाऽगायन् यथा पुष्टिमार्गिणस्ते कवीश्वराः ॥७६२॥
अत्र हेतुरयं ज्ञेयो—रासे वंशीप्रयोजिते ।
शुकेनोदीरिते चास्मान् प्रतिभाति विरस्यता ॥७६३॥
अतो बहीरासशंसि-वंशीमहिमगायनाः ।
श्रीराधावल्लभीयेऽस्मिन्सम्प्रदाये सुदुर्लभाः ॥७६४॥
अन्तारासविलासानां या तु वंशी प्रशंसिका ।
तस्या गुणान् प्रगायन्ति रसिका जन्ममङ्गले ॥७६५॥
जगत्प्रशंशिता वंशी भुवि प्रादुरभूदियम् ।
कुलं प्रकाशितं गूढा गुणा विस्तारिता यया ॥७६६॥
श्यामाश्यामहितं चोक्तं भृतं रतिरसादिभिः ।
वर्णिता रासलीलापि रसिकान्तर्विनोदिनो ॥७६७॥
प्रदर्श्य युगलाध्वानं ध्वान्तमज्ञानजं हृतम् ।
राधावल्लभपादाब्जहितं वृन्दावने भृतम् ॥७६८॥
इत्याद्यनेकरसिक-कविमूर्धन्यवन्दिताम् ।
वन्दामहे वयं वंशीं सर्वलोकाभिनन्दिकाम् ॥७६९॥
तुरीयं हितस्वरूपं तु श्रीहिताचार्य एव नः ।
धर्मसंस्थापको लोके ह्याचार्य इति कथ्यते ॥७७०॥
नवीनमेव धर्मश्च प्रवर्तयितुमागतः ।
श्रीहितो हरिवंशोऽयं तस्मादाचार्यता स्फुटा ॥७७१॥
'विपक्षमखिलीकृत्य प्रतिष्ठा खलु दुर्लभा ।
अनीत्वा पङ्कतां धूलिमुदकं नावतिष्ठते ॥७७२॥'
इति नूतनधर्मस्य भुवि नूनं प्रवृत्तये ।
विरोधिनां निरासार्थं कर्तव्यो भवति श्रमः ॥७७३॥

विधानात्मकयत्नानां यत्फलं कीर्तिविस्तरे ।
निषेधात्मकयत्नानां भवत्येवाधिकं ततः ॥७७४॥
परं हितमयोऽस्माकं हिताचार्यो न तादृशम् ।
यत्नं कमप्याश्रितोऽयं निषेधात्खण्डनात्मकम् ॥७७५॥
भक्तिभिन्ने दृष्टिपातो न हितप्रभुणा कृतः ।
भक्तिभेदाश्च सकला व्याख्याता हितभावतः ॥७७६॥
यस्यासीदिह यो भावस्तत्रैवायं स्थिरीकृतः ।
अतः सर्वावताराणां भक्ता रक्ता हितप्रभौ ॥७७७॥
सर्वेषामेक एवेयं प्रीतिरीतिः प्रदर्शिता ।
श्रोतव्यः कीर्तिव्यश्च स्मर्तव्यश्च प्रियः प्रभुः ॥७७८॥
बालकृष्णचरित्राणि प्रेमप्रासादभूमिका ।
इति श्रीमद्धिताचार्यैर्व्रजरीतिरपीरिता ॥७७९॥
अनन्तरन्तु निगमागमानामप्यगोचरः ।
व्याख्यातो हितधर्मो वा निजधर्मो रसात्मकः ॥७८०॥
निर्विरोधमभूत्सर्वं जीवनं श्रीहितप्रभोः ।
उपास्यबुद्धिरस्याभूद् दैवे चासुर एव च ॥७८१॥
हरिरामव्यासमाह विषीदन्तं कृपां विना ।
'जातो भक्तापराधस्ते' भूतोऽसौ भक्तभक्तिमान् ॥७८२॥
राधिकां ध्यायतः सर्वान् प्रेमोल्लासभराधिकाम् ।
सर्वाश्चर्यगतिं यातान् महतः प्रणमत्यसौ ॥७८३॥
सतामभाष्यदृश्येषु क्रूरेष्वपि च पापिषु ।
वस्तुतः पश्यतस्तस्याराध्यबुद्धिरवर्तत ॥७८४॥
राधाभजनमूर्तिः श्रीहितोऽसौ ऋतुराण्मतः ।
स्वच्छे चित्तालवालेऽस्य सम्भृतं सौभगामृतम् ॥८७८५॥
उद्यानमिह शृङ्गार-कल्पद्रुममयं स्थितम् ।
वाणीरूपेण सरसः परागः स्रवते यतः ॥७८६॥
दशधा भक्तिवल्लीयं भावपुष्पफलान्विता ।
रससम्भिन्नवचनाऽऽरचना चाम्रमञ्जरी ॥७८७॥

अनुरागाम्बरच्छन्ना मतिर्माङ्गलिको घटः ।
रसाभिलाषा विविधाः सौरभं प्रेमसेचनम् ॥७८८॥

परात्परमिदं तत्त्वं धृतरूपचतुष्टयम् ।
हिताभिधानं परमं नास्ति सत्त्वं ततः परम् ॥७८९॥

हरिवंशोऽस्ति सुध्यानं विज्ञानं विशदं च सः ।
हरिवंशो हि नामैकं गुणो रूपं न वै परम् ॥७९०॥

हरिवंशः प्रेमरसः कृपाब्धिः परमाक्षरम् ।
हरिवंशः स एवात्मा परमानन्दरूपभाक् ॥७९१॥

हरिवंशोऽस्ति मनसः प्रमाणं, जीवनं च नः ।
हरिवंशो हि विपुला सुखसम्पत्तिरद्भुता ॥७९२॥

हरिवंशोऽस्ति गोत्रं नः कुलं प्रवरमेव च ।
जातिर्हितस्य रूपं तद्, ऋद्धिसिद्ध्यात्मकं च तत् ॥७९३॥

हरिवंशः कर्मकाण्डं ज्ञानकाण्डं तदद्वयम् ।
स वै पातञ्जलो योगः पुण्यं पौराणिकं च तत् ॥७९४॥

हरिवंशः प्रमाणानां न्यायसिद्धा परम्परा ।
स एव रसशास्त्रेषु प्रियता भुवि विस्तृता ॥७९५॥

हरिवंशः स ऐतिह्यं, गीतसाहित्यशास्त्रकम् ।
चतुःषष्टिकलाकाल्यं स जगन्मङ्गलं परम् ॥७९६॥

हिततत्त्वं, हितसखीं, वंशीञ्च श्रीहितप्रभुम् ।
हितमेव चतूरूपं वयं वन्दामहेऽनिशम् ॥७९७॥

## पञ्चदशोऽध्यायः

### उपासनामार्गः

भक्तेः प्रायः सर्वमङ्गं, प्राच्यवैष्णवपद्धतौ ।
प्राप्यते, किन्तु षोडश्यां, शताब्द्यां नवमेव तत् ॥७९८॥

सप्तदश्यां शताब्द्याञ्चेयमिष्टोपास्तिपद्धतिः ।
निजेन नवरूपेणाभवत् पल्लविताप्यलम् ॥७९९॥

एके सर्वावताराणामभेदात्समुपासकाः ।
रामकृष्णनृसिंहादिलीलास्तेषां समप्रियाः ॥८००॥

परे कस्यचिदेकस्य प्रभुरूपस्य सर्वतः ।
इष्टभावादनन्यत्वाद् भवन्त्याराधकाः परम् ॥८०१॥

पूर्वेभ्यः स्युः परे श्रेष्ठा मन्यते भावुकैरिदम् ।
तेषां च भक्तिः कथिता विज्ञैरव्यभिचारिणी ॥८०२॥

एतेष्वाराधकेष्वत्र व्रजदेव्यः प्रशंसिताः ।
गौडीयास्तां व्रजवधूकल्पितोपासनां श्रिताः ॥८०३॥

शान्ते भक्तिरसे भीतिः प्रीतिं तामतिवर्तते ।
दास्ये भक्तिरसे नीतिः प्रीतेः स्यादतिशायिनी ॥८०४॥

सख्ये भक्तिरसे स्वार्थसिद्धयै मृदुरुपक्रमः ।
वात्सल्येऽपि प्रलीनेव प्रतीप्सा कापि तिष्ठति ॥८०५॥

माधुर्येऽपि नहि प्रेमपात्रसौख्यप्रधानता ।
स्वसुखार्थितया गोप्य ऐश्वर्यं न कृष्णप्रियां प्रति ॥८०६॥

इति श्रीध्रुवदासेन प्रागुक्ते भक्तिपञ्चके ।
तारतम्यं प्रदर्श्येदं षष्ठी भक्तिर्निरूपिता ॥८०७॥

यस्यां श्यामाश्यामसुखमिच्छन्त्यो ललितादयः ।
सख्यः स्वदन्ते युगलकिंशोररतिजं रसम् ॥८०८॥

प्रेमोल्लासे नास्ति ह्रासो जातु षष्ठे रसे त्विह ।
नास्मात्परं स्याद् भजनं, नचैवास्मात्परो रसः ॥८०९॥

श्रीराधावल्लभः प्रेमी सदैकरस आस्थितः ।
आराधना तस्य नूनं शुद्धप्रेम्ण उपासना ॥८१०॥

प्रेमोपास्ती रसोपास्तिः सा लभ्या कृपया परम् ।
कृपा च रसिकैः साकं सत्सङ्गेनानुभूयते ॥८११॥

रसस्य सारं गृह्णन्तो रसिकाः कथिता इह ।
रससारो विहारोत्थः श्यामयोः कुञ्जवीथिषु ॥८१२॥

नित्ये प्रेमविहारेऽस्मिन् श्यामयोः प्रीतिरद्भुता ।
रसीभूयावभासेत यच्चित्ते, रसिकोऽस्ति सः ॥८१३॥

गीतश्च रससारोऽयं हरिवंशस्य वाङ्मये ।
रसिका, रसरीतिं ये गृह्णीयुस्तत्र दर्शिताम् ॥८१४॥

नितान्तरसिका एते सम्पूर्णरसिकास्तथा ।
अनन्यरसिका वोक्ता रसिकेभ्यो विभेदने ॥८१५॥

रसरीतिं च तां सम्यग्ग्रहीतुमभिलाषुकः ।
कर्मणा मनसा वाचा हितधर्मं समाश्रयेत् ॥८१६॥

व्याससूनुपथं गच्छन्, जानीयात्कोऽपि कर्हिचित् ।
रसरीतिमिमां चित्तं, दत्त्वा श्रीहितवाङ्मये ॥८१७॥

इत्थं श्रीहितधर्मस्य धारको रसिको मतः ।
कृपानुभूयते साक्षात् सङ्गे श्रीहितधर्मिणाम् । ॥८१८॥

नैवाल्पतपसा वेद्यो हितधर्मोऽयमुज्ज्वलः ।
कृपया हरिवंशस्य वेद्यो धर्मिनिषेवया ॥८१९॥

हृदि चेद्धितधर्मेऽस्ति रुचिस्तर्हि भवात्ययः ।
मनःप्रसादेऽन्नरुचौ यथा वेद्यो ज्वरात्ययः ॥८२०॥

समवायो हि सम्बन्धः प्रसिद्धो धर्मधर्मिणोः ।
धर्मी स एव यो मर्मी हरिवंशीयमर्मणः ॥८२१॥

धर्मिसेवाविधानेऽस्मिन् रहस्यं साम्प्रदायिकम् ।
निहितं, हितधर्मित्वादेव श्यामावुपास्महे ॥८२२॥

हितं प्रेम, प्रेमधर्मा हितधर्माः स्वभावतः ।
तान् धर्मान् निर्वहन्तौ तौ प्रथितौ हितधर्मिणौ ॥८२३॥

धर्मिसेवा—धर्मिसङ्ग—विधानं साधनापथे ।
विभिन्नान्येव तत्त्वानि पश्यद्भी रसिकैः कृतम् ॥८२४॥

भावभेदेन भगवद्भजनं क्रियते जनैः ।
अत एवात्र भक्तानां भेदा भूयांस ईरिताः ॥८२५॥

स्वोपास्तिपद्धतिं ध्यात्वा तादृग्भक्तसमागमः ।
कर्तव्योऽभयकामेन, भवेद्धि भयमन्यथा ॥८२६॥

'श्रेयान् स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात् ।
स्वधर्मे निधनं श्रेयः परधर्मो भयावहः ॥८२७॥

सर्वभूतेषु येनैकं भावमव्ययमीक्षते ।
असौ ज्ञानी भवेद्भक्तो, न भक्तो रसिकस्तथा ॥८२८॥

रसिकैः प्रेमभक्तैस्तु सद्विवेकपुरस्सरम् ।
परीक्ष्य स्वानुरूपेषु कार्या भक्तेषु सङ्गतिः ॥८२९॥
मधुरस्य रसस्यास्य ममताऽऽधार उच्यते ।
ज्ञानस्य समताऽऽधारो तत्र नेयं न चात्र सा ॥८३०॥
ममतेयं रसनिधिः समता रसशोषिणी ।
इति प्रेमोपास्तिमार्गे ममता भक्तजीवनम् ॥८३१॥
धर्मिभी रसिकैरस्माद् भक्ष्यं पेयं स्वमण्डले ।
भिन्नोपासकवृन्दे तु ग्राह्ये नैलासिते अपि ॥८३२॥
श्यामाश्यामानुरागेण रञ्जितं यस्य मानसम् ।
तस्योच्छिष्टमपि ग्राह्यं नान्यमूलफले अपि ॥८३३॥
इष्टमिश्रैर्मनोमिश्रैर्मिश्रैर्भजनपद्धतौ ।
सङ्गन्तव्यं संभोक्तव्यं संपातव्यञ्च निर्भयम् ॥८३४॥
असम्बन्धोऽरुचिग्रस्तैः सत्सङ्गो रुचिजीवनैः ।
देहगेहात्मविस्मृत्या स्फोरयेद्धृदि तद्द्वयम् ॥८३५॥
मर्यादोपास्तिशुद्ध्यर्थं नेयं सङ्कीर्णता हृदः ।
उदारभावे हि प्रेम्णि विशेत्सङ्कीर्णता कथम् ॥८३६॥
प्रीतिं सर्वेषु भूतेषु रीतिं श्रीहितधर्मिणाम् ।
प्रतीतिं श्रवणे चोक्तौ निर्वहन्ति कृपाश्रयाः ॥८३७॥
तत्सुखित्वं चारु हितमापिपीलिकमाप्रियम् ।
नाम्नि वाण्याञ्च विश्रान्तिर्हितधर्मस्य लक्षणम् ॥८३८॥
दुर्भगा युगले सेवां निन्दां चान्येषु तन्वते ।
मूले जलं निषिञ्चन्तो, वृक्षे तेऽग्निं प्रयुञ्जते ॥८३९॥
रसिकानां मनः स्थित्याः कर्तुं विश्लेषणं बुधैः ।
प्राकृतञ्चाप्राकृतञ्च मनो द्विविधमीरितम् ॥८४०॥
विषयाणां रसं भुङ्क्ते प्रायेण प्राकृतं मनः ।
अप्राकृतं तत्कमपि रसं भुङ्क्ते त्वलौकिकम् ॥८४१॥
हिताध्वाश्रयणात्पूर्वं मारणीयं मनः स्वकम् ।
जीवनीयं नवे रूपे तद्ध्यधिक्रियते रसे ॥८४२॥
विषये वासनां दग्ध्वा तद्भस्म प्रविकीर्य च ।
मार्गे रसिकभूपस्य देहोऽयं प्रणिधीयते ॥८४३॥

सर्वार्थलुब्धे हृदये नैवोदेति हिताङ्कुरम् ।
इत्याशान्तरमुच्छिद्य युगलं शरणं व्रजेत् ॥८४४॥

हिताङ्कुरे समुत्पन्ने नावशिष्येत वासना ।
वृन्दावनरसे रागो विरागाय प्रकल्पते ॥८४५॥

रूढे रागान्तरे चित्ते लीढे प्रेमरसासवे ।
गूढा गतिः कापि भवेन्मूढानां प्रिययो रसे ॥८४६॥

समुद्भूते प्रेमरसे यात्युदासीनतां जनः ।
पानाशने हासखेलौ सर्वं विस्मरति स्वयम् ॥८४७॥

दृष्टेऽद्भुतच्छटारूपे, वाणी विस्मयते क्षणात् ।
प्राणा अपह्रियन्ते च नयने रुदतोऽनिशम् ॥८४८॥

हृदि विद्धे रूपबाणैः सर्वमङ्गं श्लथं भवेत् ।
मुखं पीतं वपुः श्यामं विवर्णं वा भवेदिदम् ॥८४९॥

प्रेमवल्ल्यां वेल्लितायां सर्वा संज्ञा विलुप्यते ।
इच्छाकमलमेवैकं हृदये तस्य फुल्लति ॥८५०॥

तृणात्सुनीचम्मन्योऽसौ स्मितभाषी सुमानदः ।
तरोरपि सहिष्णुः सन्न जातु हृदि शोचति ॥८५१॥

नामोत्थितां छटां प्रेम्णः पश्यन्नमति तामयम् ।
ग्रीवोन्नमनवेलापि विनम्रेण न लभ्यते ॥८५२॥

हरिवंशयशश्चिन्वन् कोमलं वचनं वदेत् ।
सर्वदा सर्वसुखदो न ब्रूयाद् दुःखदं क्वचित् ॥८५३॥

श्यामाश्यामप्रेमबद्धो वैदिकानथ लौकिकान् ।
आचारान्व्यवहारांश्च निर्वोढुं न भवेत्क्षमः ॥८५४॥

शुभाशुभमतिद्वैतनाशान्निर्वहणाक्षमः ।
न कञ्चिदपि दोषं वा गुणं वा सोऽनुविन्दति ॥८५५॥

सर्वा मनोवृत्तयोऽस्य लुब्धाः प्रेमरसाप्तये ।
इत्यसौ रसलब्ध्यर्थे कर्मण्येव प्रवर्तते ॥८५६॥

इष्टोपास्तिः स्वभावेन जनयत्याश्वनन्यताम् ।
अनन्यता सर्वदशाभीष्टोपास्त्योरिहैकता ॥८५७॥

हितधर्मेऽनन्यतनुरनन्यहृदयो रसे ।
तत्सिद्धान्तेऽनन्यमतिरनन्याहञ्च दास्यके ॥८५८॥

अनन्यो नवधा भक्त्या स्वोपास्योपासकौ भजेत् ।
रसे नित्यविहारोत्थे हृदयं रमयेत्सदा ॥८५९॥

सेवकाद्युक्तसिद्धान्तचिन्तने योजयेन्मतिम् ।
श्रीराधापदकैङ्कर्येऽर्पयेन्नित्यमहङ्कृतिम् ॥८६०॥

अनन्यो धनपुत्रादिकामो नैति सुरान्तरम् ।
वाचा स नान्यं वदति चक्षुषान्यं न पश्यति ॥८६१॥

श्रोत्राभ्यां न शृणोत्यन्यं न चान्यं चिन्तयत्ययम् ।
सर्वेष्टदृष्टिर्भजते हरिं हरिजनं तथा ॥८६२॥

एषणात्रयसिद्ध्यर्थं नाश्रयेत्क्षुद्रदेवताः ।
जीविकासिद्धये भक्तिशून्यान् सेवेत नो जनान् ॥८६३॥

'अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते ।
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥८६४॥

इत्युक्तं विस्मरेन्नैव रक्षेच्चैव विनिश्चयम् ।
तथा योगादिभिर्नात्मा यथा भक्त्या विशुद्ध्यति ॥८६५॥

प्रभाताद्धरिसेवासु संलग्नमनसामिह ।
सन्ध्योपास्त्याद्यकरणे प्रत्यवायो न विद्यते ॥८६६॥

भक्तस्य दर्शनेनैव तरन्ति पितरः शतम् ।
श्राद्धादि तस्य व्यर्थं स्याद्धरिनामानि गायतः ॥८६७॥

'शृण्वन्तु पितरो देवा निराशा बलितो मम ।
गृह्णीतान्यजनात्पूजां, मत्पूजार्थी हरिः स्थितः ॥८६८॥'

श्रौतस्मार्तानि कर्माणि यथा कुर्वन्ति लौकिकाः ।
न तथा ग्रहिला भक्तास्त्यक्ताः कर्मभिरात्मना ॥८६९॥

परन्तु भगवद्धर्मे साग्रहाणां महात्मनाम् ।
एकादशीव्रतादिष्टप्रसादोऽत्र विरुध्यति ॥८७०॥

त्यक्त्वा प्रसादं सामान्याः कुर्वन्त्येकादशीव्रतम् ।
अनन्यास्तु व्रतं त्यक्त्वा प्रसादमुपभुञ्जते ॥८७१॥

यद्वा प्रसादग्रहणमनन्यानां परं व्रतम् ।
न तत्प्रतिरुणद्धचे तत्सामान्यैकादशीव्रतम् ॥८७२॥

एकादशीकोटिकोटिः प्रसादैककलामपि ।
न नूनमर्हति स्प्रष्टुमिति श्रीहितसम्मतिः ॥८७३॥

अत एवास्ति सर्वस्वं प्रसादोऽयं महाप्रभोः ।
तस्य प्रसिद्धाधिकारी गीतोऽयं भक्तमाल्यके ॥८७४॥

यस्य चित्तं भवेल्लग्नं राधावस्त्राञ्चलग्रहे ।
श्रीश्यामसुन्दरे तस्य किं कार्यं नवभिर्ग्रहैः ॥८७५॥

रङ्का नवग्रहा हानिं कां कुर्युः श्यामसेविनः ।
भद्राश्च तेऽत्र कं लाभं दद्युः श्यामविहायिनः ॥८७६॥

सत्प्रेमात्मसुखाकाङ्क्षालेशशून्यमिह स्मृतम् ।
इति प्रेमोपासकानां सकामा न भवेत् क्रिया ॥८७७॥

प्रेमोपास्तौ तिथिविधिप्रभृतिं ये विचिन्वते ।
मुक्ताहारे काचखण्डांस्ते ग्रथ्नन्ति कुबुद्धयः ॥८७८॥

सर्वतन्त्रस्वतन्त्रेयं गुणातीतास्त्यदूषणा ।
वृन्दावनरसोपास्तिरित्यस्यां न शुभाशुभे ॥८७९॥

न विधिर्न निषेधश्च सुदिनं नापि दुर्दिनम् ।
न लग्नं न ग्रहो नापि भ्रमो न कपटं क्वचित् ॥८८०॥

नैव मानं नावमानं न मौर्ख्यं नापि चातुरी ।
न स्नानं नाप्यहो दानं, ज्ञानं ध्यानमपि श्रमः ॥८८१॥

सारासारविवेकिन्या बुद्धचैव स्याद् रसग्रहः ।
हरिवंशाङ्घ्रिकमलं प्रपन्नानां स जीवनम् ॥८८२॥

सखीभावप्रतिष्ठायां सखीनामनुकारतः ।
श्रीराधावल्लभीयेऽस्मिन् सम्प्रदायेऽस्त्युपासना ॥८८३॥

सख्यः श्यामाश्यामसौख्यकामाः परिचरन्ति तौ ।
तयोर्नाम च रूपं च गायन्त्यस्ता अहर्निशम् ॥८८४॥

इत्यत्रोपासनामार्गस्त्रीणि कर्माणि संश्रितः ।
परिचर्या, नामजपं, वाण्या रूपानुशीलनम् ॥८८५॥

वृन्दावन-सखी-श्यामैस्त्रिभिः सन्धिमुपेति यः ।
त्रिकर्मकृत्स तरति जन्ममृत्युमयं जगत् ।।८८६।।

तानि त्रीण्यपि कर्माणि, रससिद्धिपरीप्सया ।
ज्ञेयानि चानुष्ठेयानि ह्यनन्यरसिकैः सदा ।।८८७।।

**षोडशोऽध्यायः**

## परिचर्या

परिचर्या तु सा ज्ञेया सेवा या दासवन्नृपे ।
पादसेवनमित्यस्याः पर्यायः श्रवणादिषु ।।८८८।।

इयं च परिचर्या नः सर्वथाधीनतामतिम् ।
प्रेमरूपानुरूपां वै सद्यो जागरयिष्यति ।।८८९।।

मुक्तिकामे क्रीतदासेऽधीनताधीर्न तादृशी ।
प्रेमिण्यक्रीतदासेऽस्मिन्, यादृशी मुक्तिनिःस्पृहे ।।८९०।।

अधीनतासमत्वेऽपि दासे दास्यां यदन्तरम् ।
तद्वै नृपतिदृष्टान्ते स्पष्टीभवति सत्वरम् ।।८९१।।

दासः सभायां स्वस्वामिसेवां कुर्यान्न वेश्मनि ।
दासी त्वत्रान्तरङ्गायां सेवायामधिकारिणी ।।८९२।।

दासीभावो राधिकाया दास्ये सख्ये प्रतिष्ठितः ।
इति तद्वेदशिरसां रहस्यं दास्यमिष्यते ।।८९३।।

परिचर्यैकचतुरा प्रसादवसनावृता ।
यावन्नात्मा किशोरी स्यात्तावद् दास्यं सुदूरतः ।।८९४।।

उपासकेन हृदये दासीभावं निधाय तत् ।
परिचर्या प्रकर्तव्या भावदेहेन मञ्जुना ।।८९५।।

भूतदेहे जातिवर्णकुलाहङ्कृतिसंस्थितिः ।
भावदेहे किल श्यामाश्यामदासीति निश्चितिः ।।८९६।।

भावदेहस्य पुष्टया स्याद् भूतदेहान्वयक्षयः ।
येन बाहिर्मुख्यनाशादान्तर्मुख्योदयो भवेत् ।।८९७।।

आन्तर्मुख्यमिदं राधाकिङ्करीरूपनिश्चयम् ।
उपचित्योपहरते नित्यकेलिप्रदर्शनम् ।।८९८।।

दासीभावप्रतिष्ठायां परिचर्योपकारिका ।
तथा च परिचर्यायां दासीभावाधिकारिता ॥८९९॥

इत्यन्योन्याश्रयकृतो दोषो मा स्पृशतान्मतिम् ।
तत्क्रमेणैवोपचयो दासीभावस्य विश्रुतः ॥९००॥

क्रमोपचयसिद्ध्यर्थं दासीभावस्य चास्य सा ।
परिचर्या त्रिधा प्रोक्ता तत्राद्या प्रकटाह्वया ॥९०१॥

राधावल्लभलालस्य त्रिभङ्गललितं नवम् ।
विराजमानं यद्रूपं वेणुवादनतत्परम् ॥९०२॥

तद्वामभागे राधायाः पीठं विधिवदाहितम् ।
आवेष्टितं भव्यवस्त्रैर्भूषितं नव्यभूषणैः ॥९०३॥

तदन्तर्हेमपत्रेऽस्ति 'श्रीराधा'नाम लेखितम् ।
श्रीराधापरिचर्यार्हमिह सर्वं निवेद्यते ॥९०४॥

न श्रीराधां विना पूजा न ध्यानं न जपो हरेः ।
यस्मादर्धक्षणेऽप्येष तां विना व्याकुलो भवेत् ॥९०५॥

प्रातः प्रकटसेवायाः प्रारम्भो भवति क्रमात् ।
कृत्वा स्नानादिकं धार्यं मस्तके तिलकं स्वकम् ॥९०६॥

अङ्गेषु चेष्टनामाङ्का मुद्राः कृत्वा सभक्तिकम् ।
गुरुप्रदत्तमन्त्रस्य जपः कार्योऽधिकाधिकः ॥९०७॥

अथेष्टमन्दिरे कार्यं मार्जनं क्षालनं जलैः ।
सेवोपयोगि पात्रादि शोधनीयञ्च सादरम् ॥९०८॥

ततः श्यामाश्यामगुणान् गायता शयनादिमौ ।
उत्थापनीयौ स्थाप्यं च जलं गण्डूषभाजनम् ॥९०९॥

मुखप्रोक्षणवासश्च स्निग्धं भोगं हिमं जलम् ।
ताम्बूलमावेद्य कार्यं तन्नीराजनमङ्गलम् ॥९१०॥

सुगन्धितैर्मर्दयित्वा तैलैः कोष्णेन वारिणा ।
स्नपयेत्स्वोत्तरीयेण प्रोक्ष्य प्रेमपुरस्सरम् ॥९११॥

नानासद्वस्त्रभूषाभिः श्रृङ्गारमुपकल्पयेत् ।
चन्दनैर्मकरीलेखं मुखे विरचयेन्मुदा ॥९१२॥

पुष्पैर्मालां वैजयन्तीं ग्रथित्वोरसि धारयेत् ।
समर्प्य तुलसीमङ्घ्र्योर्जलं भोगं निवेदयेत् ॥६१३॥

ततः सप्रेम शृङ्गारनीराजनमुपाचरेत् ।
परिक्रम्याथ मुकुरं प्रिययोरनुदर्शयेत् ॥६१४॥

अथ सेवापराधानां क्षमापनपुरस्सरम् ।
सेवासाङ्गत्वसिद्ध्यर्थं तन्नाम सरसं जपेत् ॥६१५॥

अथास्य रसिकैर्भक्तैः कल्पितानि पदान्ययम् ।
गायेन्नृत्येत्प्रसीदेच्च सोऽयं पौर्वाह्णिकः क्रमः ॥६१६॥

मध्याह्ने विविधां भोगसामग्रीमर्पयेन्मुदा ।
दत्त्वा ताम्बूलमथ तन्नीराजनमुपाचरेत् ॥६१७॥

ततः सुगन्धिकुसुमाकल्पिते शयने प्रियम् ।
शाययित्वा निषेवेत संवाहव्यजनादिभिः ॥६१८॥

अथातिथीन्वैष्णवांश्च स्वजनाननुगांस्तथा ।
भोजयित्वा तत्प्रसादं स्वयं गृह्णीत सादरम् ॥६१६॥

अथावकाशवेलायां स्वं च भूतान्यपीडयन् ।
जीविकार्हाणि कार्याणि कुर्वीत तमनुस्मरन् ॥६२०॥

दिनेऽर्धयामशेषे च सायं सेवार्थमागतः ।
गुणान्गायन्प्रभुमयं शनैरुत्थापयेत्पुनः ॥६२१॥

विमलं जलपानं च कारयित्वा मुहुर्नवम् ।
शृङ्गारकं मुदाकल्प्य भोगं ताम्बूलमर्पयेत् ॥६२२॥

ततः स्वयं वा गुणिभिर्वाद्यैर्गीतानि गापयेत् ।
समर्प्य भोगं कुर्वीत सन्ध्यानीराजनं जनः ॥६२३॥

ततः: प्रभोः समक्षं तत्कालोचितपदान्ययम् ।
गायन् नृत्यंश्च शयनभोगनीराजने चरेत् ॥६२४॥

पुनः कुसुमशय्यायां शाययित्वा क्षमापयेत् ।
सेवापराधान् सप्रेम पादौ संवाहयेन्मुदा ॥६२५॥

नित्यसेवाविधिः सोऽयं सेवाग्रन्थैर्निरूपितः ।
निमित्तसेवा-विधिरप्यवधेयोऽवराधकैः ॥६२६॥

निमित्तसेवा कालेषु विशिष्टेषु विधीयते ।
सेयमुत्सवसेवेति सम्प्रदायेऽभिधीयते ॥६२७॥

एतासूत्सवसेवासु भोगश्रृङ्गारकादिषु ।
विशेषः परमोत्साहमग्नैर्लग्नैर्विधीयते ॥६२८॥

होला दोलाथ श्रीखण्डवसनं प्रियदोलनम् ।
शारदः स्थापनो दीपमालिकाख्यस्तथोत्सवः ॥६२९॥

कार्तिकप्रातिपदिको विहारः क्षुशरोत्सवः ।
वासन्तिकश्चेति दश प्रथिताः परमोत्सवाः ॥६३०॥

इयञ्च दासीभावेन परिचर्या विधीयते ।
न तु दासीवेषभूषानुकृत्या सोपचीयते ॥६३१॥

भावो हि मानसो धर्मो भावदेहप्रयोजकः ।
नैवास्य भूतदेहेन सम्बन्धः कश्चिदीरितः ॥६३२॥

वैदिकैस्तान्त्रिकैर्मन्त्रैस्तथा पौराणिकैरियम् ।
परिचर्या न कस्मिंश्चित्समयेऽपि विधीयते ॥६३३॥

वेदे तन्त्रे पुराणे च मन्त्रसेवा प्रकाशिता ।
अस्माकं तु प्रेमसेवा श्रीहिताचार्यदर्शिता ॥६३४॥

नेष्टदेवे समक्षस्थे ध्यायेन्नेत्रे निमील्य तम् ।
प्राणायामकरन्यासाङ्गन्यासादि च नाचरेत् ॥६३५॥

शालग्रामशिलादीनां मूर्तीनां नानुरूपता ।
प्रेमसेवोपयुक्तानामङ्गादीनामभावतः ॥६३६॥

अभावे रूपसेवाया नामसेवा विधीयते ।
अभेदात्सर्वसिद्धान्तसम्मतान्नामनामिनोः ॥६३७॥

अस्याञ्च नामसेवायां काष्ठपाषाणधातुषु ।
नागर्यां लिख्यते 'राधावल्लभो जयति' इति ॥६३८॥

वा 'श्रीराधावल्लभश्रीहरिवंशे'ति लिख्यते ।
नामाधारस्य चाकारश्चतुरस्रो विधीयते ॥६३९॥

श्रृङ्गारकप्रक्लृप्त्यै वा चतुरस्रस्य मूर्धनि ।
मुखाकृतिरियं क्लृप्ता भवत्यत्र क्वचित्क्वचित् ॥६४०॥

सङ्कटे वा प्रवासादौ रूपसेवात्ययसम्भवे ।
कण्ठे धार्या नामसेवा प्रसादादिजिघृक्षया ॥६४१॥

अस्यां प्रकटसेवायां शङ्खचक्रादिकं न तत् ।
नापि घण्टासु गरुडाद्याकारपरिकल्पनम् ॥६४२॥

वैकुण्ठेशो हि कृष्णांशाद् राधांशाच्च रमोदिता ।
श्रीराधावल्लभस्यांशौ लक्ष्मीनारायणाविमौ ॥६४३॥

तौ हि नानावताराणां बीजभूतावपीश्वरौ ।
राधावल्लभसेवायां विशतो नात्र कुत्रचित् ॥६४४॥

तच्चिह्नानि कथं नाम प्रविशन्तु तदा वने ।
कथञ्च नियमास्तस्य श्रीराधाया निवेशने ॥६४५॥

इयं नित्यविहारस्य भूमिका प्रकटात्मिका ।
अस्यां वै बद्धमूलायां हितहर्म्यरसोदयः ॥६४६॥

एष व्यापारिको लेखः पूर्णद्रव्यप्रदापकः ।
अद्यापि यस्तं गृह्णाति सोऽश्नुते रसवैभवम् ॥६४७॥

द्वितीया परिचर्या तु कथिता भावनात्मिका ।
ध्यानं वा मानसी सेवा विद्वद्भिः साऽभिधीयते ॥६४८॥

अस्यां स्थिरः सखीभावः सततं स्यादपेक्षितः ।
इत्युपासकचित्तेऽत्र तीव्राकाङ्क्षाभ्युदीयते ॥६४९॥

'हितोपजीव्यभावानां भगवन्नित्यसङ्गिनाम् ।
जनानां यादृशो रागस्तादृगस्तु सदा मम' ॥६५०॥

'इत्थं भावनया स्थैर्यं स्वस्मिंस्तदभिलक्षिता ।
समृद्धा भावनावल्ली न वन्ध्या भवति क्वचित्' ॥६५१॥

तत्र क्रमोऽयमभ्युक्तो मुहूर्ते ब्राह्म उत्थितः ।
एकाग्रचित्तः स्वगुरुं सखीरूपं मुदा नमेत् ॥६५२॥

ततश्च सम्प्रदायस्य प्रवर्तकतया गुरुम् ।
सखीरूपेण परमं प्रणमेच्छ्रद्धया युतः ॥६५३॥

ततो वृन्दावनं ध्यायेन्नानाद्रुमलतालयम् ।
विचित्रपत्त्रिनिवहमुखरीकृतदिङ्मुखम् ॥६५४॥

प्रियां दयितसंयुक्तां दयितञ्च प्रियायुतम् ।
तत्सङ्गमैकजीवातुमालिव्यूहञ्च संस्मरेत् ॥६५५॥

यौ दर्शस्पर्शनघ्राणश्रवरोषु च तत्परौ ।
परस्परं तदितरव्यवहारवियोगिनौ ॥६५६॥

नित्यां स्वारसिकीं लीलां मनसा संस्मरेत्प्रभोः ।
शय्यारोहणतः पूर्वां परां शय्यावरोहणात् ॥६५७॥

इह प्रकटसेवायां यासां नास्ति समाश्रयः ।
तासामापीष्टलीलानां भावनायामुपाश्रयः ॥६५८॥

सायं वने विहरणं, जलकेलिश्च कन्दुकम् ।
दानलीलादिकञ्चैव भावनायां समाहृतम् ॥६५९॥

सन्ध्यानीराजनान्ते च रासलीलानुशीलनम् ।
भावनापरिचर्यायामेव सम्भवति स्फुटम् ॥६६०॥

किञ्च प्रकटसेवायां भावनायां विशेषतः ।
सेवा भवति चित्तस्य सम्यग्योगे तदुद्भवात् ॥६६१॥

यद्यद् ध्यायति तत्रैव चित्तं भूयोऽनुरज्यति ।
इति भावनया रागः प्रेमा वोत्पद्यतेऽधिकम् ॥६६२॥

अष्टयामेषु च सतां रससिद्धिमुपेयुषाम् ।
भावनोपासना वाणीरूपेण प्रकटास्ति सा ॥६६३॥

एषु श्यामाश्यामयोस्ता अष्टकालिककेलयः ।
सखीजनस्य सेवाश्च तास्ता गीता रसोद्धुरैः ॥६६४॥

अष्टयामस्य कस्यापि मनसा गानमुत्तमम् ।
भावनात्मकसेवायां भूयः स्यादुपकारकम् ॥६६५॥

तृतीया परिचर्यास्ति विहारो नैत्यिकः प्रभोः ।
सेव्या श्रीराधिका तत्र सेवकश्चास्ति मोहनः ॥६६६॥

सेवामूर्तिः सहचरीति तत्त्रयं तत्र सङ्गतम् ।
सेव्या च सेवकश्चैव सेवा चेति रसावहम् ॥६६७॥

इह प्रकट सेवायां भावनायां च मानसम् ।
क्रमेण देहसम्बन्धान्मुच्यते, युज्यते रसे ॥६६८॥

रसात्मकं प्रेम चास्मिन् भासते तद्यथा यथा ।
तथा तथाधिकारोऽस्य विहारे नित्य एधते ॥६६९॥

दृष्टेऽस्मिन् प्रेमसौन्दर्ये दृष्टिर्विपरिवर्तते ।
न किञ्चिदपि भात्यस्य सुप्तस्यापीह जाग्रतः ॥६७०॥

अहो सरसधाम्नोऽस्य सरसा सृष्टिरद्भुता ।
रासेश्वरी कृपामात्रदर्शनीया न चान्यथा ॥६७१॥

इह प्रकटसेवास्ति सेवकेन्द्रियगोचरा ।
तथा च मानसी सेवा मनोमात्रविनोदिनी ॥६७२॥

किन्तु नित्यविहारोऽयं मनइन्द्रियगोचरः ।
प्रेमप्रकाशे जाते हि युगलं स्यात्प्रकाशितम् ॥६७३॥

आभ्यामेवात्र नेत्राभ्यां दृश्या तद्रूपमाधुरी ।
आभ्यामेव च कर्णाभ्यां श्रव्या तद्वचनावली ॥६७४॥

अनया नासयाऽऽघ्रेयं तदङ्गनिजसौरभम् ।
अनेनैव च देहेन लभ्यं सेवासुखं तयोः ॥६७५॥

विहाय विषयान्सर्वानिन्द्रियाणि यदाञ्जसा ।
स्थिरीभवन्ति भजने नित्यं सेवासुखं तदा ॥६७६॥

बलेन भजनस्यैव तेषु भावः स्फुरत्ययम् ।
येन नित्यविहारस्य साक्षाद् भवति दर्शनम् ॥६७७॥

पिच्छले प्रेममार्गेऽस्मिन् शक्यते नैव धावितुम् ।
मन्दन्तु गम्यते कृत्वा मनोवाक्कायसंयमम् ॥६७८॥

क्वाथयित्वा शीतयित्वा पावयित्वा मनस्तनू ।
धन्या यान्ति प्रेमपथे वृथा जल्पन्ति चेतरे ॥६७९॥

मनसो न गतिर्यत्र तत्र कायेन गम्यते ।
हन्त श्रीहरिवंशस्य विचित्रः पादसंश्रयः ॥६८०॥

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
हृदि प्रेमविहारोत्थानन्दमग्नेऽद्भुताः क्रियाः ॥६८१॥

नित्यं विहारमिषतस्तनुः पुलकिता भवेत् ।
आनन्दाश्रुझरी चाक्षणोर्वहेत्काचिदनारतम् ॥६८२॥

क्षणं रोदिति सानन्दं क्षणं गायत्यसौ हसन् ।
क्षणं विहरति श्यामाश्यामौ स पश्यति क्षणम् ॥९८३॥
सन्दर्शनेनास्य रतिः सन्ततं नूतनायते ।
अनिद्रचमन्थरां प्रातः कान्तिं पिबति सोऽनयोः ॥९८४॥
प्राप्तिर्नित्यविहाराख्यसेवायाः साध्यमुच्यते ।
साधने प्रकटे सेवा, मानसी चेति विश्रुते ॥९८५॥
तिसृणामपि सेवानां भावे साजात्यमस्त्यहो ।
तारतम्यन्तु भावेऽस्मिन् कूपनद्यब्धिवारिवत् ॥९८६॥
जानुदघ्ना कण्ठदघ्ना शिरोदघ्ना च हंसजा ।
हंसजैव तथा त्रेधा सेवा सेवैव सम्मता ॥९८७॥
सेवात्रयेऽपि परमोज्ज्वलप्रेमविलासकः ।
सखीभावेन सेव्योऽस्ति तादृश्या परिचर्यया ॥९८८॥
शालग्रामः शङ्खचक्रे गरुडैकादशीव्रते ।
इत्यादयः परित्यक्ता अतद्भावानुकूल्यतः ॥९८९॥
मन्त्रस्थानेऽपि रसिकानन्यगीता पदावली ।
गीयतेऽधीयते सोऽयं विशेषो हितपद्धतौ ॥९९०॥

### सप्तदशोऽध्यायः

### नामनिरूपणम्

परिचर्या-नाम-रूपाश्रितास्माकमुपासना ।
इत्युक्त्वा परिचर्यान्तं कुर्मो नामनिरूपणम् ॥९९१॥
सुप्तं प्रभुप्रेम येन बोध्यते, येन बोधितम् ।
वर्ध्यते, तदिह प्रोक्तं साधनं नामचिन्तनम् ॥९९२॥
अनामकेनारूपेण नास्ति स्नेहस्य सम्भवः ।
इति स्निग्धजनोपास्तौ गौरवं नामरूपयोः ॥९९३॥
नामरूपे भगवत एकान्तात्यन्तभावतः ।
प्रेमाश्रयौ प्रेममये साक्षाच्च भगवानुभे ॥९९४॥
तत्र नामजपो नामगानं च नामसेवनम् ।
इति नामोपास्तिभेदा भक्तिमार्गे त्रयः स्मृताः ॥९९५॥

अथ नामजपो व्यक्तिगता सैकान्तिकी क्रिया ।
नामगानमनेकान्तक्रिया सा सामुदायिकी ॥९९६॥

नामगानमिदं नामसंकीर्तनमितीरितम् ।
दाक्षिणात्यैश्च बङ्गीयैः सद्भिरेतदनुष्ठितम् ॥९९७॥

श्रीहितोपास्तिरारम्भाद् व्यक्तिगैकान्तिकी स्थिता ।
अन्यत्र भजने गोष्ठी, गोष्ठी प्रेमपथे कुतः ॥९९८॥

समुदायेऽनुकूलेऽपि प्रेमी त्वेकान्तमिच्छति ।
आकाङ्क्षेते प्रियाप्रेष्ठौ सखीसम्मर्दतो रहः ॥९९९॥

हृदये हरिवंशस्य रहोभजनमाहितम् ।
रसधारा हि परमहंसाधार इतः स्रुता ॥१०००॥

अतोऽस्मिन् भजने नामगानस्यावसरो न सः ।
न नामगानमस्माकं भजनस्य विशिष्टता ॥१००१॥

अस्ति नामजपः सर्वस्वस्तिहेतुरिह श्रुतः ।
उपासकस्य स्वान्ते हि प्रेम जागरयत्ययम् ॥१००२॥

किञ्च नामजपद्वारा रूपमाविर्भवेत्तु यत् ।
तदिष्टरूपं सहजं, न मन्तव्यं प्रकल्पितम् ॥१००३॥

सन्ततान्नामजपतो मनो भवति तन्मयम् ।
विषयस्फुरणं तस्य समन्तात् प्रविलीयते ॥१००४॥

बहिरभ्यन्तरं नाममात्रमस्यावशिष्यते ।
हृदयं नाम चैवैकीभवेत्यस्य महात्मनः ॥१००५॥

तदा नाम निजं रूपं प्रकाशयति सुन्दरम् ।
दृश्यते साधकतनौ वृन्दारण्यं सवैभवम् ॥१००६॥

वृन्दावनरसे सर्वं दृष्ट्वा च हितवैभवम् ।
हरिवंशेतिनामोक्तं सेवकैर्हितधर्मिषु ॥१००७॥

पठन् शृण्वन्निदं नाम सदा सत्सङ्गमश्नुते ।
वर्धते रसरीतिश्च गायत्येष गिरा गुणान् ॥१००८॥

सदानन्दकरी प्रेमभक्तिर्जागर्ति तद्धृदि ।
श्रीराधाचरणद्वन्द्वानुरागश्चोपजायते ॥१००९॥

निकुञ्जपरिचर्यायां दासीभावं स विन्दति ।
सदा च हरिवंशस्य समीपे वसति ध्रुवम् ॥१०१०॥
रटन् श्रीहरिवंशेति दम्पतिभ्यां तु संवसेत् ।
हरिं च हरिवंशं च को नामात्र विभेदयेत् ॥१०११॥
नामोपास्तेर्नामिसेवा तृतीयात्र विधा स्मृता ।
यस्याः प्रकटसेवायां कृतमत्र निरूपणम् ॥१०१२॥
नामिनाम्नोरभेदेऽपि नामी सर्वत्र सेव्यते ।
जप्यते कीर्त्यते नाम वैष्णवोपासनापथे ॥१०१३॥
श्रीहिताचार्यपादैस्तु नामसेवाविधानतः ।
नामनाम्नोरयं भेदो यावच्छक्यं निवारितः ॥१०१४॥
नामोपास्तौ मन्त्रजपोऽपरिहार्यतया स्थितः ।
मन्त्रो द्विधा प्रपत्त्यर्थो निजश्चेतीह जप्यते ॥१०१५॥
दीक्षाकाले प्रपत्त्यर्थः साधनासरणौ निजः ।
मन्त्रो हितकुलाचार्यैः स्वशिष्येभ्यः प्रदीयते ॥१०१६॥
अष्टादशाक्षरः पूर्वोऽपरश्च द्वादशाक्षरः ।
उभावप्यागमप्रोक्तमन्त्रेभ्यः पृथगीरितौ ॥१०१७॥
क्लीमादिबीजरहितौ नमआदिविवर्जितौ ।
क्रमशो रसिकप्रीति-प्रियप्रीतिनिदर्शकौ ॥१०१८॥
तत्र पूर्वः प्रपत्त्यर्थो हिताचार्यैरुदीरितः ।
श्रीराधया स्वयं दत्त इत्युक्तोऽयं निजोऽपरः ॥१०१९॥
अयं निजो मन्त्र एव रसे सिद्धान्त एष नः ।
श्रीराधावल्लभीयानामुपास्तेर्वीजमुच्यते ॥१०२०॥
एतं विना न भजनं न ध्यानं नापि भावना ।
एतस्य मानसो जापश्चापारप्रेमवर्धनः ॥१०२१॥
एतज्जपो भूतदेहशुद्धयशुद्धयनपेक्षितः ।
भावदेहविशुद्धयैव भवेज्जापस्य साङ्गता ॥१०२२॥
वैयासकेः श्रीहितस्य हरिवंशस्य दक्षिणे ।
कर्णे श्रीराधया दत्तो मन्त्रो देयोऽधिकारिभिः ॥१०२३॥
दानेऽधिकारिणः प्रोक्ता हरिवंशकुलोद्भवाः ।
ब्राह्मणक्षत्रियविशो ग्रहणेऽस्याधिकारिणः ॥१०२४॥

भावदेहेन जप्येऽपि भूतदेहोपकारिताम् ।
प्रकाशयति संस्कारः पारम्पर्यक्रमागतः ॥१०२५॥

सदाचारपराः शूद्राः स्त्रियोऽप्यत्राधिकारिणः ।
सदाचारो हि भूतानां भावानाञ्चैव पावनः ॥१०२६॥

न पुरश्चरणं मन्त्रे नासनं नापि प्राशनम् ।
न कालो नापि तीर्थञ्च जप्यमानेऽभ्यपेक्ष्यते ॥१०२७॥

प्राणायामः करन्यासोऽङ्गन्यासादिकमप्यथ ।
नास्मिन्विधीयते किञ्चित्सखीभावस्तु केवलः ॥१०२८॥

इष्टो गुरुश्च मन्त्रश्च त्रयमेको रसाम्बुधिः ।
वीजं नित्यविहारस्यैतत्त्यक्त्वा नेतरद् भजेत् ॥१०२९॥

## अष्टादशोऽध्यायः

### वाणीमाहात्म्यम्

सख्यो गायन्ति यद्रूपं प्रिययोः श्रीवनान्तरे ।
तदेव साक्षात्कृत्यात्र सद्भिर्वाण्य उदीरिताः ॥१०३०॥

इति तद्रूपभजने वाणीनामनुशीलनम् ।
निरस्य लौकिकं कामं प्रेमोत्पादयति ध्रुवम् ॥१०३१॥

भवाम्बुधेरियं नौका पानीयं कामपावके ।
इत्यादिर्महिमा वाण्याः पूर्वैः सद्भिरुदीरितः ॥१०३२॥

अप्युज्ज्वलरसाधानी कामक्रीडानिधानिका ।
प्रधानीभूतसत्प्रेमा वाणी कामनिकन्दिनी ॥१०३३॥

वाणीषु प्रेमसौन्दर्यं यदस्ति विषयो दृशाम् ।
वाण्या यद्यपि दृङ्नास्ति दृशी वाणो न विद्यते ॥१०३४॥

वाण्या दृग्भ्यां तु युगलस्वरूपमिह दर्शितम् ।
दृशोश्च वाण्या कथितं रसिकैस्तन्मनोहरम् ॥१०३५॥

आसिस्वादिषुभिः प्रेमसौन्दर्यं वाण्युपाश्रयात् ।
श्रोत्राभ्यां दर्शनीयं तन्नेत्राभ्यां श्रव्यमेव च ॥१०३६॥

श्रुती नेत्रे, दृशौ श्रोत्रे, वाणी श्रोत्रे दृशावपि ।
यावन्न भवतस्तावत्तत्सौन्दर्यं न पीयते ॥१०३७॥

वाणीरूपे परिज्ञाते नेत्रश्रोत्रसमन्वयः ।
श्रोत्रे हृदे यद्वदतो हृन्नेत्राभ्यां वदत्यदः ॥१०३८॥

वन्दामहे रसज्ञांस्तान् करुणावरुणालयान् ।
यैः श्यामाश्याममिलने वाणी नेत्रीकृता निजा ॥१०३९॥

वाणीनेत्रैश्च पश्यन्तश्चलन्तो यान्त्यसंशयम् ।
तर्किणो मन्दमतयः स्नेहहीना इहाभ्रमन् ॥१०४०॥

गर्जति प्रेमपाथोदे वाणीविद्युत्पतत्यरम् ।
मनश्च बुद्धिं चित्तञ्च गम्भीरमभिहन्ति या ॥१०४१॥

उल्लेखितरहोवृत्ता वाणीयं प्रेमपत्रिका ।
वाचयित्वा च बुद्ध्वा तां गच्छन् याति प्रियालयम् ॥१०४२॥

श्रीराधावल्लभीयाध्वा सखीभावेन गम्यते ।
प्रेम्णा भजनमन्यत्र प्रेमैव त्वत्र भज्यते ॥१०४३॥

इदञ्च प्रेमभजनं युगलप्रेमपद्धतिम्—
समाश्रितं, सा विज्ञेया केवलं वाण्युपाश्रयात् ॥१०४४॥

वाणीश्रवणतश्चित्तं तरसा सरसायते ।
रसरीतिपथज्ञानाद्रसास्वादोऽनुभूयते ॥१०४५॥

प्रेमोपास्तिरहस्यानि वाणीचिन्तनगोचराः ।
वाण्यां स्नेहः सुखाक्रन्दः कौतुकी परिचीयते ॥१०४६॥

भृतवान् श्रीहिताचार्यो हृद्बलेन स्वहृत्सुखम् ।
वाङ्मानसे भक्तहंसा रमन्ते यत्र सन्ततम् ॥१०४७॥

यत्र हंसद्वयाभासेऽप्यद्वयं वारिवीचिवत् ।
यत्र मानाद् गजगतिः प्रेम्णा सौदामिनी प्रिया ॥१०४८॥

प्रातः सुरतयुद्धान्तशोभा यत्र सुखावहा ।
यत्र चान्योन्यवस्त्रादिपरिवृत्ति प्रशस्यते ॥१०४९॥

प्रेमाङ्कालङ्कृतं द्वन्द्वं यत्र नृत्यति गायति ।
यत्राली च रहोवार्तां प्रियमप्यनुपृच्छति ॥१०५०॥

यत्रात्मप्रतिबिम्बेक्षामानिनी भवति प्रिया ।
यत्र तस्याः कटाक्षेण विद्धः श्यामो मृगायते ॥१०५१॥

प्रियाप्रियतमौ यत्र करिणीकरिवत् स्मृतौ ।
सख्यश्च यत्र स्वप्राणान् अर्पयन्ति च्छटादृशः ॥१०५२॥

रसकेलिश्चोल्लसन्ती यत्र लोकान् पुनात्यलम् ।
यत्र चाङ्गुलिनिर्देशाद् दर्श्यते मिथुनं ललत् ॥१०५३॥

आसज्यापि क्वचिच्चेतो हारयेद्यत्र च प्रिया ।
यत्र प्रवेशकामश्च सखीत्वं काङ्क्षते प्रियः ॥१०५४॥

अधिकारभराद्यत्र परिहासः सखीकृतः ।
कोटिकामप्रवेशश्च यत्र कामाप्रवेशतः ॥१०५५॥

यत्र दृक्चषकैः पीते तमालस्वर्णवल्लिके ।
प्रिया च प्रीयते यत्र प्रियकीर्त्यनुकीर्तनैः ॥१०५६॥

सखीमण्डलगौ रासं क्रीडतो यत्र वल्लभौ ।
यत्र नित्यं नववधूः श्यामा श्यामो नवो वरः ॥१०५७॥

श्यामाया अङ्गमङ्गं च यत्र रङ्गं प्रकाशयेत् ।
नेत्राभ्यां यत्र कान्तायाः कोटिखञ्जनवारणा ॥१०५८॥

नखक्षतं याति कान्ताकुचशङ्करचन्द्रताम् ।
यत्र रासरसक्रीडा सर्वव्रतहरी स्मृता ॥१०५९॥

रूपचातुर्यश्रृङ्गारशीलैर्यत्राद्भुता प्रिया ।
यत्र वंशी हरति तत्कामतापं रसप्रदा ॥१०६०॥

वसन्ते विविधै रागैर्मिथो यत्रानुरञ्जनम् ।
मानापनयनं सख्या यत्र चासक्तिवर्णनैः ॥१०६१॥

यत्रानखशिखं श्यामा माधुर्या प्रियमोहनी ।
श्यामेन पल्लवैः क्लृप्ते शयने रतिरद्भुता ॥१०६२॥

रतिरङ्गरसार्द्रौ च शोभेते यत्र नागरौ ।
शारदी चन्द्रधवला निशा यत्र विलासभूः ॥१०६३॥

सम्भोगसिन्धुसंक्षुब्धौ प्रियौ यत्रात्मविस्मृतौ ।
कुञ्जान्यपि निकुञ्जानि चिन्मयानीव तत्सुखे ।।१०६४।।

दोलामारूढयोर्यत्र शुभमाशंसते सखी ।
यत्र रासे च नृत्यस्य गतिः स्यान्नित्यनूतना ।।१०६५।।

वनिताकोटिगोऽप्यार्तो यत्र श्यामः प्रियां विना ।
यत्र कामपरित्रस्तं तं त्रातुं नीयते प्रिया ।।१०६६।।

कान्तेन कल्पिते कुञ्जे क्रीडार्थं साऽनुनीयते ।
सोत्कं समागतां ताञ्च प्रत्युद्गच्छति यत्र सः ।।१०६७।।

प्रीतिरीतिं ज्ञपयति यत्रेशोऽपि स्वदैन्यतः ।
प्रीत्या मार्गेऽपमार्गे वा सरतो दुर्निवार्यता ।।१०६८।।

श्रुत्वा सखीवचो यत्रेयान्मानिन्यपि भामिनी ।
कामिनी दामिनीवच्च संश्लिष्येन्मोहने घने ।।१०६९।।

कृतषोडशशृङ्गारा प्रियेण विहरेत्प्रिया ।
शारदी यामिनी भाति यत्र तत्सङ्गमोत्सवैः ।।१०७०।।

पत्रे प्रसूने कान्ताया यत्र च्छाया प्रियं हरेत् ।
यत्र प्रियहितं कर्तुं प्रिया सज्जेत भूषणैः ।।१०७१।।

प्रियौ धृतभुजग्रीवौ वीथ्यादौ यत्र खेलतः ।
शय्यां रचयतः कुञ्जे पद्मानां कोमलैर्दलैः ।।१०७२।।

उदारापि प्रिया सख्या श्यामार्थं दानमर्थ्यते ।
सौन्दर्यसीमां दृष्ट्वा त्वां लज्जन्ते यत्र चाङ्गनाः ।।१०७३।।

अबला बलराशिर्वा यत्रेयं प्रियबन्धिनी ।
स्नेहरङ्गरसादीनां यत्र नित्यं नवीनता ।।१०७४।।

वने च गगने यत्र स्पर्धेते विद्युतौ मिथः ।
नागर्यां नागरे चाली यत्रार्पयति जीवनम् ।।१०७५।।

अतिरम्यमगम्यञ्च प्रथमं नम्यते वनम् ।
श्यामाहितायं यत्राली चेष्टते श्याममनोदिता ।।१०७६।।

यत्र चैकं मनोऽनेकवस्त्वनाश्रयमर्थ्यते ।
प्रियामुखाम्बुजरसे प्रियनेत्रे निमज्जतः ॥१०७७॥

धृतबाहुः किशोर्यंसे यत्र क्रीडति मोहनः ।
रासक्रीडां रचयतो नवौ यत्र वधूवरौ ॥१०७८॥

त्रिभङ्गललितो यत्र भाति मन्मथमन्मथः ।
वेणुं वादयते वंशीवटेऽसौ हंसजातटे ॥१०७९॥

घने निकुञ्जे राकायां राधा रासेऽत्र नीयते ।
वर्षतः सुखपुञ्जानि गौरश्यामतनू इह ॥१०८०॥

धृतषोडशश्रृङ्गारा वधूटी भाति कानने ।
यत्र रासे च रसिकौ भामिनीमोहनौ स्थितौ ॥१०८१॥

रञ्जितौ प्रेमरागेण नृत्यतो यत्र मोहनौ ।
गौरी यत्र च नात्मानमवधत्ते गजी-समा ॥१०८२॥

राधिका श्यामसङ्गेन शोभते रासमण्डले ।
हंसजापुलिनं रम्यं सुभगं सुखदायकम् ॥१०८३॥

मृगखञ्जनमीनादिमदप्रोञ्छे प्रियादृशौ ।
यत्र प्रियासक्तिमुक्त्वा सखी मानापनोदिनी ॥१०८४॥

बहिश्च प्रतिकूलत्वं प्रियाया बह्वनूद्यते ।
अकस्मादनुकूलत्वं कदाचित्कृपया प्रिये ॥१०८५॥

रसदोलान्दोलिता च साकूतं भ्रमति प्रिया ।
यत्र नृत्यति सोल्लासं थेई थेईति भाषिणी ॥१०८६॥

शनैः शनैश्च सङ्गे सा मोहनस्यात्र माद्यति ।
भवति स्वर्णवल्ली च तमालश्यामसङ्गिनी ॥१०८७॥

यत्र गायति मन्द्रं च कलं श्रीवृषभानुजा ।
बलाद्वशीकृतश्यामा श्यामा नागरताम्बुधिः ॥१०८८॥

प्रणते सुन्दरे प्राणवल्लभे मानमोचना ।
यत्र वाण्यां रङ्गभृता दृश्यते वृषभानुजा ॥१०८९॥

हारिवंशी हारिवाणी नोदायिष्यत चेदियम् ।
कथं भजनसौन्दर्ये लावण्यमभरिष्यत ॥१०९०॥

वाण्याः कृपैकलभ्याया एतदुक्तञ्च लक्षणम् ।
प्रेम प्रकाशते तस्याः कथने श्रवणे ध्रुवम् ॥१०९१॥

रसिकैर्निजवाणीषु प्रयुक्ता रागरागिणीः
इति तासां न पाठोऽस्ति गानन्त्वासां विधीयते ॥१०९२॥

अनेन पदगानेन प्रेमोद्रेकोऽभिजायते ।
न यो ध्यानेन नयनामीलनादिषु लभ्यते ॥१०९३॥

ध्याने न मीलिते नेत्रे नाङ्गन्यासादिकं कृतम् ।
नृत्यन् गायन्नहो व्यासो रासेषु मिलितो हरिम् ॥१०९४॥

नेयं वाणी लोककाव्यं साधुवादैकभाजनम् ।
इतीमां नामसंसृष्टां रसिका अभ्युपासते ॥१०९५॥

वाणीगानोपयुक्तं स्यान्नामजापेन मानसम् ।
नामजापाधिकारि स्याद्वाणीगानेन चान्तरम् ॥१०९६॥

इत्थमन्योन्यपूर्त्यैमौ प्रेमोपास्त्युपकारकौ ।
इति श्रीसेवकादीनामुभौ मान्यौ प्रियेष्टवत् ॥१०९७॥

नामवाणीनिकटतो प्रकटीभवतः प्रियौ ।
नामवाणीश्रवणतो विवशौ भवतश्च तौ ॥१०९८॥

वाणीं श्रीहरिवंशस्य हरिवंशस्य नाम च–
श्रयामहे, न चान्यत्र क्वचिच्छान्तिमयामहे ॥१०९९॥

प्रमाणञ्च प्रमेयञ्च प्राधान्येन निरूपितम् ।
श्लोकैरेकादशशतैर्हरिवंशकृपाकृतैः ॥११००॥

प्रमाणे सम्प्रदायस्य तदङ्गानाञ्च लक्षणम् ।
लक्ष्यं चोक्त्वाचार्यनाम्ना प्रवृत्तौ हेतुरीरितः ॥११०१॥

श्रीराधावल्लभीयस्य सम्प्रदायस्य नामनि ।
तदङ्गेषु च जिज्ञासापूरकं तत्तदीरितम् ॥११०२॥

प्रमेये हिततत्त्वन्तु तस्याथ रसरूपता ।
प्रोक्तो द्विदलसिद्धान्तो विशुद्धप्रेमलक्षणम् ॥११०३॥

प्रेमरूपाभिसम्बन्धो, हितं वृन्दावनात्मकम् ।
हितं युगलरूपञ्च, युगलस्य च केलयः ॥११०४॥

श्रीश्यामसुन्दरश्चैव श्रीराधा च हितात्मिका ।
राधाचरणप्राधान्यन्तथा सहचरीजनः ॥११०५॥

श्रीहितो हरिवंशोऽथोपासनामार्ग एव च ।
परिचर्याऽथ प्रकटे सेवा चैवात्र भावना ॥११०६॥

विहारो नामतत्त्वं च वाण्याश्च महिमाद्भुतः ।
साङ्गोपाङ्गो विनिर्दिष्टो यथाधीतं यथाश्रुतम् ॥११०७॥

लिखितं श्रीलगोस्वामिललिताचरणाज्ञया ।
समर्पितं गुरुवरश्रीहितानन्दहस्तयोः ॥११०८॥



श्रीराधावल्लभो जयति ।

# सङ्गीतवृन्दावनम्

## (श्रीराधारससुधानिधिस्तवस्य पद्यगीतात्मिका रसकुल्याख्या व्याख्या)

## प्रथमः सर्गः

### अवतरणिका

**'राधैवेष्टं सम्प्रदायैककर्ताऽऽचार्यो मन्त्रदः सद्गुरुश्च ।**
**मन्त्रो राधा यस्य सर्वात्मनैनं वन्दे राधापादपद्मप्रधानम् ॥'**

अपि सकलश्रुतिशिरसां गोप्यं प्रस्तूयमानमेकान्तम् ।
रसधुर्यं माधुर्यं प्रकटयति महाप्रभुः कोऽपि ॥१॥

वृन्दाविपिनेश्वर्याः स्वयैव कृपया धृतोऽवतारोऽयम् ।
श्रीहितहरिवंशेन्दुर्व्याससमुद्राद्यदाविरास्ते स्म ॥२॥

सहृदयरसिकचकोरान् भावुककुमुदानि चानुकम्पयितुम् ।
चक्रे वशितश्रोत्रं श्रीराधारससुधानिधिस्तोत्रम् ॥३॥

श्रीहरिलालव्यासस्तदिदं रसकुल्यया रसैर्भृतया ।
मादृशजनाधिगम्यं चकार विस्तीर्णटिप्पण्या ॥४॥

अहमथ मदन्तरङ्गं सङ्गमयन् श्रीहिताध्वनि स्फुरितैः ।
लीलाविलाससुरसैरेनां पद्यान्वितां करोमि हठात् ॥५॥

सप्तत्युत्तरमेतच्छतद्वयं श्लोकनीयमेव बुधैः ।
श्लोकानामिह मयका त्रिंशत् सर्गेष्वमीष्वनुख्यातम् ॥६॥

वृन्दावनमधिवसितुं समागतोऽहं द्वितीयरात्र्यैव ।
स्वप्ने श्रीराधापदपङ्कजकवितावरेण सङ्गमितः ॥७॥

तस्य वरस्य विजृम्भितमेतन्नास्मिन् ममास्ति गुणलेशः ।
दोषास्तु नैव भायुर्भावभरितभावुकालिहृदयेषु ॥८॥

प्रथममथ स पद्यं मुक्तकेष्वप्यखण्ड-
स्वदयितविषयार्तिप्रीतियुक्तेषु युञ्जन् ।
अनतिशयसमं स्वं वस्तु निर्दिश्य हार्दं,
नमति दिशमपि श्रीकीर्तिदाकीर्तिदायाः ॥९॥

**"यस्याः कदापि वसनाञ्चलखेलनोत्थ-**
**धन्यातिधन्यपवनेन कृतार्थमानी ।**
**योगीन्द्रदुर्गमगतिर्मधुसूदनोऽपि,**
**तस्या नमोऽस्तु वृषभानुभुवो दिशेऽपि ॥१॥"**

यदिति तदिति शब्दावाहतुर्वै प्रकर्षं
तदिह किमपि वस्तु प्रस्तुतं दिव्यदिव्यम् ।
पितुरथ वृषभानोर्नामनिर्देश एष
प्रथयति सततं तल्लालनीयत्वमुद्घम् ॥१०॥

पितुरतिललिताया मातुरग्रे तु कीदृ-
क्कथयतु कविरस्या वत्सलत्वं नसीमम् ।
अथ च दिशि नमोवाग्व्यक्ति यद्धामनाम,
वचनमतिमनोभिः स्प्रष्टुमप्यस्त्यशक्यम् ॥११॥

अपि च पुनरपीति व्यञ्जयत्येव साक्षा-
त्कृतिवसतिमुखानां दुर्लभत्वं सुखानाम् ।
विलसति दिशि यस्यां साऽथ तस्यै नमोवा-
ग्ध्वनयति नतिकर्तुर्भूरिसौभाग्यभारम् ॥१२॥

कथयितुमथ शक्या नो दिगप्येतदीया,
परमिह मननीया सा हृदा वा नवेति ।
प्रकटयति च यद्यद् वस्तु वीक्षे तदीयं,
तदनु, तदनु चेतः प्रह्वभावं ममैति ॥१३॥

अथ च पदमपीति प्रब्रवीत्येतदीयं,
सकलमपि नमस्यं सन्नमस्यामि तत्तद् ।
उदयति दिशि यस्यां भानुमान् सा जनानां,
भवति नमनपात्रं, किन्तु नस्त्वेकमात्रम् ॥१४॥

मन इह वृषभानोर्नन्दिनीमेव पश्यत्,
तदुदयदिशमेकां विद्यते वन्दमानम् ।
निखिलमतिदशासु स्वेष्टसाम्मुख्यशीलं,
ध्वनयति समर्थं स्वं चात्र राधाप्रधानम् ॥१५॥
यदिति तदिति शब्दाभ्यां प्रतीतं प्रकर्षं,
प्रथयितुमथ 'यस्या' इत्यनेनानुवक्ति ।
अनियतसमयत्वं, वक्तृचेतोगतत्वं
नियतसमयतां वा वष्टि चेदं 'कदापि' ॥१६॥
अनियतसमयत्वे हन्त साधारणेऽपि
प्रसरति समयेऽसौ चेद्रसो माधवस्य ।
कथयत, रसदानोद्देश्यतः क्लृप्तवाते,
किमिति न परमा सा शृङ्खला तन्मुदां स्यात् ॥१७॥
नियतसमयतायां स्याद्विहारेषु नूनं,
वन-वसति-भवेषु क्वापि रासोत्सवेषु ।
अपि च वनविहारेऽप्यस्तु पुष्पावचाये,
निलयनललिते वा भृङ्गजे सम्भ्रमे वा ॥१८॥
वनजकुसुमपुञ्जैः सेवनीयां निकुञ्जा-
वनिसकरुणराज्ञीं भूषयन्नन्दसूनुः ।
वदनकमलशोभामग्नबाह्यान्तरङ्गो
जितमदयदनङ्गः श्यामभृङ्गो बभूव ॥१९॥
कृतनिलयनखेलानां सखीनामभावे
श्रमजसलिलबिन्दूनिन्दुवक्त्रे विलोक्य ।
सृजति पवनसेवामञ्चलोच्चालनेन
श्रममिव परिहर्तुं वल्लभस्यास्य राधा ॥२०॥
अहह वनविहारे गन्धलोभागतानां,
मधुकरनिकराणां सम्भ्रमेण प्रणीतम् ।
यदभवदतिमञ्जु क्रीडनं त्वञ्चलस्य,
तदुदितपवनेनाभूत्स सिद्धार्थमानी ॥२१॥

सुखनिवसतिकाले केलिलीलावशेन,
भ्रमयति वसनान्तं कान्तसौख्याय कान्ता ।
अपि च भवति रासे क्वापि भङ्गीविलासे,
शिरसि कृतपटान्तादुत्थितः कोऽपि वातः ॥२२॥
इह भवति विलासे मेखलाकृष्टिकाले-
ऽपघनजघनलौल्ये वाससः खेलनेन ।
विरतिमथ गतेऽस्मिन् प्रेयसः स्वेदविन्दून्
सकरुणमपहर्तुं स्वेच्छया कारितेन ॥२३॥
इति सपदि स धन्यो धन्यभूयस्त्वमागा-
न्नव इति पवनोऽयं जीवनं नव्यमाधात् ।
तदुदचरदनुच्चैरेष धन्येति शब्दं
तमिह तु हरिवंशः सातिधन्यं चकार ॥२४॥
इह वसनदशायाः खेल आकस्मिकः स्या-
दथ निजमुपलक्ष्य स्यादितीहैतदुत्थः ।
पवन इह तु धन्याद् धन्यतामेति कृष्णा-
नुगत-तदुदयत्वाल्लब्धयाथार्थ्यतश्च ॥२५॥
अनभिमत इतीमौ नैकधा विप्रयोग-
श्छलयति सति सङ्गेऽपि प्रमोदेन मत्तौ ।
इति खलु तदवस्थं चञ्चलत्वं निनाया-
म्बरपरिमललाभोऽथैतदुत्थः समीरः ॥२६॥
अपि च रुचिनवत्वं नन्दसूनोर्व्यनक्ति
श्लथितरतिवियोगं चास्य सिद्धार्थतेयम् ।
रसिकमुकुटमाणिक्यायमानस्य चास्य
प्रथयति दयितायामानुकूल्यं नितान्तम् ॥२७॥
विदितमथ विवक्षाभाजनं हार्दमस्माद्
भवति भगवतः श्रीमद्धिताचार्यकस्य ।
तदितरनिगदानां या विभावव्यवस्था
भवति रससुधाब्धौ नात्र सा माननीया ॥२८॥

इह निरतिशयायाः प्रीतिजन्यातिसक्ते-
व्र्रजति विषयतां सा राधनीया किशोरी ।
भजति नवकिशोरः कोऽप्यहो कामबाधा-
विधुर इह तदीयं नूतनं चाश्रयत्वम् ॥२९॥

अपिपदमिह कञ्चिद्दर्शयिष्यद्विरोधं
मधुरिपु–मधुपत्वव्यञ्जने हेतुभूतम् ।
गमयति दयिताया हृत्सराजे निवासा-
न्नवनवमधुपानेनास्य सिद्धार्थकत्वम् ॥३०॥

अथ मधुसुलभत्वं वक्ति बिम्बाधरोष्ठे
तदनु च दयितायाः श्यङ्गपाथोरुहेषु ।
उभयमपि पिबन्यो नैति तृप्तिं कदाचि
न्मधुरिपुरपि जातोऽस्यां मधुस्वादलोलः ॥३१॥

मधुरमधु स पायं पायमास्ते तृषार्तः
किमिह भवति कश्चिद् व्याधिराधिर्निदानम ।
नहि नहि मधुरत्वं, प्रेम चास्त्येधमानं
मधुघृतसममत्रोपद्रवो हन्त सोऽयम् ॥३२॥

इदमवितथमुक्तं सर्वथोपद्रवोऽयं,
शमयति यमयं तद्वस्त्रलीलासमीरः ।
इममुपलभमानो नान्यथाऽसौ कदाचिद्
भवति मधुपिपासुस्तेन सिद्धार्थमानी ॥३३॥

अहह, योगिजनैरपि दुर्गमोऽनवरतं वर्षितेषदनुग्रहः ।
स्मृतिगतोऽपि तनोति कृतार्थतां स हि सतां नमितो मधुसूदनः ॥३४॥

इह विहाय किलेश्वरताभवं सहजदर्पमभीच्छति भिक्षुवत् ।
न वृषभानुभुवं, न तदम्बरं, न च तदञ्चलमस्य न खेलनम् ॥३५॥

स तु तदञ्चलखेलनजं क्वचित्पवनमप्यथ चेदधिगच्छति ।
तमपि दुर्लभलाभमनुग्रहं कलयतेऽभ्ययते च कृतार्थताम् ॥३६॥

इति कृतार्थिततन्मधुसूदनः पवन एव गतोऽस्त्यतिधन्यताम् ।
यदि तदा कथयामि कथं न्विमां, कथमिदं, कथमेतददः कथम् ॥३७॥

धन्यं तु लाभजनकं धनयोग्यमाहुः सर्वस्पृहास्पदतया, गुणवत्तया च ।
यद्वद्वदन्ति कुशलेति विवेकदक्षे, धन्येति तद्वदिह पुण्यधरे वरेऽस्ति ।।३८।।

जीवातुभूतपरमप्रमदैकहेतुप्राणप्रियापघनसौरभसारपूर्णः ।
आलिङ्गनोत्थमिव लाभमयं ददानो धन्यातिधन्यपदवीं पवनः प्रयाति ।।३९।।

किं वा यदेव वसनं विलसत्सुगन्धमास्तीर्यते निधुवनेषु रहः प्रियाभ्याम् ।
तेषां स्मृतिं नवयतीति तदुत्थितोऽसौ धन्यातिधन्यपदवीं पवनः प्रयाति ।।४०।।

आलीषु माधववशीकरणाय नैककाकूक्तिचाटुवचनारचनापरासु ।
स्पृष्टाङ्गसैव सफलीकृततत्प्रयत्नो धन्यातिधन्यपदवीं पवनः प्रयाति ।।४१।।

यद्वातिशीतलसुमन्दसुगन्धमाली वृन्दावनोद्भवतया शुभभाग्यशाली ।
पूर्वं प्रियां तदनु च प्रियमर्चयन्नो धन्यातिधन्यपदवीं पवनः प्रयाति ।।४२।।

यद्वा क्वचिद्व्यजनशालिकराभिरालिमालाभिरप्यगमनीयरहोनिकुञ्जे ।
हर्तुं स्थितो दयितयोः श्रमवारिबिन्दून् धन्यातिधन्यपदवीं पवनः प्रयाति ।।४३।।

धन्यस्तु भारतभुवः क्वचनापि भागे लब्ध्वा जनिं भवति भूरिवृषो मनुष्यः ।
अत्र व्रजे तु जनितो मनुजोऽतिधन्यो वृन्दावने पुनरसावतिधन्यधन्यः ।।४४।।

वृन्दावनेऽपि यदि कश्चन भूरिभाग्यः कुञ्जे भवेन्न वचसां विषयः स भावी ।
तत्रापि यस्तु वृषभानुसुतैकसेवालग्नात्पटादपि भवेन्न स चेतसोऽपि ।।४५।।

यस्त्वीदृशोऽपि भजनेन निजेन तस्याः प्राणप्रियं मधुरिपुं कुरुते कृतार्थम् ।
तस्येह किन्नु कथयामि गिराथ मन्ये किं चेतसाऽथ कलयेऽत्र धियापि वा किम् ।।४६।।

'वाग्जन्मवैफल्यमसह्यशल्यं गुणाधिके वस्तुनि मौनिता चेत् ।'
इत्याह स श्रीहरिवंशचन्द्रो धन्यातिधन्यं पवनं वितृप्तः ।।४७।।

## द्वितीयः सर्गः

दिशोऽपि नमनात्प्रकाशममनाङ्महत्त्वं पुरो-
ऽवलोक्य तदपि प्रणामवचसा परिष्टूयते ।
अथापि शरणागता नवनवाः कथं प्राप्नुयुः
सुदुर्लभपदं तदित्ययमनुग्रहो दिश्यते ।।१।।

'ब्रह्मेश्वरादिसुदुरूहपदारविन्द-
श्रीमत्परागपरमाद्भुतवैभवायाः ।
सर्वार्थसाररसवर्षिकृपार्द्रदृष्टे-
स्तस्या नमोऽस्तु वृषभानुभुवो महिम्ने ॥'

रम्यं पदं रसिकभृङ्गनिपीयमानमास्तेऽरविन्दमिव वास्त्यरविन्दमेव ।
विख्यातपद्मरजसस्तु विशेषशोभः श्रीमान् पराग इदमीयतया विभाति ॥२॥

ऊहन्ति हन्त सुतरामतिदुःखतो यद् ब्रह्मापि शम्भुरपि श्रीरपि नारदोऽपि ।
यच्चास्ति नाम परमं च तदद्भुतं च, तद्वैभवं किमपि तस्य किलास्ति यस्याः ॥३॥

सर्वेऽपि मुक्त्यवधयो भुवि सन्ति येऽर्थास्तेषां तु भक्तिरनुरागमयीह सारः ।
सारस्य तस्य च रसो रसराजनामा, शृङ्गार एव रसिकै रसनीय एकः ॥४॥

तं वर्षितुं प्रथितमस्त्यथ शीलमस्याः सा दृष्टिरेव कृपया सजलेव यस्याः ।
तस्या नमोऽस्तु सकलेषु वृषेषु भानोरालम्बनस्य वृषभानुभुवो दिशेऽपि ॥५॥

आद्यास्तु भक्तिविवशीकृतविष्णुपादाः श्रीर्नारदश्च सनकश्च तदादयश्च ।
येषां दुरूहमपि कृष्णपदारविन्दं तेषामिदं तु नितरां सुतरां दुरूहम् ॥६॥

आधाय मूर्धनि यदापुरुदारगोप्यो, नायं श्रियोऽङ्ग उ नितान्तरतेः प्रसादः ।
इत्यादिदर्शनबलेन श्रियो निवासे श्रीमद्विशेषणमभीष्टतमं परागे ॥७॥

तद्भूरिभाग्यमिह जन्म किमप्यटव्यां यद्गोकुलेऽपि कतमाङ्घ्रिरजोऽभिषेकम् ।
इत्यालपंस्तपति षष्टिसहस्रवर्षं यद्गोपिकाङ्घ्रिरजसोऽधिगमाय वेधाः ॥८॥

ता गोपिका अपि भवन्त्यनुरागभक्त्या श्रीकृष्णपादरजसः स्पृहयालवो यत् ।
कृष्णोऽपि च प्रियतमाङ्घ्रिरजोऽभिलाषी तद्वेधसे तु परमाद्भुतवैभवं तत् ॥९॥

कृष्णस्य वा व्रजति वैभवतां परागः सद्योवशीकरणचूर्णतया तदुक्तेः ।
गोपीजनस्य कलयत्यथ सोऽद्भुतत्वं ब्रह्मादिगामि परमाद्भुतवैभवत्वम् ॥१०॥

यत् स्वात्मनेष्टवदयं समुपासनीयो यन्माननोदनपटुप्रियधारणीयः ।
यच्च प्रधानललितादिकवन्दनीयस्तद् श्रीहितस्य परमाद्भुतवैभवं सः ॥११॥

पालीषु किञ्च ललितादिकृतासु लीना आलीभवन्ति किल शङ्करनारदाद्याः ।
ता लीनचेतस इह प्रतियान्ति काक-तालीयतस्तु परमाद्भुतवैभवं तम् ॥१२॥

आहोस्विदालिनिवहे तु मिथः कृताभिर्ब्रह्मेश्वरादिगुणतुल्यतयाभिधाभिः ।
वाच्याः कदापि परमाद्भुतवैभवाख्यश्रीमत्परागकणिकैकलवं वहन्ति ॥१३॥

इत्थं कृपैव परमाद्भुतवैभवस्याप्येतस्य लाभविषयेऽस्ति निदानमेका ।
स्वाभाविकी भवति सेति जनेन लभ्या सर्वेण मीनजलभावमुपाश्रितेन ॥१४॥
सर्वार्थसाररसवर्षितया कृपेयं स्वस्वामिनीनयनयोरधिवासमाप्य ।
आर्द्रीकरोति न तु ते सजले स्वभावाज्जायेत खल्वितरथाऽऽकलनान्तरायः ॥१५॥
ब्रह्मेश्वरादिसुदुरूहपदारविन्दश्रीमत्परागपरमाद्भुतवैभवापि ।
सर्वार्थसाररसवर्षिकृपार्द्रदृष्ट्या दीनान् कृतार्थयति सेति नमो महिम्ने ॥१६॥
ऋद्धेषु या भवति कस्यचनानुकम्पा, सा नूनमेव जनिता मनसो लघिम्ना ।
दीनेषु यस्तु करुणामयते स धन्यो नाकाशमेति तुलनां किल तन्महिम्ना ॥१७॥
श्रीनन्दनन्दनदृगञ्जननी शलाका, कर्पूरपूररचिता, परिभूतराका ।
श्रीमद्धितेन निहिता हृदयैकपात्रे, गन्धेन तर्पयति दीनजनस्य चेतः ॥१८॥
ब्रह्मेश्वरादिसुदुरूहपदारविन्दः श्रीमानिहास्तु यदि नाम स नन्दसूनुः ।
प्रेमापराधनिवहा अपि चेत्परागास्तेऽस्या भवन्ति च परादभुतवैभवानि ॥१९॥
तैर्वैभवैरतिविभूषितसर्वगात्री पात्रीकरोति करुणार्द्रदृशोर्यमेव ।
सर्वार्थसाररसवर्षितया स एव तापं निरस्यति च शैत्यमुपेति किञ्चित् ॥२१॥

## तृतीयः सर्गः

**'यो ब्रह्मरुद्रशुकनारदभीष्ममुखै-**
**रालक्षितो न सहसा पुरुषस्य तस्य ।**
**सद्योवशीकरणचूर्णमनन्तशक्ति**
**तं राधिकाचरणरेणुमनुस्मरामि ॥३ ।**

उक्तानुभूतविदिता इति ये तदर्थाः सर्वेऽपि ते कथयितुं सुमता इहेति ।
तत्रात्र चोक्तमहिमानमनन्तशक्तिं तं राधिकाचरणरेणुमनुस्मरामि ॥१॥
धर्मार्थकामवचसां प्रथमो विधाता, मोक्षाशिषामुपगमे प्रथितश्च रुद्रः ।
भक्तिप्रकाशकतया शुक एव सिद्धः प्रेमान्वितामथ च नारद आह भक्तिम् ॥२॥
सख्योत्थितां मधुरतां प्रणिनाय भीष्मस्तस्मादिमे स्वविषये सदृशेषु मुख्याः ।
एतैस्तु दैन्यमधुरिम्णि सुलक्षणीयो नालक्षितः स सहसेति नितान्तसत्यम् ॥३॥
वृन्दावने पुरि सदा वसतोऽनुकम्पाभीप्सोश्च तस्य सहृदः पुरुषोत्तमस्य ।
सद्योवशीकरणचूर्णतया प्रसिद्धः श्रीराधिकाचरणरेणुरनन्तशक्तिः ॥४॥

सोऽलक्षणीयपरमो नितरामवश्योऽप्येतद्व्रजःकणनिषेविण आत्मदायी ।
सर्वात्मना भवति, तं कुरुते कृतार्थं, राधेति नाम च परं सफलीकरोति ॥५॥

ब्रह्माद्यलक्षितगुणोऽपि रजःकणैकसेवापरस्य वशमेति विना प्रयासम् ।
इत्युक्तभूरिमहिमानमनन्तशक्तिं तं ते भजन्ति रसिका रसकामधेनुम् ॥६॥

राधा-विलास-परिहास-विलोकनेषु, सातत्यतश्च चरणाम्बुजसेवनेषु ।
दत्तेऽधिकारमिदमेव रजो यतस्तत्, सत्यं स्तुता भवति शक्तिरिहास्य नान्ता ॥७॥

नन्वत्र पातयति कः पुरुषेऽत्र रेणुं, को ग्राहयत्यथ च तेन किलेति तर्के ।
दूरीभवन्ति बहिरङ्गतया नरोऽन्येऽसिद्धं यदस्ति बहिरङ्गमिहान्तरङ्गे ॥८॥

तत्रात्मना मतिपुरस्सरमागृहीतः सिद्ध्येत नैव तु वशीकरणप्रयोगः ।
अन्येन चाप्यविदितं परिपातितोऽपि सोत्कीलनेन नितरामुपयात्यसिद्धिम् ॥९॥

किन्त्वेष बुद्धिविधृतोऽपि बत क्षणेन, सिद्धोऽभवत्पुलकदर्शनतोऽनुमेयः ।
विस्मारयन् धवधियं जनयञ्जनत्वम्, इत्यद्भुतश्चरणरेणुमहानुभावः ॥१०॥

आलीजनेन जनगीतपरिश्रुतो वा तस्मिन् विवाहसमये विहितः प्रयोगः ।
छायेव स प्रियतमाचरणान्तलग्नः कृष्णत्वमाप्य चरतीति विलोकयामः ॥११॥

कुञ्जे नन्दगृहेऽथवा प्रियसखीवृन्देन कृष्णं प्रति
'वन्दस्व च्छलदैवते' ति वचनैः शिक्षासु दत्तास्वपि ।
वश्यः स्यां झटितीति तेन मनसा सम्प्रार्थितं श्रीहिता
सद्यः पूरितवत्यनेन रजसा तस्याभिषिच्यालिकम् ॥१२॥

'सौख्यस्यातिशयं यथा त्वमयसे नाहं तथाये सखि,
स्वातन्त्र्यं पतिभर्तृभावजनितं विस्मर्तुमिच्छामि तत् ।'
इत्येवं विनिवेदिता हितसखी कृष्णेन जातु क्वचित्
श्रीराधाचरणाम्बुजन्मरजसा तत्काममापूरयत् ॥१३॥

तेनानेन महोपकारकरणेनात्यन्तसिद्धार्थितः
श्रीकृष्णोऽतितरां प्रसद्य ऋणितामात्मन्यथामन्यत ।
आह- श्रीहित ! उत्तमर्णपदवी ते दुर्निवार्या भव-
त्वज्ञातोऽपि रहोरतिव्यतिकरो ज्ञातोऽस्तु ते चावयोः ॥१४॥

'यो ब्रह्मादिभिरप्यलक्षितगतिः, श्रीमद्वशीकारणः,
सोऽयं रेणुरनुक्षणं स्फुरति मे चित्तप्रदेशेष्विति ।'
श्रीराधाचरणाम्बुजन्मरजसो नित्यस्मृतेरुल्लस-
त्सर्वाङ्गा स्फुटमङ्गला हितसखी स्वं भाग्यमुद्गायति ।।१५।।

आहोस्वित्सुरभक्तमुक्तसुहृदामत्यन्तदूरस्थिते:
श्रीकृष्णस्य महोदयं कवयति प्रातिभ्यवान् श्रीहितः ।
यो मानप्रतिकूलितामपि लतागात्रीमपात्रीं गिरा
रेणुस्पर्शनमात्रतोऽनुनयते प्राणाधिकां राधिकाम् ।।१६।।

यद्वाऽयं महिमा महान्निगदितः सर्वाङ्गसन्माधुरी-
लावण्यादिगुणोदितस्य दयितासौभाग्यभोगस्य सः ।
यस्याः पादरजःकणाः प्रियतमस्यात्यन्तदुष्प्राप्यता-
मस्यन्तो वशयन्ति हन्त हृदयं वृन्दावने क्रीडितुम् ।।१७।।

किंवाऽस्मान् प्रतिबोधयत्ययि जना वृन्दावने वासिनो
यत्र क्वापि, यतः कुतोऽपि वसथ, व्याप्तं समन्ताद्रजः ।
तस्मादेषु रजःसु विस्मरत मा राधापदाब्जोद्भवम्,
तं रेणुं रसकामधेनुमथ च श्रीकृष्णलाभावहम् ।।१८।।

## चतुर्थः सर्गः

**'आधाय मूर्धनि यदापुरुदारगोप्यः**
**काम्यं पदं प्रियगुणैरपि पिच्छमौलेः ।**
**भावोत्सवेन भजतां रसकामधेनुं**
**तं राधिकाचरणरेणुमहं स्मरामि ।।४।।'**

धन्योऽस्ति रेणुमहिमा, यदयं सुराद्यैरासाद्यते न सहसा श्रवणादितोऽपि ।
वृन्दावनाधिपतिदिङ्नमनस्फुरत्तन्माहात्म्यवन्दनकृतस्तु मयि प्रसादः ।।१।।

यच्चेतसा क्षणमपि स्मृतिरस्य रेणोर्न त्यज्यते प्रतिपलं परिभज्यतेऽसौ ।
इत्यादिहर्षमतुलं प्रकटीकरोति श्रीमान् हितस्तमितिशब्दपुनःप्रयोगात् ।।२।।

यद्यप्यभीप्सितमभूद्यमिति प्रवक्तं किन्तु प्रकाशमगमद्यदितीह शब्दः ।
अस्त्यव्ययं यदिति यद्यपि किन्तु मन्ये मान्यं तु मदयति रेणुकृपाभिमानः ।।३।।

मेघं प्रति प्रणयवानयमस्ति बर्ही, नृत्यत्यहो श्रुतिपथं गत एव तस्मिन् ।
तद्वन्ममापि हृदये प्रणयित्वमास्तामित्याशयेव भवतिस्म स पिच्छमौलिः ॥४॥
अन्ये वदन्ति दयितामनुगामिनोऽस्य पिच्छं वहन् स शिरसा तमनुप्रयाति ।
केचित्त्विहाभिदधति प्रणयेन राधावैचित्त्र्यचित्रमिव मूर्ध्नि दधाति तं सः ॥५॥
मन्यामहे तु दयितानयनानुकारी हारी नितान्तमिति तं स दधाति शीर्ष्णा ।
किं वा प्रियाचिकुरमन्वकरोदितीमं भूमिस्थितं स तरसा शिरसा ववन्दे ॥६॥
वृन्दावनीललितमण्डलमध्यवर्ती, राधापदाब्जयुगलं हि मयूरपिच्छे ।
अस्त्यङ्कितं घनतया धृतवृत्तरूपं, तस्मादिमं स शिरसा वहतीति मन्ये ॥७॥
राधेति वा मधुरमक्षरयुग्ममन्तर्धत्ते स चन्द्रकमिति स्म दधाति मूर्ध्ना ।
इत्यादिनैकविधभावविभावनीयं किञ्चिद्रहस्यमिह राजति पिच्छमौलेः ॥८॥
सोऽयं प्रकामरसिको विविधैः प्रयत्नैरात्मन्यनन्यपरिचारकभावलिप्सुः ।
कान्तान्तिके कथमपि स्वमनोभवस्य वेगं निरोद्धुमनलं भवतीति खिन्नः ॥९॥
अद्यापि यां मनसि कामयमान आस्ते तां लेभिरेऽत्र पदवीमदवीयसीं याः ।
गोप्यः स्मरार्तिधृतकृष्णपदा उदारा राधापदाम्बुजरजः शिरसि प्रणीय ॥१०॥
कृष्णे निरूढरतयोऽगतयो विसृष्टलोका निरस्तनिगमागमबन्धनाश्च ।
ब्रह्मादिकाम्यपदपद्मरजःकणास्ताः स्मृत्यैव तत्प्रणयदा इति सन्त्युदाराः ॥११॥
एतासु यास्तु मुनयः श्रुतयोऽवतीर्णास्ता यन्त्यधिप्रकटलीलमिमं मुकुन्दम् ।
तन्माधुरीमतिशयेन निपीय पीतकामाशया दधति काञ्चनशुद्धभावम् ॥१२॥
यद्वर्जिता अतुषिता क्वथिता च धाना वीजोपयोगमुपनेतुमभीष्यते नो ।
तत्ता अपि प्रशमिताखिलवृत्तयस्तद्भक्ता बभूवुरिति मास्तु सपत्नशङ्का ॥१३॥
सम्पूर्णषोडशकलासहितस्य तस्य कृष्णस्य ताः प्रणयिनो रसमास्वदन्त्यः ।
वामेऽथ गौरचरणे प्रतिपद्य रेणुं दास्यं गताः प्रियगुणैः सह राधिकायाः ॥१४॥
पूर्वं मनोभववशीकृतमानसानां सामान्यलोकतुलिता सखिताऽऽस्त तासाम् ।
अद्य त्ववाप्य वृषभानुसुताङ्घ्रिरेणुं साधारणेतरमवापुरिमाः सुभाग्यम् ॥१५॥
नाऽऽसीत्कदाचिदपि कृष्णकलत्रताऽऽसां सा वै कुलेन वयसा समशीलयोः स्यात् ।
कामस्तु केवलममूभिरिह प्रयुक्तो भक्तावगात् परिणतिं सहसा परायाम् ॥१६॥
गौरं महो वशितवाममुष्य शुद्धप्रेमास्पदं विषयमेकरसं च सक्तेः ।
ऐश्वर्यतोऽपि परमं प्रविलोकयन्त्यो मूर्ध्ना दधुश्चरणरेणुमिमास्तदीयम् ॥१७॥

दास्यो वयं स्म इति सत्यनिजस्वरूपं विज्ञाय दूरितमनोभवभावलेशाः ।
एता उदारपदवीमधिगम्य तांस्तानापुर्गुणान् दयितयोः प्रियतैकहेतून् ॥१८॥
भावोत्सवेन भजतां रसकामधेनुं श्रीराधिकाचरणरेणुमिमाः प्रपद्य ।
भावानुरूपमभिलाषरसादिवाच्यमानन्दमापुरिति ता अभवन् कृतार्थाः ॥१९॥
पूर्वं किलैति हृदये रसिकस्य भावः पश्चात्स एव भृशमुत्सवतां प्रयाति ।
सूतेऽथ सा रसमखण्डितभक्तिधारा वेद्यान्तरानुभवहीनतयाऽनुभाव्यम् ॥२०॥
सोऽयं रसः सहृदयस्य तु कामपूर्तिर्यत्रैष दम्पतिविलासविलोकजानि ।
सेवोत्थितानि च सुखान्यनुभूय मग्नो दास्यं परं मनसि पश्यति नापरं तु ॥२१॥
कृष्णे तु नाम घटतां बहुरस्य भावोऽस्यांशोऽस्मि निग्रहमनुग्रहमस्य विन्दन् ।
श्रीराधिकां प्रति तु केवल एक एव दास्योत्सवो विलसतीति तथेदमुक्तम् ॥२२॥
यं पिच्छमौलिरपि कामयमान आस्ते, यं चैतदद्भुतगुणा अपि कामयन्ते ।
दास्योत्सवं तमधिजग्मुरुदारगोप्यो यद्वा गुणा अपि तमापुरिवेदमीयाः ॥२३॥
एते गुणाः खलु तदा गुणतां प्रयान्ति विज्ञैर्यदा भुवि भवन्ति मुदा गृहीताः ।
हा हा ! घटः श्रितगुणोऽपि च पूरितोऽपि कूपे निमज्जति गुणाग्रहिणामभावे ॥२४॥

प्रणयगतिरतीवाश्चर्यचर्येति केचि-
त्त्वभिदधति तदेतास्तद्रजो मूर्ध्नि धृत्वा ।
प्रियगुणकमनीयं पिच्छमौलेः पदं तद्
दुरधिगममवाप्ता अञ्जसोदारगोप्यः ॥२५॥

अवगमयति तन्नो यन्महारासकाले
सकलसरसलीलानामधिष्ठातृदेव्याः ।
अनुमतिमधिगन्तुं कीर्तिदाकीर्तिदायाः
पदकमलपरागं मूर्ध्नि गोप्यो दधन्ते ॥२६॥

अभिनयनिपुणास्ता नृत्यदक्षाः सुगीता-
मृतपरिचयवत्यो वाद्यविद्यानवद्याः ।
लवणिममधुरिम्णोः सौकुमार्यस्य पात्र्यो-
ऽप्यतिशयितमुदाराव्यक्तसाकूतचेष्टाः ॥२७॥

इति दयितगुणानामास्पदत्वं प्रयाता
अपि कथमपि काम्यं तत्पदं नाप्तुमीशाः ।

अथ शिरसि परागं सानुरागं निधाय-
प्रचितगुणनिकाया लेभिरे तत्पदं ताः ॥२८॥
कथमथ रसभोक्त्री राधिका तं पराभ्यः
प्रभवति वितरीतुं स्वात्मनैवेति शङ्का।
रसिकमनसि मा भूदत्र नित्यादिपूर्ण-
रसनिधिलहरीवद्वर्तते ह्यैकरस्यम् ॥२९॥

इह खलु भजमानानेव भावोत्सवेन
सुखयति रसदानाद्यत्पदाम्भोजरेणः।
इति परममुदारं भक्तवात्सल्यसारं
कलयति कथमस्या मानसं काचिदीर्ष्या ॥३०॥

अपि च भवति या या कान्तलीलाऽत्र सा सा
श्रयति प्रथममस्या एव चेतःप्रसादम्।
प्रभवति न हि लीला काचिदाह्लादभिन्ना
तदुपनयति तां तां राधिकाह्लादरूपा ॥३१॥

अपि च चरणरेणुस्पर्शनादेव तासा-
मुदभवदिह दास्यं सर्वथा निःसपत्नम्।
अभिदधति हि गोप्योऽनन्यभावोपपन्ना
अधिगतकमनीया माधवे भक्तिभावम् ॥३२॥

## पंचमः सर्गः

श्रीवृन्दावनधामपावनदिशं प्रत्यर्पिता सन्नतिः,
प्राकाश्यं महिमानमावहदहो श्रीराधिकायाः परम्।
तन्नामश्च तदङ्घ्रिरेणुमनयत्सद्योऽनवद्यस्मृतिं,
सत्यं कोऽपि विराजतेऽत्र महतां कान्तोऽनुकम्पाक्रमः ॥१॥

श्रीराधाचरणाब्जरेणुकलना सा कामधेनुर्ध्रुवा,
या काम्यं वितनोति किञ्चन पदं श्रीपिच्छमौलेरपि।
सैव श्रीहितचेतसे प्रणयिनी श्रीकुञ्जदेवीमदात्
सत्यं कोऽपि विराजतेऽत्र महतां कान्तोऽनुकम्पाक्रमः ॥२॥

**'दिव्यप्रमोदरससारनिजाङ्गसङ्ग**
**पीयूषवीचिनिचयैरभिषेचयन्ती ।**
**कन्दर्पकोटिशरमूर्च्छितनन्दसूनु-**
**सञ्जीविनी जयति कापि निकुञ्जदेवी ॥५॥**

नालक्ष्यापि बहिर्विशेषवपुषा लीलाप्रकाशं गता
देवी दीव्यति कापि धन्यलतिकाक्लृप्ते निकुञ्जे नवे ।
नित्यं क्रीडति वल्लभेन विविधै रासैर्विलासैरियं,
किं चाक्षैर्विजिगीषतीयमजितं तं चात्मगुप्त्यादिभिः ॥३॥

तेनैव प्रणयोचितं व्यवहरत्येषा निमेषासहा,
तत्रैवालिजनैस्तथात्मरुचिभिर्नित्यावृता द्योतते ।
रम्यैश्चालिपिकालिवृन्दरचितैः स्तोत्रैरियं स्तूयते,
प्रोद्यच्चाटु च नन्दनन्दनमुखं प्रेक्ष्याधिकं मोदते ॥४॥

तद्रूपासवसेवनेन मधुनः पानेन वा माद्यति,
तल्पे श्रीहितकल्पिते किसलयैः श्रान्ता स्वपित्यादराद् ।
गन्धं प्रेष्ठवपुर्विमर्दजनितं पुष्पादिजं चेच्छति,
स्वादं स्वादुफलादिनः प्रणयिनो बिम्बोष्ठजं चेच्छति ॥५॥

रूपं चाप्यनुरूपमेव मनसः कान्तात्मनोरिच्छति,
स्पर्शं कान्ततनोर्गुणाढ्यमरुतः पत्रादिनश्चेच्छति ।
शब्दं वा शुकसारिकाकलरवं वंशीध्वनिं चेच्छति,
नृत्यन्ती गजहंसगञ्जनगतिर्नानारसैर्गच्छति ॥६॥

इत्येवं हृदयङ्गमैः सहृदयानामेव नानाविधै-
र्दीव्यत्यर्थवशेन पर्यवसितै रूपैर्निकुञ्जे नवैः ।
याधिष्ठातृतया निकुञ्जवसतेरत्यद्भुतैश्चेष्टितैः
सेव्यत्वाद्रसिकैश्च राजतितरां देवीति सा कथ्यते ॥७॥

क्रीडाभिर्विजिगीषया व्यवहृतिद्युत्या स्तवैर्मोदनैः
कान्तिस्वप्नमदैः सुमञ्जुगतिभिर्नित्यं निकुञ्जे श्रिता ।
संसेव्याऽद्भुतकारिणी च परमाधिष्ठातृताधारिणी
देवी कापि निकुञ्जगेह जयतीत्युक्तार्थसङ्क्षेपणम् ॥८॥

सर्वोत्कर्षविराजनेऽथ जयतीत्यस्यार्थ उद्द्योतिते
सर्वेषां तदपेक्षया प्रतिफलत्येवापकर्षः स्वयम् ।
अन्योत्कर्षविचारणेन जनिता स्वात्मापकर्षस्मृति-
र्यत्सूते नमनं, नमामि तदहं सर्वप्रणम्यामिमाम् ॥९॥
नन्वास्तामितरास्वयं गुणगणो देवीषु काल्यादिषु
किन्नश्छिन्नमितो यदि प्रणमिता लोकेषु लोकेन ताः ।
किन्त्वेता यदि जीवयन्ति दयितं पञ्चेषुणाऽप्याहतं
नैवायान्ति तथापि कामपि तुलां देव्या निकुञ्जस्थया ॥१०॥

साक्षात्स्थितोऽपि यदि कश्चन मन्मथः स्यात्तस्यापि मन्मथ इति श्रुतिराह यस्मै ।
कन्दर्पवृत्तमपि तस्य न नन्दसूनोरग्रे विभाति किमु कोटिशरादिचर्चा ॥११॥
किञ्चेन्दिराभिलषितैरपि रूपमुख्यैः सौभाग्यजैर्गुणगुणैरपि गोपबालाः ।
भावानुभावपरिपूर्णमहारसौघाविर्भावतोऽपि विकृतिं ददृशुर्न यस्य ॥१२॥
योऽक्षुब्ध एव नितरामविकार एव तासां यथेप्सितमनोरथपूरकोऽभूत् ।
तस्यैव सम्प्रति कथं वद नन्दसूनोः कन्दर्पकोटिशरमूर्छिततता प्रमेया ॥१३॥
सत्यं, परन्त्विह तु कश्चन वन्दनीयद्वन्द्वं भजन् स्वसमरैरविनिन्दनीयः ।
देवीप्रसादजनिताद्भुतशक्तिरन्यः कन्दर्प एव धृतकोटिशरोऽस्ति धन्यः ॥१४॥

प्रत्यङ्गं प्रतिरोम जाग्रदधिकोत्कण्ठानुरूपं शरैः,
कन्दर्पप्रहितैस्तु कोटिभिरयं नन्दात्मजो मूर्छितः ।
इत्येतद् ध्वनयेदमुष्य परमं शौर्यं च धैर्यं परं,
किन्त्वस्मिंस्तु निकुञ्जमञ्जुलगृहे तत्तद्द्वयं नेष्यते ॥१६॥

एकेनापि स तन्निमित्तकशरेणासीन्न यन्मूर्छितो
यच्चान्याविषयैः स कोटिभिरपि प्राप्तो दशामीदृशीम् ।
इत्येतद्द्वयमप्यनन्यरसिकैः श्रोतुं न शक्यं वचः
स्यात्तेन ध्वनिता परं विवशता, शिक्षा, भयं च स्फुटम् ॥१७॥

'लीलापाङ्गतरङ्गितैरुदभवन्नेकैकशः कोटिशः
कन्दर्पाः पुरुदर्पटङ्कृतमहाकोदण्डविस्फारिणः ।
तारुण्यप्रथमप्रवेशसमये यस्या महामाधुरी-
धारानन्तचमत्कृता भवतु नः सा राधिका स्वामिनी' ॥

इत्येतत्तु विमृश्यते यदि, समाधानं तदा लभ्यते
नैतावन्तमुपद्रवं जनयितुं किंचित्त्विहारभ्यते ।
तारुण्यप्रथमप्रवेशसमये बाल्यादिव प्रेषिता-
देकस्मात्तु कटाक्षतो निरसरत्कन्दर्पकोटिः स्वतः ॥१७॥

साऽप्यासीत्पुरुदर्पटङ्कृतमहाकोदण्डविस्फारिणी-
त्यज्ञातैव तया विपन्निपतिता मूर्छेति नन्दात्मजे ।
प्रेयांसं प्रतिलब्धतादृशदशं वीक्ष्यातिसंरम्भतो,
यत्साङ्केन दधौ, तदैव सहसा सञ्जीवयामास तम् ॥१८॥

मूर्छां केन दधाति, केन च पुनः संजीवनं यात्यसा-
वित्येतन्न किलाधुनापि विदितं श्रीकुञ्जदेव्याऽद्भुतम् ।
तस्मान्नित्यविहार एव चलति श्रीमन्निकुञ्जावना-
वित्येतत्कथयत्ययं सुमनसः ! शीले णिनिप्रत्ययः ॥१९॥

कन्दर्पाणां तु कोटेरतिविषमशरैर्मूर्छितो नन्दसूनु-
रित्याकर्ण्यैव लोके प्रसरति करुणः कश्चनोद्वेगपूरः ।
हा हा त्रायध्वमेनं विगलितवयसो नन्दगोपस्य बालं
वात्सल्यैकालवाले क्षुपमिव समदैर्वारणैर्मर्द्यमानम् ॥२०॥

इत्याद्युद्वेगभाञ्जि व्रजजनहृदयान्यद्रवन्यावदन्त-
र्नेत्रेभ्यश्चाविरासन्नतिशयनिसहाः शोकजाश्रुप्रवाहाः ।
तावत्पीयूषवीचीनिचयपरिचितैरङ्गसङ्गैः स्वकीयै-
रेनं सञ्जीव्य राधाऽजनयदनुगतांस्तान् प्रमोदाश्रुपूरैः ॥२१॥

सेयं देवी निकुञ्जे जयति निजवपुःसङ्गतो नन्दसुनुं
सञ्जीव्यैवाखिलानां व्रजजनमनसां मङ्गलैकावलम्बः ।
यस्या दिव्यः प्रमोदो रस इति च तयोः सारभूतं निजाङ्गं
सङ्गं पीयूषवीचीबहुनिचयमुपादाय दत्तेऽभिषेकम् ॥२२॥

नैवास्मिन्नङ्गसङ्गे धृतवति समतां हन्त पीयूषवीची-
वृन्दैरन्तर्द्रवत्वं भवति निगदितं, तेन चाधैर्यमस्याः ।
यस्मादेषोऽङ्गसङ्गः सपदि विदधते धर्मनिर्वाहमात्रम्,
नो तत्राधैर्यलेशः प्रभवति, करुणार्द्रं तु चित्तं स्वभावात् ॥२३॥

तेनैवेष्टाभिषेकः प्रतिविगलितवेद्यान्तरत्वप्रयुक्तो,
देवी दिव्यप्रमोद-प्रतिघनरसयोश्चाधिदेवत्वसारः ।
यद्वा प्राप्तप्रमोदो रस इह कथितः कश्चनान्तः प्रमोदः
प्रादुर्भूतो बहिर्वा दहनपरिचयात्क्षीरमुत्फाणितं स्यात् ।।२४।।
प्राप्तोल्लासरसैरथाप्यवयवैरुज्जृम्भमाणं नवं
लावण्यं प्रतिभाति किञ्चन महाश्चर्यावहं सर्वतः ।
चन्द्रासङ्गकृतोऽथवामृतनिधेः पीयूषवीच्युद्गमो
यद्वा वल्लभसङ्गमन्थजनितैस्तं साऽभितः सिञ्चति ।।२५।।
दिव्यप्रमोदरसयोरिह चारुसारैः संञ्जीवत्यनुदिनं सहजाङ्गसङ्गैः ।
पीयूषवीचीनिचयैरभिषिच्य काचित्कन्दर्पकोटिशरमूर्छितनन्दसूनुम् ।।२६।।

## षष्ठः सर्गः

इत्थं निरूपितमिदं त्वविशेषरूपं पीयूषसेचनपरायणतादिशब्दैः ।
सम्प्रत्यसौ सकलतापशमाभिलाषो ब्रूते विशेषमतिकातरतां दधानः ।।१।।
नोच्चारणीयमपि नाम निजेष्टदेव्याः साक्षादयं प्रविलपन्नतिगोपनीयम् ।
भूयः स्वलोचनविलासपदं प्रयातं साक्षाद्विलोकयितुमिच्छति यत्स आस्यम् ।।२।।

**तन्नः प्रतिक्षणचमत्कृतचारुलीला**
**लावण्यमोहनमहामधुराङ्गभङ्गि ।**
**राधाननं हि मधुराङ्गकलानिधानमा-**
**विर्भविष्यति कदा रससिन्धुसारम् ।।६।।**

दिव्यप्रमोदरससारनिजाङ्गसङ्गेत्यादौ यदुक्तमनुभूतचरं च यत्तत् ।
राधाननं सुमधुराङ्गकलानिधानमाविर्भविष्यतितरां नु कदाऽत्र मह्यम् ।।३।।
चन्द्रः प्रतीतिमुपयाति कलानिधानशब्देन तेन मधुराङ्गपदं प्रयुक्तम् ।
ह्रासैः कलङ्ककलुषैः सुखदुःखदानैश्चन्द्रो न नाम मधुराङ्गपदं प्रयाति ।।४।।
तेनैष गौणवचनोऽस्ति कलानिधानं धाधातुरेष खलुधारणापोषणार्थः ।
राधाननं तु नवतामुपयाति नित्यं तेनास्ति मुख्यवचनेन कलानिधानम् ।।५।।
यद्वा विराजतितरामिह सर्वमङ्गमत्यन्तमेव मधुरं त्वधरादिसंज्ञम् ।
तेषां कलाश्च कलयन्निधिवत्तदास्यं यद्वाङ्गतां मधुर एव गतोऽस्य साक्षात् ।।६।।
यासां मूर्तिधरोऽपि कोऽपि मधुरो यात्यङ्गतां ताः कला,
यस्मिन्नेकनिधान एव निहिता, राधाननं तादृशम् ।
इत्येतेन सुनिश्चितं किमपि यत्तन्नैरपेक्ष्यस्थितं
राधैश्वर्यमिहावभाति तदियं शक्तिः स्वतन्त्रा परा ।।७।।

आविर्भाव इहाभ्यलक्ष्यततरामस्मभ्यमित्याशया
त्तेनान्येऽपि कृतार्थिताः सहृदयाः सर्वे सजातीयकाः ।
किंवा प्रेमभराभिमानविसरद्वाचां विलासोऽस्त्वयं
यद्वा बोधयतु प्रभूतममतामात्मन्यनेकाशयः ॥८॥
आविर्भूतमपि स्वभावनिमिषन्नेत्रद्वयं यत्क्षणं
मुञ्चत्येव ततः प्रतिक्षणपदं व्यस्यापि सम्बध्यताम् ।
इत्येषा च कृपा कदेति वचनादभ्यर्थ्यते, दुर्लभे
प्राप्तव्ये विरहेण तेन महता व्यग्रेण वा चेतसा ॥९॥
प्रेष्ठालीनिवहे वहत्समुदयं तन्नित्यमप्याननं
लोकानां प्रतिपत्पथं न यदगात्तत्प्रार्थना युज्यते ।
चन्द्रं पर्वतपृष्ठवर्तिकुमुदान्यामोदयन्तं यथा
कश्चित्कारुणिकश्चकोरनिवहायाग्रेसरायार्थयेत् ॥१०॥
दोषो यस्त्विह पादपूर्तिफलके ख्यातस्तुहीत्यादिके
तस्यास्मिन्मधुरे वचस्यहह नो शङ्कापि सम्भाव्यताम् ।
नूनं कोऽप्युपगीयते 'हिमधुरः' सोऽङ्गं स्मितस्याभवत्
तस्यानन्तकला दधाति नितरां राधाननं मञ्जुलम् ॥११॥

राधाननं हि मधुराङ्गकलानिधानमास्तां गुणैर्बहुभिरिन्दुगुणातिवर्ती ।
कैश्चित्तु सोऽपि तदतिक्रमितेति शङ्कापङ्कः कलङ्कयतु मा स्म धियं सुधीनाम् ॥१२॥
देवासुरैर्हरिबलेन विमथ्यमानात्सिन्धोरुदेति यदि नाम स इन्दुबिन्दुः ।
राधाननं तु समुदेति रहस्यसिन्धोः सारं स्वयं हि मधुराङ्गकलानिधानम् ॥१३॥
तस्याः किलादिमरसस्य सवित्रिकायाः प्रस्तूयतेऽत्र रससिन्धुतया स्वरूपम् ।
तत्रोत्तमाङ्गमिति सारतया प्रतीतं राधाननं भवति तद्रससिन्धुसारम् ॥१४॥
सारस्य सार इह याति रसेतिसंज्ञां तस्यापि सिन्धुरिव राजति मञ्जुगात्री ।
तस्याः किलातिशयसौभगशालितायाः हेतोरिदं तु वदनं प्रवदन्ति सारम् ॥१५॥
एकत्र वस्तुनि किलैकरसे न वक्तुं शक्यं कदाचिदपि कैश्चन तारतम्यम् ।
प्राथम्यतो नयनयोस्त्विह गोचरत्वं यातीति भाति वदनं सहसैव सारम् ॥१६॥
यद्वा परात्परमिहोपनिषत्सु गीतमानन्दनं कमपि यं शृणुमो रसाख्यम् ।
तस्यापि सिन्धुमुपमथ्य समुद्धृतं यद्राधाननं तदुदितं रससिन्धुसारम् ॥१७॥

इत्थं तस्य रसस्य कश्चन रसः सान्द्रस्य सान्द्रो महान्
आनन्दस्य च कोऽपि विस्मयमयस्यानन्द एकोऽद्भुतः ।
श्रीराधैव यदा तदाननमिदं कैरक्षरैरुच्यताम्
यन्नामाक्षरतः परात्परतरात्पारस्य सारं परम् ॥१८॥

इत्थं विराजति पुरो रससिन्धुसारे राधानने हि मधुराङ्गकलानिधाने ।
उल्लासमेति रससिन्धुतयात्र कञ्चित् श्रीविग्रहोऽपि सुतरामिति दर्शयामः ॥१९॥

प्रतिक्षणचमत्कृता सहजचारुलीला तथा
प्रतिक्षणचमत्कृतं सहजचारु लावण्यकम् ।
प्रतिक्षणचमत्कृतान् सहृदयानुभाभ्यां तु ये
प्रतिक्षणमहो विमोहयत आङ्गभङ्गचौ भृशम् ॥२०॥

प्रतिक्षणचमत्कृतं सहजचारु चाङ्गं तु त-
त्प्रतिक्षणचमत्कृता सहजचारुभङ्गी च सा ।
महामधुरमङ्गमप्यथ तदुत्थिता भङ्गयो
महामधुरताजुषः प्रविलसन्ति यस्मिन्मुखे ॥२१॥

लीला मुग्धविदग्धकौतुककरी जाता चमत्कारिणी
लावण्यं मधुरेऽतिरोचकतया जातं चमत्कारकम् ।
अङ्गं सम्प्रसरत्प्रभोत्करतया भूयश्चमत्कार्यभूत्
भङ्गी लोकविलक्षणोद्गमतया चासीच्चमत्कारिणी ॥२२॥

लीलाऽऽशंसिततो नितान्तमधिका चार्वी प्रकामाभवत्
लावण्यं च ममौ न यद्वपुषि तत्तद्भूयसा चार्वभूत् ।
अङ्गं सूक्ष्मविशालतीव्रकुटिलर्जुत्वादिभिश्चार्वभूत्
हर्षोत्कर्षकरैर्मनोहरगुणैश्चार्व्योऽभवन् भङ्गयः ॥२३॥

सजातीयं यत्र स्मरणपदवीं नैति न पुन-
र्विजातीयं वस्तु प्रभवति हि तन्मोहनमिति ।
सखीनामप्येतद् भवति मिषतीनामवयवान्,
तदा पश्यन् भङ्गीं स रसिकवरो मुह्यति न किम् ॥२४॥

मधौ सर्वो लोकः कमपि सहजोल्लासमयते-
ऽथवा माद्यत्येष प्रपिबति यदा नाम मधु तत् ।
प्रभावोऽयं ख्यातो जगति मधु रातीति मधुरे
तदा किं व्याख्यामः स्थितिमिह महत्येव मधुरे ॥२५॥

यया भवति वाङ्गभङ्गिरिह सर्वथा मोहनी,
प्रतिक्षणचमत्कृता भवतु सात्र लीला मुखे ।
महामधुरतां च येन दधतेऽङ्गभङ्गी पुन-
र्विराजतु तदत्र किञ्चन सुचारु लावण्यकम् ॥२६॥

स्वभावमधुराङ्गकेष्ववयवेषु योज्जृम्भते,
महामधुरतां दधाति सहजाङ्गभङ्गीह सा ।
इति ध्वनयति स्फुटं नवलतामिहाग्राग्रतो
विवृद्धरससिन्धुतोऽधिकविवृद्धसारे मुखे ॥२७॥

इदं तु परिपृच्छ्यते यदि पुराविरासीन्न त-
त्तदा कुत इदं प्रतिक्षणचमत्कृतं वर्ण्यते ?
तदत्र परमप्रमोदरसदायिभङ्गीशतं
प्रतिक्षणविलोकितं लषति भावुकेभ्यो मुखम् ॥२८॥

भ्रूभङ्गी स्मरचापतां कलयतीत्यास्ते स्फुटं मोहनी,
भङ्गी लोचनयोरियं शरतया चास्तेतरां मोहनी ।
भल्लत्वेन कनीनिकाऽपि सुतरामास्तेतमां मोहनी,
पक्ष्माली शरपक्ष्मवच्च नितरां वाच्येतरा मोहनी ॥२९॥

हाहा मोहनतां कथं नु कथयेऽपाङ्गोत्थभङ्गीगतां,
यस्या एकतरङ्गितादुदभवन् कन्दर्पसत्कोटयः ।
एकैकस्य तु तस्य पञ्चशरतामेवानुमायालयो
याचन्ते रससिन्धुसारवदनाविर्भावमत्यातुराः ॥३०॥

तूणीराभतया नितान्तमधुरा नासा यदाविष्कृता,
सर्वे हन्त शराः क्षणादिव तया मन्येऽभवन् संहृताः ।
प्रेष्ठे बिम्बफलाधरोऽथ मधुरं पीयूषमावर्षयत्,
नारङ्गीचिबुकस्य चातिमधुरा भङ्गी गता पथ्यताम् ॥३१॥

अस्यासीन्मधुरे कपोलफलके तस्य क्रमात्कामने-
त्येवं मोहनतां महामधुरतां यत्राङ्गभङ्ग्यो दधुः ।
तद्राधावदनं हिमांशुशतकैरासेव्यमत्यद्भुतं,
प्राकाश्यं कलयेत्कलैकनिलयं सारं रसाब्धेः परम् ॥३२॥

## सप्तमः सर्गः

विना कृपाश्रयं सुदुर्लभं तथाविधानना-
वलोकनं निरन्तरं च किङ्करत्वलम्भनम् ।
इति ध्रुवेऽपि तद्द्वये महाप्रभुः सुखास्पदं
तदद्भुतं पदं प्रपित्सुवत्करोति शंसनम् ॥१॥

नमन्ति यत्फलान्विता नितान्तमेव पादपाः,
नमन्ति यच्च वारिभारधारिणः पयोधराः ।
नमन्ति यत्पुनर्धनागमेऽपि भूयसीश्वरा,
नमन्ति तत्परोपकारकारिणो महाजनाः ॥२॥

कृपावलम्बलम्भनेऽपि नैति यः कृतार्थताम्,
स एव कम्रनम्रतानुभावतो दधाति ताम् ।
इति प्रदर्शयन्नवान्नवान्प्रपन्नमानवान्
महाप्रभुः प्रयाचतीह किङ्करीत्वमेकलम् ॥३॥

**यत्किङ्करीषु बहुशः खलु काकुवाणी**
**नित्यं परस्य पुरुषस्य शिखण्डमौलेः ।**
**तस्याः कदा रसनिधेर्वृषभानुजाया-**
**स्तत्केलिकुञ्जभवनाङ्गणमार्जनी स्याम् ॥७॥**

महाकृपासमुद्भवैः स्वमाधुरीसुधारसैः
सुपोषितस्वकिङ्करीजनातिसीमसौभगा ।
प्रसूप्रसूतनूतनातिवत्सलत्वसूचना-
चणैः स्वलालनैश्च लाल्यमानमानविग्रहा ॥४॥

कदा कृपां विधाय मां स्वकेलिकुञ्जमन्दिरा-
ङ्गणेषु मार्जनीं करिष्यतीह किङ्करीतया ।
अथातिकोमलैः स्वभावसाधुभिस्तृणैः कृता
कदा भवानि मार्जनीह तत्कृपाभराश्रयात् ॥५॥

इदं परात्परं हि सौभगं यदत्र मार्जनी-
जनिर्निकुञ्जमन्दिरे तु सा गिरां पथः परा ।
भविष्यति प्रसादभूतमाल्यगन्धपुष्पका-
दिभोगिनी सुभागिनी हि सा परागरागिणी ।।६।।

अथो यदीदृशी भवेद्वनेऽत्र कापि किङ्करी
न किं करिष्यति स्वयं प्रसादवस्तुसेवनम् ।
इयं हि पादपद्मजैः परागतीर्थवारिभिः
सुकिङ्करीष्वधीश्वरीपदाभिषेकमेष्यति ।।७।।

न केलिकुञ्जमार्जनी न चापि गेहमार्जनी
किमित्ययं तदङ्गरोषु मार्जनी बुभूषति ।
इतीह कापि भासते नितान्तमेव दीनता
यया प्रयात्यधीश्वरी स्वकिङ्करीष्वधीनताम् ।।८।।

अथापि भाति नन्दसूनुचापलानि वर्जितुं,
रहोनिकुञ्जमन्दिरान्तरेषु सा न राजते ।
स्वकिङ्करीजनेन साध्वधिष्ठिते तदङ्गणे
स्वकेलिभिर्विनोदयत्यमुं शिखण्डमण्डनम् ।।९।।

परन्तु तद्विनोदनम्भवत्यनङ्गनोदनं
ततश्च काकुचाटुभिर्भवत्यदोनिवेदनम् ।
इतीह मास्म भासतामिदं तु भासतेतरां
यदेष किङ्करीजनाधिकारमेव लिप्सति ।।१०।।

इमा मयि स्थितेऽपि कुर्वते सुकेशबन्धनं
तथाङ्गरागसञ्जनं च यावकेन रञ्जनम् ।
विचित्रचित्रकल्पनास्वनल्पनैपुणीं निजां
प्रकाश्य भूरि भूरि हन्त यान्ति च प्रशंसनम् ।।११।।

अहं त्वमूषु सुन्दरं स्ववल्लभास्यचन्दिरं
निपीय नास्मि नेत्रयोस्तृषानिवारणेऽप्यलम् ।
कुतः सुकेशबन्धनं कुतोऽङ्गरागसञ्जनं
क्व यावकेन रञ्जनं, क्व च प्रियाप्रशंसनम् ।।१२।।

इति प्रकर्षमात्मनो विलोक्य किङ्करीगतं
स किङ्करीषु काकुचाटु नित्यमाह नैकशः ।
दयारताश्च ताः शनैरनेककार्यकैतवाद्
विनिर्गताः प्रदाय सेवनाधिकारमस्य तम् ॥१३॥

अयं तु सेवनाधिकारमाप्य यद्यदिच्छति
प्रियः प्रिया तदेव नेच्छतीति किं प्रचक्ष्महे ।
यथार्थतस्तु तत्क्षणाद्रसाम्बुधेः प्रियातनोः
प्रियेन्दुदर्शनान्महान् रसोऽङ्गणे प्रवर्तते ॥१४॥

ततः प्रसादभूतमाल्यगन्धपत्रसम्पद
प्रपित्सुरङ्गणेषु मार्जनी बुभूषति स्फुटम् ।
इतीह दीनतैव सा महाप्रभुश्रियोऽद्भुता-
मभिव्यनक्ति सेवनाधिकारजामधीनताम् ॥१५॥

रसनिधिरिति शब्दे कोऽपि नानारसानां
निधिरिहि परिभातस्तं वयं वर्णयामः ।
इह करुणरसो वा रौद्रनामा रसो वा
प्रविशति न वने सन्मङ्गले केलिकुञ्जे ॥१६॥

शुचिरसमिह केलिः सूचयत्यद्भुतं च
ध्वनयति परपुंसः काकुवाक् किङ्करीषु ।
स्फुटयति रतिदाने वीरतां मार्जनीयं
वहति च वृषभानुस्तं रसं वत्सलाख्यम् ॥१७॥

गमयति बहुरूपा काकुवार्णा च हास्यं
विशदयति च शान्तं मार्जनीभावकाम्या ।
जनयति भृशमाशाभङ्गभीतिं च नित्यं,
तदिह बहुरसानां सन्निधेस्तन्निधित्वम् ॥१८॥

महिममहिमचिन्तास्याङ्गणे मार्जनीत्वं
कलयितुमपि भूयो दुर्लभं प्राहं नूनम् ।
रतिरतिशयशान्ता ध्वन्यते शान्तिभाजां
परिषदि रसनीया क्वापि तेनात्र पद्ये ॥१९॥

यदि च भवति दास्यं श्रीहिताशंसनास्यं
भवति तदिह भक्तेः प्रीतभेदः प्रतीतः ।
अथ च यदि रहस्यावेदिनी स्याद्वयस्या
तदिह भवति प्रेयान्नाम भक्तेर्विभेदः ॥२०॥
इह खलु वृषभानोरन्वयाद् वत्सलाख्या
रतिरथ मधुरा स्याद्योगतः पिच्छमौलेः ।
इति च रसनिधित्वं पञ्चभिस्ताभिरस्या
भवति रसविधाभिः श्रीलजीवोदिताभिः ॥२१॥
वयमिह कवितासु श्रव्यदृश्यात्मिकासु
द्रुतिमथ च विकासं दीप्तिमन्तर्भजामः ।
द्रवति तदिह चेतः काकुवाणीषु नूनं,
विकसति च विबुद्धेऽनुग्रहे किङ्करीणाम् ॥२२॥
अथ च भवति दीप्तिः प्रेक्ष्य दानित्वमासां,
तदवददिह भावो मार्जनीत्वाप्तिजन्यः ।
भृशमुपकुरुते वै मार्जनी पिच्छमौले–
रतिशयरतिदैन्यं सर्वदा तस्य हृत्वा ॥२३॥
इति प्रकाशितैरलोकिकैस्तथा च लौकिकै
रसैरसङ्गतस्य वाऽथ सङ्गतस्य तैः समैः ।
रसस्य कस्यचिन्निधेरियं कथा विचार्यते
निधेरगाधतामनादितामनन्ततां श्रिता ॥२४॥
यत्किङ्करीषु बहुशः काकुवाणी नित्यं परस्य पुरुषस्य शिखण्डमौलेः ।
इत्यत्र किं नु करवाम इति प्रतीतास्तासां क्रिया अपि भवन्ति समाः परार्थम् ॥२५॥
यो वै परो निगदितः सकलावतारवृन्देऽवतारिनिकरे च निदानमेकः ।
पूर्णः स षोडशकलः पुरुषोत्तमोऽपि यत्किङ्करीषु कथयत्यथ काकुवाणीम् ॥२६॥
इत्यादि मास्म भवतां रसशालि चेतः स्प्राक्षीदितीह कथितः स शिखण्डमौलिः ।
मौलौ दधाति स कथं परमः शिखण्डं पूर्णोऽत्र याति पदवीमियतीं न खण्डम् ॥२७॥
वृन्दावने पुरि वसन्नयमेव नूनमेकः पुमान् इति परः पुरुषो निगाद्यः ।
हा हा ! मतं बहुमतं बलशालि सत्यं यत्काकुवागिह स जीवति किङ्करीषु ॥२८॥

यद्वा स दास्यसुलभासु विधासु लिप्सां बिभ्रत्प्रयाति परमामनुकूलकाष्ठाम् ।
तस्मात्परः स कथितो रसिकेन्द्रमौलिः, सत्यं शिखण्ड उदितो रसिकेन्द्र एव ॥२९॥

श्रेष्ठोऽसौ केवलोऽसौ रसिकसमुदये चाथ सर्वोत्तमोऽसा-
वित्यर्थानां परस्य त्रितयमपि मतं श्रीहिताचार्यवाचि ।
तेष्वर्थेषु क्रमेणान्वयमुपदधतामव्ययानां त्रयाणां
तात्पर्यं चारु 'नित्यं खलु बहुश' इति प्रोदितानां वदामः ॥३०॥

काक्वुक्तौ तत्र नित्यं खलु बहुश इति त्रीण्यपि प्राहुरेतद्
यत्त्यक्त्वा कार्यमन्यद् विहरति पुरुषोऽसौ परोऽस्मिन्निकुञ्जे ।
निश्चित्यैवैष तासामनुनयनिरतो, नाथ वैदग्ध्यमात्रात्
किं रात्रौ किं दिवा किं समुषसि समये किं च सायाह्नकाले ॥३१॥

तामेतां काकुवाणीमिह परमकृपाभाजनीभूतचेता
नूनं कश्चित्सचेता रसयतु हृदये भावुके भावयेद् वा ।
अस्त्येवैतत्तु कान्तः परमतृषितवैवश्यलौल्याढ्यलीलो
लज्जावामा च रामा स्वहृदयकथने लाडिलात्वस्वभावा ॥२२॥

कान्तो नित्यं तृषार्तोऽनवरतविवशो यावदायाति लौल्यं
तावन्मानोत्तरङ्गा व्रजति कुटिलतां भ्रूकुटिः कुञ्जदेव्याः ।
सोऽयं तस्याः प्रसादं बहुभिरनुनयैरप्यवाप्तुं न शक्त-
श्चेतोऽभिप्रायबोधे चिरधृतमपि तं दर्पमन्तर्जहाति ॥३२॥

तस्मात्तत्राधिकारादनुगसमुचितं सावधानत्वमाप्ता
आप्ताः कान्तावयस्याः श्रयति सविनयं काकुवाक् चाटुकारः ।
केनोपायेन देव्यः कथयथ भवतीनामियं स्वामिनी मे
दृष्टिं दद्याद् भवत्यो दृढमपि हृदयं वित्थ सर्वात्मनाऽस्या ॥३४॥

नो युष्मानन्तरा मामनुनयसरणिं कोऽपि सन्दर्शयेत
युष्माकं स्वामिनी मां प्रति सकरुणतां येन सद्यः श्रयेत ।
यूयं मह्यं दयध्वं, सपदि च सदयं कर्म तादृक् कुरुध्वं
येनैषाऽऽराधिता स्यादहमथ विशिखैर्दृष्टिजैर्बाधितः स्याम् ॥३५॥

नाहं भ्रूचापविस्फारणमहह सहे नोत्सहे चाथ तस्मि-
न्नेवं संराजमानेऽप्यतिमधुरमुखाद् दृष्टिमाहर्तुमार्ताम् ।
इत्येवं प्रार्थ्यमाना मृदुवचनरसादेव तच्छ्रोतुमर्हा-
स्ता मन्दं मन्दमस्या अनुनयविनयैश्चक्रिरे सम्प्रसादम् ॥३६॥

किन्त्वेष प्राप्तकामोऽप्यतिचपलतया पादसंवाहनाद्यै-
र्दास्यैः कान्तानभीष्टैः पुनरपि कुटिलभ्रूकुटेः पात्रमासीत् ।
कोऽयं चित्रो निसर्गो भृशमिति मनसा वाञ्छितापूर्तिखिन्नोऽ-
निर्विण्णास्ता वयस्याः पुनरपि शरणं जग्मिवानाह दीनम् ॥३७॥

श्रीमत्यो दीनदीने व्रजत मयि कृपां, विस्मरिष्यामि जातु
युष्माकं नोपकारान्, कुरुत परिजने मामपि प्राप्तसेवम् ।
इत्थं भूयोऽर्थितास्ता रसमतिशयितुं तत्र कौतूहलाख्यं
भूयोभिः कौतुकैस्तं स्वसचिवपदवीगौरवं प्राहुरेतत् ॥३८॥

अस्मत्सेवाधिकारः सविनयरचितैश्चारुचर्याप्रकारै-
स्तेनैवान्तः प्रसारैश्चटुपटुवचनैः काकुवाक्यैश्च लभ्यः ।
येनैव स्वात्मनिष्ठाऽखिलगुणगुरुता विस्मृता किञ्च नित्य-
सेवादर्पो निरस्तः स्थिरभयकलना येन दध्रे च चित्ते ॥३९॥

इत्याकर्ण्यातिहर्षाकुल इव दयितः प्राह-सर्वं करिष्ये
स्नानं वेणीनिबन्धादिकमखिलमहं स्वात्मना साधयिष्ये ।
तच्छ्रुत्वा प्रत्यवोचन्नयि कितव वयं न त्वदर्थे भवामः
सेवोपालम्भपात्र्यो रसिकवर ! न ते साध्वसन्तोष एषः ॥४०॥

ज्ञातं त्वत्कैतवं त्वं तृणमपि सहसे नास्मदुत्कर्षमन्तः
किन्त्वेतावानमर्षो जनयति परमामेव लोकेष्वकीर्तिम् ।
नाप्तं यावत्सखीत्वं भवति च भवता, तावदाप्या न सेवा,
तस्मादेतां दुराशां त्यज, भज सदृशीमात्मनस्त्वं सपर्याम् ॥४१॥

इत्थं ताभिर्निरस्तोऽप्यवददतितरां साधु साध्वेष कल्पो
मामालीं कल्पयध्वं नहि परिचिनुयान्मां प्रिया यत्र मुग्धा ।
मत्सेवाकौशलेनाधिकतरमुदिता स्वामिनी स्यादवश्यं
स्यात्किञ्चिन्नायशस्यं, भवत मनसि तत्सर्वथा वीतशङ्काः ॥४२॥

किं चैवं मेऽनुकम्पा जनयति परमक्षेममारात्समेषां
तस्मादद्योपकारानयि मयि कुरुत प्रार्थिनीति प्रियोक्ते ।
रोमाञ्चं साश्रुकम्पं स्वरविकृतिसखं ताः कथञ्चिन्निरुध्य
धन्यम्मन्या मुकुन्दं कृतकपटसखीवेषमालक्ष्य मग्नाः ॥४३॥

आनन्दाद् बुद्धचमेयादनिमिषनयनाः साह धन्यब्रुवास्ता
नूनं धन्याः स्थ यूयं यदधिकधनिकां मां कृपातो व्यधत्त ।
इत्थं मानातिदानाच्चटुचटुलवचश्चञ्चुरः किङ्करीषु
यस्या नृश्रेष्ठ आस्ते, पुनरिह महिमा केन वर्ण्यस्तदीयः ॥४४॥

क्लृप्त्वा कुञ्जं भवनवदुपद्वारगोक्षादि चित्त-
मापृच्छन् श्रीहितसुललिताद्याः किमन्यन्नु कुर्मः ।
अद्य श्रीमद्दयितहृदयद्वन्द्वमानन्दयन्त्यः
केलिं काञ्चित्कुरुत मधुरामित्यमूरादिशत्तत् ॥४५॥

राधाकृष्णौ परिणयविधौ कीदृशीं दर्शनीयां
यातः शोभामिति खलु मया वर्तते द्रष्टुमिष्टम् ।
शोभालेशं श्रितवति ययोः पाणिपीडोद्यतेऽन्य-
द्वन्द्वेऽपीष्टा नयनयुगलामोहनी कापि कान्तिः ॥४६॥

इत्थं प्रस्तावितपरिणयं कर्तुमेवोद्यतानां
तासां पक्षद्वयविभजना कल्पनीया बभूव ।
तस्मिन्काले पटुहितसखी प्रार्थितं पूर्वमूचे
सख्यः सख्योऽहमिह भवनालिन्दसम्मार्जनी स्याम् ॥४७॥

काश्चिन्मुग्धा विशदपदवीलोभतः कृष्णपक्ष-
माकाङ्क्षन्त्यो निजनिजमनोभावितं रूपमापुः ।
पक्षस्तावत्कतर इह नः श्रेयसे स्यान्निदान-
मित्यापृच्छन् किल हितसखीं या जगादाश्विय ताः ॥४८॥

## अष्टमः सर्गः

तत्केलिकुञ्जभवनाङ्गणमार्जनीयं वृन्दावनं सकलमैक्षत मार्जनीयम् ।
तत्रोल्लसन्मनसि सङ्कलितोक्तनोक्तलीलासुधारसनिधेर्विषयः स्मृतोऽभूत् ॥१॥

स्मारं स्मारं सरसवपिनं धन्यधन्येति जल्पन्
स्तब्धः स्विन्नः पुलकितनुः कम्पमानः सहाश्रुः ।
कस्मै ब्रूयामतिसुभगतामस्य वृन्दावनस्ये-
त्यत्यन्तं सन्निहितहृदयं बोधयन्निर्दिदेश ॥२॥

**वृन्दानि सर्वमहतामपहाय दूराद्**
**वृन्दाटवीमनुसर प्रणयेन चेतः ।**
**सत्तारणीकृतसुभावसुधारसौघं**
**राधाभिधानमिह दिव्यनिधानमस्ति ॥७॥**

हे चेतस्त्वं सकलमहतां कर्मणां ज्ञानधर्म-
वैराग्याणामथ च तपसां किञ्च योगादिकानाम् ।
उक्तानुक्ताखिलफलकृतां साध्यसंसाधनानां
जीवन्मुक्त्यादिकगुणभृतां लब्धसंसिद्धिनाम्नाम् ॥३॥

भूयः सिद्धार्थितबहुजनागीतमाहात्म्यभाजां
वृन्दान्येव प्रतिशकलशो नैकनैकक्रमेण ।
दूराद्दूरान्ननु तदनुगं सङ्गमालम्ब्य कश्चित्
श्रुत्वैवैतान्यतिगुरुतया निश्चितानीति मत्वा ॥८॥

संकुच्यान्तः सततमपि तद्गन्धलेशासहिष्णु
त्यक्त्वा किं वा श्रवणमननात्सर्वथैवापहाय ।
नूनं पूर्वाद्भुततममहत्त्वाश्रयीभूतभासां
ब्रह्मेशानोद्धवशुकमुखैर्दुर्लभप्रार्थनानाम् ॥५॥

सद्वृक्षाणां सुललितलतामञ्जुकुञ्जावलीनां
लीलालीनां सततमटवीमानुकूल्येन यायाः ।
वृन्दानाम्न्या सततमटवीं धिष्ठितां राधया वा
स्नेहेनैवानुसर न तु तत्तन्महत्त्वादिमत्या ॥ ॥

यः प्रीणयत्यतितरामपि सापराधः प्रेमा स नाम कथितः प्रणयैकहेतुः ।
ऊरीकृतोऽस्मि मनसेत्यभिमानरूपः प्रेमैव स प्रणय इत्युदितो रसज्ञैः ॥७॥

त्वच्चेतनं रसमयं सृतमस्ति येषु, तद्दम्पतीरितविलासमृदुस्थलेषु ।
चेतस्त्वमप्यनुसर प्रणयेन तानि, नात्रोचितानि जगतीगतसाधनानि ॥८॥

वृन्दानि सर्वमहतामपहाय दूराद् वृन्दावनानुसरणे कतमास्ति सिद्धिः ?
जिज्ञासमानमिति वक्ति महाप्रभुर्यद् राधाभिधानमिह दिव्यनिधानमस्ति ।।६।।
लोकेऽष्टसिद्धिनवनिध्यभिधं निधानं नानाभिधं त्वपचयोपचयान्वितं स्यात् ।
किन्तु प्रतिक्षणचमत्कृतचारुलीलं दिव्यप्रमोदरससारमिहास्ति दिव्यम् ।।१०।।
क्रीडाद्युतिस्तुतिमदव्यवहारकान्तिस्वप्नप्रमोदगतिभिर्विजगीषया च ।
नित्यान्वितं खलु दिवे हितमस्ति दिव्यं पूर्णं परार्धनिधिजैत्रमिदं निधानम् ।।११।।
राधाभिधानमिति तस्य परामगाधां साधारणेतरमनोभिरपि प्रचेयाम् ।।
सत्तारणीकृतसुभावसुधारसौघां सत्तां निवेदयति नित्यनवप्ररोहाम् ।।१२।।
सन्नेक एव पुरुषः पुरुषोत्तमोऽयं, तं तारयत्यथ सुभावसुधारसौघः ।
वारि ब्रुडन्तमभिरक्षति काष्ठनौका, शुष्के निमज्जति जने तु सुनौ रसौघः ।।१३।।
सन्तो बुधाः सहृदया रसिका इहैते तांस्तारयत्यहह सा करुणा प्रियायाः ।
सत्तारणी करुणया च कृतात्र यस्या भा शोभना खलु सुभावसुधास्ति सेयम् ।।१४।।
तस्यामिहाधिवसुधं प्रवहन्नमोघो यस्यास्ति कोऽपि रसिकैकधनं रसौघः ।
सत्तारणीकृतसुभा-वसुधा-रसौघं राधाभिधानमिह दिव्यनिधानमस्ति ।।१५।।
तीर्णैस्ततः सहृदयै रसिकैश्च सद्भिर्यस्तारणीकृत इहाखिलजीवजात्यै ।
सोऽयं विराजति सुभावसुधारसौघो यस्येह तत्किमपि दिव्यनिधानमस्ति ।।१६।।
गीतासु सर्वमहतां सदिति प्रयोगस्ते नीरसे क्वचन हन्त ब्रुडन्त आसन् ।
तांस्तारयन्निह सुभावसुधारसौघो यस्यास्ति तत्किमपि दिव्यनिधानमत्र ।।१७।।
सत्संज्ञकोऽस्ति समयः किल वर्तमानो यो भूतभाविपदवीमुपयाति गौणाम् ।
नित्यप्रधानिनि तु दिव्यनिधानमस्मिंस्तत्तारणीकृतसुभावसुधारसौघम् ।।१८।।
सत्योऽथवाऽत्र ललितादिरहोवयस्यास्तारण्य एव विदिता बहुषु स्थलेषु ।
ताभिः कृतः खलु सुभावसुधारसौघो यस्येह तत्किमपि दिव्यनिधानमस्ति ।।१६।।
एका सती प्रियतमा खलु तारणी सा यस्या असौ हितसखीह किलैकशिष्या ।
आविश्चकार च सुभावसुधारसौघं राधासुधानिधिमिमं किल या वनेऽस्मिन् ।।२०।।
शङ्क्या तु नात्र विबुधैरिह काचिदात्मश्लाघोदिता प्रियतमा यदि तारणीति ।
तस्याः कृपैव नितरामभिनन्दितेयं नत्वात्मनः किमपि गौरवमत्र गीतम् ।।२१।।
आचार्यरूपमथ रूपयतां स्तवेऽस्मिन् वक्तारमत्रभवतां हरिवंशसंज्ञम् ।
वाच्यं तु तद्धितसखीव्यपदेशशालि रूपं रहः सखिगतं न तदस्तु शङ्का ।।२२।।

हा हा समस्तनिगमागमबोधबुद्धम्मन्येषु दर्शनचयेषु विविग्ननग्ना ।
मग्नातिनीरसपदेषु चिराय सत्ता राधाभिधानमिह दिव्यनिधानमायात् ।।२३।।

एतन्नितान्तकरुणं शरणागतां तामुद्धर्तुमेव तु सुभावसुधारसौघम् ।
नैवारणं यदरणोकृतवत्तदासीत्–सत्तारणीकृतसुभावसुधारसौघम् ।।२४।।

'धर्मः प्रोज्झितकैतवोऽत्र परमो निर्मत्सराणां सतां
वेद्यं वास्तवमत्र वस्तु शिवदं तापत्रयोन्मूलनम् ।
श्रीमद्भागवते महामुनिकृते किं वा परैरीश्वरः
सद्यो हृद्यवरुध्यतेऽत्र कृतिभिः शुश्रूषुभिस्तत्क्षणात् ।।

इत्यादौ कथितात्मनां खलु सतां सम्पादितस्तारणो
भक्त्याख्यः स सुभाव एव जनयन्नाप्यायनं स्वादजम् ।
यस्मिन्नेष सुधारसौघ उदयन्नद्यापि संश्रूयते
तद्राधेत्यभिधानमस्ति विपिने दिव्यं निधानं परम् ।।२५।।

सन्त्यन्ये बहवो जगत्सु तरणोपाया अपायोज्झिता
एकः सर्वविलक्षणोऽयमखिलत्यागादनन्याश्रयः ।
आस्वादादितरन्न वस्तु रसिका वाञ्छन्ति किन्तु क्वचि-
द्देहासङ्गतितीर्षुताद्युतिलवश्चेत्तारणोऽयं तदा ।।२६।।

आस्वादोऽप्ययमेव किं च तरणोपायोऽप्ययं केवलः
पूर्वस्तत्र सुधारसौघ उदितो भक्तिः सुभावोऽपरः ।
यद्वा नास्ति सुधारसौघवपुषो भिन्नः सुभावः क्वचिद्
भावस्यैव च तारणीकृततया स्यादन्वयोऽयं स्वतः ।।२७।।

माहात्म्यादिविचारणेन जनिता भावो रतिर्देवगा,
यातः शोभनतां निरन्तरतया संसेवनादेधितः ।
आख्यातो रस इत्यसौ किल सुधारूपो भवेत्स्वादत-
स्तस्यौघा इति गम्यतेऽनवरतं संप्लाव्यमानाटवी ।।२८।।

सत्तानामपि सत्तया यदरणं सम्पादितः शोभनो
भावः कोऽपि स राधिकेति विदितः सा वै सुधा सा रसः ।
प्राधान्येन रसद्रवो हि मधुरस्तस्या भवत्याश्रयात्
शोभां कामपि नाश्नुते सुमनसां कृष्णो रसस्तां विना ।।२९।।

आसक्तत्वमिहास्ति भाव इति वाऽऽसज्यत्वमास्ते रस-
स्तावेतौ मधुसूदने रसनिधौ चापि क्रमात्तिष्ठतः ।
किन्त्वासक्तमनोरथोपचयनौत्कण्ठ्यात्कदाचित्प्रिया-
प्यासक्ता भवतीति तत्क्षणमसौ भावो भवेच्छोभनः ॥३०॥

यत्रैषा पलकान्तरं न सहते संजायते विह्वला
संयोगेऽपि च विप्रलम्भविवशा, नानाप्रलापान्विता ।
क्वासि क्वासि मनोहरेति सहसा हा मोहनेति प्रिये-
त्यङ्कस्थायिनि सौख्यदायिनि कदाप्युच्चारयेद्विभ्रमात् ॥३१॥

याथार्थ्यं दधती तु निःस्पृहतया दर्पोन्नता धैर्यभा-
गासज्या खलु लाडिला च भवतीत्येषा रसावस्थितिः ।
तस्यास्तत्र खलु प्रधानपदवी कान्तस्तु तत्रानुगो
नो चेत्स्याद्रसविच्युतिः, सति रसाधारे रसौघे पुनः ॥३२॥

सुधाभूतः सोऽयं भवति बहुमाधुर्यगुणतो
रसौघः श्रीराधां रसनिधिमगाधां गमयति ।
रसं राधायामाभजति किल भावं व्रजमणि-
वितीह स्पष्टं तद्ध्वनयति गिरा श्रीहितसखी ॥३३॥

क्वचित्सा भावात्मा क्वचिदपि रसात्मा च भवति
द्विधा वृन्दाटव्यां रसनिधिरियं वर्षति सुधाम् ।
तरन्त्यस्मिन्धन्या रसिकनिकरा भावुकचया
न चैते नाथन्ते कथमपि तु संसारतरणम् ॥३४॥

केचित्तु व्रजलीलयानुगतयाऽऽसक्त्या वियोगादिका-
नेकासह्यमहाविपज्जलनिधौ मग्नामिवाभ्युद्धरन् ।
कश्चिद्भावसुधारसौघ इह सत्सम्पादितस्तारणो
राधां दिव्यनिधानरूपविभवामित्याहुरत्यादरात् ॥३५॥

नोचेत्केन किलापरेण विधिनाऽगाधोऽत्यसाधारणः
शृङ्गारादिरसैकसंश्रयमहान् राधारसो रस्यताम् ।
अस्मिन्दिव्यनिधान एष च रसौघोऽचिन्त्यशक्त्युत्थितः
सच्चिन्तामणिकोषवत्खलु भवेदित्यूह्यतां भावुकैः ॥३६॥

चिन्तामणौ प्रणमतां पुनरत्र कस्मादस्मादृशामपि कृते न भवेद्रसौघः ।
सत्यं प्रतिक्षणरसस्रवणः स कृष्णसिन्धो रसं वलयते रसिकैकवेद्यः ॥३७॥

अस्मिन् सुधारसौघो भाति ।
प्रथमप्रणयोदितनिजलज्जा त्ववहित्थामुपयाति ॥३८॥

इह कंचित्प्रमदा प्रमदोत्थं मदमनुपमं दधाति ।
रतिरभसोद्गतनवलरागहृतकञ्चुकीत्वमवभाति ॥३९॥

अथ विपरीतरतौ रमणेक्षणचुम्बनमपि विदधाति ।
समीचीनरतिसम्पादनमथ तादृशगण्डविभाऽति ॥४०॥

सुरतक्लममथ विनिवेदयते यच्चलनं निदधाति ।
अपि सकलायामेव रजन्यां जागरणं प्रतिभाति ॥४१॥

तदपि निधुवने काङ्क्षितशेषे कुसुमाञ्जलिमुपराति ।
स व्यभिचारिसात्त्विकैर्भावैरतिरतिशोभां याति ॥४२॥

अहह, मोहनो विविधविधानैर्निधुवनकलाकलापी ।
अद्य रहसि तामात्मसम्पदं लुण्ठितवानुत्पाती ॥४३॥

श्रीमद् हितहरिवंशगिरा सा कुञ्जभवनमुपयाति ।
किमिति न चेतो हन्त भवानपि तां रसनिधिमनुयाति ॥४४॥

हित्वा यः सकलोत्तमवृन्दं वृन्दाटवीं प्रयाति ।
सत्तरणीकृतभावरसौघां तां निधिमयमुपयाति ॥४५॥

## नवमः सर्गः

'आसक्तेर्विषयः स्मृता प्रियतमा ख्यातः प्रियश्चाश्रय'
इत्यादर्शयितुं निकुञ्जरसगं किञ्चिद्विशेषं परम् ।
उक्तौ भावरसौ च चारु विवरीतुं प्रस्तुता वागियं
श्रीलश्रीहरिवंशचन्द्ररसिकाचार्येण चार्वीतमा ॥१॥

**केनापि नागरवरेण पदे निपत्य**
**सम्प्रार्थितैकपरिरम्भरसोत्सवायाः ।**
**सभ्रूविभङ्गमतिरङ्गनिधेः कदा ते**
**श्रीराधिके नहि नहीति गिरः शृणोमि ॥९॥**

अस्मिन् पूर्णतमे महिम्नि नवमे पद्येऽनवद्ये न कः
पूर्वार्धे किल भावमेव रसयेदप्युत्तरार्धे रसम् ।
एतां भावरसस्थितिं च सकले स्तोत्रे प्रतिश्लोकगां
स्वादं स्वादमहो न कः सहृदयः संसारसिन्धुं तरेत् ॥२॥

केनेति प्रथितेषु सप्तसु किमर्थेषु प्रयुक्तं पदं
सप्तैवाह गुणान् सुनागरवरस्येति क्रमाद्दिश्यते ।
ऐश्वर्योचितचर्यया सुविदितो, माधुर्यधुर्यः कथं
जातः सम्प्रति हन्त नागरवरो गोपालबालः कथम् ॥३॥

पादाधःकृतकल्पपादपगुणो भिक्षुर्निजार्थे यतः,
सर्वाकर्षणशक्तिरद्य रभसाकृष्टश्च कृष्णो यतः ।
यच्चानुग्रहणीयदीनवदनोऽनङ्गीकृतप्रार्थनो
यच्च प्रार्थितलाभनीतिनिपुणो दैन्यातिदैन्यं गतः ॥४॥

यच्चैकं परिरम्भमेव कलयत्येष प्रसादोत्सवं,
यच्च प्रार्थनयाऽनयाऽऽनततनुस्तेनैष निर्धार्यते ।
अज्ञातोऽपि च कुत्सितोऽपि विलसत्संज्ञोऽनुकम्प्यस्तथा
तत्तन्नीतिविशारदोऽपि नितरामल्पोऽपि खर्वोऽपि च ॥५॥

श्रीराधापि निजैर्महामहिमभिर्माधुर्यधुर्यैर्गुणै-
रौदार्ये सति नेति नेति वचनैः कान्तस्पृहातर्जकैः ।
आराध्या दयितस्य किं च दयितस्याराधिका राधिका
सिद्धीनामिति राधिका-स्वभिधया, मुग्धा विदग्धार्थनैः ॥६॥

आसज्योचितकर्मभिश्च चरणप्रान्तेऽपि कान्ते नते
प्राणेभ्योऽधिकवल्लभेऽपि च महाकार्पण्यसन्दर्शनैः ।
वैदग्ध्योचितकाङ्क्षतैश्च विविधैरन्तर्हितस्वादनै-
रेकालिङ्गनमात्रलाभसुलभैः प्रौढं वयः प्रेयसः ॥७॥

लज्जाभीत्यतिरेकजैरथ निजैर्भावप्रकाशाक्षमैः
शालीनत्वमुखैर्गुणैर्लघुवयोमानैश्च निर्धार्यते ।
अज्ञातापि च कुत्सितापि विलसत्संज्ञानुकम्प्या तथा
तत्तन्नीतिविशारदापि नितरामल्पापि ह्रस्वापि च ॥८॥

इत्थं चित्रविचित्रभावलहरीबीजीभवत्सद्रसान्
तांस्तान्नैकविधान् गुणान् सहृदयैरास्वाद्यमानान् स्मरन् ।
भूयो नामसुधारसं रसयितुं जिह्वां दधद् विह्वलां
तद्भावोत्सवतश्च बिभ्रदतुलां तत्प्राणनाथे रतिम् ॥९॥

आराध्यां दयितस्य किं च दयितस्याराधिकां साधिकां
सिद्धीनामपि राधिकां प्रणयतः सम्बोधयन्नाह ताम्।
अत्यन्ताद्भुतवैभवस्वचरणाम्भोजातरेणूदिता-
नन्तालौकिकसद्गुणोत्करभरं श्रीराधिके इत्ययम् ॥१०॥

केनापीत्यविलोकिताश्रुतचरैताद्दृवप्रभावेण वै
सीमानं चरमामतिक्रमितुमासक्तेर्धृतैकाधिना।
किं वा भावुकमौलिना सहृदयादर्शेन निध्यायता
वामावाचि निषेधवेषविधिरित्याद्यां रसज्ञस्मृतिम् ॥११॥

परं रसिकशेखरेण किल केनचित्तेन चि-
द्विवर्तिविविधाध्वनीनसुरतोत्सवाकाङ्क्षिणा।
निरन्तरनिरन्तराङ्गपरिचर्यया प्राप्तया
सुखापमपि दुर्लभञ्च परिरम्भमाध्यायता ॥१२॥

इतीदृशविलक्षणाद्भुतगुणेन मानापनु-
त्त्यगाधनिपुणेन मानकुटिलभ्रुवो भीरुणा।
सदा प्रियतमामनोनुसृतिना चिरं चञ्चल
त्वदोषकृतिना धृतैकधृतिनैति ब्रूतामपि: ॥१३॥

निराकृतिषु मामियं यदि पटाञ्चलेन स्पृशेद्
भविष्यति तदापि हन्त परिरम्भलाभः स्वतः।
स चैकपरिरम्भ एव जनयिष्यति प्रार्थितं
रसोत्सवमितीह वेत्ति रससागरो नागरः ॥१४॥

परं नहि नहीति गीर्भिरवधीरितः केनचि-
न्न तु प्रियतमाङ्गकेन स निराकृतश्चञ्चलः।
स नागरवरो ध्रुवं रतिशतानि संकल्पयन्,
तथापि चरणे निपत्य परिरम्भमेवार्थयद् ॥१५॥

अहहा, नयनयुगलमतिधन्यम्।
सुभगे सुखदायिनि कालिन्दीपुलिने पश्यति यद्रतिजन्यम् ॥१६॥
शीतो मन्दः परमसुगन्धः पवनो जनयति मिथुनविनोदम्।
पश्यति, नृत्यति, गायति नवलं तदलं सुस्वरलम्भितमोदम् ॥१७॥

मृगशिशु-र्बाहिण हंस-भृङ्गपिकनिकरानुकृतसमस्तविलासम् ।
चकिता कामकोटिरपि दर्शं दर्शं नमति विगतसन्त्रासम् ॥१८॥

रचितकुसुमशयनान्तिकधृतमधुभृतकाञ्चनचषके निजकुञ्जे ।
रजनिमुखे सज्यति सति मिथुने काङ्क्षितमिथःसुरतसुखपुञ्जे ॥१९॥

विटकुलनृपः किशोरीकरधृतमविजानन्निव मानप्रबन्धम् ।
नेति नेति वचनेऽपि यथामतिबलमवमुञ्चति नीवीबन्धम् ॥२०॥

जयश्रीहितहरिवंशरसिकललितादिसखीनिवहो विवशासुः ।
सुखभरभरितो निकुञ्जविवरेभ्यः पश्यति धृतदृक्कण्ठाश्रुः ॥२१॥

इह सकलेन्द्रियवृत्तिरलीयत नयने, तदनु च जयकृति कण्ठे ।
नेति नेति वचनामृतपानं प्रति श्रुतिविवरे किल सोत्कण्ठे ॥२२॥

कर्तुं कृतार्थमथ तद्युगलं, प्रसङ्गो
नैवेतरः कथमपि प्रभविष्यतीति ।
निध्यायता सहृदयेषु हितेन नव्यः
सम्प्रार्थितश्चपलताहरणः क्रमोऽयम् ॥२३॥

राधे क्षणिकवामतां धेहि ।
मम कर्णाभ्यां नेति नेति वचनामृतपानं देहि ॥२४॥

क्षणानन्तरं केलिनिकुञ्जे विहरतमुभौ सुखेन ।
अनुपमगौरश्यामतनुशोभां वर्षतमिह चमदेन ॥२५॥

अद्भुतसमरे भूषणरावो मन्मथदुन्दुभिरस्तु ।
युध्यमानसुभटप्रत्यङ्गं लसतु मिथो रसवस्तु ॥२६॥

समरभरश्रमिता निद्रापितकलनयनाथ समेधि ।
निरातङ्कशङ्कं दयिताङ्कं शेष्वालसकलितेऽधि ॥२७॥

ऊरुनाभिवक्षोजं स्पृशतु प्रियोऽथ लालनभागि ।
अद्भुतकान्तिविलोकसकम्पं भवतु तदङ्गं रागि ॥२८॥

मन्दं वितर सुधाधरमस्मै लुठते मदनविषेण ।
नीरमीनवत्तन्मधु पीत्वोत्तिष्ठतु स च क्षणेन ॥२९॥

शतमनसिजकुलजालपतितमनसः संज्ञां न विधेहि ।
मुखसरसिजमध्ये सुरसालं बिम्बाधरं निधेहि ॥३०॥

'मह्यं सकृदधरामृतमुपनय सुन्दरि सुस्नेहेन ।
मन्दिरमिव तव चरणसरोजाकलितोऽहं देहेन' ॥३१॥

इति कथयन्तं पृच्छ यथेच्छं किमभूर्ध्यायन्नद्य ।
नवनिकुञ्जवरनृप ! रतिलम्पट ! वितरसि किमिति निगद्य ॥३२॥
इति दयितानिगदितैः प्रियतमस्वान्तेऽधैर्यं यातु ।
सहजकातरा मतिरथ विरहजदुःखभरानुपयातु ॥३३॥
जय श्रीहितहरिवंशः कथयति—बहुतरनिःश्वसितेन ।
धारय हृदि तं दयितमणिसरं क्लिष्ट्वा भुजयुगलेन ॥३४॥
इत्थं मिथुने मिलति मथो मम यत्किञ्चन सुखमस्ति ।
तत्र त्रुटिलव इव विगतोऽयं सन्ध्यासमयोऽप्यस्ति ॥३५॥
रङ्गनिधे भङ्गेन भ्रुवः क्षणमात्रमेतदवधेहि ।
रसनिधिसाराननविधुना ननेति सुधामभिधेहि ॥३६॥

## दशमः सर्गः

इति कथयति वृन्दारण्यवासाश्रयेण
सकलसुकृतजालोपेक्षयापि स्वसिद्धिम् ।
कथमिह स तु वासः प्राप्यतामित्यवोचत्
'सुचरितपरिपाकारम्भकाले' कदापि ॥१॥

नहि सुकृतचयानां जन्मजन्मार्जितानामिह परिणतिकालादन्तरेण प्रवेशः ।
सुकृतपरिणतिस्तु प्रस्फुरन्तीं कृपां तामुपगमयति वृन्दारण्यवासैकदात्रीम् ॥२॥
इति वदति विरश्चिर्भूरिभाग्यैरटव्याञ्जनिरिह कतमापि स्यान्नृणां पुण्यभाजाम् ।
कथयति च हितश्रीर्भूरिभाग्यर्द्धिभिः सा प्रकटयति सुपुण्ये चित्त एव स्वरूपम् ॥३॥
इति सुविदितमेतद् वासमत्राधिगन्तुं चरितसुचरितेषु स्यात्कृपा राधिकायाः ।
परमधिगतवासैस्तैर्न किंचिद्विमृग्यं तमखिलसुखहेतुं दास्यभावं विहाय ॥४॥
तमपि सपदि दद्यात्सा कृपा क्वापि काले भजति किल कृपेयं सर्वथान्वर्थसंज्ञाम् ।
इयमिह कृतपुण्यं वासभाजं करोति, पुनरियमिह दत्त्वा दास्यभावं च पाति ॥५॥
तदिति विपिनवासे दास्यदाने कृपायाः कृपिरुभयविधं तद्वक्ति सामर्थ्यमन्यः ।
कलयति रसिकानां मानसं यत्कृपैव, जनयति नवयोगक्षेममेषा विकासम् ॥६॥
अहह नवनवानां भावनानां प्रकाशं तदनु विरहजानां वेदनानां समासाम् ।
अथ परमरसानन्दस्य कस्यापि भासं रसिकहृदि च दिव्योल्लासमेषा करोति ॥७॥

अधिवनमधिकैराविष्टभावैः स्वलीलाप्रसरमुपगतेभ्यः क्रोधकामादिकेभ्यः ।
अपि हरविधिदुर्गे राधिकापादपद्मे रसिकजनमनांस्यावेश्य चैषैव पाति ॥८॥

इति हितहरिवंशोऽस्मासु सामान्यजीवेष्वतिशयितकृपायाः प्रेरणादेवमाह ।
उभयविधकृपायाः स त्वशेषाधिकारीत्यवददयमनन्यः सेवको मञ्जुवाग्भिः ॥९॥

कृपामयि कृपामयि क्वचिदपि स्वयं श्रीमती
करोतु निजकिङ्करीषु सविशेषताकारिणीम् ।
इति प्रकटिताधिकारमिव वर्तते लोड्वचः,
स्वयं स्वमनसेप्सितं कलयतीह पूर्णं यथा ॥१०॥

अथ प्रणयदास्यसख्यममताभिमानेन या
कृतेयमनिवार्यतामनुगता तया प्रेरणा ।
कदापिपदमत्र दापयति कं सुखं या कृपा
कथं न विशिनष्टु तां, भवति यन्न जात्वर्थभाक् ॥११॥

कृपाविभवशालिनी यदि करोति दत्त्वा कृपां
निजानुचरणे रतस्य भरणं तथा पोषणम् ।
तदा जगति वर्धते विमलकीर्तिरस्या ध्रुवे—
त्युदाहरति योग्यमेव स कृञः परस्मैपदम् ॥१२॥

तथा च मयि राधिका यदि करोति काञ्चित्कृपां
भविष्यति कृतार्थता मम तदेति मे निश्चयः ।
न चेदथ करिष्यतीयमिह तां तदा त्वात्मनो
यशांसि किल संशयेषु पतितानि मन्येत सा ॥१३॥

श्रीमद्भागवतेऽनुरागरसयोर्यः सागरो दृश्यते
यश्चास्मिन्प्रकृते सुधानिधिरिति ख्याते स्तवे स्तूयते ।
भेदस्तत्र कियानिति प्लुतिलवैर्जिज्ञासुमण्डूकवत्
सच्चेतः प्रति वैनतेयसदृशैः श्रीमद्भिराख्यायते ॥१४॥

**यत्पादपद्मनखचन्द्रमणिच्छटाया**
**विस्फूर्जितं किमपि गोपवधूष्वदर्शि ।**
**पूर्णानुरागरससागरसारमूर्तिः**
**सा राधिका मयि कदापि कृपा करोतु ॥१०॥**

पूर्णप्रेमरसाब्धिसारघटिताकारास्ति सा राधिका
यस्याः पादनखद्युतेर्विलसितं गोपीषु संदृश्यते ।
श्रीकृष्णालिनिषेव्ययोर्यदनयोः सौगन्ध्यसौरस्यभाक्
सौन्दर्यं सुकुमारता च विशदा तत्पद्मता युज्यते ॥१५॥

यच्चैतेष्वनयोर्नखेषु परमाह्लादं सुशैत्यं द्युतिं
किङ्कर्योऽनुभवन्ति, तत्समुचितैवैतेषु सा चन्द्रता ।
दास्येनाभजते जनाय मनसा सम्प्रार्थितं सद्रसं
यच्चैते ददति क्षणात्तदुचितं चिन्तामणित्वं स्थितम् ॥१६॥

चन्द्राणाञ्च शतत्रयं किल चतुःषष्टयुत्तरं वर्तते
तैः सम्राडभिषिच्यते किल शरच्चन्द्रो गुणैरुत्तमः ।
तस्य श्रीसदृशाः किरीटमणयो विभ्राजमाना नवाः
श्रीराधाङ्घ्रिनखाश्च भास्वरतयाऽन्योन्यं गतास्तुल्यताम् ॥१७॥

यद्वा श्रीमति नित्यनूतनकलाधारे जगन्मोहने
श्यामाङ्के च सुधारुचौ च विमले श्रीकृष्णचन्द्रे पुरः ।
प्राप्ते कञ्चन सद्रसद्रवमिमे दुर्वारमाबिभ्रति
प्रोक्ता साम्प्रतमेव चन्द्रमणिता तस्मादमीषु स्तवे ॥१८॥

तेषां या सहजा सलीलगमने वा प्रस्फुरन्ती छटा
तस्याः क्षुद्रतरस्फुलिङ्गसदृशं वह्नेरिव स्फूर्जितम् ।
एनां गोपवधूषु रूपरसयोराविष्करोति श्रियं
यामालोकयतां भ्रमः कलयते कुञ्जाद् व्रजेऽन्यूनताम् ॥१९॥

यद् यद्रूपकमस्ति वस्तु भुवि तत्तेजोऽपि तेनान्वितं
नो चेदातपसङ्गतासु सिकतासु स्यान्न दाहान्वयः ।
तस्मात्प्रेमरसाब्धिसारवपुषोऽङ्गस्याङ्गकस्याङ्गका-
ज्जातं स्फूर्जितमादधाति कणशो गोपाङ्गनासु द्वयम् ॥२०॥

प्राप्तं काम्यपदं हरेः प्रियगुणै रेणुं निषेव्यादरा—
दित्युक्ते दृढनिष्ठया त्वनुमितेरादर्शि तद् भावुकैः ।
पूर्णप्रेमरसाब्धिसारशरणप्राप्ताद्भुताशक्तिना
तत्कालानुचरीतया नततयाऽदर्शि स्वयं तन्मया ॥२१॥

यद्वा राधिकया विना न जगति क्वापि स्फुरेदीदृशी
लीला प्रेमरसान्वितेति विबुधाः किं नास्ति निश्चप्रचम् ?
किं सोऽनन्यगतिर्व्रजेत्सुरसिकः श्रीकृष्णचन्द्रो व्रजे ?
तत्रैतस्य चकोरकस्य दयिता चन्द्रस्य चान्द्री न चेत् ॥२२॥

तेनासज्यतया स्वभावकृतया कुञ्जेषु नित्यस्थिता
सैवासक्ततया मनःकलितया याति व्रजेंऽशांशतः ।
लीलाया अनुरूपमेव रसिको वेत्त्वंशसत्कल्पना—
मित्यादर्शितवान् महामहिमवानस्मान् स दृष्टान्ततः ॥२३॥
पूर्णप्रेमरसाब्धिसारवपुषः श्रीराधिकायाः परं
किञ्चित्पादनखद्युतेर्विलसितं प्राप्तास्तु गोपाङ्गनाः ।
इत्येतेन निदर्शिते व्रजरसे कश्चात्र गोपीजने
निष्ठां को रसिको न यास्यति विदन्माहात्म्यमासां स्फुटम् ॥२४॥

यासां काङ्क्षति गोकुलेऽपि कतमापादाब्जरेणून्विधि-
र्यासां चार्थयतेंऽघ्रिरेणुकलनां गुल्मादि भूत्वोद्धवः ।
यासां पारयते न प्रत्युपकृतिं देवायुषाऽपि प्रिय-
स्तासां प्रेमरसावगाहनविधौ कः स्यात्समर्थो नरः ॥२५॥

यासु ब्रह्मशुकाद्यलक्षितगतेः पुंसोऽपि काम्यं पदं
प्राप्तासु स्फुरति प्रियावितरितः कैङ्कर्यभावाद्रसः ।
यासु प्रार्थयतेतरां प्रियतमः काक्वुक्तिभिर्नैकधा
तासां को महिमानमल्पमतिभाङ् मातुं नरः कल्पते । २६॥

नूनं द्वारवतीमुखासु नगरीषु प्रस्तुतात्प्रेमतो
भूयो गौरवशालि गोकुलगतं गोपाङ्गनाप्रेम तत् ।
यावन्तः सनकोद्धवादय इमे भक्ताश्च सन्ति श्रुता-
स्तेषां श्रेष्ठतमा इमा इति वयं ब्रूमः किमल्पं वचः ॥२७॥

राधापादनखद्युतिस्फुरितभाग् रेणुर्ममाङ्गं स्पृशेत्
राधापादनखद्युतिस्फुरितभाग्गोपीजनो मे वचः ।
राधापादनखद्युतिस्फुरितभाक्कश्चिच्च चित्तं स्पृशेत्
राधापादनखद्युतिस्फुरितभाग् राधा तु बुद्धिं मम ॥२८॥

सन्त्वेताः परिरम्भणादिभिरलं कृष्णेन सम्मानिता
व्यग्रा वा विरहेण सन्तु नितरां किं नः फलं तावता ।
राधापादनखद्युतिस्फुरणसत्सम्बन्धबन्धस्तु मा—
मासां पादतलेषु हन्त लुठितुं भूयः करोत्युत्सुकम् ॥२९॥

भास्वत्सिन्दूरबिन्दुप्रकटपरिणयास्ता इमा गोपवध्वो
गोपांस्त्यक्त्वा भजन्ते परपुरुषमिति स्यात्स्तुतौ नैव निन्दा ।
नूनं राधापदाब्जस्फुटनखमणिसत्कान्तिविस्फूर्जितेन
दुर्वारस्वस्वभावात्प्रियतमपदवीं लम्भितः श्याम आसाम् ।।३०।।

श्रुत्यात्मानस्तु काश्चिद् भगवदवयवीभूतदेवस्वरूपै—
र्गोपैरासन्नुदूढाः श्रुतिवदिह ततस्ता न शङ्कास्पदानि ।
साक्षादंशास्तु काश्चित्सहजपरिकरा लौकिकालौकिकत्वात्
विज्ञातास्तेन तासामपि रसिक, कृथा मा वृथा दोषशङ्काम् ।।३१।।

यद्वा गोपेति जातिं वदति वदति च श्यामसङ्गेन वध्व—
इत्येवं तासु पूर्णं चरणनखविभाऽऽख्याति रागं रसं च ।
अन्यांल्लावण्यमुख्यानपि परमगुणानञ्जसैवात्र गुञ्जा—
मेरुन्यायेन विज्ञा अनुमिनुत इति श्रीहिताचार्यचित्तम् ।।३२।।

पादपद्मनखचन्द्रमणिच्छटाविलासः कोऽपि ।
स्वामिन्या स्वयमेव किं, गोपवधूष्वारोपि ?
गोपवधूष्वारोपि किमिति फलमिच्छति चित्ते ?
किं सहतेऽन्याभोगं सा निजजीवनवित्ते ?
इति मम शङ्कापङ्कमिमं, नूतनरसप्रसाद !
व्यपनय श्रीहरिवंशवर, चर्चित-राधापाद ! ।।३३।।

नैव स तासु तयाऽऽहितो, नात्मनि ताभिरयश्च ।
सहजतया गतवानयं, गोपवधूषु परं च ।।
गोपवधूषु परं चतुरासु कृपाञ्चनरीतौ ।
निपुणतरासु च राधाचरणरेणुपरिणीतौ ।।
रेणुस्पर्शनतो भवेत्प्रेमरसाश्रयणैव ।
वशीकरणमिदमञ्जसा हरति हरिं किन्नैव ।।३४।।

तत्र पादनखयोस्तयोर्लीला राजति कापि ।
पद्मचन्द्रमणिताऽनयोर्यत्सद्गुरुणाऽस्थापि ।
यत्सद्गुरुणाऽस्थापि न सम्भवतीह समत्वे ।
याति न पद्मं भातश्चन्द्रमणी न नखत्वे ।।

पद्मचन्द्रमणिभिर्यथा, लब्धा तद्द्युतिरत्र ।
गोपवधूभिरपि श्रितं, तथा विलसितं तत्र ।।३५।।

यातिस निजलीलाजितव्यालमरालो हन्त ।
यं पादं शरणार्थिनः, पद्मगणा अभजन्त ।।
पद्मगणा अभजन्त व्यालनिर्मूलितपाशाः ।
किञ्च मरालपीतविसवर्तिक्षीरनिराशाः ।।
तेष्वथ सौरभरागरससौकुमार्यमवभाति ।
गुणाः श्रयन्ते तं स्वयं, योऽत्र शरणमायाति ।।३६।।

किञ्च विकीर्णनखच्छटा, सिंहसटा अवजित्य ।
राजति नैव तया बहून्, सिंहगुणान् सञ्चित्य ।।
सिंहगुणान् सञ्चित्य हि विस्फूर्जितमपि धत्ते ।
इति स सिंहिकासुतश्चन्द्र–खमणी आदत्ते ।।
तावपि शरणं गतौ, गतौ रागं रसं द्युतिञ्च ।
जीवातू जातौ लसत्पञ्चत्वावपि किञ्च ।।३७।।

एवमेव विस्फूर्जितं मदनं जयति सुकान्ति ।
दशनखजातमपि स्फुरन्नैककुसुमशरभ्रान्ति ।।
नैककुसुमशरभ्रान्तिमना मदनो गोपीनाम् ।
कुरुते सकुसुमशिरोऽधिरूढो दशां सुदीनाम् ।।
ता अपि शरणं गता गता रागरसं स्फुटमेव ।
अथवा रागरसौ गतौ, सहजतया स्वत एव ।।३८।।

इत्थमनेके राधिका– सम्बन्धोपमयैव ।
तिर्यगसुरसुरपीडिता, भावा यत्सहसैव ।।
भावा यत्सहसैव भजन्ति रासरसशीलाम् ।
तदमरचन्द्रो गायति पादनखद्युतिलीलाम् ।।
कृपया रेणू रेणुना पादनखद्युतिरित्थ—
मिदं लभ्यते तत्कृपामेव परामिह वित्थ ।।३९।।

तां च कृपां मयि राधिका, जातु करोतु सुदैव ।
पूर्णरागरसनिधिलसत्सारमूर्तिरिह सैव ।।

सारमूर्तिरिह सैव तदेतदुदस्तविवादम् ।
गोपवधूष्वपि लोके तत्पदनखप्रसादम् ।।
सा वृन्दावनगेहिनी, वितरतु भावुकताञ्च ।
तया भाविते मानसे, स्फुटयतु किङ्करतां च ।।४०।।

अस्ति तासु पदनखरुचेर्विस्फूर्जितमपि नैव ।
प्रतिषेधार्तमतिर्भवेद् वचसा प्रश्नात्मनैव ।।
वचसा प्रश्नात्मनैव तत्प्रतिषेधे भाते ।
गोपवधूष्विति गोपदनानार्थानिवगाते ।।
तेषु भूमिजलकरगिरस्त्रिदिवं कलितसमस्ति ।
दिशस्तथेन्द्रियपञ्चकं चेतः संस्मरदस्ति ।।४१।।

पुण्यश्लोकतया नलं भूमिपतिं शंसन्ति ।
तस्य वधूमतिसुन्दरीं दमयन्तीति वदन्ति ।।
दमयन्तीति वदन्ति मदं दमयन्तीं सत्त्वे ।
त्रिभुवनसुभ्रूजनस्य कलितं कमनीयत्वे ।।
जीवन्त्यां प्रियवञ्चने पश्यसि भृतसाद्गुण्य
तस्यामीदृशरागरसलवमपि धृतनैपुण्य ।।४२।।

नास्ति वरुणरूपं यतः सागरतः पृथगत्र ।
तस्य च वध्वः सिन्धवो दृश्यन्ते सर्वत्र ।।
दृश्यन्ते सर्वत्र तु तं ता अभिधावन्त्यः ।
मेघविमानैः पुनरथ पितृगृहं प्रतियन्त्यः ।
आसामिह बहुवल्लभे रागरसो न किलास्ति ।
कतमा तस्मिन्नीलतां, क्षारत्वं च विनास्ति ? ।।४३।।

सोऽस्ति दिवाकर एव यश्छायाप्रभे विनीय ।
रागं बहुलं दर्शयंस्तापं भृशमभिनीय ।।
तापं भृशमभिनीय न वध्वोर्जनयति रागम् ।
अपि तु मलिनपाण्डुरवपुषौ ते श्रितेपरागम् ।।
दारैर्दूराद्यो मुदा, दृष्टतथावस्थोऽस्ति ।
रामकामशरपीडितस्तारापतिरथ सोऽस्ति ।।४४।।

हन्त हन्त किं गीष्पतेरपि तां वधूं वदामि ।
यामेकं गुरुशिष्ययोः क्रीडनकं कलयामि ॥
क्रीडनकं कलयामि च तासामहं तु शक्रम् ।
अप्सरसामतिवल्लभमथ शच्यामतिवक्रम् ॥
आस्तामिन्द्राणी सती, यां सत्योऽवन्दन्त ।
शिबिकावाहकमुनिजनाः, कं तस्यामनयन्त ।।४५।।

यस्तु दिगीशानां वधूष्वपि रागं रसमाह ।
तस्य मुखं दुःसहविरहज्वाला किन्न ददाह ॥
ज्वाला किन्न ददाह यया ज्वलतीश्वरभालः ।
अयमथ वह्निर्यया कृतोऽत्यन्तं विकरालः ॥
यमः पितृवसतिं श्रितो, वरुणो जलनिधिवस्तु ।
गिरिं सेवते हिममयं, धनदोऽर्दितकायस्तु ।।४६।।

नो तु कथं जीवात्मनो बुद्धिर्वधूत्वमेति ।
यस्यां पादनखद्युतिस्फुरितं नैव समेति ॥
स्फुरितं नैव समेति विविधभावाकुलबुद्धौ ।
यज्ञदानतपसाऽपि कृतायां परमविशुद्धौ ॥
इति कुर्वेऽहं प्रार्थनां, सा मयि कृपां करोतु ।
पूर्णरागरसनिधिलवं मम बुद्ध्यै वितनोतु ।।४७।।

येन निषेधे परिणमद् वचनं विधिमयमस्तु ।
तस्याः पादनखद्युतिः स्फुरतु परात्परवस्तु ॥
स्फुरतु परात्परवस्तु किमपि वा दर्शयतीष्टम् ।
इत्यदर्शिपदमाह रसिकजनमनसोऽभीष्टम् ॥
अं दर्शयतीत्यमु वदन्यातु बुधः स्वपथेन ।
ओ दर्शी यस्येत्यहं किं सुहितं कलये न ।।४८।।

अन्यदेव मनसा मया, कलयितुमाग्रहिलेन ।
किमिति तु मनसः कल्पना, मनसि परं ध्रियते न ॥
मनसि परं ध्रियते न मया पदपद्मप्रधानः ।
श्रीहित एव करेण नखच्छटया लसता नः ॥
श्रीललितादिसखीगतं दर्शयते निर्वर्ण्य ।
यत्स्फुरितं, सा राधिका राजति कृपां वितन्य ।।४९।।

पूर्णोऽनुराग इह किं रस एव पूर्णः, पूर्णस्तयोः किमथवा नवसागरोऽयम् ?
सारोऽथवा दधिनवोद्धृतवत्स पूर्णः, पूर्णा नु मूर्तिरिति मे भगवान् ब्रवीतु ॥५०॥
'तस्या अपाररससारविलासमूर्तेः,' 'पूर्णानुरागरसमूर्ति तडिल्लताभम् ।'
'वैदग्ध्यसिन्धुरनुरागरसैकसिन्धु' रित्यादि किन्न नवभावुक ! पश्यसि त्वम् ॥५१॥
पश्यामि मान्यवर ! किन्तु न तन्मदीयं सन्देहमीश्वर निरस्यति सारमूर्त्योः ।
साराधिका मयि कदापि कृपां करोत्वित्यस्मात्तु सारविषये विशयो द्रढीयान् ॥५२॥
'सत्प्रेमसिन्धुमकरन्दरसौघधारासारानजस्रमभितः स्रवदाश्रितेषु ।'
'राधाननं हि मधुराङ्ककलानिधानमाविर्भविष्यति कदा रससिन्धुसारम् ।'
इत्यादि चिन्तय चिरं रुचिरं प्रबन्धं सन्देहबन्धमपनेष्यति ते स सारे ।
साराधिकेति तव तत्र सहायकं स्यादेवं हि साऽऽनखशिखं परिपूर्णसारा ॥५३॥
'उज्जृम्भामाणरसवारिनिधेस्तरङ्गैरङ्गैरिव प्रणयलोलविलोचनायाः ।'
इत्येतदेकमपि चिन्तयतश्च चित्ते सा पूर्णमूर्तिरिति भास्यति भावुकस्य ॥५४॥
इत्थं विराजति सुचारुविचारधारासारेऽद्भुतं किमपि मां विभवत्यकस्मात् ।
एकैव काचिदियमस्ति समस्तपूर्णोपादानपूर्तिरिति तत्कतमा समास्तु ॥५५॥
तस्यास्तदा त्रिभुवने कतमा समास्त्वित्युक्त्याऽपराधजलधौ पतितोऽस्म्यगाधे ।
यत्पादपद्मनखचन्द्रमणिच्छटाया विस्फूर्जितं किमपि गोपवधूष्वदर्शि ॥५६॥
पूर्णानुरागरससागरसारमूर्तिः साराधिका मयि कदापि कृपां करोतु ।
अन्यस्य कस्यचिदपि त्वरयापि लभ्या न प्रार्थये तु मनसापि कृपा अपाराः ॥५७॥

जाने जाने नवलनवलान्नित्यलीलाविहारा-
न्नैषा जातु क्वचन भविता स्वामिनी सावकाशा ।
याचे नान्यान्मयि करुणया दत्तनेत्रान्,यतः स्या-
न्मोघा याच्ञा वरमधिगुणे नाधमे लब्धकामा ॥५८॥

इत्येवं निरपेक्षरागरसयो रागात्मनो वा रस-
स्यास्ते सागर एव यन्मथनतः सारो नवोऽभ्युद्धृतः ।
यस्मादन्यदुपायलभ्यमधिकं किञ्चिन्न सम्भाव्यते,
सारश्चैष इहास्ति मूर्तिरमला यस्या इयं सा स्मृता ॥५९॥

लोके तावदिहास्ति वस्तु सकलं यत्सच्चिदानन्द-
भागंशांशादिचिन्तने तरतमीभावश्च तत्र स्फुटः ।

आस्ते त्वंशिनि पूर्णतैव परमे, तस्मात्परो नास्ति यत्,
तद्वत्प्रस्तुतमूर्तिरस्ति परमेत्यर्थोऽस्ति पूर्णादिना ।।६०।।

आसज्यत्वमिहास्ति कुत्रचिदहो पूर्णं रसं द्योतयत्,
आसक्तत्वमथ क्वचित्प्रकटयत्पूर्णानुरागं स्थितम् ।
यद्वा तद्द्वयमेव यत्र युगपत्प्राकाश्यमालम्बते,
चिन्त्याचिन्त्यतया न तत्र किमपि प्रायः प्रतीपीभवेत् ।।६१।।

ये भावाः स्वपरम्परामनुगता रूपाच्च्यवन्ति ध्रुवं
धावन्तः किल ते स्वतोऽतिशयिताः सारेण वै तिष्ठता ।
तस्मात्सारपदार्थतोऽपि परमः सारोऽयमुज्जम्भते
लोकैर्वा निगमागमैरविदिताद्यः सागरादुद्धृतः ।।६२।।

यत्तावत्क्वचनानुरागरसयोर्नं श्रूयते पूर्णता,
संश्रूयेत कुतस्तरां पुनरियं सम्पूर्णता सागरे ।
सारे तस्य कुतस्तमां मुहुरियं विज्ञायतां पूर्णता,
तस्मात्कांश्चिदलौकिकीमनुमितिं मन्यामहेऽनिर्वचाम् ।।६३।।

गोपीष्वङ्घ्रिनखद्युतिस्फुरणया सम्बन्धमात्रे स्थिते,
ब्रूते वस्त्विह शब्दवृत्तिषु नवा सम्भाविता लक्षणा ।
इत्थं याऽघटितस्य सद्घटनया संराजते राधिका
दिव्यादिव्यरसानुरागविरसे कुर्यात्कृपां सा मयि ।।६४।।

प्रसरति रसकुल्याकूलमार्गेण वाणी पिबति जलममुष्याः पद्मनालांश्च भुंक्ते ।
परिहरति च मध्ये श्रान्तिमेषा तटस्थ-द्रुमतलघनशीतच्छायया सेविताङ्गी ।।६५।।
यदपि दशमपद्ये द्वादशाहोभिरेतैः परमसरससेवाभागि सौभाग्यमापम् ।
तदपि मम महीयान् श्रीप्रबोधद्रुमोऽयं वितरति मतिमन्तश्छायया क्लान्तिहानिम्।।६६।।
'हृदयनभसि शुद्धे यस्य कृष्णप्रियायाश्चरणनखरचन्द्रा भान्त्यलं चञ्चलायाः ।'
इति विवृतिमपीमां पश्यतां पण्डितानां किमिति भवति नैतत्स्तोत्रकर्तुर्विवेकः ।।६७।।
'तदपि कुतुककुञ्जे भावलब्धालिमूर्तिं' रिति विशदयतीदं सप्तमश्लोकभावम् ।
अभिलषितमहो तत्केलिकुञ्जाङ्गणेऽस्याः फलितमभवदेतन्मार्जनीत्वं किलेति ।।६८।।
'अतुलितरसधारावृष्टिकर्तासि नादैर्विलसतु मम बाधामूर्ध्नि जिष्णोरिवास्त्रम् ।'
इति रसिकजनेभ्यस्तारणीभूतमेव स्मरति धृतरसौघं दिव्यराधाभिधानम् ।।६९।।

यदिह दशमपद्ये प्रार्थनीया कृपास्ते नहि कथमपि पुण्यासङ्ग्रहे सा तु लभ्या ।
इति तदुपगमार्थं पुण्यमुच्चैतुमस्मानुपदिशति स कस्मादर्थनीयन्तु पुण्यम् ॥७०॥
अथ च सुकृतसाराधारमेवाधियातो भुवि सहृदयताया भावुकत्वस्य भागी ।
कलयति रसिकत्वं चाप्यनन्यत्वमस्माद्रसयति रससारं कोऽपि राधाकृपाढ्यः ॥७१॥

## एकादशः सर्गः

तच्छब्दस्य भुवि ख्याताः ख्यातोपक्रान्तसंस्तुताः ।
त्रयोऽप्यर्था ग्रहीतव्याः प्रायो राधासुधानिधौ ॥१॥

राधया माधवो देवो माधवेनैव राधिका ।
विभ्राजन्ते जनेष्वेति ख्याता या ऋग्गतश्रुतौ ॥२॥

कान्तं कदापि वसनाञ्चलखेलनोत्थधन्यातिधन्यपवनेन कृतार्थयन्त्याः ।
ब्रह्मेश्वरादिसुदुरूहपदारविन्दश्रीमत्परागपरमाद्भुतवैभवायाः ॥३॥

ब्रह्माद्यलक्षितगतेर्मधुसूदनस्य सद्योवशीकरणचूर्णपदाब्जरेणोः ।
तद्धारणीषु निपुणासु च गोपिकासु श्रीश्यामकाम्यनिजदास्यपदं ददत्याः ॥४॥

कन्दर्पकोटिशरमूर्छितनन्दसूनुसञ्जीविनीविरुदमञ्जुनिकुञ्जदेव्याः ।
किञ्च प्रतिक्षणचमत्कृतचारुलीलालावण्यमोहनमधुराङ्गभङ्ग्याः ॥५॥

नित्यं परस्य पुरुषस्य शिखण्डमौलेः काकुस्पृशा सुवचसार्थितसेविकायाः ।
सत्तारणीकृतसुभावसुधारसौघ-वृन्दाटवीप्रकट-दिव्यनिधेः सुनाम्नः ॥६॥

केनापि नागरवरेण पदे निपत्य सम्प्रार्थितैकपरिरम्भरसोत्सवायाः ।
पूर्णानुरागरससागरसारमूर्तेरित्याद्युपक्रमभृतोऽथ च संस्तुतायाः ॥७॥

नूनं नवीनवृषभानुभुवो गुरुत्वात्सर्वार्थिसाररसवर्षिकृपार्द्रदृष्टेः ।
भावोत्सवेन भजतां रसकामधेनूभूताङ्घ्रिकञ्जरजसोद्यदनन्तशक्तेः ॥८॥

दिव्यप्रमोदरससारनिजाङ्गसङ्गपीयूषवीचिनिचयैरभिषेचयन्त्याः ।
आविर्भवद्धिमधुराङ्गकलानिधानसत्सिन्धुसारमुखचन्द्रतया रसाब्धेः ॥९॥

सभ्रूविभङ्गमतिरङ्गनिधेर्वदन्त्याः कान्तं विधिं नहि नहीति निषेधवेषम् ।
सत्पादपद्मनखचन्द्रमणिच्छटैकलेशाश्लेषादजस्रमधिगोपवधु स्फुरन्त्याः ॥१०॥

उज्जृम्भमाणरसवारिनिधेस्तरङ्गै रङ्गैरिव प्रणयलोलविलोचनायाः ।
तस्याः कदा नु भविता मयि पुण्यदृष्टिर्वृन्दाटवीनवनिकुञ्जगृहाधिदेव्याः ॥११॥

'विभ्राजन्ते जनेष्वा' श्रुतिरिह वदति त्रीन् सदा राजमानान्
राधाकृष्णौ हितं चेत्यवगतमिह नो दृश्यते किन्तु कृष्णः ।

सत्वासीन्न द्वितीये, न च खलु दशमे, नाष्टमे नापि षष्ठे,
तद्वन्नैकादशेऽसाविति किमिति मनः शङ्कसेऽस्मिन्विशेषात् ॥११॥
विज्ञाः 'श्रोमत्परागे' त्यवदधत मनाक् किंच 'पूर्णानुरागे'-
त्यालोकन्तां 'सुभावे' त्यपि विमृशत तन् 'मोहने' त्यावदद्ध्वम् ।
अत्रा 'प्युज्जृम्भमाणे' त्यवहितमनसाऽऽलोचयन्ते रसज्ञा-
श्चन्द्रादप्यन्तरा किं क्वचिदिह जनयेर्जम्भमुज्जृम्भणं स्यात् ॥१२॥
तन्निश्चितं दयितचन्द्रसमागमेनैवोज्जृम्भतेऽत्र रसवारिनिधिः सदासौ ।
आलक्ष्यते तु घनकुञ्जगता तरङ्गैरङ्गैरिव प्रणयलोलविलोचना सा ॥१३॥
अत्रोपमाप्रकरणे कथयंस्तरङ्गैरङ्गैरिवेति भगवान् कमुवाह भावम् ।
अङ्गानि भव्यमुपमानपदं श्रयन्ते यस्मिंश्च नव्यमुपमेयपदं तरङ्गाः ॥१४॥
श्रीश्यामचापलनिरोधचलाचलाङ्ग्याः, नीरन्ध्रमञ्जुलनिकुञ्जगृहान्तरायाः ।
अङ्गानि न प्रतिविभान्ति पृथक्तयेति तानीव भान्ति रसवारिनिधेस्तरङ्गाः ॥१५॥
मुख्यत्वमत्र रसवारिनिधेर्यथा स्यादित्युक्तवान् स भगवान्न तरङ्गसाम्यम् ।
गौणत्वमेव दयितादयिताङ्गकेषु युक्तं तदुक्तमिह तेन तदङ्गसाम्यम् ॥१६॥
यद्वाऽधिकं भुवि गुणैरुपमानताभाङ् न्यूनं च भाजनमिहास्त्युपमेयतायाः ।
प्रत्यङ्गमस्ति रसवारिनिधिः, प्रियायास्तूज्जृम्भमाणरसवारिनिधेस्तरङ्गः ॥१७॥
यद्वा मिथोऽङ्गनवलद्युतिमेलनेन जातावुभावपि समानरुचिप्रियौ नः ।
नो शक्यते किल विवेचयितुं पृथक्त्वमित्यङ्गसाम्यमयतेऽत्र निधेस्तरङ्गः ॥१८॥
यद्वा निकुञ्जशुषिरेक्ष्यलवांस्तरङ्गान् रङ्गानिवाकलयते कलितान् कलाभिः ।
रङ्गैरिवातिरससंवितरैस्तरङ्गैस्तैरत्र वक्ति रसवारिनिधित्वमस्याः ॥१९॥

ध्यायं ध्यायं सच्चिदानन्दमेकं पायं पायं सत्सुधाया विवेकम् ।
हे हे हंसाः ! भावुका भावनायां नानीतं किं तद्धितं तद्धितं वः ॥२०॥
धाधातोर्यद्धारणे पोषणेऽर्थे सद्विद्वांसः कुर्वते संप्रयोगम् ।
सत्यं सत्यं कथ्यतां सन् हितोऽयं यस्मादेतौ संश्रितौ सत्तदेकम् ॥२१॥
श्यामः कामं चञ्चलश्चिन्मयत्वादानन्दार्थं सर्वदैवाकुलश्च ।
गम्भीरं तं सर्वथाऽऽनन्दसिन्धुं कृत्वा क्षुब्धं भूयसैवातुरः स्यात् ॥२२॥
इत्थं सर्वं तत्त्वमेतद् विदन्तो नाङ्गौपम्यं मन्महै तैस्तरङ्गैः ।
आनन्दाब्धेस्ते तरङ्गा इहाङ्गानीवाभान्तीत्यहो युक्तमुक्तम् ॥२३॥

सर्वाङ्गगामिनि रसाब्धितरङ्गभावेऽप्युद्भावयन् प्रणयलोलविलोचनत्वम् ।
नो मीनतां यदवदत्तदिहातिमात्रं सादृश्यमेष प्रतिषेधति लोचनस्य ॥२४॥
अत्रान्यदङ्गमतिरङ्गनिधेर्न लक्ष्यं वृन्दाटवीनवनिकुञ्जगृहाधिदेव्याः ।
आविष्कृते प्रणयलोलविलोचने तु तस्या यदाप्तुमयमिच्छति पुण्यदृष्टिम् ॥२५॥
एतेन सत्यपि मनोरथदायकत्वे, भक्ता निजाधिकृतमेव सदार्थयेयुः ।
इत्याह वा स्वहृदये कलयत्सुदैन्यं नोदेति तेषु महनीयपदाभिलाषः ॥२६॥
अङ्गानुगामि मधु वाञ्छति वल्लभेऽसौ यद्वत्प्रिया प्रणयलोलविलोचनाऽस्ति ।
साकाङ्क्षितास्वथ सखीषु तरङ्गगामि, सा स्वामिनी प्रणयलोलविलोचनाऽस्ति ॥२७॥
उक्तानि यानि महितानि पुरा पुराणैर्नैःश्रेयसादिकवनानि यथार्थकानि ।
वृन्दाटवी श्रुतिरहस्यतयोदितेयं सर्वाणि तानि रसवर्षितया धुनोति ॥२८॥
किञ्चाटवीविशदता हृदयावकाशं धत्ते रहस्यमथ तद्वितत विधत्ते ।
कार्यान्तरस्मरणलेशमपीयमन्तर्धत्ते मनश्च दयिताचरणे निधत्ते ॥२९॥
तस्यां पुनर्नवनिकुञ्जमतीव मञ्जु वर्षत्प्रतिक्षणविलक्षणमेव हर्षम् ।
यस्मिन्ननन्तभुवनाधिपतिव्रजानां चेतोऽपि नाविशति नैगमवञ्चितानाम् ॥३०॥
श्रीमन् ! कुरु प्रियतमार्चनमेभिरस्मत्पुष्पप्रबालसुफलादिभिरित्यजस्रम् ।
यत्सेव्यते युगपदेव नवोपहारान् सर्वर्तुभिर्मधुपतेः पुरतोऽर्पयद्भिः ॥३१॥
यत्राश्रिता व्रजमहीपतिनन्दनाभ्यां नानाफलानि सुरसानि सदा ददानाः ।
तान्नन्दनाश्रयजुषः किल पञ्चशाखान् गुल्मादयोऽगणितशाखतया हसन्ति ॥३२॥
स्वैरं च पल्लवप्रसूनचिता, गवाक्षद्वारादयो विरचिता, विततं वितानम् ।
अभ्यास्तृता जवनिकाऽऽस्तरणं च क्लृप्तमित्यत्र कस्य भविता न गृहाभिमानः ॥३३॥

कस्यां पूर्णानुरागः पतिरिह ममतापूरिता कास्ति पत्यौ ?
क्रीडादिव्यापृता काऽऽस्त्यनुगतपतिका कास्ति लोकेऽतिमात्रम् ?
कस्याः सौभाग्यगर्वः पितृपतिकुलयोर्लालनाभ्यामखर्वः ?
श्रीराधामन्तरा च प्रतिपलनवलानन्ददा कास्ति देवी ? ॥३४॥

स्वाभाविकप्रणयशालिनि, दिङ्महिम्नोरप्यादरेण हृदये दधति प्रमोदम् ।
ध्यात्वा मुहुश्चरणरेणुमथ त्वदीयोत्कर्षं विचिन्तयति मोहनजीवनाभ्याम् ॥३५॥
आस्यं दिदृक्षति पुना रससिन्धुसारं, दास्यं च लिप्सति तवाङ्गणमार्जनीकम् ।
वृन्दावने वसतिमिच्छति सद्रसौघाम्, श्रोतुं च वाञ्छति नहीति गिरो मनोज्ञाः ॥३६॥

पूर्णानुरागरससागरसारमूर्तिं साक्षाच्चिकीर्षति [कृपामभिकाङ्क्षमाणे ।
तद्योग्यतामथ च लब्धुमतीव दीनेऽधीने कदा नु भविता मयि पुण्यदृष्टिः ।।३७।।
जाने सदा प्रणयलोलविलोचने त्वं प्रेष्ठं तथाऽलिनिचयानभिषेचयन्ती ।
पूर्णानुरागरससागरजैस्तरङ्गैरानन्दयन्त्यवसरं लभसे न जातु ।।३८।।
कोणे स्थितोऽस्मि तव मञ्जुगृहाङ्गणस्य वृन्दाटवीनवनिकुञ्जगृहाधिदेवि ।
यावन्न तेऽनुभवितास्मि तु पुण्यदृष्टिं तावद्रटन् स्तुतिमिमां दिवसानि नेष्ये ।।३९।।
दातासि दृष्टिमयि तां महितां मयीति विश्वास एव मम जीवनहेतुरेकः ।
नाशङ्कते क्वचन यस्तु निजात्मघातं त्वत्पुण्यदृष्टियशसा दृढतो दृढीयान् ।।४०।।
पुण्यं तु चार्वितित विदुर्भुवि कोषविज्ञास्तन्मन्महेऽभिलषितामिह पुण्यदृष्टिम् ।
किन्त्वर्थनात्प्रथममेव कृतार्थितोऽर्थी सन्दर्शनात्प्रणयलोलविलोचनायाः ।।४१।।
दृष्टिस्तु सा सहजचारुरथ स्वभावपुण्या चं तत्किमिह तेन विशेषणेन ।
सत्यं, परन्तु मयि सा शरणागतेऽपि, सद्यो भवेत्तरलिता कृपयेति भावः ।।४२।।
यद्वा कदा सहजचारुदृशः प्रियाया नानाविलासविभवाकलितां सुदृष्टिम् ।
मय्याहितामनुचरीपदवीप्रदानात्कारुण्यपुण्यललितामवलोकयिष्ये ।।४३।।
भक्त्यैव भक्तिरितिवत्कृपया कृपा स्यात् पुण्येन वा भुवि कृपेति मृषावितर्कः ।
पुण्यं यदेव किल सैव कृपा, कृपा या पुण्यं तदेव भवतीति विनिश्चयोऽयम् ।।४४।।

मदनकोटिकुलैरतिविह्वला प्रियतमोच्छलदादिरसाम्बुधिः ।
प्रियतमश्च परं तृषितः सदाऽधरसुधामधुपानमदोन्मदः ।।४५।।

परमियं रजनी तमसा कृशा प्रतिपलं विगलन्नवचन्द्रिका ।
तदिह न क्षणमप्यहमर्थये, क्षणहरं मयि पुण्यदृशोऽर्पणम् ।।४६।।

न खलु वेद्मि दिवापि कियच्चिरं सुरसदानपरिग्रहयोरयम् ।
अभिनवः प्रचलेत्सुमहोत्सवस्तृषिततृप्तिकरौ हि परात्परौ ।।४७।।

प्रणयलोलविलोचनदर्शनात् मदनकोटिकुलैरतिमोहितम् ।
प्रियतमं दयिता हि निजाङ्गकै रसतरङ्गभरैरुपजीवयेत् ।।४८।।

अहह जीवितमेनमियं पुनः प्रणयलोलविलोचनदर्शिनम् ।
विषमसम्पतितं नु कियच्चिरं रसनिधौ विनिमज्जितमुद्धरेत् ।।४९।।

नवनिकुञ्जगृहे प्रसरेदिदं युगयुगान्तमहो स्मरशासनम् ।
अधरशीधुनिषेवणतत्परं नवमिदं मिथुनं मदयन्मिथः ।।५०।।

प्रतिपलं तु समुच्छलितो रसाम्बुधिरय दिवसानि न मूर्छतु
न खलु मूर्छतु, मूर्छतु वा क्षणं यदहमेमि विबोधयितुं प्रियाम् ।।५१।।

अहह सा प्रतिबोधमुपाश्रिता प्रियतमः कथमित्यभिभाषिणी ।
सरभसं मयि पुण्यदृशा कदा तदखिलं सुखमेव वदिष्यति ।।५२।।

## द्वादशः सर्गः

इत्थं भावनया तया दयितया तां पुण्यदृष्टिं कृतां
साक्षात्कृत्य महाप्रमोदभरितस्वान्तो नमन्नीश्वरीम् ।
तत्कालं कृपयाऽनुभूतमपरं लीलाविनोदं वदन्
हृष्यन्नाश्रयते प्रियस्मररुजश्चौरं पदाम्भोरुहम् ।।१।।

**"वृन्दावनेश्वरि तवैव पदारविन्दं**
**प्रेमामृतैकमकरन्दरसौघपूर्णम् ।**
**हृद्यर्पितं मधुपतेः स्मरतापमुग्रं**
**निर्वापयत्परमशीतलमाश्रयामि** ।।१२।।"

श्रीवृन्दावनमेतदन्यदखिलं धामातिशेतेतमां
माधुर्योल्लसदद्भुतप्रणयसत्पीयूषवर्षि क्षितौ ।
आनन्देन घनेन मण्डितमहो सच्चिन्मयं विश्वसृण्-
मुख्यैः प्रार्थितगुल्मवल्लिजननं नानायशोभाजनम् ।।२।।

तन्नाम्ना विदितेश्वरत्वमहिमा राधैव तस्येश्वरी
दुःसाध्यं शरणागताभिलषितं संसाधयन्ती क्षणात् ।
देवि, त्वद्बलदूरिताखिलमहद्वृन्दो वियोगातुरः
सत्प्रेमद्रुतचेतसः किल तवैवालम्बनं प्रार्थयन् ।।३।।

शोभाढ्यं, सुकुमारतैकनिलयं, सौरभ्यविभ्राजितं
सौरस्याकलितं, स्वभावललितं, सन्तापनिर्वापकम् ।
भूयो दुर्लभमप्यतीव सुलभं कारुण्यपूर्णान्तरे,
ऽनन्येनैव हृदाश्रयामि सुभगं पादारविन्दं तव ।।४।।

माङ्गल्यं परमं च तृप्तिजननादानन्दसन्दोहदं
माधुर्यातिशयेन यत्र लसति प्रेमैव भूयोऽमृतम् ।
तच्चैकं नवसौरभेण नवलस्वादुद्रवत्वेन च
प्रोद्भूतो मकरन्द एव रसिकालीनां निपेयः सदा ।।५।।

किञ्चायं मकरन्द एव परमानन्दाय यज्जायते,
यच्चाखण्डतया जनेन विगलद्वेद्यान्तरं स्वाद्यते ।
प्रेमाकारतया स्थितेन दयितेनापि प्रपेयश्च य-
स्तस्मादस्ति रसस्ततोऽस्य महतैवौघेन पूर्णं च यत् ॥६॥

ओघो यद्यपि दृश्यते नहि दृशा कार्यैस्त्वसौ मीयते
द्रुत्या लोचनचेतसोरुदभवद्बाष्पैश्च कम्पादिभिः ।
सर्वाङ्गे भरितस्य तस्य च बहिः कान्तालिवृन्देच्छया
कुञ्जादौ प्रचलत्पदाम्बुजतया ख्यातैव सम्पूर्णता ॥७॥

कान्तेनालिजनेन चाद्भुततृषो नव्यक्षुधः शान्तये,
पीतः काममपि तृप्तिमेष ददते तेनामृतौघः स्फुटः ।
पादाम्भोजमिदं च तस्य विषयः कान्तालयश्चाश्रय-
स्तस्मादस्य निकाममस्ति विशदा तेनास्य सम्पूर्णता ॥८॥

भृङ्गाः पङ्कजमाश्रयन्ति सुरभि घ्रातुं च धातुं रजः
स्प्रष्टुं कोमलतद्दलं, सुमधुरं द्रष्टुं च रूपं पुनः ।
इत्येतत्तु न भाष्यतामिदमिमे सर्वं लभन्तेऽञ्जसा,
सत्यं तं मकरन्दमेव परमं लब्धुं यतन्ते परम् ॥९॥

तद्वत्सन्तु यशःश्रुतिप्रभृतयो लाभा इहापि स्वयं,
प्राधान्याद्रसिकास्तु कञ्चन रसं पातुं प्रवृत्ता इतः ।
दृश्यन्तां मकरन्दकस्य कमले द्वित्राः परं विन्दवः,
स्वामिन्यास्तु पदे रसौघविषयाऽप्युद्भ्राजते पूर्णता ॥१०॥

अन्योन्यं तौ परमदयितौ नाधिकन्यूनभावौ
सान्द्रानन्दोन्मदरसघनप्रेमपीयूषमूर्ती ।
आसाते चेत्किमिति दयितापादपद्मं विशेषा-
दाश्रित्यास्तेऽधिकघनरसप्रेमपीयूषलिप्सुः ॥११॥

सत्यं सत्यं यदीयं सकलमपि समं श्रीमदङ्गं रसादीन्
बिभ्रद् दीव्यत्यशेषादधिकमिति तु तत्तत्समाश्रेयमेव ।
राधापादारविन्दोच्छलितनवरसप्रेमपीयूषपुञ्ज
कालिन्दीकूलकुञ्जे ह्यधिकलयितुमत्यन्तमुत्कण्ठितास्मि ॥१२॥

प्रेम्णः प्रस्रवणानि, नूनममृतस्योत्सा, मरन्दस्य च
स्रोतांसि ध्रुवमुद्गमा अपि रसस्याङ्गानि सर्वाण्यपि ।
तेभ्यो निर्गतनिर्झरैस्तु नितरां पूर्णं पदाम्भोरुहं
तस्यैवाश्रयणेन तानि सुलभानि स्युः समस्तान्यपि ॥१३॥

नन्वेतच्चरणाम्बुजं मधुपतेः केनास्ति हृद्यर्पितम् ?
किं तेन स्वयमेव वा दयितया सख्या कयाचिन्नु वा ।
नानाकारककाकुकोविदतया तेन स्वयं तद्धृतं
कारुण्यद्रुतचित्तया दयितया वाऽस्मै भवेदर्पितम् ॥१४॥

सख्या वा प्रतिमूर्छिते मधुपतौ हारैर्मृणालैरथो
पाथोजैर्घनसारलेपसहशैश्चास्योपचारः कृतः ।
तस्मिंस्तादृगवस्थिते तु दयितां नेत्रास्यवक्षःकरै-
स्तं स्प्रष्टुं कृतवत्यसावभिमतां मूर्छा न याता परम् ॥१५॥

भूयोऽनिष्टवितर्कसञ्ज्वरधरौ दत्तौ करौ दुष्करौ
वक्षोजौ च नितान्तमन्तरिततच्चिन्तानलोद्दीपितौ ।
नेत्रे कान्तदशावलोकविगलद्धारोष्णवाष्पे, मुखं
तन्मूर्छानपयानखेदविसरत्सन्तप्तनिःश्वासभाक् ॥१६॥

किं कार्यं, कथमुन्मिषन्नयनयोरग्रेसरा स्यामहं
केनोज्जीव्य चिराय जीवनधनं प्राणेशमाराधये ।
इत्यार्तां जडिमानुगां प्रियतमां सम्प्रार्थयत्सा सखी
प्रेष्ठे, प्रेमरसौघपूर्णचरणं हृद्यर्पय प्रेयसः ॥१७॥

इत्युक्ते झटिति प्रिया प्रियतमस्योच्छ्वासधारोच्छ्वस-
त्स्वान्ते स्वं चरणं निधातुमुदिताप्यासीन्न हन्त क्षमा ।
तस्याः श्रीहितसख्यनन्यगतिकाऽऽदाय स्वहस्तेन त-
त्तस्योरस्यदधादथास्य निरगात्तापः स मोहावहः ॥१८॥

इत्थं दुःसहकामकोटिशरजे तापेऽपि निर्वापिते
कान्तानन्दभरेण विस्मृतनिजा पादं यदा नाहरत् ।
सा सख्येव तदा तदाहृतिमना मन्दं हसन्ती जगौ
हे वृन्दाविपिनेश्वरि, त्वदनुगा पादाम्बुजं संश्रये ॥१९॥

श्रीवृन्दाविपिनेश्वरीयमिति यत्, यच्चारविन्दोपमं,
सत्प्रेमामृतसन्मरन्दसुरसस्रोतःप्रपूर्णं च यत्।
यच्चैतद्धृदयेऽर्पितं मधुपतेस्तापं सुनिर्वापयत्
तत्पादाम्बुजमाश्रयामि परमं तन्नैकधा शीतलम् ॥२०॥

श्रीवृन्दाविपिनाम्बुधिं तरुलतागुल्मौषधापूरितं
मथ्नद्भिर्हरिवंशमन्दरबलात्प्राप्तं रसज्ञैस्तु यत्।
तत्प्रेमामृतमस्तु नित्यमधुरं तृष्णाहरं तृप्तिदं
नानाव्याधिविनाशनं हृतजरामृत्युप्रभावं सदा ॥२१॥

किन्त्वेको मकरन्द एव स इति स्याद्दुष्क्रमत्वं न किं?
प्रेम्णो हन्त कृतेऽमृतत्वतुलने व्यर्था मरन्दोपमा।
इत्येतत्तु न शङ्कनीयमिह सम्मान्यैर्महाबुद्धिभि-
र्ध्यायद्भिर्मधुपावलीमिव सखीपालीं भ्रमन्तीं वने ॥२२॥

नार्थः कोऽपि ययाऽमृतेऽभिलषितो निर्वाणशान्तिप्रदे
नित्याधीनतयैव सेवनमिदंपादाम्बुजस्यार्थितम्।
किञ्चास्याप्यमृतेन किं मधुपतेश्चौरेण नानारुजां
कोऽत्युग्रं स्मरतापमस्य मधुनो भिन्नस्तु निर्वापयेत् ॥२३॥

किं न्वेतां मकरन्दमात्रकलनात्पादोऽरविन्दश्रियं
धत्ते किन्नु परागकेसरदलाद्यैरप्यसौ तत्समः?
ब्रह्माद्यैः सुदुरूहवैभवमिदं तूर्णं वशीकारणं
नूणं विस्मृतवान्नु किं प्रियगुणैः काम्यं पदं तद्वदत ॥२४॥

किञ्चोक्ता नखचन्द्रकान्तिरपि साऽभूत्केसराली न किं?
किञ्चैता मृदुलास्तदङ्गुलिगणाः पत्रश्रियं नाश्रयन्?
अन्यत्सौरभसौकुमार्यसुषमारागादि सर्वं पदो
मां विन्देदिति पद्ममाहुरनुगं नैवारविन्दस्य तत ॥२५॥

हन्तैकोऽपि हरत्ययं त्रिजगतां सन्तापमन्तर्गतं
निस्तन्द्रः सुखकन्दलः किल शरच्चन्द्रो भृशं शीतलः।
तत्रैभिः खलु पञ्चभिर्नवनवैर्लीलाप्रपञ्चोद्धुरैः
शैत्यं न कियत्प्रियानखशरच्चन्द्रैर्धृतं स्यादिदम् ॥२६॥

यद्वा पादारविन्दं, धृतदरमकरं, प्रस्फुरच्चन्द्रलेखं,
साम्भोजं, दृश्यमानाचलमपि तरलं प्रोल्लसत्पुष्पवल्लि ।
साक्षात्तं क्षीरसिन्धुं बुध-रसिक-जनाः पूर्वदेवाश्च देवाः
ध्यायं ध्यायं न्यमथ्नन् परिणतिरुभयोः किन्तु भिन्नैव जज्ञे ॥२७॥

श्रीराधातत्त्वचिन्तोद्धुरमातविभवानां तु केषाञ्चिदस्माद्
देशे काले समाने सति न फलमभूद्धन्त तत्प्रेम नाम ।
अन्येषां तत्तदीया वयमिति नियतध्यानतस्तस्य लाभ-
स्तस्मादस्मादमीषां तदमृतसदृशं वक्ति पादारविन्दे ॥२८॥

रेणुस्तत्कामधेनुर्गजललितगतिः कौस्तुभैतन्नखाभा-
ऽङ्गुल्याभाः कल्पवृक्षा अथ नखकिरणा अप्सरोवृन्दमेव ।
साक्षाल्लक्ष्मीस्तु लक्ष्मीरुदभवदुदधेर्नूनमस्मात्क्रमेण
प्राप्य प्रीतिं गतास्ते रसिकसरवराः स्वाधिकारानुरूपम् ॥२९॥

अन्ये तूच्चैःश्रवस्याहितबहुरुचयो वारुणीमात्रमस्मा-
ल्लब्ध्वाऽभूवन्मदान्धा 'वयमिममुदधिं मथ्यमानं विदध्मः' ।
इत्येवं मोहितास्ते भृशमनधिकृताः प्रेमपीयूषपाने
मोहिन्या वञ्चिता ये परमकविकृपापात्रतां नान्वभूवन् ॥३०॥

आस्ते राहोरिवास्मादृशजनमनसश्चेष्टितं पातुमेत—
द्येषां कण्ठादधस्तादवतरति मनाक्प्रेमनामामृतं न ।
येषां छद्मोपक्लृप्तामहह रसिकतां सूर्यचन्द्राविवैतौ
साक्षादाख्यात एव स्फुटरसिकगुणौ लोचनाख्यौ सुदेवौ ॥३१॥

हा हा नेत्रे निमील्य ग्रसति न पिशुनौ किन्तु तौ पुण्यकाले
मध्ये मध्येऽर्धमीला प्रकटयतितरां हन्त खण्डग्रहं तम् ।
तं कालं वै भवादृग्रसिकसमुदया नैकधा मज्जनेन
कृत्वा पुण्यार्जनानि स्वजनिसफलतासाधकं कल्पयन्ति ॥३२॥

## त्रयोदशः सर्गः

प्रेमामृतं रसयतां रसिकोत्तमानां, सर्वात्मना प्रियतमाश्रयणं प्रतीतम् ।
दृष्टान्तयन्नथ च नूतनभावुकानां, सिद्धान्तयंस्तदुपलब्धिपथं जगाद ॥१॥

यद्वाऽत्र शिश्रयिषितं चरणारविन्दं, तस्मात्प्रपित्सितमथ प्रणयप्रवाहम् ।
नित्यं विहारविपिने विहितप्रसारं, संचिन्त्य तत्र मनसो रतिमाचकाङ्क्षे ॥२॥

यद्वा सदाधिवसतोऽपि वनं स्थितस्य प्रेमामृतैकमकरन्दरसप्रवाहे ।
पानोत्सुकस्य युगपत्सकलस्य तस्य, राधाविहारविपिने रमतेऽस्य चेतः ॥३॥

**"राधाकरावचितपल्लववल्लरीके,**
**राधापदाङ्कविलसन्मधुरस्थलीके ।**
**राधायशोमुखरमत्तखगावलीके,**
**राधाविहारविपिने रमतां मनो मे ॥"**

त्रिंशत्कोटीश्च तिस्रो जगति निगदिता देवतानां विमृश्य
त्रासः स्वान्ते न कस्य स्वयमुदयति यत्सेवनीयाः कथं ताः ?
आयुः स्वल्पं महान्तोऽतिशयितगणनाः सन्ति विघ्नाश्च भूय—
स्तस्मादेकत्र चित्तं क्वचिदपि मनुजो योजयेद् भूतिकामः ॥४॥

चित्तस्याथ स्वभावो मधुरतमपदप्राप्तये व्याकुलं सत्
नानाजन्मावसाने भजति मधुपतेरङ्घ्रिमूलं कदाचित् ।
आराध्यः सोऽयमेकः सुरदनुमनुजैरित्यशेषागमानां
नानावस्तुस्पृशानामपि परमबुधैः सिद्धसिद्धान्त उक्तः ॥५॥

आराध्यः सोऽयमद्धाऽनुनयविनयवान् वश्यभावावनद्धं
राधामाराधयत्युज्झितसकलजगत्कार्यभारोऽवतारी ।
तेनाराध्याथ राधा निखिलनिगमगोर्गोपनीया परस्तात्
सर्वेषां ज्योतिषां सा विहरति विपिने वन्द्यवृन्दावनाख्ये ॥६॥

सा श्रीराधात्युदारा सततमनुचरीभावसम्प्रार्थिनीभ्य—
श्चिद्भ्यो जीवाभिधाभ्यः सपदि सहचरीभावमेवात्र दत्ते ।
यस्या न श्रीगुरोरप्यनुवददभिधां सङ्कुचत्यन्तरास्य
यस्या नानाविहारान्कलयितुमपि चोत्कण्ठतेऽत्यन्तमन्तः ॥७॥

तद्दत्तं सख्यमेव श्रितवति हृदये मञ्जुकुञ्जान्तरेषु
जातास्ते ते विहारा रहसि समुदिता अप्यशेषाः स्फुरन्ति ।
श्रीराधा यान्करेण स्वयमवचिनुते पल्लवास्तेऽतिधन्याः
सौभाग्यं व्यञ्जयन्ति स्फुटमिह मनसोऽगोचरं वल्लरीणाम् ॥८॥

को हेतुः पल्लवानामवचयनविधेरित्यमुष्मिंस्तु प्रश्ने
पूर्वं सैवानुकम्पा स्फुरति मनसि मेऽहैतुकी धामवृत्तौ ।
पश्चान्नानावितर्कान् कलयति हृदयं तद्रसोदर्कहेतून्
येषां काश्चिद्रसज्ञान्तरपरममुदे सम्यगावेदयामि ॥९॥

नव्यानामङ्कुराणामुदयमभिलषन्त्यादरात्साऽकरोत्तत्
पार्श्वस्थान्वा तमालान्मिलितुमुपगतास्ता हसन्तीर्व्यलुञ्चत् ।
कान्तं वा शोभयन्ती, मलयजपवनाभ्यागमं वार्थयन्ती,
रन्ध्रं दत्त्वा निकुञ्जेष्वतिदयितसखी वा स्वयं सार्थयन्ती ॥१०॥

आस्तां श्रुतिर्मतिरिहात्मविनोदहेतू, निध्यानमेव परमं प्रणये निदानम् ।
सद्यः स्फुरद्व्यवहितादिधृतावबोध—पूर्णावकाशमनसश्च तदस्ति कार्यम् ॥११॥
यद्वा निकुञ्जगहनेषु नवीनकेलीराविष्करिष्यसि सदेत्यधिकारमाप्ता ।
आप्ता परं हितसखीच्छति यन्मनो मे, राधाविहारविपिने रमतामजस्रम् ॥१२॥
एकादशे प्रियतमा प्रतिबोधिता यद् यद् द्वादशे प्रियतमः प्रतिबोधितोऽभूत् ।
तेन प्रसन्नमनसौ नितराममुष्यै, भूयो वरं ददतुरीदृशमुन्मदौ तौ ॥१३॥
नूनं तयावचयनीयमयं चिनोति, तस्याश्च यद् भवति सद्यशसा यशस्वी ।
छायेव नित्यमनुगच्छति यच्च राधां, कृष्णस्य तस्य न विहारवनं पृथक्तत् ॥१४॥
दासे स्थिते मयि किमित्युचितानवेक्षं, प्रस्तूयते प्रियतमे, मृदुलैः कराग्रैः ।
कान्ते, नखक्षतमिदं मयि सापराधे, दासे नियोजय न नूतनवल्लरीषु ॥१५॥
इत्थं प्रियां प्रतिदलावचयं निषिध्य, शक्नोति न स्वयमचेष्टतयाऽवचेतुम् ।
कान्ता तु तं प्रति रुषेव नखक्षतानि, संयोजयत्युपहसन्नववल्लरीषु ॥१६॥
इत्येवमादि कुसुमावचयेऽपि कार्ये, तत्पल्लवावचयनं विनिवेदयेत ।
भावावबोधकुशलैर्न मृषोद्यते यत्, संरम्भशालिषु न वस्तुविवेकशक्तिः ॥१७॥

दयितादयितौ कलितसुवेषौ ।
चलितौ नवले वने विहर्तुं, कृतभुजकण्ठाश्लेषौ ॥१८॥
अभिनवयुवतिसमूहविहितसादरसुन्दरपरिवेषौ ॥
अधिदामिनि घनमधिघनदामिनिकामनुकारिविशेषौ ॥१९॥
यमुनातीरमनोहरमणिमयतीर्थे साभिनिवेशौ ।
रत्नजटितमञ्जुलकलकुञ्जे विहितैकान्तप्रवेशौ ॥२०॥
मुकुरोज्ज्वलनवपल्लवभासितराधाबद्धनिमेषौ ।
श्रमरहिताय निविष्टौ मृदुले शयने श्रीविपिनेशौ ॥२२॥

वनमिदमेव निकुञ्जं भावय ।
अतिसुखितं दयितं प्रति चास्मिन् सखि,निजहृदयं धावय ।।२२।।
अत्र निकुञ्जे पत्रप्रसूनेष्वानखशिखमभिपश्यति ।
काञ्चनचम्पकगौरीं राधामिति मधुपतिरतिहृष्यति ।।२३।।
वनमालिनमालीजनमिह नावति मणिकान्तिरगाधा ।
बर्हिणकान्तमणौ बर्हिण इव भाति समेष्वपि राधा ।।२४।।
प्रकटं परिरम्भणमभिकाङ्क्षति प्रभवति किन्तु न कर्तुम् ।
कतमा दयिततमा मम कतमा चात्र सखीत्यवधर्तुम् ।।२५।।
अतरुणकरुणा तरुणितमाऽरुणकरशाखाभिरजस्रम् ।
दयितभ्रमकरमवचिनुते नवपल्लवपुष्पसहस्रम् ।।२६।।
इति विपिने राधाकरकमलावचितदलव्रततीके ।
भ्रमरहिताय मनो रमतां मम राधाकेलिप्रतीके ।।२७।।

मधुपतिरयते मधुकरलीलाम् ।
दयिताकरशाखाश्रमहरणीं सौरभलम्पटशीलाम् ।।२८।।
अनुपमनिजतनुसौरभमनुसरते दयिताय निकामम् ।
सम्भ्रमदित्सुरथो दयिता परिक्रामति वनमविरामम् ।।२९
परिशीलितपरिमलमनुधावन्याति स तामभि यावत् ।
सा चञ्चलचेलाञ्चलमारुतविधुतवनार्च्छति तावत् ।।३०।।
इति विपिने राधापदपङ्कजलसदङ्कस्थलमाले ।
भ्रमरहिताय मनो रमतां मम राधाकेलिविशाले ।।३१।।

रतिरणकलहं कलयति राधा ।
कौतुककलरवपरिहृतप्रियतमसम्भ्रमविभ्रमबाधा ।।३२।।
बिम्बं प्रतिबिम्बं मम कलयतु येन परस्परभिन्नम् ।
इति निजदक्षिणनयने रचयति मञ्जुलमञ्जनचिन्हम् ।।३३।।

प्रतिबिम्बे वामेक्षणमञ्जनकलितं दर्शं दर्शम् ।
अवितथदयितामभिजानन्नथ विन्दति हर्षोत्कर्षम् ।।३४।।
जय श्रीहितहरिवंशमहाप्रभुप्रीतिसुरीतिविताने ।
मज्जति श्यामो निजप्रतिबिम्बनजनितसजनितामाने ।।३५।।

अविरलकोकिलकुहूकुहूध्वनिध्यातनिजासितपक्षः ।
'जयहो जयहो' इतिबर्हिगणकलकेकास्मृतनिजकक्षः ॥३६॥
इति विपिने राधाकलकीर्तिकलापालापिपतत्रे ।
अमरहिताय मनो रमतां मम राधाकेलिपवित्रे ॥३७॥

विलसति काञ्चनकमलनिकुञ्जम् ।
कूजत्कोकिलकीरकलापि, निगुञ्जन्मधुकरपुञ्जम् ॥३८॥
शीतलमन्दसुगन्धिसमीरणनर्तितनवललताकम् ।
हिमकणधौतमुक्तमुक्ताफलकृतसुषमापरिपाकम् ॥३९॥
प्रेममहारसमग्नसखीद्वयविहितमधुरसँल्लापम् ।
अमरहिताय मनो हरते मम विगलितभवसन्तापम् ॥४०॥

कलय निकुञ्जे नवलकिशोरौ ।
इतरेतरसुन्दरमुखचन्दिरचञ्चलनयनचकोरौ ॥४१॥
अतिचतुरौ, ललितादिसखीकृतकिसलयशयनसनीडे ।
तर्कितरन्ध्रौ, सृजतः शयनं क्वचन निराकृतव्रीडे ॥४२॥
अवचिनुते दयिता निजकोमलकरशाखाभिरनेकम् ।
अभिनवकमलदलं सखि वितरति दयिते सामृतसेकम् ॥४३॥
दयिततमो बत कोककलाशत कोविदतयाऽनुरूपम् ।
तानि दलानि निधाय निधाय पिपासति किञ्चन रूपम् ॥४४॥
इति विपिने राधाकरकमलावचितदलव्रततीके ।
अमरहिताय मनो रमतां मम राधाकेलिप्रतीके ॥४५॥

पश्य, पिपासू पिबतो रूपम् ।
रश्मितता लोचनकलसी कलयति नु मिथो रसकूपम् ॥४६॥
गौरं श्यामलमङ्गमनङ्गाहितनवकान्तिविलासम् ।
कोमलकमलदलैः कृतशयने स्थितमाश्रितपरिहासम् ॥४७॥
प्रणिहितसरसनीलमणिरिव सखि मृदुला काञ्चनवल्ली ।
मत्तमधुव्रतपीयमानमधुरिव वा मल्लिमतल्ली ॥४८॥
भुजकलहं कुरुते नवमिथुनं नीविनिबन्धनिमित्तम् ।
चपले प्रार्थिनि कलयति मानं सहजमृदुलमपि चित्तम् ॥४९॥

इति मोहितमपि विविधविहारैरुपहृतनवसुखपुञ्जे ।
श्रमरहिताय मनो रमतां मम राधाकेलिनिकुञ्जे ॥५०॥

अङ्गे श्रीफलसुभगे बन्दे ।
रोषजहुङ्कृति-गर्वजभ्रूकुटि-वर्धितदयितानन्दे ॥५१॥
अतिसुकुमारितया दयितामिह नमयति लोचनभङ्गः ।
परमनयोरधुनापि भरो विधुनोति न तां नवरङ्गः ॥५२॥
त्रिभुवनमोहनमन्मथमोहन-मोहनदत्तविमोहे ।
केलिसरोवरकनककमलकुड्मलतुलयाप्यकृतोहे ॥५३॥
इति विपिने रत्नकल्पतरोरपि फलयोस्तयोरभिज्ञे ।
श्रमरहिताय मनो रमतां मम राधाकेलिसमज्ञे ॥५४॥

सुखमधु लोचनचषकनिपेयम् ।
जयश्रीहितहरिवंशमहाप्रभुकान्तपदावलिमेयम् ॥५५॥
कोटिककोककलाकलितं ललितादिसखीजनधेयम् ।
पमोदारतया परिवेषितमेतदशेषमचेयम् ॥५६॥
परमरहस्ये विपिने युक्तिप्रणयबलेन प्रकाशे ।
श्रमरहिताय मनो रमतां मम राधाकेलिविलासे ॥५७॥
इत्थं धामनिवासिमात्रकृपया सौभाग्यमेतद्गता
यद्वा कान्तरुषा नखक्षतपदं प्राप्ता हसन्त्यो लताः ।
आहोस्विन्नवलाङ्कुरोद्गमधिया ताः पल्लवैर्वञ्चिताः
किंवा प्रस्तुतसाम्यहारिमनसा रागादिवोल्लुञ्चिताः ॥५८॥

कान्तालङ्कृतये ऽथवा नवमरुत्सेवाक्षणादित्सया
काचित्पश्यतु मेति वा प्रियसखी पश्येदिदं द्वारतः ।
कान्तो मत्प्रतिबिम्बधारिषु न वा भ्राम्येद्दलेष्वित्यसौ
शय्यां वा नवलां रहो रचयितुं तान्याचिनोति स्वयम् ॥५९॥

वसतो दयितौ श्रीहितगीतौ ।
अतिशयरम्ये मणिमयहर्म्ये ललितादिकपरिवीतौ ॥६०॥
कनकरचितनवभित्तिखचितवरमरकतमणिरमणीये ।
सुरभिततैलभरितकलधौतजदीपप्रभाकमनीये ॥६१॥

नवनवरोचनसहृदयलोचननवचषकाचमनीये ।
अमरहिताय परमकरुणास्पदभावुकजनगमनीये ॥६२॥

अङ्गनमङ्ग निचित बहुपुण्यम् ।
शारदचन्दिरसुन्दरचन्द्रिकया सचमत्कृति गुण्यम् ॥६३॥

विलसति मिथुनं यत्र सखीशतपरिवृतमतिशयधन्यम् ।
रूपसरोजनिताद्भुतकाञ्चननीलकमललावण्यम् ॥६४॥
तत्क्षणभूरिविलक्षणशोभालोभितनिजनैपुण्यम् ।
रासरसासवसेवनमभिलषति प्रविततकारुण्यम् ॥६५॥

नीलं रासमुपक्रमतामिति गौरं नवतारुण्यम् ।
अमरहिताय विराजति हर्म्ये पश्यति पौनःपुन्यम् ॥६६॥

श्यामः प्रविशति रासनिकुञ्जे ।
पत्रितमञ्जुलनीलमणौ सखि पुष्पितहीरकपुञ्जे ॥६७॥
परितो हेमलतालिङ्गितनव श्याम तमाल समूहे ।
शीतलमन्दसुगन्धसमीरणशालिनिदेवदुरूहे ॥६८॥
वेपितलतिकाशतशतह्लदिनीपूरिततरुघनजाले ।
बहुधा गायति वादयति प्रियसहिते सजनीमाले ॥६९॥

अथ सानन्दभरं हितसजनी सा निजप्रभुमानेतुम् ।
अमरहिताय सुचलिता त्वरिता मुदितामप्यनुनेतुम् ॥७०॥
अद्य ममानुनयं शृणु राधे ।
चल मृगनयने प्रमदे मज्जय प्रियतमहृदयमगाधे ॥७१॥
सरससखीमण्डलमधिगायति कोकिलकलवचनेऽयम् ।
किमपि तवैव मधुरविरुदावलिवलितं मञ्जुलगेयम् ॥७२॥

अभिनयकोककलानिपुणासि कलितलयतालप्रवीणा ।
रासरहस्यमयी हरिहारिविहारविसारनवीना ॥७३॥
नवलकिशोरि, सुरूपनिधे नभसेऽपि मनागवधेयम् ।
गलति प्रतिपलमपि रजनीकलचन्द्रिकया कलितेयम् ॥७४॥
जयश्रीहितहरिवंशमहाप्रभुवचनश्रुतिसमकालम् ।
रमणसुखायतनं चलितातुरगतिरङ्कितपदमालम् ॥७५॥

हन्त न विपिनवर्त्म यात्यन्तम् ।
त्वरितैस्त्वरितैर्गच्छति चरणैरर्धधृतैरत्यन्तम् ॥७६॥
अर्धचन्द्रचक्राङ्कुशखण्डितमपि मण्डितमतिमात्रम् ।
शक्तिगदाभञ्जितमपि रञ्जितमिव करुणानवपात्रम् ॥७७॥
नूनं रेणुकणोऽपि मदीयो भवतु न विना पदाङ्कम् ।
इति सकलं विपिनं चलदग्रे कलयति चरणशशाङ्कम् ॥७८॥
इह विपिने राधापदपङ्कजलसदङ्कस्थलकान्ते ।
अमरहिताय मनो रमतां मम राधाकेलिनिशान्ते ॥७९॥

कथमपि विपिनवर्त्म गतमन्तम् ।
उत्कं वा सखि रासनिकुञ्जं शरणमितं चरणन्तम् ॥८०॥
सरिगमपधनिषु 'राधे-राधे' इति गायति घनश्यामः ।
मुहुरथ मणिमयहर्म्यगामिपथमभिपश्यति नवकामः ॥८१॥
सरभसमागतवतीं प्रियामथ याति रहसि रतिकुञ्जे ।
मज्जति मज्जयति च दयितां परिरम्भणमुखसुखपुञ्जे ॥८२॥
अहह विशुद्धं प्रेमविहारं वीक्ष्य मदनकुलकोटिः ।
नभसि परिव्रजतीव कराश्रितहिमकरनवलकरोटिः ॥८३॥
इति कुञ्जे राधापरिकल्पितहावभावरमणीये ।
अमरहिताय मनो रमतां मम राधाकेलिवनीये ॥८४॥
अथापि वल्लरी स्थली खगावली च सर्वथा
न बुध्यते विनिन्द्यते स्वनामतश्च शोभते ।
लघीयसी तनीयसी विभाव्यतेऽनुकम्प्यते
सुनीतिविज्ञतां प्रति प्रणीयते च कार्यतः ॥८५॥

तथाहि यूथयूथनायिकासु तासु भूरिशः
स्थितासु सेवया कृतार्थतामितासु मानसे ।
सदैव दास्यलालसे च नालसे प्रिये स्थिते
न बुध्यते स्वयं प्रिया कथं चिनोति पल्लवम् ॥८६॥

'अये सखीमुखेन काव्यकल्पनार्थमेव किं
तमालमालिलिङ्क्षिषुर्न लज्जसे सुवल्लरि ।

इति स्वगामिवल्लरीपदं प्रियानुगं नवं
तमालनाम चिन्तयन्तिका प्रिया विनिन्दति ॥८७॥

इयञ्च वल्लभैकदेश'वल्ल'मित्युपाश्रिता
विभाति राधिकांश'री'मिति स्वनामतः श्रिता ।
तथा किशोरकामिनीचितद्विपल्लवा यत-
स्ततो लघीयसी तनीयसीति तसा स्फुटं मता ॥८८॥

अहो महोदया प्रिया स्वपाणिना चिनोति याः
स्थितानुकम्पनीयता न तासु किं विशेषतः ।
तथाविधैः स्वचेष्टितैः प्रियाकरस्पृशासु किं
स्फुटां सुनीतिविज्ञतां न वेत्ति नीतिविज्ञता ॥८९॥

कृपां विना मृदुस्थली लसत्पदाङ्किकात्र का
स्वभूरिभाग्यवैभवाभिमानिनीति नोह्यते ।
प्रियं प्रति प्रयान्तिकाऽऽतुरातुरं च कामिनी
विलम्बहेतुलम्बमानतद्वपुर्विनिन्दति ॥९०॥

मधुद्विषो 'मधु' ध्वनिं तथा च राधिकादिमं
'र' वर्णमाश्रिता स्थली स्वनामतोऽपि शोभते ।
म्रदीयसी प्रिया च यां पदाङ्कदायिनी गता
ध्रुवं तनीयसी लघीयसी च सा बुधैर्मता ॥९१॥

स्वसौभगाङ्करेखिकाभिराभिरङ्कयन्तिका
नयत्यमुं नितान्तमात्मनानुकम्पनीयताम् ।
इयं स्थली बलीयसीं स्वलालसां च साधय-
त्यतो वदामि तद्गतां न किं सुनीतिविज्ञताम् ॥९२॥

कृपां विना खगावली कुहूपियूमुखै रवैः
प्रियायशांसि कीदृशानि गायतीति वेद कः ।
समागमान्तरोक्तत‌द्रहोगिरां निवेदिनी-
मिमां प्रिया धिगित्यनेकधा न किं विनिन्दति ॥९३॥

इयं च मत्तशब्दतः किशोरयोर्निजस्थितिं
खकारतो गकारतश्च तां तयोः श्रुतिश्रुतिम् ।

वकारतश्च तद्वनं व्रवेति लीति लीलया-
न्वितौ ततोऽतिशोभतेऽभिधानतोऽपि साधिकम् ॥९४॥
रहस्यवेदनेन मञ्जुकुञ्जमध्यगामिनी
ध्रुवं तनीयसी लघीयसी च सेति मन्महे ।
तथानुकम्पनीयता बलेन साधु साधिता
सखीजनैः प्रियेण च प्रियायशोऽधिगायनी ॥९५॥
सखीयशांसि गायता प्रियौ प्रसादितौ यदि
प्रियौ प्रगायता जनेन चेदिमाः प्रमोदिताः ।
तदार्धलाभ एव तेन पण्डितेन लभ्यते
सुनीतिविज्ञयाऽनया त्वनेकधा प्रिया स्तुता ॥९६॥
कावपि मिलतो हीरकजालपरीतनिकुञ्जे ध्येयौ ।
जालान्तरवीक्षकललितादिकलोचनचषकनिपेयौ ॥९७॥
कुञ्जप्रतिहारस्थितमणिमयवेदिविराजिहितालो ।
करुणापात्रसखीश्रुतश्रुतिमुखगोप्ययशोभरमालौ ॥९८॥
श्रीव्रजसुन्दरयोरतिमोहनयोरमृतोपमशीलाम् ।
अद्य विलोकय ललिततया कलितामिह कामपि लीलाम् ॥९९॥
श्यामलगौरभुजाग्रसमाश्रितगौरश्यामलपाणी ।
रूपतिरस्कृतकनकलताहितनवलतमालप्रवाणी ॥१००॥
नवलनिकुञ्जमहारसपुञ्जे गुञ्जितमधुपसमूहे ।
किं च विकस्वरसुस्वरकूजितकोकिलबर्हिसमूहे ॥१०१॥
प्रमुदितकामनिवेदितदक्षिणवामसमस्तशरीरौ ।
प्रतिपलनवलोभूतप्रभूतनिभूतसुरतरणवीरौ ॥१०२
जय श्रीहितहरिवंशमहाप्रभुलोचनचषकनिपीतौ ।
श्रमरहितस्य मनो रमतामिह राधाकेलिस्फीतौ ॥१०३॥
प्रियमभि करुणार्द्रा यद्यदेवेहतेऽसौ,
मधकरनिकरोऽयं तत्तदोमित्युपास्ते ।
अथ च चरणमञ्जीरजीरस्वनं जायमानं,
स्फुटमनुकुरुतेऽसौ दक्षिणो हंससंघः ॥१०४॥
कुहयति मुहुरेषा यच्च कान्तं सखीभि-
स्तदिह 'कुहकुहो' इत्युद्गिरन्ते मयूराः ।

श्रततिवदति चञ्चे प्राणनाथे प्रलापं
स्तमनुवदति 'क्वाहो, क्वाह' इत्यादिवाचा ॥१०५॥

यदपि च कुवतेऽसौ चारु रत्यन्तरेषु,
ह्वयति च मृदुवर्णैः प्राणनाथं सुखे ।
इति कुहुकुहुरावं कुर्वतां कोकिलानां
निदधतु मतिमन्तो भावनामन्तरङ्गे ॥१०६॥

गलितमदनशङ्के कोकते कान्तमङ्के,
लघुलघु रवतेऽसौ निर्जितव्यालहंसा ।
किमपि च कवते यत्प्रेमणि प्रेमपात्रे,
तदहह 'कुकरुङ् कुङ्' रौति सा कुक्कुटाली ॥१०७॥

यदपि च खगपोतान्वत्सलात्वातिरेका
स्स्वयमपि गुडतेऽसौ, रौति वा शिक्षितुं तान् ।
नरगिरि गवते सा व्यक्तवाचो विधातुं
तदहह गुडरुङ् गुङ् रौति पारावतौघः ॥१०८॥

इति प्रियमनुकम्पा, पारमौदार्यमुच्चं,
प्रणयपरिणतिश्च प्रेम्णि वा मत्ततेयम् ।
परमचतुरता च प्राणनाथानुरक्तिः,
प्रसृमरप्रियभोगे मन्दमन्दा गतिश्च ॥१०९॥

अपि किल कवितादेः शक्तिरत्यन्तरूढा,
विहगसमुदयेनागीयते हन्त नित्यम् ।
तदिह किमपि कुर्वन् सर्वथा तद्विहार-
विपिनमधिवसन् सन् मोदते सर्वकालम् ॥११०॥

अज्ञातत्वं विशेषादिह भवतितरां मत्तपत्र्यावलीनां
वल्लीनां च स्थलीनामिति मम रमतां मानसं केलिवन्याम् ।
श्रीमद्राधाकृपाढ्यः कलितललिततत्पुण्यदृष्टिस्तदीय-
पादाब्जैकावलम्बी तदखिलकलनायां यथाऽहं क्षमः स्याम् ॥१११॥

'मत्कण्ठे किं नखरशिखया दैत्यराजोऽस्मि नाहं
मा मे पीडां कुरु कुचतटे पूतना नाहमस्मि ।

इत्थं कीरैरनुकृतवचः प्रेयसा सङ्गतायाः
प्रातः श्रोष्ये तव सखि कदा केलिकुञ्जे मृजन्ती ॥'
अस्मिन् श्लोके कनककशिपोः कंसदूत्याश्च कीर्त्या
केचिद्राधापतिमपि जगुः श्रीपतेरेव रूपम् ।
अन्ये दैत्येश्वरमिह तृणावर्तमाख्याय नन्द-
सूनुं वृन्दावनभुवि विदू राधिकावल्लभाख्यम् ॥११२॥
श्रीमद्वृन्दाविपिनकथया न्यक्कृतान्यप्रपञ्चे
त्वस्मच्चित्ते तदुभयमपि प्रौढतां नैव धत्त ।
किन्नामेदं कमलहृदयं कैरवान्तश्च काञ्चित्
प्रीतिं चन्द्रे सकलसुखदे भास्करे चाभ्युपैति ॥११३॥
राधावल्लभ एक एव विपिने द्वैरूप्यमालम्बते,
नानात्वं व्रजमण्डले कलयते विस्मारयन् स्वं रसम् ।
नित्यस्यास्य पुनर्द्विरूपकलना वानेकरूपस्पृशा
नित्यैवास्ति, तथापि सिन्धुलहरिन्यायेन भेदः स्फुटः ॥११४॥
नित्यं वृन्दावनभुवि मिथः खेलतो विस्मृतान्य-
सर्वोदन्तौ नवलनवलौ प्रेममत्तौ किशोरौ ।
तत्रताट्टग्विकटघटनाघट्टनं भावुकानां
कीराणां स्यात्कथमिव मुदे मञ्जुवाचामवाचाम् ॥११५॥
श्रीस्वामिन्या वचसि सहजा वक्रता कापि दृष्टा
स्पृष्टा कृष्णामृतमिति पदेनापि याग्रस्थितेन ।
ज्ञेयं दैत्येश्वर इति पदं तालपर्णीमतल्लघां
ध्येयः पथ्यार्थक इह बुधैः पूतनेति प्रयोगः ॥११६॥
इत्थं राधाविरुदमुखरा सा खगाली न जाने
केनार्थेनानुकृतवचना तादृशं प्राह मत्ता ।
वृन्दारण्याश्रयिणि तु मनस्याविरासीद्यदस्मिं-
स्तद्व्याख्यातं सुरभिवपुषो वक्रवाचः किशोर्याः ॥११७॥
कीरः श्रीमान् शुकमुनिरभूत्तस्य शिष्यास्तु कीरा-
स्तैः श्रीमद्भागवतपठनैर्रजितोऽरण्यवासः ।

'मत्कण्ठे किं नखरशिखये'त्यर्धपादावसाने,
स्वैरं प्राहुः सहसितमिमे 'दैत्यराजोऽस्मि नाहम्' ॥११८॥
'मा मे पीडां कुरु कुचतटे' त्यर्धमापूरयंस्ते
स्वातन्त्र्येण प्रणिहितगिरः 'पूतना नाहमस्मि' ।
इत्थं यद्यद्वदति विपिने प्रेयसा संगता सा
तत्तत्पश्चाद्विविधवचनं कल्प्यते चारु कीरैः ॥११९॥
नानाभावैरिति परिगतां वाचमुच्चारयन्ती
श्रीराधाया विरुदमगदद् वावदूका खगाली ।
माद्यन्ती सा स्वयमपि न यद्वेद किं नु ब्रवामि
धन्यैरन्यैरथ बुधजनैश्चीयतां कस्तदर्थः ॥१२०॥
कृष्णामृतं चल विगाढुमितीरिताहं
तत्कालमेव चलितास्मि समं भवत्या ।
श्यामं कृतार्थयितुमेव तवाभिसारो-
ऽस्तीति प्रियालि न दुकूलमपि त्वनैषम् ॥१२१॥
तद्यावदस्मि नवकुञ्जगृहाद् दुकूल-
मुद्वर्तनादि च ससत्वरमानयामि ।
तावल्लसद्धरितमालपथेन सान्द्र-
च्छायेन याहि यमुनामनु निर्जनेन ॥१२२॥
इत्यर्थिता मम तथेति निदेशदायिन्या-
त्मेश्वरी मम गता कतमां दिशं नु ।
हे हे लताः कथयत प्रथिताः स्थ यूयं
तस्याः कृपास्पदतया सजनीजनेषु ॥१२३॥
इत्थं लताः प्रियतमां प्रतिपर्यपृच्छ-
त्तासां सकण्टकवपूंषि च पर्यपश्यत् ।
राधाकरावचितपल्लववल्लरीका
एवं प्रियापथमिमां प्रति पर्यजल्पन् ॥१२४॥
अन्वेषणं विदधती व्रततीचयेषु
सेयं निकुञ्जभवनाङ्गणमध्यगच्छत् ।

तस्मिंश्च साऽनुयुयुजे विपिनस्थलानि
प्रातः स्वपाणिधृतमार्जनिमार्जितानि ॥१२५॥

हे हे स्थलानि निदिशन्तु भवन्ति मह्य-
मात्मेश्वरीमिह वने प्रविलीनमार्गाम् ।
यूयं तदीयकरुणावरुणालयस्या-
भङ्गैस्तरङ्गनिवहैः सुभगीकृतानि ॥१२६॥

आवेदिताभिरिति ताभिरपि प्रियाभी
राधापदाङ्कविलसन्मधुरस्थलीभिः ।
प्राकाशिषुर्यवलताकमलानि वामे
वामेतरे च रथपर्वतकुण्डलानि ॥१२७॥

पन्थानमेनमनुसृत्य पुनर्निकुञ्जा-
भ्याशे निशम्य मधुरं मधुरं स्वनन्तीः ।
पारावतान्यभृतसारसचक्रवाक-
दात्यूहबर्हिशुकतित्तिरिहंसपङ्क्तीः ॥१२८॥

हे हे खगावलि मनाग्विनयेऽवधेहि,
आत्मेश्वरीमिह वने मम मार्गयन्त्याः ।
मुग्धा गता क्व खलु मुक्तमदुक्तमार्गा
मत्स्वामिनीति वद तत्करलालितासि ॥१२९॥

इत्यर्थिता त्वकथयत् स्वरवेण तस्यै
सा तद्रहस्यविबुधाऽतिसुधारसेन ।
राधायशोमुखरमत्तखगावलीका,
राधा विहारविपिने रमते प्रियेण ॥१३०॥

## चतुर्दशः सर्गः

**कृष्णामृतं चल बिगाढुमितीरिताहं**
**तावत्सहस्व रजनी सखि यावदेति ।**
**इत्थं विहस्य वृषभानुसुते ह लप्स्ये**
**मानं कदा रसदकेलिकदम्बजातम् ॥१४॥**

राधेति नाम कथनं कथमस्तु दास्ये ?
इत्याह तन्नवलवत्सलसख्ययुक्तम् ।
अस्मिन् रसे हि युगपत्प्रतिपत्तिरिष्टा
दास्येन सख्यसखवत्सलभावनायाः ॥१॥

उत्थापिता प्रियसखी त्वपराह्णकाले
ग्रीष्मर्तुसेवितनिकुञ्जनिकेतनान्तः ।
श्रीभानुजाजलविहारमना अवोचत्
कृष्णामृतं चल विगाढुमिति प्रियालीम् ॥२॥

यद्वा प्रगे प्रकटरात्रिविलासलक्ष्मा
व्यत्यस्तभूषणपटाऽलसजृम्भितास्या ।
उद्गीर्णसौरभसुगन्धितवासगेहा
नित्यान्तरङ्गजनसम्मददायकेहा ॥३॥

सौभाग्यभूमिरतिभूमिगताङ्गशोभा
तूर्णं मयोपगतयाऽथ समीक्षितोभा ।
सर्वासु तद्रतिरहस्यकलास्वभिज्ञां
मामाह यत् "सवयसो लघु वञ्चनीयाः' '॥४॥

इत्याज्ञया रविसुतातटमानयं तां
नव्यैश्च पुष्पनिकरैः समभूषयं ताम् ।
अभ्यागतास्वथ सखीष्वदिशत्तु सा मां
'कृष्णामृतं चलविगाढु'मिति स्मितेन ॥५॥

नित्यं कृपाद्रवितचित्ततया कठोर-
शब्दश्रुतिं न सहते किल या कथञ्चित् ।
सा सर्वलोकभयकारियमस्वसेति
प्रत्यायकं वदतु किं यमुनेति नाम ॥६॥

तस्याः समेष्वपि मनोहरमेतदेकं
नामानुरूपमिति तामयमाह कृष्णाम् ।
यद्वा कृषिः सदिति वक्त्यथ निर्वृतिं ण—
स्तस्य प्रवाहवपुषोऽस्त्यमृतं विगाह्यम् ॥७॥

यद्वा मम प्रियसखी वृषभानुजायाः
सा भानुजास्ति, कथमस्तु न सापि कृष्णा ।
प्रीतिर्हि नाम नहि किञ्चन खण्डखाद्यं
यद्यत्र तत्र विपणौ क्रयविक्रयार्हम् ॥८॥

आस्यान्न निःसरतु निर्विशतान्न कर्णं
कृष्णेति वर्णयुगलादितरत्पदं मे ।
तन्नामरूपममृतं, मृतमन्यदेत-
त्तस्मात्तदेव भुवि ग्राह्यमग्राह्यमन्यत् ॥९॥

वाञ्छे कलिन्दतनयाजलमज्जनेऽसौ
कृष्णामृतं चल विगाढुमिति प्रयुङ्क्ते ।
तत्तद्बहिः स्फुरति तिष्ठति यद्यदन्तः,
कस्तूरिकासुरभिरत्र निदर्शनं नः ॥१०॥

सत्यं प्रियं हितमिदं सखि भाषसे त्वं
निह्नोषि मन्न किमपीति किलास्मि धन्या ।
तावत्सहस्व रजनी भृशरञ्जनी तु
नानाविलासजननी सखि यावदेति ॥११॥

उत्कण्ठितासि तरले प्रियसङ्गमाय,
भानुस्तु पश्यति पुरो वृषभानुमित्रम् ।
निर्याति दुर्भगमिदं दिनमालि तूर्ण-
मायाति सौभगमयी च निशा क्षणेन ॥१२॥

इत्थं मया विहसिता वृषभानुपुत्री
लीलाम्बुजप्रहरणेन कृतार्थयन्ती ।
वक्ष्यत्यये किमिति कल्पयसे कवित्वं
श्लेषप्रिये किल धृतासि न लज्जयेति ॥१३॥

इत्थं रुषापि मयि सा स्मयमानवक्त्रा
वक्रभ्रुवं दृशमथ प्रणिधाय लोलाम् ।
दासीमपि प्रियसखीव्यवहारदाना-
न्मानं कदा नु गमयिष्यति मानिनी माम् ॥१४॥

सत्यं न कापि भविताऽत्र मया समाना,
मानास्पदं प्रियसखीति किमत्र वच्मि ।
साक्षादयं प्रियतमोऽपि कदाचिदित्थं
जातो न वा रसदकेलिकदम्बपात्रम् ॥१५॥

यद्वा मया विहसितं प्रथमं तु पश्चा-
त्स्नातुं कलिन्दतनयामभि नेष्यते सा ।
प्रस्तोष्यते च पथि केलिकदम्बवाटी
यत्र प्रिया प्रियकदम्बकमाविशेत्सा ॥१६॥

पुष्पेषु दत्तनयनां सहसा विशन्तीं
लीनस्तु तत्र दयितः परिगृह्य दोर्भ्याम् ।
कृष्णामृतं तदवगाढुमितश्चलन्तीं
कृष्णः सुधानिधिमिमामवधाक्ष्यते सः ॥१७॥

अन्तर्गता पुलककेलिकदम्बभूतौ
तौ सेवितुं तु वसनाञ्चलजैर्मरुद्भिः ।
सन्ताडिता दयितया तु कदम्बपुष्पैः
सम्मानिता च दयितेन कदा भवेयम् ॥१८॥

मानं गता रसदकेलिकदम्बजातं,
नीत्वा प्रियौ हितसखी यमुनां प्रतस्थे ।
तत्रानयोस्तु ललितादिसखीजनेन
साकं चिरं जलविहारमहोत्सवोऽभूत् ॥१९॥

अन्योन्यं प्रति सिच्यमानमनयोः कृष्णामृतं मूर्तिमत्
प्रेमाभून्नयनानुरागजनकं कम्पादिसम्पादकम् ।
आलीनां पुनरञ्जलिप्रणिहितं साक्षादभूत्तद्धितं
येन च्छन्नमिदं द्वयं विलसति स्माद्धा परं तन्मयम् ॥२०॥

मत्तौ कावपि यत्किशोरकरिणौ विक्षेपसंहारिणा
स्वेन स्वेन करेण यामुनजलैरन्योन्यमासिञ्चतः ।
तद् भृङ्गावलिकेव किन्न रसिकालीपंक्तिरेषा तयो-
र्नूनं दानरसं निषेवितुमना भूयः परिक्रामतु ॥२१॥

कालिन्दीसलिले प्रियाकुचतटीकस्तूरिकापङ्किले
सावर्ण्येन सुनागरः क्षणमसौ यन्नाम लीनोऽभवत् ।
क्वासि क्वासि मम प्रियेति समभूत्क्षामाक्षरोल्लापिनी
दृष्ट्वा च स्मितशोभि तन्मुखनवाम्भोजं बभौ सान्त्वितम् ॥२२॥

मा नामैष मम प्रियो मुहुरपि श्यामे जले यामुने
लीनः स्यादिति सा बहिर्निरसरत्कान्तालिवृन्दानुगा ।
कूले चालिजनो यथाधिकृति तद्युग्मं नवैरम्बरै—
र्भूषाभिर्नवलेपनैश्च समलञ्चक्रे निकामोज्ज्वलैः ॥२३॥

कान्ताकान्तवपुःश्रिया हृतमनाः कान्तः पुनः कुत्रचि-
त्त्वेकान्ते नवकुञ्जमन्दिरप्रतीहारे स्थितो दीनवत् ।
नत्वाकारयदात्मनः प्रियतमामाराधनीयां परं
वाचः प्रार्थनया सदा नहि नहीत्याभाषितुं शिक्षिताम् ॥२४॥

किञ्चालयोऽपि विदिताखिलवेदनीयाः
सत्यः प्रियां नतमुखीमतिलज्जयेयुः ।
आकारमात्रविहितार्थनया तया च
कार्यं ध्रुवं किमपि तादृशमिङ्गितं स्यात् ॥२५॥

## पञ्चदशः सर्गः

पादाङ्गुलीनिहितदृष्टिमपत्रपिष्णु
दूरादुदीक्ष्य रसिकेन्द्रमुखेन्दुबिम्बम् ।
वीक्षे चलत्पदगतिं चरिताभिरामां
झङ्कारनूपुरवतीं बत कर्हि राधाम् ॥१८॥

नूनं केलिकदम्बशीतलतले वृत्तो विलासोऽधुने-
त्यत्रैवास्मि कथं पुनः प्रकटयेऽसन्तोषमन्तर्गतम् ।
इत्येष स्वपदाङ्गुलिप्रणिहिताक्षत्वेन लज्जाभरं
कञ्चिद् व्यञ्जयति 'स्वतो हि महतां लज्जातिगुर्वी भवेत्, ॥१॥

वामा वामतया ममाभिलषितं नैवाशु सम्पूरये-
न्मामेषा भृशचञ्चलं च कलयेदित्यस्ति सापत्रपः ।
तेनायं रसिकेन्द्रतामुपगतः स्वोत्कर्षविस्मारणात्
सेवाधर्मगुणानुगाच्च विगतस्तत्राप्यसाविन्द्रताम् ॥२॥

सेवायां परमं महत्त्वमयतः कीर्त्या सुविस्तीर्णया
भूयो ह्लादकचन्द्रिकातुलितया स्वैरस्फुरन्मण्डलम् ।
सौम्यं भूरि ममत्वपात्रसुषमाविस्तारि सौशील्यसद्-
गाम्भीर्यादिगुणोज्ज्वलं मुखमिदं संयाति तत्रेन्दुताम् ।।३।।

एतादृग्वदनेन्दुमण्डलमहो दृश्यानुभावान्तरा-
देशात्साऽनतिदूरतोऽवदधती खेदादिकम्पादिकम् ।
दृष्ट्वा हा किमसाविहैव दिवसे भूयश्चकोरायते
नीचैः पश्यति मां रहः कलयितुं कस्मादिव ध्यायति ।।४।।

इत्थं ध्यानपरा स्वनूपुरजया झङ्कारवाचा प्रियं
क्षेमं पृच्छति, वक्ति वा स्फुटयितुं प्रेष्ठे जने स्वाशयम् ।
गत्या हंसगजादिगञ्जनिकया तस्याभिलाषास्पदं
सर्वं दातुमिवातुरा चलति सा पद्भ्यां चलाभ्यां मुहुः ।।५।।

लावण्यस्फुटलालिलात्वललितश्रीमत्कराभ्यां समी-
कुर्वाणा निजकञ्चुकीं कमपि सा शोभाभरं बिभ्रती ।
नासामौक्तिककर्णकुण्डलमणिग्रैवेयकेयूरका-
दीनां कान्तिभरेण कञ्चन चमत्कारं परं विन्दति ।।६।।

भ्रूभङ्गस्मितलोचनान्तवलनैः श्लाघ्यैः शिरोधूननं
रोमाञ्चं बत वेपथुं सचकितं चालीजने कुर्वती ।
प्रेयःसम्मुखखेलनादिसदृशं कौतूहलं तन्वती
तैस्तैर्भावुकचेतसः प्रियतरैश्चित्रैश्चरित्रैरयम् ।।७।।

आराध्यस्य जगत्त्रयेण निलयस्यैश्वर्यमाधुर्ययो-
र्ब्रह्माद्यैरपि नानुभूतमहसः श्रीश्यामसिन्धोरपि ।
राधाऽऽराध्यपरप्रमोदनिवहाकारा सुसिद्धिः परा
सेयं विस्मृतमीलनस्य नु कदा मार्गं दृशोर्यास्यति ।।८।।

केनापीति कृतेऽर्थने नहि नहीत्युक्तं स्मरंस्तद्ध्रिया
तूष्णीमेव पदाङ्गुलीषु निदधे दृष्टिं प्रियो दीनवत् ।
सेयं याचकरीतिरस्त्यतितरां दातुर्मनोद्राविणी—
त्यात्मोपासकमण्डलेन बहुशो याच्ञाविधीन् शिक्षितः ।।९।।

श्रीराधे चरणस्तवैष शरणं निःशेषसिद्धिप्रद—
मित्येवाभिदधत्स मूकवचसा पादाङ्गुलीर्वीक्षते ।
भूयश्चैव निजाभिलाषकथने पट्वीं दधत्स्वाकृतिं
नैवायं त्रपते सखीजनपरीहासोपहासादपि ।।१०।।

दृष्ट्वे दृग्वदनेन्दुमण्डलमियं वाम्यान्नु वा कौतुकात्
पादाघातमिषान्नु वास्य चरणस्पर्शाभिलाषस्य वा ।
दास्यं वार्थयतो निराकरणतः सर्वालिवृन्दाग्रतो,
निर्लज्जस्य किलास्य तर्जनमिवाकार्षीच्चलत्पादतः ।।११।।

टङ्कारः स्मरकार्मुकस्य ललितापाङ्गोत्थितस्यैष किम्
क्रेङ्कारश्चरसारसस्य यदियं प्रेष्ठा चिरादेष्यति ।
ओङ्कारो नु कृतार्थयन्प्रियतमं कान्तानुगस्यालिनो
झङ्कारः पदनूपुरस्य हरतेस्म प्रेयसश्चेतनाम् ।।१२।।

तत्रापि स्मयमानमाननमिदं सम्भज्यमाने भ्रुवौ
प्रत्यङ्गोदयमानमङ्ग पुलकं, लोलायमाने दृशौ ।
इत्याद्यैश्चरितैरतिद्युतिमती चेतो हरन्ती, प्रियं
दीनं दीनतरीकरोति दयिता पादाङ्गुलीवीक्षिणम् ।।१३।।

सोऽयं नूपुरझङ्कृतैर्नु निकृतोऽप्यद्यापि मत्पादयो-
रेव न्यस्तदृशैव कञ्चन मनोभावं निजं व्यञ्जयन् ।
नोच्चैः पश्यति, नापि चान्तिकमसावायाति, केयं दशा ?
इत्यालोचनविस्मृतालिनिवहा, याता प्रियस्यान्तिकम् ।।१४।।

इत्थं भूरिकृपामयीं, स्वचरणैकध्यायिनां सत्वरं
यातां दृष्टिपथं महारसपरीवाहे वहन्तीमिव ।
नित्यं निश्चललोचनो हृतमनाः सौभाग्यभारोदये
कस्मिन्पुण्यदिने पुरः प्रकटितां पश्यामि राधामहम् ।।१५।।

## षोडशः सर्गः

इत्थं प्रवाहपतिता दयिता दयाया—
स्तं दीनताननमुखं दयितं विलोक्य ।
विस्मारिताखिलसखीनिवहा निकुञ्जं
प्रत्येव नूपुररणच्चरणा प्रतस्थे ।।१।।

सख्यस्तु विस्मरतु नाम रसातिरेके

ऽस्मान् स्वामिनी नतु वयं विजहाम एनाम् ।

इत्थं मिथो विहसिता अनुजग्मुरार्यां

कान्तिं करा इव सरोजविकासयित्रीम् ॥२॥

प्रेयान् प्रियाभिगमनेन गतः प्रमोदं,

ताभिश्च भूरिहसिताभिरितोऽतिलज्जाम् ।

नानाविधाभिरपि केलिभिरन्तरालै-

कान्तोपलब्धदयिताभिरहो निनाय ॥३॥

स्वस्वाधिकारमनुरुध्य यथार्हसेवा-

सौख्यानि तावधिगतौ सजनीकृतानि ।

यातासु तासु दयितौ शयने निवेश्य

सौयानि तावुपययू रजनीकृतानि ॥४॥

प्रातस्तु सर्वसुखसाक्षितरापि कान्तां

पप्रच्छ सा हितसखी कुशलं हसन्ती ।

दास्याय चान्तरभिलाषरसं सृजन्ती,

राधामुवाच ललिताशयलोभनीयम् ॥५॥

**'उज्जागरं रसिकनागरसङ्गरङ्गैः**

**कुञ्जोदरे कृतवती नु मुदा रजन्याम् ।**

**सुस्नापिता हि मधुनेव सुभोजिता त्वं**

**राधे कदा स्वपिषि मत्करलालिताङ्गी ॥१६॥**

दृष्ट्वैव लोचनविभामयि भामिनीमां,

सम्भावयामि निशि जागरणं भवत्याः ।

रोषारुणत्वमनयोस्तु विकल्पयन्ती

पृच्छामि किञ्चिदिति सूचय ते'नु'शब्दः॥६॥

आराधनीयचरणासि किल त्रिलोक्या

आराधनीयचरणस्य परस्य पुंसः ।

बाल्यात्प्रभृत्यथ मया कृतलालनासि,

राधे ततो न मम किञ्चन गोपनीयम् ॥७॥

त्वं स्नाप्यसेऽनवरतं मधु भोज्यसे च
शेषे च लाडमयि मत्करलालिताङ्घ्रिः ।
उज्जागरेण शिथिलीकृतविग्रहा तु
संवाहिता स्वपिषि हन्त कदा मयैव ।।८।।

सख्येन नर्मसु [illegible] त्वान्तरङ्गा
वात्सल्यतश्च कृतपालनलालनासि ।
संवाहनं चरणयोः करवाणि यत्तन्
मह्यं स्वदास्यमिह देहि निकुञ्जदेवि ।।६।।

जाने रसात्मनि किल त्वयि सोऽनुरक्तः
स्वादे रसस्य निपुणोऽस्तितरां प्रियस्ते ।
प्राणाधिकप्रियतमः स रसज्ञतां स्वां
दासीबुभूषुरितरां नितरां व्यनक्ति ।।१०।।

सङ्कल्पमात्रपरिकल्पितनैकलीलो
नानाकलासु कुशलः कलिताशयोऽयम् ।
जानाति हन्त यतनेन तु येन येन
यो यो रसो नवनवाभिरुचिप्रदः स्यात् ।।११।।

इत्थं रसो रसिकतामुपयाति योऽयं,
यत्कौशलं कुशलतामिदमत्र धत्ते ।
तत्तेन किं न भवती नवरङ्गमीया-
दम्लेन यात्यरुणतां यदियं हरिद्रा ।।१२।।

शृङ्गारः किल मूर्तिमान् स रसिकः श्यामो रतेराश्रयः,
साक्षाद् वीररसश्च काञ्चननिभा त्वं नित्यमुत्साहिनी ।
चित्रं तद्द्वयसङ्गजेऽप्यरुणिमा रङ्गे समालोक्यते,
भूयश्चित्रमिदं त्रयस्य मिलने संराजते पीतिमा ।।१३।।

त्वन्मानात्प्रतिभाति भीत इव वा कृष्णो भयस्याश्रय-
स्त्वं चाश्चर्यमयीति मेऽङ्ग तरसः पीतप्रभा भाससे ।
चित्रं तदद्वयमेलनेऽपि धवलो हासः समुज्जृम्भते-
ऽत्याश्चर्यं धवलात्ततोऽरुणतरो रागोऽयमुत्पद्यते ।।१४।।

मद्वा तदद्वयसङ्गमेन जनिता हासप्रमोदादभुता,
भीतिप्रीतिसहर्षवीरकरुणाः स्वाभाव्यकौतूहले ।
इत्याद्या विविधा अभङ्गुरतया रङ्गा ग्रनङ्गोदये,
ये जाताः, परिकल्पयामि मनसा तांस्तान्मुदं बिभ्रती।।१५
रङ्गानामुदयाय साधु रजनी जातेयमाधारभू-
र्यस्यां ते प्रतिबिम्बिता नु मुकुरे तारास्तमश्चन्द्रमाः ।
कुञ्जस्योदर इत्यहो विगलितप्रत्यूहमभ्यन्तरे,
शोभावर्णविचित्रकोमलतया स्पष्टच्छटा सौष्ठवे ।।१६।।
को जार्गति कियच्चिरादिति नहि ज्ञातं रसानन्दतो
हर्षोद्रेककरैर्विलासनिकरैरेवोदितं यद्दिनम् ।
पर्याप्तेतरतद्विलासविभवोल्लासैकनिष्ठाभृतः
कालस्यापि सदानुकूलतरता सेवासु विज्ञायते।।१७।।
माधुर्यातिशयेन लोकवदिमा लीला दधन्ते द्युतिं
याथार्थ्यं तु न वेद वेदभगवान् मूकीभवंस्तास्वयम् ।
एकस्मिन्वपुषि त्रितां कलयता स्वाद्यो रसोऽयं भवे-
न्नैषां वास्तविकीं भिदामभिदधुर्विज्ञा रसज्ञोत्तमाः।।१८।।
ग्रस्मिन्नागरसङ्गमे नवनवा लीला ध्रुवं जज्ञिरे
तासां त्वं सुकुसारतैकनिलया नार्हा ध्रुवं कर्हिचित् ।
इत्येवं दययातिवत्सलतया युक्तेन सख्येन सा,
ध्यायन्ती परमप्रमोदकलितामूचे मुदेति प्रियाम्।।१९।।
विख्यातोऽभिसरः स नागरवरो यत्नस्तथोज्जागरः,
कालोऽयं रजनी सुरङ्गजननी, देशोऽपि कुञ्जोदरः ।
किञ्च त्वं प्रमदास्यमन्थरमुदा मृद्वी शिरीषादपी-
त्येवं सिद्धिरभङ्गुरैव नियता रङ्गेषु पञ्चाङ्गिका।।२०।।
स्मारं स्मारममीषु पञ्चसु नवेष्वेकैकमप्युद्भटं
त्वां चानन्तसुखोपलालिततनूं भीतास्मि चित्तेऽधिकम् ।
ग्रद्य स्वामिनि ! कारयामि भवतीं कृष्णामृतैर्मज्जनं
कस्तूरीघनसारकुङ्कुमसुमश्रीखण्डजान्मञ्जनात्।।२१।।

औचित्यादिह मज्जनात्प्रथमतोऽप्युत्थापनं, वाससां
भूषाणां च समीक्षितिः, शुभमयं नीराजनं, मञ्जनम् ।
इत्याद्याः सकलाः स्वपाणिकलया सेवाः प्रियायाः कृता
अन्याभिश्च सखीभिरेवमखिलाः क्लृप्ताः प्रियस्यापि ताः॥२२॥

आनन्दद्रवरूपयामुनजलैः सम्यक्प्रिया स्नापिता
वासोभिः कुसुमैश्च भूषणगणै रागैश्च विभ्राजिता ।
पश्चान्माक्षिकवन्नितान्तमधुरैर्भोज्यैररण्योद्गतै-
स्तैस्तैर्वा परमाधिदैविकसुधावृक्षोद्भवैर्भोजिता ॥२३॥

स्तावं स्तावमहं रुचिं नवनवामुत्पाद्य चोत्पाद्य ते
भूयस्तत्परिवेषयाम्यलमिति श्रुत्वा त्वदाज्ञामपि ।
सर्वास्वप्यहमेव याम्यधिकृतिं सेवासु नित्यं तवे-
त्यर्थं द्योतयते निरर्थकमिव ह्येवेति शब्दद्वयम्॥२४॥

भूयश्चाचमनं सुगन्धिमधुरं ताम्बूलमेलादिमत्,
सन्नीराजनमित्यनुक्तमपि तज्ज्ञेयं यदत्रोचितम् ।
सुस्पर्शे, भृशमुज्ज्वलेऽथ शयने मत्पाणिसंवाहिता-
नन्तश्रीलपदा कदा स्वपिषि हे दास्येकसञ्जीविनि॥२५॥

एता अङ्गुलयः प्रियेण गणिताः, पार्ष्णिः किलैषा मिता,
किञ्चाप्यस्यतलस्य तेन पठिताः, सौभाग्यरेखा नवाः ।
एते चाकलिता नखा मुकुरवच्छायां मुखस्येक्षितुम्,
स्पृष्टं च प्रपदं प्रियेण बहुधा मानापनोदेष्विदम्॥२६॥

इत्येवं प्रियलालनास्तुतिमहं गायामि मग्नान्तरा
सस्नेहं विनयामि नेत्रपलकैश्चाङ्घ्र्योर्विलग्नं रजः ।
त्वं प्रेमास्पदजीवनैकनिलयाऽनन्या गतिर्मे परा
नित्यं केलिसमुत्सुकापि सदये कृत्वानुकम्पां स्वपेः॥२७॥

उज्जागरं रसिकनागरसङ्गरङ्गैः
कुञ्जोदरे कृतवतीह मुदा रजन्याम् ।
सुस्नापितासि मधुना च सुभोजितासि,
राधेऽधुना स्वपिहि मत्करलालिताङ्घ्रिः ॥२८॥

मद्धा तद्द्वयसङ्गमेन जनिता हासप्रमोदाद्भुता,
भीतिप्रीतिसहर्षवीरकरुणाः स्वाभाव्यकौतूहले ।
इत्याद्या विविधा अभङ्गुरतया रङ्गा अनङ्गोदये,
ये जाताः, परिकल्पयामि मनसा तांस्तान्मुदं बिभ्रती॥१५

रङ्गानामुदयाय साधु रजनी जातेयमाधारभू-
र्यस्यां ते प्रतिबिम्बिता नु मुकुरे तारास्तमश्चन्द्रमाः ।
कुञ्जस्योदर इत्यहो विगलितप्रत्यूहमभ्यन्तरे,
शोभावर्णविचित्रकोमलतया स्पष्टच्छटा सौष्ठवे ॥१६॥

को जागर्ति कियच्चिरादिति नहि ज्ञातं रसानन्दतो
हर्षोद्रेककरैर्विलासनिकरैरेवोदितं यद्दिनम् ।
पर्याप्तेतरतद्विलासविभवोल्लासैकनिष्ठाभृतः
कालस्यापि सदानुकूलतरता सेवासु विज्ञायते॥१७॥

माधुर्यातिशयेन लोकवदिमा लीला दधन्ते द्युतिं
याथार्थ्यं तु न वेद वेदभगवान् मूकीभवंस्तास्वयम् ।
एकस्मिन्वपुषि त्रितां कलयता स्वाद्यो रसोऽयं भवे-
न्नैषां वास्तविकीं भिदामभिदधुर्विज्ञा रसज्ञोत्तमाः॥१८॥

अस्मिन्नागरसङ्गमे नवनवा लीला ध्रुवं जज्ञिरे
तासां त्वं सुकुमारतैकनिलया नार्हा ध्रुवं कर्हिचित् ।
इत्येवं दययातिवत्सलतया युक्तेन सख्येन सा,
ध्यायन्ती परमप्रमोदकलितामूचे मुदेति प्रियाम्॥१९॥

विख्यातोऽभिसरः स नागरवरो यत्नस्तथोज्जागरः,
कालोऽयं रजनी सुरङ्गजननी, देशोऽपि कुञ्जोदरः ।
किञ्च त्वं प्रमदास्यमन्थरमुदा मृद्वी शिरीषादपी-
त्येवं सिद्धिरभङ्गुरैव नियता रङ्गेषु पञ्चाङ्गिका॥२०॥

स्मारं स्मारममीषु पञ्चसु नवेष्वेकैकमप्युद्भटं
त्वां चानन्तसुखोपलालिततनूं भीतास्मि चित्तेऽधिकम् ।
अद्य स्वामिनि ! कारयामि भवतीं कृष्णामृतैर्मज्जनं
कस्तूरीघनसारकुङ्कुमसुमश्रीखण्डजान्मञ्जनात्॥२१॥

औचित्यादिह मज्जनात्प्रथमतोऽप्युत्थापनं, वाससां
भूषाणां च समीकृतिः, शुभमयं नीराजनं, मञ्जनम् ।
इत्याद्याः सकलाः स्वपाणिकलया सेवाः प्रियायाः कृता
अन्याभिश्च सखीभिरेवमखिलाः क्लृप्ताः प्रियस्यापि ताः॥२२॥

आनन्दद्रवरूपयामुनजलैः सम्यक्प्रिया स्नापिता
वासोभिः कुसुमैश्च भूषणगणै रागैश्च विभ्राजिता ।
पश्चान्माक्षिकवन्नितान्तमधुरैर्भोज्यैररण्योद्गतै-
स्तैस्तैर्वा परमाधिदैविकसुधावृक्षोद्भवैर्भोजिता ॥२३॥

स्तावं स्तावमहं रुचिं नवनवामुत्पाद्य चोत्पाद्य ते
भूयस्तत्परिवेषयाम्यलमिति श्रुत्वा त्वदाज्ञामपि ।
सर्वास्वप्यहमेव याम्यधिकृतिं सेवासु नित्यं तवे-
त्यर्थं द्योतयते निरर्थकमिव ह्येवेति शब्दद्वयम्॥२४॥

भूयश्चाचमनं सुगन्धिमधुरं ताम्बूलमेलादिमत्,
सन्नीराजनमित्यनुक्तमपि तज्ज्ञेयं यदत्रोचितम् ।
सुस्पर्शे, भृशमुज्ज्वलेऽथ शयने मत्पाणिसंवाहिता-
नन्तश्रीलपदा कदा स्वपिषि हे दास्येकसञ्जीविनि॥२५॥

एता अङ्गुलयः प्रियेण गणिताः, पार्ष्णिः किलैषा मिता,
किञ्चाप्यस्यतलस्य तेन पठिताः, सौभाग्यरेखा नवाः ।
एते चाकलिता नखा मुकुरवच्छायां मुखस्येक्षितुम्,
स्पृष्टं च प्रपदं प्रियेण बहुधा मानापनोदेष्विदम्॥२६॥

इत्येवं प्रियलालनास्तुतिमहं गायामि मग्नान्तरा
सस्नेहं विनयामि नेत्रपलकैश्चाङ्घ्र्योर्विलग्नं रजः ।
त्वं प्रेमास्पदजीवनैकनिलयाऽनन्या गतिर्मे परा
नित्यं केलिसमुत्सुकापि सदये कृत्वानुकम्पां स्वपेः॥२७॥

उज्जागरं रसिकनागरसङ्गरङ्गैः
कुञ्जोदरे कृतवतीह मुदा रजन्याम् ।
सुस्नापितासि मधुना च सुभोजितासि,
राधेऽधुना स्वपिहि मत्करलालितांघ्रिः ॥२८॥

इत्यर्थिनी हितसखी जगदे किशोर्या,
सन्त्यालि कीरशिशवो मम शिक्षणीयाः ।
संप्रार्थिता पुनरमीष्वपि शिक्षितेषु
प्रत्याह सन्ति लतिकाः सखि मेऽवचेयाः ।।२९।।

इत्थं पुनः पुनरपि प्रसिता कलासु,
कौतूहलाग्रहवती न यदाऽस्वपत्सा ।
सा तत्सुखेन सुखिनी तु सखी तदानी-
मूचे कदा स्वपिषि मत्करलालिताङ्घ्रिः ।।३०।।

नूनं त्वदीयचरणावुपलालयन्ती,
नानाविलासकुतुकान्युपवर्णयन्ती ।
मन्देतरां मुदमुदारतरे श्रयेयं
सम्भावनामिति करोतितरां हिताली ।।३१।।

आनन्दमग्नमनसा तु तदेह कुर्वं
इत्याकलय्य वदति स्वपिषीति वाक्यम् ।
अत्र प्रियानुचरतैव विवक्षितेति
श्रीराधिकास्वपनमात्रमिहानुयुक्तम् ।।३२।।

निद्राति किं प्रियतमा प्रियमन्तरेण
निद्राति वा प्रियतमोऽपि विना प्रियां सः ।
इत्यत्र नोक्तमपि तत्स्वपनं प्रकल्प्यं
सान्द्रेतिपद्यमनवद्यमिह प्रमाणम् ।।३३।।

## सप्तदशः सर्गः

इति मुहुरनुनोता स्वामिनी कुञ्जतल्पं
कथमपि तमनल्पश्रीयुतं स्वीचकार ।
करविधृततदङ्घ्री लालयन्ती हिताली,
सुललितमनवद्यं पद्यमेतज्जगौ च ।।१।।

**"वैदग्ध्यसिन्धुरनुरागरसैकसिन्धु-**
**र्वात्सल्यसिन्धुरतिसान्द्रकृपैकसिन्धुः ।**
**लावण्यसिन्धुरमृतच्छविरूपसिन्धुः**
**सा राधिका स्फुरतु मे हृदि केलिसिन्धुः ।।१७।।**

मतिकृतिनिपुणत्वं साधु वैदग्ध्यमाहु-
र्भवति मतिकृतं तद् बाह्यमाभ्यन्तरं च ।
स्वगतमिह किल स्याद्व्यक्तमाभ्यन्तरं त-
त्परगतमिह बाह्यं ज्ञातमाहू रसज्ञाः ॥२॥

कृतिकृतमथ सर्वाङ्गीणमेकाङ्गजं च
द्विविधमिति वदन्ति प्रायशोऽनेकरूपम् ।
बहुलमतिकृपाढ्यास्तत्तु जानन्ति केचित्,
वयमिह दिशमेव स्तोत्रतो निर्दिशामः ॥३॥

मतिगतनिपुणत्वं वक्ति 'पादाङ्गुलोति',
स्वगतपरगतस्य ापनज्ञानरूपम् ।
कृतिगतनिपुणत्वे तत् षडङ्गोपजातं
कवयति किल 'सा भ्रू नर्तने'त्यादिपद्ये ॥४॥

कथयति 'त्वयि श्यामे' त्यादि वाङ्मात्रजातं,
नयनगमपि 'दृष्ट्या यत्र' चेत्यादिपद्ये ।
इति बहुविधमेतद्राजते राधिकायां
तदियमभिहिताऽऽस्ते साधु वैदग्ध्यसिन्धुः ॥५॥

स्फुटमिदमनवद्यं पद्यमस्त्येकसूत्रम्,
अतिशयसरसस्यालौकिकस्य स्तवस्य ।
अविकलमिदमीयं वर्तते भाष्यमेतत्,
सकलमिति तु जल्पन्यामि सङ्कोचमन्तः ॥६॥

इष्टेष्विष्टा सहजपरमाविष्टता रागनाम्ना,
धारावाही कुशलरसिकैर्गीयते सोऽनुरागः ।
सोऽयं 'वीणा' मिति सुवचने 'ङ्कस्थितेऽपी' तिपद्ये
ऽनन्यप्रेमा स्फुटमुदयते मानसे भावुकानाम् ॥७॥

अस्मात्प्रेमप्रणयप्रभृतेः पाकतश्चानुरागा-
त्पूर्णानन्दः परपरतरो राजते यो रसः सः ।
'एकं श्यामे' प्रभृतिवचनेऽयं 'चकोरो बले'ति
श्लोकद्वन्द्वे प्रकटमयते मार्गमास्वाद्यतायाः ॥८॥

तद्वात्सल्यं भवति विशदं लालनं पालनं च
यत्पोष्याणां सदयहृदयेन स्वनाथत्वबुद्धया ।
तच्च स्पष्टं 'लुलितनवले' वा 'विचित्रेति' पद्ये
सद्यो रासक्रममनुचरीरप्यहो शिक्षयन्त्याः ।।८।।

नूनं चेतोवचनविषयादप्यतीतः प्रसादो
नव्यो भव्योऽत्यविरलतया सान्द्रितो यत्कृपेति ।
व्यक्तश्चायं स्वजनविषयस्तत्र 'दिव्यप्रमोदे'-
त्यादौ पद्ये प्रतिपलमियं वर्धमाना त्वतीति ।।१०।।

यच्चाप्येषा सकृदपि कृताङ्गीकृतिं नो जहाति
'लावण्येति' प्रकटमिह तत्सुव्रतं सद्व्रतायाः ।

मुक्ताछायोपममवयवज्योतिरत्रोदितं त-
ल्लावण्याख्यं नवनवरुचिं स्फूजयद् भावुकानाम् ।
वेणुर्लज्जेत्यमलवचने किञ्च 'गौराङ्ग' पद्ये
तत्सुव्यक्तं निगदितमिह श्रीहिताचार्यवर्यैः ।।१२।।

भूषाङ्गेत्यामभिदधति चात्र प्रभां यच्छवीति
शब्दः सास्यां नवनवतया वर्धमानामृतं स्यात् ।
'रूपं स्निग्धे'त्यथ पुनरियं 'गात्र' इत्यादिपद्ये–
ऽत्यर्थं स्पष्टा परमरसिकैः शक्यते साक्षिकर्तुम् ।।१३।।

अङ्गाकारानुगतसुषमां रूपमित्याहुरार्या
'श्चन्द्रास्ये' ति स्फुटमतितरामुक्तमाप्यायनं तत् ।
तद्द्वन्द्वं स्यादमृतमवधेः पारमत्यर्थचित्रं,
चित्रन्यस्तं यदि कनक-से'त्यादि'राके'ति पद्ये ।।१४।।

रासं गानं वनविहरणं नृत्यवाद्येऽभिनीतिः
पुष्पोच्चायः खगनिगमनं ते च तेऽन्ये विलासाः ।
याताः केलीत्यभिहितिमिमा'स्तां कदे'त्यादिपद्ये
किञ्च स्पष्टा इह किल 'विपञ्चीति' पद्ये नितान्तम् ।।१५।।

वदग्ध्याद्या नव नवगुणाः सन्त्यनन्ता अगाधा
यस्मात्सिन्धूपमितपदवीं प्राप्नुवंस्तेन ते ते ।
नान्येतत्वादभिदधुरिमान्पण्डिता एकमात्रा-
ण्येषां नाम्ना कथनमथ तद्वाच्यतां प्रत्यषेधत् ॥१६॥
इत्थं नानागुणमयसुधासिन्धुभूतानपाया
ऽऽराध्याराध्या परमपरमा सिद्धिसंसिद्धिरूपा ।
वेदातीताप्यतिशयकृपापारवश्यात्प्रतीता
भूयाच्चित्ते मम निजपदे स्वीयताङ्गीकृतायाः ॥१७॥
विद्युल्लेखासदृशचपला वा स्फुरेत्सैव चित्त
यद्वत्केषाञ्चिदपि महतां चिन्मयं ब्रह्म किञ्चित् ।
इत्थं स्वस्मै वदति परमाशींषि निष्ठाबलेन,
सख्यालम्बादथ च कुरुते प्रेरणं राधिकायाः ॥१९॥
रूपाभ्यां वा निजहितसखीत्वान्विताभ्यां हृदिस्था—
हङ्कारेणोत्थितमिह ममत्वं स्थितं राधिकायाम् ।
सा सर्वेषां मदनुगमिनामन्तरे स्फूर्तिमाया—
त्वित्येतस्माद् गुरुरधित योगं परस्मैपदस्य ॥२०॥

## अष्टादशः सर्गः

वैदग्ध्याद्या दयितयुगले विद्यमानाः समाना
आसज्यायामिह निगदिताः कान्तिमन्तो भवन्ति ।
आसक्ते स्यादधिकरुचिरो योऽनुरागैकसिन्धुः
सोऽप्यासज्यातिशयकरुणासिन्धुभावान्मनोज्ञः ॥१॥

**दृष्ट्वैव चन्द्रकमतीव चमत्कृताङ्गी**
**वेणुध्वनिं क्वच निम्य च विह्वलाङ्गी ।**
**सा श्यामसुन्दरगुणैरनुगीयमानैः**
**प्रीता परिष्वजतु मां वृषभानुपुत्री । १८।**

अस्मिन् पद्येऽतिशयकरुणासिन्धुरेषाऽनुरागाद्
बर्हापीडं नटवरवपुः संस्मरन्ती प्रियस्य ।
दृष्ट्वा बर्हं क्वचन समये क्वापि देशे त्वकस्मा—
च्चित्रीभूता पुलकिततनुः स्यादिति प्रोक्तमास्ते ॥२॥

यत्र क्वापि प्रपतितमिदं चेच्चमत्कारकं स्यात्
तर्ह्येतस्य प्रकटमुकुटाकारतायां तु किं स्यात् ?
अत्यासक्तप्रियशिरसि तद्राजमानं पुनः कां
कुर्यान्नावाङ्मनसविषयां राधिकाया अवस्थाम् ? ॥३॥

अत्येवार्थं वदति तदतीवेति शब्दस्ततोऽसौ
दृष्ट्वैवैनत् परमचकिता सात्त्विकैः शोभिताऽभूत् ।
आलीवृन्दः परिहसति मां, विस्मयं याति कान्त—
र्यावत्पृच्छत्वयि किमिदमित्यादधात्तत्र धैर्यम् ॥४॥

क्वाचित्कश्चम्पकलतिकया साम्यमाहात्र पाठः
'कं दृष्ट्वेति प्रतिवसति नो मानसे तत्र प्रश्नः ।
वेणुध्वानावयवमिह तं वेणुशब्दं गृहीत्वा,
'दृष्ट्वा वेणुं चकितचकितेत्यन्वये क्लिष्टता स्यात् ॥५॥

तस्मात्पाठः स इह न हरिलालैर्मुखेऽङ्गीकृतोऽभूद्,
औचित्यात्तन्मतमिह मयानूदितं नापनुन्नम् ।
दृष्ट्वा यं चम्पकलतिकया साम्यमालम्बतेऽसौ,
स्तोत्रे कस्मान्निलयनमयं याति कान्तस्तमालः ॥६॥

यद्वा वाचानुदितमपि तं चेतसाध्याहरन्तः,
सन्तो ब्रूयुः पुलकिततनुं राधिकां चम्पकाभाम् ।
यद्वा मन्त्रौषधिमणिसमं वेणुमालोकयन्ती,
सर्वाङ्गीणां सपदि लभतां राधिका चम्पकाभाम् ॥७॥

चम्पा मन्त्रौषधिमणियुजा कं चमत्कारमेति
सर्वाङ्गे वा पुलकसदृशं सात्त्विकं कं बिभर्ति ।
लोके प्रश्नद्वयमिदमहो ! नोत्तरं किञ्चिदाप्य,
प्रायोदृष्ट्याऽनुपमरमणीयां प्रियां तां व्यनक्ति ॥८॥

दृष्ट्वा बर्हं परमचकिता धैर्यमालम्बते सा,
यावत्तावच्छ्रुतिपथमगाद् वेणुनादः कुतश्चित् ।
मन्ये यान्तीं गजगतिमिमामत्र सङ्गीतकुञ्जे,
दृष्ट्वा काचिन्मुखरवदनाऽवादयन्मञ्जु वेणुम् ॥९॥

श्रुत्वा वेणुध्वनिमिममियं विह्वलाङ्गी तदाऽऽसी-
च्छ्यामे वेणुं ध्वनयति तु सा याति कां कामवस्थाम् ? ।
वेणोराकर्षणमिदमहो ! मोहनं वा स्वभावाद्,
भावोद्रेक-प्रसवमथवाऽऽहुर्वशीकारमेव ॥१०॥

सत्यं सत्यं विरहविधुरो वेणुनाऽऽमन्त्रयन्मां,
कान्तः क्वायं स्थित इति विचारेण सा विह्वलाङ्गी ।
सान्द्रप्रेमाम्बुधिरथ कृपाम्भोधिरभ्युच्छलन्ती,
प्रत्यङ्गं सा प्रणयपरिवाहाप्लुता विह्वलाऽभूत् ॥११॥

आलीभिर्वा सरसरसनाभिः प्रसादं प्रणीता,
गायन्तीभिः प्रियगुणगणानत्र सङ्गीतकुञ्जे ।
तत्सौन्दर्यं किल ललितता साऽथ तन्नागरत्वं,
तल्लावण्यं परममृदुता साऽथ तन्मोहनत्वम् ॥१२॥

तद् गाम्भीर्यं खलु सरसता सा तदाकर्षकत्वं,
तत्सौशील्यं बत सरलता सा तदौदार्यमेकम् ।
प्रेयस्यां सा प्रणयपरताऽनन्यभावानुविद्धा,
सात्यासक्तिश्छविरनुपमा साऽनुरक्ती रसात्मा ॥१३॥

विश्रम्भोऽसौ स खलु विनयो वीरभावः स धैर्यं,
तत्तच्चाटुष्वतिशयपटुत्वं च तत्काकुवाक्त्वम् ।
वैचक्षण्यं विलसनविधौ तच्च तद्वश्यतायां,
वैलक्षण्यं सकलसुकलाकौशलं तच्च चारु ॥१४॥

एकैकं तत्कवयितुमलं यस्य न स्मो गुणानां,
सिन्धुर्वृन्दाविपिनगगने श्याम इन्दुः स दीव्यात् ।
इत्थं नैके प्रियतमगुणा ये स्वयं शिक्षितास्तान्,
गातुं लग्नास्म्यहमपि मुदा वा परीक्षां प्रदातुम् ॥१५॥

वक्तुं चित्ते रणरणकमस्म्यादधे यान् प्रियार्थं,
सापि श्रोतुं भृशमिह दधात्युत्सुकत्वं मदास्यात् ।
दृष्ट्वा वाहं चकितचकितां विह्वलां च प्रियां तां,
तत्कालार्हान् प्रियतमगुणान् गातुमस्मि प्रवृत्ता ॥१६॥

श्रुत्वा नानाविधगतितरङ्गान्वितान्येव गीता-
न्याशु प्रीता चरणपतितां मां प्रियाऽऽलिङ्गतात्सा ।
आसज्यापि प्रकटितकृपाऽऽसक्तभावं श्रयन्ती,
सिन्धूभूता प्रणयरसयोर्लाडिला कोमलाङ्गी ॥१७॥

यत्पादाम्भोरुहपरिचरी जातु तृप्यामि नाहं,
साऽऽलिङ्गन्मां वृषरविमिहानन्दयन्ती स्वभावात् ।
लाल्या बाल्यादभवमिति मां कीर्तिदा यौतुकेऽदात्,
मर्मज्ञेयं मम सहचरीति प्रिया मां ययाचे ॥१८॥

अत्रायाता प्रियतमगुणान् सुस्वरं गा-तीय—
मित्याध्याय प्रवितरतु मे सा परिष्वङ्गसौख्यम् ।
पद्येऽवद्येतरगुणधरे श्यामचन्द्रेऽनुरागो-
द्रेकस्तस्याः प्रथितिमुपनीतो हितालीस्वरूपैः ॥१९॥

राधाऽऽराध्या निजपरिकरेऽस्मादृशे सानुकम्पा,
कैङ्कर्यार्थिन्यपि वितनुते साहचर्यं स्वभावात् ।
इत्याशास्ते सदयहृदयायाः परिष्वङ्गमाली
कैङ्कर्यं तु क्षणमपि न तन्मानसाद्याति दूरम् ॥२०॥

## एकोनविंशः सर्गः

श्रीश्यामसुन्दरगुणैरनुगीयमानैरुद्दीप्य कञ्चिदनुरागरसं प्रियायाः ।
सन्दर्शयन् सुरतकेलिकलाविलासानन्दैकसिन्धुमयतां समवर्णयत्ताम् ॥१॥

**श्रीराधिके सुरतरङ्गिनितम्बभागे**
**काञ्चीकलापकलहंसकलानुलापैः ।**
**मञ्जीरशिञ्जितमधुव्रतगुञ्जिताङ्घ्रि-**
**पङ्केरुहैः शिशिरय स्वरसच्छटाभिः ॥१९॥**

ये राधिकादिशमिह प्रणयान्नमन्ति ते तन्महामहिमलेशमपि स्पृशन्ति ।
श्रीराधिकाचरणरेणुकणावधानाच्चैषां हृदि स्फुरति कापि निकुञ्जदेवी ।।२।।
राधाननं हि मधुराङ्गकलानिधानमाविर्भवेदिति समुत्सुकमक्षि तेषाम् ।
सभ्रूविभङ्गमतिरङ्गनिधेश्च तस्याः श्रोतुं श्रुतिर्नहि न्हीति गिरः समुत्काः ।।३।।
स्यात्तद्द्वयं प्रकटतोऽपि कृतार्थमेषाम्, सा राधिका यदि कदापि कृपां करोतु ।
भूयात्कृपा च सुकृते तदु पुण्यदृष्टौ, तामन्तरा च तपतश्चरणाश्रयोऽस्तु ।।४।।
तस्मै विहारविपिने रमतां मनो नस्तावन्न यावदिह मानमुपैति तादृक् ।
लीलासु यावदिदमीयनिजासु, सेवा-पूजासु चाप्यवसरं न लभेत जीवः ।।५।।
तत्केलिकुञ्जभवनाङ्गणमार्जनीनामेवापनीयमिह दिव्यनिधानमेतत् ।
लब्धावकाशहृदये स्वगुणैरुदारैः श्रीराधिका स्फुरति नूतनकेलिसिन्धुः ।।६।।
प्रीता परिष्वजति चानुचरीमपीमामित्युत्कता विदधते हृदयं सुतप्तम् ।
तत्तापनिर्वृतिमवाप्तुमिमेऽर्थयन्ते-श्रीराधिके शिशिरय स्वरसच्छटाभिः ।।७।।
राधाङ्गभूषणरवा इव तद्गुणालीं गायन्त एव रसदानविधौ प्रवीणाः ।
श्रीराधिकापघनसंस्थितिरेव तेषां सन्तापहेति कथिताङ्घ्रिनितम्बनिष्ठा ।।८।।
वैदग्ध्यसिन्धुरिति यत्किल केलिसिन्धुर्लावण्यसिन्धुरमृतच्छविरूपसिन्धुः ।
प्रीतेरियं विषय एव किल व्रजेन्द्रसूनोः सखीपरिकरस्य च किङ्करीणाम् ।।९।।
किन्तु प्रिया यदनुरागरसैकसिन्धुर्वात्सल्यसिन्धुरतिसान्द्रकृपैकसिन्धुः ।
तस्माद् व्रजेन्द्रतनयोऽपि सखीजनोऽपि दासीगणोऽपि विषयो भवति प्रियत्वे ।।१०।।
तत्रानुरागरससागरता प्रियाया दृष्ट्वैव चन्द्रकमतीव चमत्कृताङ्ग्याः ।
वेणुध्वनिं क्व च निशम्य च विह्वलाङ्ग्या व्यक्तेति सूचयति सन्निहिता हिताली।।११।।
श्यामेऽनुरागरससिन्धुमथोल्लसन्तं वीक्ष्यैव तद्गुणगणाननुगायतीयम् ।
श्यामस्य सुन्दरगुणैरनुगीयमानैर्वात्सल्यसिन्धुरथ तां तु परिष्वजेत्सा ।।१२।।
वात्सल्यसिन्धुलहरीभिरभिष्वजन्ती ज्ञातोदितान्तरनुरागरसैकसिन्धुः ।
प्र यः समागमजनिस्वरसच्छटभिरस्मान् प्रिया शिशिरयेदिति याचते सा ।।१३।।
आराध्यसे यदि तदा त्वमिहासि राधा, त्वं राधिकासि कृपया परिराधयन्ती ।
चेत्कर्म कर्तृ च विलक्षणतामुपैति, श्रीसङ्गतं भवति तद्द्वयमेव नाम्नोः ।।१४।।
अत्रानुकूलितगतेर्दयितानुरागालीवत्सलानुगकृपारससागरत्वम् ।
तद्व्यञ्जयत्यहह किञ्चिदलौकिकं नः, 'श्रीराधिके' इति मनोज्ञतरोऽवबोधः ।।१५।।

अस्त्यङ्गमङ्गमिह यद्यपि चारुताब्धिः, प्रोक्तस्तथापि सतरङ्गतया समन्तात् ।
किन्तच्यते सुरतरङ्गितया नितम्बभागोऽत्र मानससरोवरतुल्यरूपः ।।१६।।
'वृन्दावनेश्वरि तवैव पदारविन्दं प्रेमामृतैकमकरन्दरसौघपूर्णम् ।
इत्योघपूर्णमिह सागरमन्तरा हि, नान्यद्भवेदितिवदन्यदपि प्रचेयम् ।।१७।।
'उज्जृम्भमाणरसवारिनिधेस्तरङ्गैरङ्गैरिव प्रणयलोलविलोचनायाः ।'
इत्यत्र लोचनतरङ्गनिरूपणार्थमङ्गं तरङ्गपदवीमखिलं सुनीतम् ।।१८।।
यस्या अपाङ्गगतरङ्गिततात्र कोटिं कन्दर्पकान्जनयतीति च वक्ष्यतीह ।
आविष्करोतु निजरूपमिहाथ पीनश्रोणिश्चलत्विति बहुत्र तदस्ति सूच्यम् ।।१९।।
श्रोणीमथाह नवहेमवरासनं यद् यच्चाह तत्सुमणिकिङ्कणिकापरीतम् ।
यच्चाब्रवीद् बृहदिदं कलकिङ्कणीनां काञ्च्या रवेण सहितं नवमेखलायाः ।।२०।।
उक्तं बृहत्कटितटं स्फुटमेखलाढ्यञ्चानङ्गमाङ्गलिककिङ्किणिडिण्डिमाद्यम् ।
सर्वन्तु तत् सुरतरङ्गितयैव युक्तं, योग्यश्च तत्सुरतरङ्गिनितम्बभागः ।।२१।।
यद्राधिकां सुरतरङ्गिणि ! इत्यबोधत् त्रिश्चार्हतां स समपीपदद:प्रयोगे ।
तेनापि सम्भवति किन्नहि राधिकाङ्गं वृन्दावने सुरतरङ्गितयावबोद्धुम् ।।२२।।
श्रीराधिके त्वमसि नूनमगाधशोभा लावण्यपूर्णमहिमास्पदसिद्धिरूपा ।
आजन्मनो मदनगोचरचारुलीलामत्प्रार्थनाप्रकटिताविकलानुरागा ।।२३।।
अद्य त्वमेधि निजपूर्णरसच्छटाभिर्मां किङ्करीमिह कृतार्थयितुं प्रसन्ना ।
अत्र स्वचिन्तनबलेन समक्षमार्यामानीय 'मा' मिति वचः समवोचदेषा ।।२४।।
यद्वा सखीसमुदयो दयितश्च वृन्दारण्यं यथा रसभरेण कृतार्थितानि ।
तद्वद्भवच्चरणयोः शरणं प्रपन्नं मां साधकं शिशिरय स्वरसच्छटाभिः ।।२५।।
श्रीराधिकाविषयकः स्वरसोऽत्र पद्येऽसाधारणः प्रतिपिपादयिषास्पदं सः ।
योऽस्त्यद्भुतः श्रवणदर्शनजन्यलीलास्वादात्मको विगलितेतरवेदनीयः ।।२६।।
तस्य च्छटा इह चमत्कृतयोऽपि वा स्युः श्रीराधिकासुरतरङ्गवतीकणौघाः ।
ताभिश्च तैश्च नयने च मनश्च सम्यगाप्लाव्य शीतलय दर्शनलालसां माम् ।।२७।।
सा लालसाऽनलवदस्ति समेधमाना सन्तापमन्तरधिकं च विवर्धयन्ती ।
शाम्यत्यसौ यदि तदा भवतीह तापशान्तिश्च तत्र सति शीतलितान्तरः स्याम् ।।२८।।
संराजसे सुरतरङ्गिनितम्बभागा, यद्दर्शनात् सुरतरञ्जनमेति कान्तः ।
त्वद्रूपमेव दयितस्य मनस्यगाधां तां लालसां जनयतेऽत्र विलासहेतुम् ।।२९।।

काञ्चीकलापकलहंसकलानुलापैः संसूच्यते सुरतरङ्गवतीतटोऽयम् ।
विज्ञायते सुरतरङ्गधरा नितम्बभागोऽथवा ललितवाद्यविशेषजैस्तैः ॥३०॥

श्यामः सदानुसरति प्रणयातिरेकाच्छ्यामामितीह स भवेद्रतरङ्गभूमिः ।
काञ्चीकलापकलहंसकलानुलापैर्मञ्जीरशिञ्जितमधुव्रतगुञ्जितैश्च ॥३१॥

तास्तादृशो भ्रमरगुञ्जितयोऽनुकूलास्ते तादृशश्च कलहंसकलानुलापाः ।
नो केवलेऽनुगमनेऽथ विलासकालेऽपि स्युस्तरां समुचिता हृतविश्वतापाः ॥३२॥

यद्वा विलाससमयातिगमे सखीयं गायत्यदोऽनुगमनेन तु पृष्ठशोभाम् ।
काञ्चीकलानुलपनैश्च समन्वितासि, मञ्जीरशिञ्जितयुतासि च राधिके त्वम् ॥३३॥

एतैश्च तैश्च सरसैः, स्वरसच्छटाभिश्चैवाशु मां शिशिरय स्वपदैकदासीम् ।
इत्यादि चार्थयति वार्थयतेऽत्र दृष्ट्या, श्रुत्या च तत्तदधिकं सुखमन्तरङ्गम् ॥३४॥

पद्ये किलात्र कलहंसमधुव्रतानां दिव्यानुलापकलगुञ्जितवर्णनेन ।
श्रीराधिका सुरतरङ्गवतीत्वमाप्ता पङ्केरुहैर्हिमयतीव रसच्छटाभिः ॥३५॥

पद्येऽग्रिमे स्फुटतयास्ति तरङ्गिणीत्वमारोपितं, तदपकर्षतु वा रसज्ञः ।
तेनास्तु वीचिकमलाम्बुधिभृङ्गहंसाद्यावर्तकूलपुलिनादिपदार्थलाभः ॥३६॥

एवं नितम्बपुलिने कलहंसमाला भृङ्गावली च चरतां स्वकलानुलापैः ।
पार्श्वस्थितान् परिजनान् स्वरसच्छटाभिः शीतीकरोतु सहसा च तरङ्गिणीयम् ॥३७॥

पङ्केरुहाणि मधुपैः कलहंसकैश्च संशोभितानि वितरन्तु विनोदमेषाम् ।
श्यामामृताम्बुनिधिसङ्गमतीव्रवेगा तप्तं मनो हिमयताच्च तरङ्गिणीयम् ॥३८॥

पादावुभावपि च केलितरङ्गमालासञ्चालितौ सुबहुपङ्कजतां प्रयातौ ।
तौ नूपुरौ च परिधापितवान् प्रियो यत्स्तम्भं ततः कमपि संश्रयतोऽद्य यावत् ॥३९॥

सौन्दर्यारुण्यमुख्याः कमलपरिगतास्ते गुणाः सर्व एवं
श्रीराधापादपद्माश्रयणगुणवशात् कम्रतामापुरुच्चैः ।
ते स्युर्वीरायितादिप्रथनपटुतरैर्मञ्जुमञ्जीररावैः
संरावैः किङ्किणीनां हृदयशिशिरतापादकाः किङ्करीणाम् ॥४०॥

# विंशः सर्गः

श्रीराधिके सुरतरङ्गिणि दिव्यकेलि-
कल्लोलमालिनि लसद्वदनारविन्दे ।
श्यामामृताम्बुनिधिसङ्गमतीव्रवेगि-
न्यावर्तनाभिरुचिरे मम शं निधेहि ॥

प्रयः सङ्गमसौख्यदाननिपुणे, प्रार्थिष्वनुग्राहिणि,
सुष्ठु क्रीडनरङ्गभूमिमति हे, दिव्यातिवीचीधुनि ।
क्रीडासु स्थलवारिविष्टरभवासु त्वं जिगीषामती,
तृष्यद्भूरिविलासवीरसमदश्रीमोहनातिक्रमे ॥१॥

अन्योन्यस्य मनोहृतिप्रभृतिभिः संश्लेषसंस्पर्शने
सम्यङ्मूलकुसीदवद् विनिमयं तत्तस्य वै कुर्वतो ।
दीप्त्या मण्डलिताखिलावयविनी तत्तद्विलासे मिथो
धन्यं धन्यतरं प्रकथ्य नवलस्तोत्रादिसत्कारिणी ॥२॥

हर्षोद्रेककृतातिहासपरिहासामर्षिता स्वैर्गुणैः,
बाह्याभ्यन्तरकान्तसङ्गशयना तत्तन्मनःपूरणी ।
गत्या हंसगजादिकानुकरणी रासादिसंचारिणी
दिव्यैः केलितरङ्गकौतुकशतैः संशोभिता भामिनी ॥३॥

अहमहमिकया परम्परासां लसदव्याकुलशोभनक्रमेण ।
सहसितनवहावभावलीला जनयित्वेह तरङ्गिणीं करोति ॥४॥

अलकावलिभिः किलालिवृन्दैर्लसदेतद् वदनं तवारविन्दम् ।
नयने तदुरोजयुग्ममास्यं नवनाभिश्च नितम्बकाञ्चिकाद्यम् ॥५॥

शफरीयुगलेन वृत्तचक्रेण च पत्रेण तथा जलभ्रमेण ।
सरितः पुलिनेन हंसभृङ्गावलिनादादिभिरश्नुतेऽत्र साम्यम् ॥६॥

श्यामोऽमृताम्बुनिधिरस्त्यविगाहनीयप्रेमामृतैकरसपूरसुपूर्यमाणः ।
तत्सङ्गमाय किल तीव्रजवेन यान्ती श्रीराधिका त्वकथि सौरतरङ्गिणीति ॥७॥

अन्यापि सिन्धुगसरित्किल दूरगत्वे मन्दा भवत्यथ समीपगतातिवेगा ।
तद्वत्सुधीरसुगभीरतराऽपि राधा श्यामामृताम्बुधिमवाप्य सुतीव्रगास्ति ॥८॥

प्रयोऽभिलाषपरिपूरणदानवीरा स्वान्तःस्पृहाश्रयविलाससुपूर्तिकामा ।
लज्जालुरप्यनुवदेन्नु कदाचिदेषा चेतोऽभिलाषमिति यत्कमितं सखीभिः ॥९॥
तत्पूरणाय जवनीयमगात्पयोधिं सोऽपि स्ववीचिनिचयैरभियाति पूर्णम् ।
मिश्रीभवत्यथ पृथग्जलकल्पनावद्रूपं द्वयोरपि पृथङ्न विवेचनीयम् ॥१०॥
आगत्य सम्मुखमयं स्वभुजोत्तरङ्गाभिष्वङ्गजातनिजरूपभिदाविभङ्गः ।
सापि स्वरूपविलये सति तन्मयत्वं प्राप्नोति हन्त रसमेलनमद्भुतं तत् ॥११॥
अम्भोद्वयेऽथ मिलिते भ्रमिसम्भवः स्यादावर्तनाभिरुचिराऽभवदेतदर्थम् ।
एतत्स्वसौभगप्रदर्शनजं प्रमोदं शम्मे मनस्ययि निधानसमं निधेहि ॥१२॥
श्रीराधिके ! त्वमनुरागरसैकसिन्धुर्वात्सल्यसिन्धुरतिसान्द्रकृपैकसिन्धुः ।
लावण्यसिन्धुरमृतच्छविरूपसिन्धुर्वैदग्ध्यसिन्धुरसि नूतनकेलिसिन्धुः ॥१३॥
सौभाग्यशालिनि ननिर्वचनीयसिद्धे सख्याधिकारकृतगोपनगोप्यलीले ।
अङ्गीकृताखिलमदर्थनयाद्य यावत् प्रोत्साहितास्मि विनयाय, ततोऽवधेयम् ॥१४॥
मां साम्प्रतं शिशिरय स्वरसच्छटाभिः,अन्याः सखीः प्रियतमञ्च कृपासमुत्कम् ।
यः स्वो रसः श्रवणदर्शनयोग्यलीलामाधुर्यगोऽस्ति तव निर्गलितान्यवेद्यः ॥१५॥
तस्य च्छटाभिरभिषेचनजाभिराभिर्भूयश्चमत्कृतिभिरद्भुतशीकराभिः ।
चेतोविलोचनमुखेन्द्रियतर्पणीभिस्तत्प्लाविकाभिरथवा मधुरोत्तराभिः ॥१६॥
प्रेयःसमागतभवन्नवसद्विलाससौभाग्यदर्शनमनोरथतप्तचित्ताम् ।
मां शीतलीकुरु निवार्य ममान्तरङ्गे तापं मनाक् सुरतरङ्गिनितम्बभागे ॥१७॥
यो दर्शनेन दयितस्य मनस्यपारं सारं मुदां सुरतरञ्जनमादधीत ।
तद्रूपरञ्जनमपोद्य विलासकाम्यामुज्जीवयेत्सुरतरङ्गितयैष भागः ॥१८॥
भागो ह्यसौ सुरतरङ्गभुवं बिभर्ति, तेनासि वै सुरतरङ्गिनितम्बभागा ।
काञ्चीकलापकलहंसकलानुलापैः संसूचितः सुरतरङ्गिनितम्बभागः ॥१९॥
यातानुयातसमयेऽनुगतस्य तस्य सन्दर्शनैः सुरतरञ्जनमेष दत्ते ।
तस्मिन्हि मञ्जुलगतेर्घटते मनोज्ञः काञ्चीकलापकलहंसकलानुलापः ॥२०॥
यद्वा विलाससमये घटतेऽनुलापः पश्चात्ततोऽपि शिथिलाभरणत्वहेतोः ।
स्याद्वा विभक्तिरुपलक्षणवाचिनीयं काञ्चीकलापकलनूपुरशिञ्जितादौ ॥२१॥
तत्रानुलापनवशिञ्जितपादपद्मैश्चैवात्र मां शिशिरय स्वरसच्छटाभिः ।
काञ्च्यादिशब्दपरिदीपिततच्छटाभिः शैत्यं प्रसारय मनःश्रुतिचक्षुषां नः ॥२२॥

सन्दृश्यतेऽत्र कलहंसमधुव्रताभ्यां पङ्केरुहैश्च सुनदीत्वमुदीरितायाः ।
आकर्षणीयमिदमग्रिमपद्यतो वाऽत्र प्रोक्तया सुरतरङ्गितयार्जनीयः ॥२३॥

चेत्सन्निधानमभिकाङ्क्षितमालिमौलिभ्राजिष्णुना परिजनेन तदावधेयम् ।
संस्मारयिष्यति तु सन्निहिता हिताली काले किशोरनवसङ्गमिमं प्रियायाः ॥२४॥

नन्वत्र यत्सुरतरङ्गिणिशब्दबोध्या राधा तु सा लघुतरैव प्रतीतिमेता ।
श्यामोऽमृताम्बुनिधिनामनिवेदनीयो धीरो गभीर इति यत्स महान् प्रतीतः ॥२५॥

सत्यं हि दम्पतिपदे स्थितयोः समर्थं चासक्तरूपमुररीकृतमुद्व्यनक्ति ।
जातेऽपि चात्र किल सिन्धुसरिद्द्वयैक्ये शृङ्गीव यामि च पिबामि सरिज्जलानि ॥२६॥

किञ्चात्र तावदुदिता सरितोपमेयमासक्तरूपमुररीकृतमाविरस्तु ।
वैदग्ध्यसिन्धुरिति पद्यगतं तु सप्तसिन्धुत्वमस्य न कदापि धिया तु हेयम् ॥२७॥

अस्मात्परं पुनरपीयमनङ्गरङ्गिनानातरङ्गवतिका परिसङ्गता स्यात् ।
अम्भोनिधिर्निधिरथो बहुधापि भूयात्तन्नास्ति कश्चन कदाचन हीनभावः ॥२८॥

'अनङ्गनवरङ्गिणी रसतरङ्गिणीः सङ्गता,
दध सुखसुधामये स्वतनुनीरधौ राधिका ।
अहो मधुपकाकलीमधुरमाधवीमण्डपे,
स्मरक्षुभितमेधते सुरतसीधुमत्तं महः ॥'

इत्यादिषु स्वतनुनीरधिमथ्यमाना-
नङ्गोत्थरङ्गसुतरङ्गिणिका दधानम् ।
सम्भोगसीधुसमदं सदपि स्मरेण क्षुब्धं,
महः किमपि पुष्यति राधिकेति ॥२९॥

'शुद्धप्रेमविलासवैभवनिधिः, कैशोरशोभानिधि-
र्वैदग्धीमधुराङ्गभङ्गिमनिधिर्लावण्यसम्पन्निधिः ।
श्रीराधा जयतान्महारसनिधिः कन्दर्पलीलानिधिः,
सौन्दर्यैकसुधानिधिर्मधुपतेः सर्वस्वभूतो निधिः ॥'

इत्यादिषु क्रमिकशुद्धदधिप्रदुग्धक्षारासवाज्यरससागरसप्तकस्य ।
श्रीराधिकागुणगणेष्ववरोपमेकं वीक्षामहे कृतमहत्त्वमहाभिषेकम् ॥३०॥

# एकविंशः सर्गः

वात्सल्यसिन्धुरतिसान्द्रकृपैकसिन्धुरित्युक्तमेव किलसिन्धुयुगत्वमत्र ।
स्पष्टीकरोति शिरसा चरणारविन्दं वोढुं धृताभिलषितातिशयं प्रकाश्य ॥१॥

**सत्प्रेमसिन्धुमकरन्दरसौघधारा-**
**सारानजस्रमभितः स्रवदाश्रितेषु ।**
**श्रीराधिके तव कदा चरणारविन्दं,**
**गोविन्दजीवनधनं शिरसा वहामि ॥**

सर्वाङ्गरूपविभवेऽनुभवात्परे त्वं सर्वेष्टसिद्धिमयि सख्यवितानधन्ये ।
देव्यत्युदाररमणीयचरित्रशालिन्यादिं त्वनेकमतिवर्तिपदार्थमाह ॥२॥
श्रीराधिके इति मनोरथबोधनेन, सम्बोधनेन समुपात्तमहावधाना ।
प्रायोऽतिसक्तिदिनकृत्कृतहर्षरूपभूयोविकासललितं चरणारविन्दम् ॥३॥
तत्कामनापवनसंहृतसौरभं सद्भाग्योदये सति कदा शिरसा वहामि ।
चूडामणिर्वं शिरसा ध्रियतां मयेदं, दास्या प्रणामततिभिः समुपासितं स्यात् ॥४॥
आभूषणत्वमवबोधयितुं किलोक्तं श्रीराधिकाचरणयोररविन्दरूपम् ।
वृन्दावनावनिवसद्वनितात्वजाग्रत्सच्चेतनाभिरभितः शिरसा धृतत्वात् ॥५॥

सत्प्रेम तद्भवति, यत्सकलप्रसिद्धप्रेमाण्यपेक्ष्य विलसेत्परमं प्रकृष्टम् ।
त्रैकाल्यबाधरहितं स्थिरकार्यहेतुभावं च यन्नविरहाविरहादिदुष्टम् ॥६॥
सत्प्रेमसिन्धुरिव सन्ततपूर्यमाणगम्भीरमक्षुभितमुल्लसितोत्तरङ्गम् ।
रूपेन्दुदर्शनमहेन महाप्रमोदादुज्जृम्भमाणबहुकेलितरङ्गमालम् ॥७॥
सिन्धूपमं च मकरन्दनिभं तदस्ति चिन्तामणिप्रभृतिवत्तदचिन्त्यशक्ति ।
यच्चन्द्रकान्तलघु सद्बहुविद्रुतत्वात्सिन्धूदयेऽपि किल कारणतामुपैति ॥८॥

यस्मिंल्लघीयसि महान् निधिरस्ति लीनस्तादृक् किलात्र मकरन्दरसो विभाति ।
पौष्पं रसं तु मकरन्दमिमं पुनर्यत्प्रोचे रसं तदिह वै स रसः प्रतीतः ॥९॥
मूर्तो रसोऽस्ति मकरन्द इहाङ्घ्रिनिष्ठः शृङ्गार इत्यभिधया प्रथितोऽस्ति यो वा ।
ओघा रसस्य किल तस्य विभान्ति येषां धारा अखण्डगतयः परितो वहन्ति ॥१०॥
या नित्यकेलिषु सखीजनमध्यसंस्थास्तासां कृते परिवहन्ति रसौघधाराः ।
येऽप्याश्रिताश्चरणयोः शरणन्तु धारासारानजस्रमभितः स्रवतीदमेषु ॥११॥
ओघाः क्वचित्क्वचन भान्ति रसस्य धारास्तासां स्रवन्ति कुहचित्कणशीकरा वा ।
इत्थं यथाधिकृति सिन्धुरसौघधारासारानजस्रमभितः स्रवदेव दृष्टम् ॥१२॥

सन्त्याश्रितास्त्रिविधतां यदिहादधानाः केचित्सनापरिकरा उपनीयमानाः ।
तैर्वा कृपापरवशैरथ साधकानां मौलौ स्थिता इति यथाधिकृतिप्रकाशः ॥१४॥
भान्ति स्रवन्त इव ते चरणारविन्दात् धाराझरा इव किलाश्रितवर्गदृष्टौ ।
तद्दर्शनात्पुलककम्पसगद्गदत्वरोमाञ्चवाष्पभरधारिण आश्रिताः स्युः ॥१५॥
लावण्यभारसुषमाभरजात आनन्दोद्गार एव चरणे मकरन्द उक्तः ।
व्यक्तीभवन्ति खलु कार्यगुणात्मनोर्व्यामथषु कारणगुणा इति सर्वसिद्धम् ॥१६॥
विष्णोः पदाग्रत उदायत गाङ्गमम्भो यद्वत्तथात्र मकरन्दरसौघधारा ।
इत्याकृतिर्मतिमतां न मतिभ्रमोऽस्तु तस्मादिहोक्तमभितः स्रवदित्यपूर्वम् ॥१७॥
पादाग्रतोऽपि तलतोऽपि च पार्श्वतोऽपि पार्ष्णेरथाप्युपरितोऽपि समन्ततोऽपि ।
यत्रापि दृष्टिरयते परितोऽप्यसीमलावण्यपूर इह दृष्टिपथानुपैति ॥१८॥
ओघेष्वभङ्गुरतया स्थितया च धारास्वासारवारिषु च सन्ततता प्रतीता ।
तत्रापि देशसमयानियमं ब्रवीति प्रेम्णः सनातनवितानमजस्रशब्दः ॥१९॥
वात्सल्यसिन्धुसदृशीयमुदेति चेष्टा प्रेष्ठाश्रिताखिलमुदे चरणारविन्दे ।
अत्रोच्यते सदतिसान्द्रकृपैकसिन्धुयोग्या क्रिया, प्रियतमे कुरुते प्रिया याम् ॥२०॥
गोविन्दजीवनमिदं च धनं तदीयं श्रीराधिके तव सदा चरणारविन्दम् ।
गोभिर्हि विन्दति सदा रसरूपगन्धस्पर्शान् स शब्दसहितांश्चरणारविन्दे ॥२१॥
लब्ध्वा च यत्स न परं मनुतेऽत्र लाभं तद्दुःखयोगमुवियोगतया च योगम् ।
यद्वा गवार्थदशकेऽपि सुसङ्गतोऽयं गोविन्दशब्द इति चारु विचारयामः॥२२॥

दिग्दृष्टिदीधितिसुरालयवज्रवाणवाणीजलेषु भुवि चापि पशौ गवाख्या ।
तत्र प्रियादिशमुपेयुष, एकदृष्टेः, प्रेष्ठामुखेन्दुकिरणेषु चकोरकस्य ॥२३॥
यद्वा प्रियामुखदिनेशकरेषु गात्राम्भोजप्रहर्षणजुषोऽस्त्यनुरूपभावः ।
कन्दर्पकोटिशरमूर्छितकस्य कान्ताछन्दोनुरोधिन इदंजलमीनदृष्टेः ॥२४॥
तत्पादभूमितमानसविष्टरस्य तद्भ्रूविलासवशवर्तिपशोरिवास्य ।
गोविन्दतास्य विदिता दयितस्य तस्य गोवर्द्धनोद्धरणतो धृतगौरवस्य ॥२५॥
संजीवनं सपदि जीवनमेव राधापादाब्जमस्ति मधुभेदिमधुव्रतस्य ।
दानं च भोग इति यद्धनसाधुयोगः प्रोक्तः सतां तदनुसारमनेन देयम् ॥२६॥
भोग्यं च तच्चरणपङ्कजमत्र नव्यं भव्यं धनं कथितमस्य मनोहरस्य ।
लोके भवत्यथ धनाद् व्यवहारसिद्धिः सा प्रेयसो भवति पादधनेन नूनम् ॥२७॥

अत्रैष यावकरसं प्रयुनक्ति मञ्जु मञ्जीरके च परिधापयति स्वहस्तैः ।
संवाहयत्यहह रासविलासलास्यन्यासादि हंसगजगञ्जनमादधाति ॥२८॥
मानापनोदनविधौ चरणावनामं चापि प्रयोजयति तेन धनं तदस्य ।
एतादृशं मम धनं धनिकेश्वरस्येत्थं साभिमानमनसो दयितापि तावत् ॥२९॥
वाम्यं विहाय सकृपं चरणारविन्दे गोविन्दजीवनधने उररीकरोति ।
एतादृशं तव कदा चरणारविदं, दासीकृता सकरुणं शिरसा वहामि ॥३०॥
सौभाग्यशालिजनमौलिमणित्वमात्मन्याकल्प्य देवि पदवीमुपदर्शयामि ।
को नाम दास्यमनसामपि तज्जनानां माहात्म्यमास्पृशति, का तु कथा स्विकानाम् ॥३१॥
'अनुल्लिख्यानन्तानपि सदपराधान्मधुपतिर्महाप्रेमाविष्टस्तव परमदेयं विमृशति ।
तवैकं श्रीराधे गृणत इह नामामृतरसं महिम्नः कः सीमां स्पृशति तव दास्यैकमनसाम् ॥'
राधापदाब्जमधु यस्य पतिः स विज्ञैः सम्बोध्यते मधुपतिः कृतसीधुपानः ।
आवेशतोऽतिमहतः किल राधिकायाः प्रेम्णः स विस्मृततदन्यकथाभिधानः ॥३२॥
तादृङ्महाप्रणयवेशदशैकसाधे राधेति नाम परमामृतमीरयित्रे ।
लोकाय तानगणितानपराधयूथान्विस्मृत्य देयमिह किं परमं मयेति ॥३३॥
नित्यं विचिन्तयति हन्त. तवाङ्घ्रिदास्यासक्तात्मनां न महिमा भुवि वर्णनीयः ।
यस्तुष्यतीह सहसाप्युपकारलेशान्नो रुष्यतीह शतशोऽप्यपकारवृन्दैः ॥३४॥
भक्तस्य किन्तु परिपीडननिन्दनादिलेशं न जातु सहते, स सतोऽपराधः ।
तस्येदृशं सदपराधशतं न चित्ते धत्तो किलैकमपि नाम य आब्रवीति ॥३५॥
नामामृतं मधुपतेर्ह्युपजीवनं तद्वृन्दावने सहचरीवितते रसस्तत् ।
विस्मृत्य दोषचयमस्य परैरदेयं दद्यां नु किं परमदेयमिति प्रचिन्त्य ॥३६॥
ब्रूते वरं वरय भावुक भक्त मत्त इत्यर्थयत्ययमपीह पदारविन्दम् ।
देयं धनं भवति तेन पदारविन्दं गोविन्दजीवनधनं किल राधिकायाः ॥३७॥
भोग्यं धनं भवति तत्रशिखण्डमौलेस्तत्किङ्करीषु विदिता चटुकाकुवाणी ।
यस्या मयाभिलषितं वृषभानुजायास्तत्केलिकुञ्जभवनाङ्गणमार्जनीत्वम् ॥३८॥

राधापादसरोजभक्तिमचलामुद्वीक्ष्य निष्कैतवां
प्रीतः स्वं भजतोऽपि निर्भरमहाप्रेम्णाधिकं सर्वशः ।
आलिङ्गत्यथ चुम्बति स्ववदनात्ताम्बूलमास्येऽर्पये
त्कण्ठे स्वां वरमालिकामपि मम न्यस्येत्कदा मोहनः ॥

इत्यादिना च वृषभानुसुतापदाब्जभक्तासु तस्य परमां करुणां व्यनक्ति ।
संवक्ति चास्य महतीमिह वन्दनीयां काञ्चिद् वदान्यवरतां द्रविणासुदस्य ३९॥

# द्वाविंशः सर्गः

**सङ्केतकुञ्जमनु कुञ्जरमन्दगामि-**
**न्यादाय दिव्यमृदुचन्दनगन्धमाल्यम् ।**
**त्वां कामकेलिरभसेन कदा चलन्तीं**
**राधेऽनुयामि पदवीमुपदर्शयन्ती ॥२२॥**

गोविन्दजीवनधनं चरणारबिन्दमित्युक्तिलब्धमिह यत्प्रियपोषणं तत् ।
विस्तीर्य तीव्रमभिलाषमभिव्यनक्ति 'सङ्केतकुञ्जपदवीमनुयामि राधे !, ॥१॥
सर्वाणि सन्ति सततानि विलासभाञ्जि कुञ्जानि यद्यपि, तथापि किमप्यपूर्वम् ।
भातं प्रियस्य नवकेलिविशेषयोग्यं सङ्केतितं तदिदमद्य मनःप्रसत्त्यै ॥२॥
श्रीराधिकाहृदयसम्मदनाय चायं वृन्दां समादिशदमुष्य विभूषणार्थम् ।
सानेककौतुककलामयकेलिसिद्ध्यै नूत्नं निकुञ्जमक्लृप्तप्रतिमञ्जुलाभम् । ।३॥
कुञ्जस्य चास्य नवमञ्जुलताप्रशस्त्या कान्तः प्रियामनसि चारुरुचिं विवर्ध्य ।
किञ्चित्स्वहस्तलघुतान्वयलोभनीयशय्याजलाशयसुमास्तरणाद्यकार्षीत् ॥४॥
यास्यंश्च'यामि,कलयामि, सृजामि तावत् कान्ते समेहि चपलं कृपया मयि त्वम् ।
आमन्त्र्य सूचिततदुत्सवमञ्जुकुञ्जः प्रत्यैक्षत प्रियतमां नितमां समुत्कः ॥५॥
सापि प्रियोत्तममनोरथचिन्तनेन तेनानिवार्यविसरेण च तन्मयीव ।
कन्दर्पसत्तरलतादिगुणान्दधाना सत्कामकेलिरभसेन मुदा प्रयाति ॥६॥
निर्बाधमिष्टमिह नैकरहोविलासानावां लभेवहि किलेति विचारमात्रात् ।
सा कामकेलिरभसं किमपि प्रपन्ना सङ्केतकुञ्जमनु वा प्रति वा चलन्ती ॥७॥
यद्वेदमन्विति पदं सदृशार्थवाचि याहङ्निकुञ्जरचनं चलनं हि तादृक् ।
पश्चादितीममपि वार्थमिदं ब्रवीति पूर्वं प्रियो हि गतवाननुयाति चेयम् ॥८॥
यद्वा परस्परकृतं समयं स्मरन्ती सा कामकेलिरभसेन तदा चलन्ती ।
अप्यात्मरूपमनुसृत्य बहिःप्रतीपा मन्दं प्रयाति किल कुञ्जरगामिनीत्वात् ॥९॥
श्रोण्यादिभारविहितं ननु लाडिलात्वादुज्जृम्भितं सुभगतासवमत्ततेत्थम् ।
प्रेयोऽतिलाल्यसहजोदितमेव वेदं मन्दं गतं जयति कुञ्जरमन्दगायाः ॥१०॥
लज्जालुताकृतमिदं गमनं तु मन्दं प्रेष्ठे कृपाकृतमथो रभसोद्गतं तत् ।
वीक्ष्यास्मि कामिनवकुञ्जरवत्प्रयान्त्या आकल्पये सरणिविस्मृतिमुन्मदायाः ॥११॥

प्रेमास्पदा लघुसखी तव नित्यसङ्गात्त्वां तादृशप्रमदवैवशमावहन्तीम् ।
सङ्केतकुञ्जपदवीमुपदर्शयन्ती सामीप्यतस्त्वित इतश्चलतु प्रियेति ।।१२।।
सन्मार्गदर्शनविधावतिसावधानास्म्यादाय दिव्यमृदुचन्दनगन्धमाल्यम् ।
दिव्यान्यलौकिकगुणानि मृदूनि मृद्वोः स्पृश्यानि चन्दननिघृष्टिजलेपनानि ।।१३।।
येषु प्रियानुगुणकेसरमिश्रितेषु श्यामानुरूपमृगजानुगतेषु भूयात् ।
पूर्वेषु पीतवसनस्य परेषु नीलाम्बर्यास्तवातिरतिपेशलता स्वभावात् ।।१४।।
गन्धाः सुगन्धितलसत्सुमनःसुसारस्नेहाश्च कुङ्कुममृगोद्यदुशीरसाराः ।
माल्यानि च स्थलजलोद्भवमल्लिकाब्जमुख्यैः सुमैस्त्वदुपशिक्षितगुम्फितानि ।।१५।।
ताम्बूलसम्पुटमधीश्वरि मां वहन्तीमित्यादितस्तदपि संग्रहणीयमत्र ।
दिव्यानि सन्त्यपि मृदून्यपि सन्ति माल्यानीमानि सन्ति किल चन्दनगन्धवन्ति ।।१६।।
मन्दारजैरथ यथेष्टविचित्रगन्धैः पुष्पैरिमानि रचितानि नवीकृतानि ।
मालाङ्गदे मुकुटकङ्कणकेऽवतंसकाञ्च्यौ च नूपुरसुकन्दुकमन्वितानि ।।१७।।
तादात्विकप्रियविलाससमर्थकान्तासेवोचितानि मयका तु समाहृतानि ।
तच्चन्दनं तदपि गन्धमथास्ति दिव्यं येनाङ्गरागरचनामिषतः प्रियेण ।।१८।।
तत्तत्प्रियाङ्गमुपगूढमिवात्र भावि श्रीराधयापि दयिताङ्गमशेषमत्र ।
स्पर्शे किलात्र करधूननजादिविघ्नो नास्तीति दिव्यमृदुता कथितात्र तेषाम् ।।१९।।
दिव्यैर्विशेषमृदुभिः किल दिव्यमृद्वोर्दिव्याङ्गके दयितयोरुपकल्पिते स्ताम् ।
अस्मादपीष्टतममस्ति किलात्र लज्जाबाधादिमुक्तमितरेतरगात्रभुक्तम् ।।२०।।
सङ्केतकुञ्जमुपयाति किल प्रियोऽत्र तं यान्तमेवमनुयासि च राधिके त्वम् ।
त्वां चाहमेवमनुयामि समं त्वयैव त्वामाश्रिताञ्च पदवीमुपदर्शयन्ती ।।२१।।

## त्रयोविंशः सर्गः

कुञ्जानि यातु दयितो दयितं त्वमेयाः किन्त्वस्मि कामनुसरामि ऋते भवन्तीम् ।
सम्बन्धतस्तव कदा नवनागरेन्द्रं पश्यामि मग्ननयनं स्थितमुच्चनीपे ।।

गत्वा कलिन्दतनयाविजनावतार-
मुद्वर्तयन्त्यमृतमङ्गमनङ्गजीवम् ।
श्रीराधिके तव कदा नवनागरेन्द्रं
पश्यामि मग्ननयनं स्थितमुच्चनीपे ।।२३।।

वैदग्ध्यसिन्धुरनुरागरसैकसिन्धुर्दृष्ट्वैव चन्द्रकमतीव चमत्कृताङ्गी ।
वात्सल्यसिन्धुरतिसान्द्रककृपैकसिन्धुः 'श्रीराधिके' इति पदत्रयवर्णितास्ति ।।२।।

सङ्केतकुञ्जमिति सान्द्रकृपैकसिन्धुः सा कामकेलिरभसेन गता प्रियान्ते ।
सम्प्रत्यसौ प्रकटयन्निव वक्ति तस्या लावण्यसिन्धुरिति यत्तु विशेषमाह ॥३॥
कृष्णामृतं चल विगाढुमितीरितस्य पूर्तिं विधातुमिह सम्प्रति सागताभूत् ।
सङ्केतकुञ्जजनितान्नवकेलिकोटिक्लान्त्यादिभावनिचयानुपहर्तुमस्यै ॥४॥
उद्वर्तनाय तदनन्तरवर्तिदिव्य-भव्ये कलिन्दतनयाविजनावतारे ।
श्रीराधिके प्रियमनोरथसिद्धिरूपे लावण्यसिन्धुमुपनीतवती भवन्ती ॥५॥
स्नानक्षणेऽपि विरहासहनस्तु सर्वैश्वर्यादिगौरवमयो नवनागरोऽयम् ।
सर्वोपरिस्थितभवत्सहचारलब्धोत्कर्षोऽथ सोज्ज्वलरसे नवनागरेन्द्रः ॥६॥
त्वत्पाणिपीडनमहामहिमानमाप्य तत्राप्यसौ कलयते परमिन्द्रसाम्यम् ।
एतादृशोऽपि हहहा ! स्थित उच्चनीपे, चौर्येण सर्वतनुदर्शनकाम्ययाऽसौ ॥७॥
किन्तु प्रियस्य चपलत्वमहं तु वेद्मि, सेत्राविधौ तव सदा परमावधाना ।
चौर्यन्तदस्य किल गोप्तुमनर्हमेव, तेनैव मग्ननयनः स मया निभाल्यः ॥८॥
उद्वर्तयन्त्यमृतमङ्गमनङ्गजीवं, कस्माद् भवामि चलिताक्षितटा कदाचित् ।
तत्रापराधमतिरस्तु न मे भवत्या अस्त्येव कापि मम तत्परता किलात्र ॥९॥
अङ्गं न तत्समलमस्ति सुनिर्मलं हि, क्लान्तं न तत्परमसुन्दरमोदरूपम् ।
प्रेष्ठस्य सर्वकरणोच्चयतर्पणञ्च तस्मात्किलामृतमिदं तदनङ्गजीवम् ॥१०॥
लावण्यसिन्धुरिति यत्प्रथमं समुक्तं तद्व्यावृणोति तृषिवर्धकताप्रकाशात् ।
पूर्वं प्रिया हि दयितेऽतिकृपामयत्वात्तत्कामपूर्तिमकरोन्नवले निकुञ्जे ॥११॥
सम्प्रत्यसौ विविधकेलिविलासजन्यश्रान्त्या विकीर्णमिव वीक्ष्य तदङ्गरागम् ।
उद्वर्तनाय सजनीसहिता प्रयाति तत्कुञ्जपार्श्वगकलिन्दसुतावतारे ॥१२॥
तृष्णातुरस्तु दयितः क्षणमप्यथैकं तामन्तरा न सहतेस्म किलासितुं तत् ।
तत्रावतारनिकटस्थितमुच्चनीपमारुह्य सुन्दरतनोर्लभते स्म दृश्यम् ॥१३॥
श्रीराधिके बहुविधान् दयिताभिलाषान् संसाधिकेऽस्यकथनीयनवस्वरूपे ।
सेवावशात्परिगृहीतलघुत्वकान्ते कान्तानुजीवनमहौषधिकेलिरूपे ॥१४॥
ऐश्वर्यसौभगविदग्धतया विशिष्टं सर्वोपरिस्थितभवत्प्रियतागुरुत्वम् ।
पूर्वं नवस्वपि रसेषु विदग्धमद्य त्वत्पाणिपल्लवजुषं नवनागरेन्द्रम् ॥१५॥
एतं भवत्सुखसुखित्वसमेधमानं शृङ्गारमद्य नवलं तव सेवमानः ।
गोपालनैकनिपुणोऽपि स नागरेन्द्रो जातस्तत्वदेकवशशीलविशेषशाली ॥१६॥

लज्जालुताकृतमहो तव वाम्यमत्र स्वच्छन्दतामपहरत्युपकल्पिनोऽस्य ।
त्वत्कामनानुकरणं दधतो हि नित्यदाम्पत्यसङ्गतमहामधुरत्वभाजः ॥१७॥
यद्वा नवत्वमिदमस्ति न लौकिकत्वात्, स्पष्टप्रभावमथवाऽपरिचेयभावात् ।
आहोस्विदत्र समये-समये नवत्वं यद्याति तद्धि कथितं रमणीयमेकम् ॥१८॥
एषा प्रतिक्षणविलक्षणतात्र कान्ते कान्ताखिलाङ्गि ! तव सङ्गिनि दृश्यमाना ।
त्वद्दृष्टिमग्ननयनं स्थितमुच्चनीपे पश्यामि जातु निजकर्मणि सावधाना ॥१६॥
गत्वा त्वया सह कलिन्दगिरेर्विमुग्धबुद्धेः शिशोरिव सरिद्वपुषः सुतायाः ।
दूरीकृताखिलजनीजनकावतारमुद्वर्तयामि भवदङ्गमनङ्गजीम् ॥२०॥
अन्तःपुरीणमवतारमिमं मनोज्ञरत्नाचितं नवलपीठकभित्तियुक्तम् ।
सोपानसज्जवनिकापरिवीतमेतं नानालतावृतमपङ्किलमाप्तसौख्यम् ॥२१॥
अङ्गं तवापि विमलं सुखरूपमिष्टसर्वेन्द्रियान्तरमृतोपमतृप्तिकारि ।
यच्चाङ्गहीनमपि जीवयति प्रकामं श्यामन्तु साङ्गमुपजीवयतादवश्यम् ॥२२॥
दाम्पत्यकेऽप्यनुचरानुगतैव निष्ठा निष्कामताऽप्यनुपधि प्रियरूपसक्तिः ।
तस्मादिहाङ्गरहितो मदनोऽस्ति तस्य सञ्जीवनं त्वमृतमङ्गमिदं करोति ॥२३॥
एतादृशं तदतिसुन्दरमास्वभावादुद्वर्तितं न वचसामपि गोचरः स्यात् ।
कृष्णामृतस्नपितमेतदहो स्वचाकचिक्येन नास्तु विषयो मनसोऽपि हन्त ॥२४॥
तद्दर्शनार्थमहहा स्थितमुच्चनीपे पश्यामि मग्ननयनं नवनागरेन्द्रम् ।
सेवाविधौ तव सदा किल सावधाना चौर्यं न गोप्तुमलमत्र स नागरेन्द्रः ॥२५॥
कस्मान्निलीय कलनं ? तदिहेति जाते प्रश्ने तु कारणमनेकमिह प्रकल्प्यम् ।
सामीप्यतोऽखिलहृषीकगचञ्चलत्वान्नो रूपमात्रभजने भजतेऽकावशम् ॥२६॥
किञ्चात्र रूपभजनक्षणवर्तिचित्तवृत्तिः कुबेरनिधिचौरमिवानुयाति ।
किं ग्राह्यमत्र किमु हेयमिति प्रवेके नो कल्पते मम मनो न च चक्षुरेव ॥२७॥
लज्जालुताकृतमपावरणञ्च नो मे सर्वाङ्गदर्शनविधेर्ददतेऽवकाशम् ।
रूपाभिषक्तिमिति दर्शयता प्रियेण स्थायिस्थितिः किल कृता यमुनोच्चनीपे ॥२८॥
उच्चस्तरुः किल कलिन्दसुतातटेऽस्ति, सोऽप्यस्ति तावदवतारजलात्समुच्चः ।
अत्युच्चनीपनिबिडस्थितमत्र मां वै कश्चिन्न पश्यति कदाचिदिति स्म सोऽवैत् ॥२९॥
किन्त्वस्य तर्षिततमं हृदयं तु जाने जाने च कुत्रचिदयं किल गुप्तगात्रः ।
स्नान्तीं प्रियां समवलोकयति स्थितः सन्नित्यस्मि देवि ! तव सेवनसावधाना ॥३०॥
द्रक्ष्यामि'रूपमिह भाविनमर्थमाह, 'पश्यानि' रूपमपि केवलमर्थितं तम् ।
'पश्यामि' रूपमथ सन्ततवर्तमानमुद्वर्तनं नवलदर्शनमप्यभाणीत् ॥३१॥

# चतुर्विंशः सर्गः

**सत्प्रेमराशिसरसो विकसत्सरोजं**
**स्वानन्दसीधुरससिन्धुविवर्द्धनेन्दुम् ।**
**तच्छ्रीमुखं कुटिलकुन्तलभृङ्गजुष्टं**
**श्रीराधिके ! तव कदा नु विलोकयिष्ये ।।**

प्रोक्तं पुरा यदमृतच्छविरूपसिन्धुः श्रीराधिकेति तदिह स्फुटमाह वंशी ।
यद्वाऽस्ति मग्ननयनो दयितः प्रियास्ये, तच्छलाघयत्युभयमेकपथेन साध्यम् ।।१।।
श्रीराधिके, त्वमसि सुन्दरशेखरस्य नूनं तपःफलतया परसिद्धिरूपा ।
वाचामगोचरतया छविरूपसिन्धुश्रीविग्रहा त्वमुदिता परमानुभावा ।।२।।
प्रेमास्पदं त्वमसि जीनवदासि दासीभावेन सेवितवतां सुखसिद्धिदासि ।
सौभाग्यगर्वभरखर्वितचन्द्रशोभं त्वच्छ्रीमुखं मम दृशोर्विषयः कदा स्यात् ।।३।।
पूर्वं विलोकितमपि त्वदनुग्रहेण भूयो विलोलुकिषया ऽनुविलोकयिष्ये ।
इत्यत्र 'अन्विति' पदेन सुसूचितं नो यद्वा प्रियान्ववविलोकनमीप्सितं स्यात् ।।४।।
पूर्वं प्रियस्तव मुखं स विलोकयेद्यस्तृष्णातुरो मम चटूक्तिशतं करोति ।
पश्चादहं परमुदा वनुतलोकयिष्ये, इत्युक्तिरत्र परमां रुचिमातनोति ।।५।।
यद्वाऽन्विदं प्रकटयेद्द्विगतं विकल्पं, पश्यामि वै क्षणमहं स्थितमुच्चनीपे ।
त्वच्छ्रीमुखं क्षणमहं च विलोकयामि, यत्रास्ति मग्ननयनो दयितः सदा ते ।।६।।
यद्वा पुरा परमुदा नवनागरेन्द्रं पश्यामि चानु तव सुन्दरमेतदास्यम् ।
यत्प्रेमराशिसरसो विकसत्सरोजम्, स्वानन्दसीधुरससिन्धुविवर्द्धनेन्दुः ।।७।।
उद्वर्तनावसरविस्मितदृष्टिमालीं दृष्ट्वा प्रियानुमिनुते दयितस्य शीलम् ।
स्मृत्वा तृषातुरमिमञ्च चलद्भ्रु तूर्णं वासो दधाति परमुत्सुकिता क्षणान्ते ।।८।।
क्वासौ कथं स्थित इति प्रति पृच्छयमाना नीपस्थितं निजदृशैनमदर्शयत्सा ।
तद्दर्शितप्रियविलोकनतः प्रियायाः सत्प्रेमराशिसरसो विकसत्सरोजम् ।।९।।
तच्छ्रीमुखं कुटिलकुन्तलभृङ्गजुष्टं द्रष्टुं भवत्यवसरः सुलभः सजन्याः ।
सत्प्रेमराशिसरसश्च विचारणायां, यत्सत्यमेव मतबाधतया च नित्यम् ।।१०।।
यल्लेशमात्रकलनात्सकलत्रिलोक्यां तत्प्रेम भाति सदिवाथ च नित्यमेव ।
प्रेम्णः सतः सपदि तादृगलौकिकस्य राशिः समुद्र इव यद्गहनं सरोऽस्ति ।।११।।

तस्याद्भुतस्य परमाद्भुतमेव किञ्चित् स्मेरं मुखं भवति तद् विकसत्सरोजम् ।
सत्प्रेमसिन्धुरपि कोमलसौकुमार्यार्हत्वेन वै सरसिजस्य सरः प्रक्लृप्ता ॥१२॥
एतादृशं क्वचिदलौकिकमस्तु पद्मं, तेनोपमा भवति देवि भवन्मुखस्य ।
इत्याशयेन भगवान् हरिवंशचन्द्रो राधासुधानिधिमधि प्रपठत्यपूर्वम् ॥१३॥
"यदि कनकसरोजं कोटिचन्द्रांशुपूर्णं नवनवमकरन्दस्यन्दि सौन्दर्यधाम ।
भवति लसितचञ्चत्खञ्जनद्वन्द्वमास्यं तदपि मधुरहास्यं दत्तदास्यं न तस्याः ।"१४॥
पद्मं गता विधुगुणान् विधुगा च पाद्मान् भुङ्क्ते न जात्विह गुणान्पुनरित्यसत्यम् ।
राधामुखं युगपदेव विकासि पद्मं स्वानन्दसीधुरससिन्धुविवर्धनेन्दुः ॥१५॥
स्वो नाम यः किल निजो व्यतिरेकशील आनन्द उच्यत, इहाद्भुतमुख्यशब्दैः ।
यद्वा 'सु' सुष्ठुरिह यः प्रथितो निकुञ्जे, यद्वा स्वकर्तृकतया विदितो रहो यः ॥१६॥
आहोस्विदत्र दयितस्य वशे स्थितस्य स्वस्यास्ति यः परममोदमयः प्रतीतः ।
सीधुः स एव किल साकृति मादकत्वं यद्वारुणीव रससिन्धुरसादुदेति ॥१७॥
सिन्धोश्च तस्य खलु कान्तवपुः स्थितस्य विष्वग्विशेषतरवर्धनहेतुरिन्दुः ।
तच्छ्रीमुखं यदवलोकनहर्षतोऽयं संवर्धते प्रियतमो रमतेऽतिवेलम् ॥१८॥
यद्वा प्रिया स्वकृपयात्र विलोक्य कञ्चिदानन्दमैरयदिह प्रियनागरेन्द्रे ।
सोऽयं च सीधुरभवत्किल यस्य तस्य संवर्धनेन्दुरिदमास्यमहो रसाब्धेः ॥१९॥
राधाकटाक्ष इह सीधुतयानुभूतः, प्रेयःकटाक्ष इह वै रसतां दधानः ।
राधा महारसनिधिः कथिता स्तवेऽस्मिन् श्यामस्तु हन्त रससिन्धुरितीरितोऽस्ति ॥२०॥
किंवास्तु सीधुरस एव निजप्रमोदस्तस्यास्य सिन्धुरयमस्तु च नागरेन्द्रः ।
संवर्धनोऽस्य पुनरिन्दुरिवातिमात्रं राधामुखं सखि कदा नु विलोकयिष्ये ॥२१॥
'स्वानन्दसीधु' मुखमित्यथवास्तु वाक्यं, सीधुर्मधु प्रथयतान्मकरन्दमर्थम् ।
स्वानन्दरूपमकरन्दमिदं सरोजं राधामुखञ्च रससिन्धुविवर्द्धनेन्दुः ॥२२॥
इन्दुर्हि सिन्धुजनितस्तदुपैधकश्च दूरे स्थितोऽपि जगतः परिमोदकश्च ।
सर्वे गुणा अवगुणोज्झिततताभ्युपेता राधामुखे विदधते दधतेऽतिरेकम् ॥२३
सत्प्रेमसिन्धुसरसो विकसत्सरोजं स्वानन्दसीधु नवकुन्तलभृङ्गजुष्टम् ।
इत्यद्भुतं पदचतुष्टयतः प्रतीतं तच्छ्रीमुखं सखि कदा नु विलोकयिष्ये ॥२४॥
कौटिल्यमत्र किल कुन्तलगं स्वभावाद् वाम्यं प्रियागतमपि ध्वनयत्यवश्यम् ।
भृङ्गैरिवैभिरलकैः कुटिलैश्च जुष्टं भृङ्गेण तेन कुटिलेन सदास्तु जुष्टम् ॥२५॥

यावत्प्रियः सरलताधृगुपैति तावल्लज्जाविनम्रवदनां न स पश्यतीह ।
कौटिल्यमाश्रितवतः किल कुन्तलानामुच्चस्थितिव्रतमुपेयुष एति दृष्टिम् ॥२६॥
राधामुखं यदुदितं विकसत्सरोजं तेनेदमीरितमिहामृतरूपसिन्धुः ।
रूपं हि मुक्तहरितादिकसप्तभेदैः पद्मे मुखे च निवसेदभितो यथार्हम् ॥२७॥
यच्चापि तन्मुखमिहाभिहितं किलेन्दुस्तेनेदमुक्तममृतच्छविसिन्धुरूपम् ।
तेन प्रभापरिसरेण चमत्कृतैश्चाह्लादैकजन्मदतया च परीतमेतत् ॥२८॥
एतद्यथास्फुरित मीरितमत्र भाष्ये व्यासोपमामहरिलालमहोदयेन ।
अन्वीरितञ्च मयकापि यथाप्रसादमासाद्य भावुकमनःसरसप्रयुक्तिम् ॥२९॥

## पञ्चविंशः सर्गः

वैदग्ध्यसिन्धुमुखसप्तविशेषणैर्या श्रीराधिकेति मृदुनामवती मयोक्ता ।
सिन्धुत्वसिद्धय इहास्ति सदानुयोगः श्रीश्यामचन्द्र इति नामवतः प्रियस्य ॥१॥
इन्दुः स सिन्धुरपि, सिन्धुरियं तथेन्दुस्तुल्यावुभौ सतततुल्यरसानुरागौ ।
धर्मस्तु संव्यतिषजन्नपि नास्ति वेद्यो राधाभिधे मम मनोऽखिलसारसारे ॥२॥

**लावण्यसाररससारसुखैकसारे**
**कारुण्यसारमधुरच्छविरूपसारे ।**
**वैदग्ध्यसाररतिकेलिविलाससारे**
**राधाभिधे मम मनोऽखिलसारसारे ॥२५॥**

सारोऽखिलस्य जगतः स मुकुन्द एव, तस्यापि सार इयमस्ति सुजीवनत्वात् ।
यद्वा मयाऽत्र कथिताः सुगुणा हि सारः, तेषाञ्च सार इयमस्ति गुणैकसिन्धुः ॥३॥
वाचा गुणोऽपि किल वर्णयितुं न शक्यः, शक्या कथं नु गुणिनी गुणिनीः प्रवक्तुम् ।
नाम्नैव केवलमियं कथिता मया तद् राधाभिधे मम मनोऽखिलसारसारे ॥४॥
नानामताभिमतवस्तु किलास्ति सच्चित्स्वानन्दरूप इह कश्चिदमोघलीलः ।
श्रीकृष्ण एव, परमस्य परप्रमोदसंसिद्धिदे मम मनोऽखिलसारसारे ॥५॥
'राधाभिधे' इति पदे किमु नाम्नि लग्नं, नामिन्यथो मन इति प्रवितर्कयन्ति ।
कस्मिन्भवेदिति वितर्क्यविचारणायां राधेति नामनि समुत्सुकता विभाति ॥६॥
सारं परं न खलु वेद्मि, न निर्विशेषं सारं किमप्यथ मनो वृणुते ममेदम् ।
नामान्तरान्वितमपि प्रतियाति नेदं, राधाभिधे मम मनोऽखिलसारसारे ॥७॥

राधेति नाम्नि यदुपस्थितमत्र वस्तु तत्सर्वसार इति मन्मनसा गृहीतम् ।
तस्मिन्मनो मम सदा लसतादितीयं, मत्प्रार्थना सपदि तच्छ्रवणातिथिः स्यात् ।।८।।
तत्सर्वसारगतसारतया गृहीतं 'लावण्यसार' इति सम्मतमच्युतस्य ।
लावण्यनिर्जितशताधिककोटिकामो लावण्यमेतदवलोक्य विमुह्यतीह ।।९।।
सिन्धोर्यथाऽमृतमुदेति नवोद्धृतं च दध्नस्ततः परमुदेति न किञ्चिदन्यत् ।
लावण्यतस्तदिव सार इयं समुत्था अस्याः परं किमपि सारमहं न जाने ।।१०।।
सौन्दर्यरोचकतया यदिहावभाति मुक्ताफले जलमिव स्फुरदन्तरेव ।
लावण्यमेतदुदितं किल तस्य सारो राधाभिधो मम मनो हरते नितान्तम् ।।११।।
लावण्यमप्यथ रसेन विभाति धन्यं, तस्मादुवाच-'रससार' इति द्वितीयम् ।
यं 'वै रसः स' इति गायति वेदवाणी सोऽयं परात्परतया प्रथितो रसाब्धिः ।।१२।।
तस्यापि वर्द्धनतयेन्दुरिवास्ति सारो यस्तत्र मे मन इदं रमतामकामम् ।
आस्तां द्वयोः समरसत्वमथापि लोके, शास्त्रेष्वहृश्यत इह प्रमदा प्रधानम् ।।१३।।
तत्राप्यहो व्रजगते तरुणीकदम्बे चूडामणेः प्रमुखता स्वत एव सिद्धा ।
लावण्यमस्तु च रसोऽस्तु परं न यत्र किञ्चित्सुखं तदिह कैः कमनीयमस्तु ।।१४।।
इत्याह तत्र कमनीयसुखैकसारे, शब्दादिकेन्द्रियसुखान्मनसः सुखाच्च ।
आध्यात्मिकादथ सुखात्परमात्मलब्धेः सर्वोपरिस्थितसुखाच्च विशिष्य सारे ।।१५।।
आनन्दनस्य सुखकारितयाऽत्र सिद्धे राधाभिधे मम मनोऽखिलसारसारे ।
गार्हस्थ्यजीवनसुखे किल बाल्यतः स्याद् वंशद्वयस्य परिवारशतेन मोहात् ।।१६।।
तत्पालनं सपदि लालनमत्र चारुचारित्र्यदर्शननवस्तुतियोग्यता च ।
नीराजनादि दयिताङ्घ्रियुगस्य मातापित्रादिपूर्णनवलप्रणयास्पदत्वम् ।।१७।
स्वायत्तवल्लभतया च विजृम्भितोरुसौभाग्यमप्यहह कल्पयते सुखाय ।
तत्रापि हेतुरियमेव ममास्ति राधा, गोविन्द एकल इहास्ति हि वत्सलत्वम् ।।१८।।
तत्सर्वरीतिघटितस्य सुखस्य सारे वात्सल्यदास्यसखितादिसमाश्रयेऽस्मिन् ।
शृङ्गारनिष्ठभजने तु मनोदृगाद्यानन्दप्रदेऽतिललितेऽस्तु मनो मदीयम् ।।१९।।
किन्त्वीदृशेऽपि यदि नास्ति परार्तिचिन्ता, कारुण्यमात्रविषयेति तदाह हेतुम् ।
'कारुण्यसार' इति तत्र विवेचनीयौ वात्सल्यसिन्धुरतिसान्द्रकपैकसिन्धूः ।।२०।।

वात्सल्यमालिजन एतदथो कृपेयं कान्तेऽभ्युदेति करुणावरुणालयेऽन्तः ।
तेनैव चित्तवचनातिगसौख्यदेयं सर्वार्थसारवर्षिकृपार्द्रदृष्टिः ॥२१॥

अत्रापि चेतसि दयोदयते प्रियालीवर्गे प्रिये च नितरामिति सूचितोऽर्थः ।
दद्यात्तु किं तदनयोः परमात्युदारेत्यत्रोच्यते सुमधुरच्छविरूपसारा ॥२२॥

ऐश्वर्यमप्यनवलम्ब्य समादृतेयं भक्तैस्त्वया च मधुरच्छविरद्भुतैव ।
या वै मनोनयनहर्षकरी द्युतिस्ते यच्चाङ्गसौष्ठवगतं तव रूपमुच्चम् ॥२३॥

तद्वर्तते प्रियतमेऽपि, परन्तु मोहं तस्यापि यज्जनयति त्वयि तत् समस्ति ।
मुग्धेपि जातु मधुरच्छविरूपसारः सन्तिष्ठते नतु चमत्कृतिसु प्रसारः ॥२४॥

'वैदग्ध्यसार' इति मुग्धदशानिषेधे कान्तानुभाव नवकेलिकलावबोधः ।
वैदग्ध्यमेव किल नागरतेति चित्तवागिन्द्रियाङ्गनिपुणत्वमिति स्मृतं स्यात् ॥२५॥

वैदग्ध्योद्भवकारणं तदथवा, तद्वत्प्रियस्यापि वा
सम्मोहे च वशीकृतौ च कुशलत्वात्सार एषोदिता ॥२६॥

नन्वस्मिन् सति चातुरी सुविभवेऽप्यास्वादयोग्या कथं
तत्राहू रतिसारकेलिविलसत्सारेति शब्दत्रयम् ॥२७॥

दक्षत्वमत्र च कलागुणयोस्तथापि मुग्धत्वमित्यहह नागरतैकसारः ।
शृङ्गारभावरतिरस्ति किलात्र पत्युः कान्तागता तदुपजाः किल केलयः स्युः ॥२८॥

आलिङ्गनाधरसुधास्वदनादिकास्ता यद्वा जलस्थलवनादिभवा विहाराः ।
रत्यास्पदानुनयनाय कृताः स्मरोत्था उत्थापनाय मदनस्य किल प्रयुक्ताः ॥२९॥

तासां विलास इति पत्रफलप्रसूनसम्पन्नवृक्षवदिमा यदि सम्भवन्ति ।
यद्वा यदा विलसनं रसनं च तासां जायेत तर्हि रतिकेलिविलासजन्म ॥३०॥

सारः फलस्य रसवद् भवतीति यद्वा तद्वत्प्रियस्य धनजीवनतादिहेतुः ।
अत्राधिदैविकगुणानवपीड्य चक्षुदण्डादिवत्तत इयं निचितास्ति सारः ॥३१॥

प्रेमैकभाजनतया च स सार एषा 'राधाभिधा मम मनोऽखिलसारसारः' ।
अन्ते च गद्गदतयाऽस्ति भवत्यवत्यादीनामिहोक्तिरपि नैव मयास्ति शक्या ॥३२॥

# षड्विंशः सर्गः

सिन्धुर्यदा 'स्फुरतु मे हृदि तर्हि राधा' सारो यदा 'मम मनोऽस्तु तदा त्वयी' ति ।
राधामपेक्ष्य मनसोऽस्ति महत्त्वमत्र सूक्ष्मत्वमप्यथ ममेति परं परस्तात् ॥१॥

अत्राधुना हृदयसम्पुटसन्मणित्वं प्रोच्य प्रकाशयति कश्चन चारुयोगम् ।
योगेन येन हृदयाज्जनितत्वमस्यास्तद् व्यज्यते च हृदये सततं स्थितत्वम् ॥२॥

**चिन्तामणिः प्रणमतां, व्रजनागरीणां**
**चूडामणिः, कुलमणिर्वृषभानुनाम्नः ।**
**सा श्यामकामवरशान्तिमणिर्निकुञ्ज-**
**भूषामणिर्हृदयसम्पुटसन्मणिर्नः ॥२६॥**

हाहा विलोकयत लोकगतं प्रमादं देवेषु यो निजपराङ्गशतं समर्प्य ।
क्षुद्राल्पदार्थकणकान्क्वचिदश्नुते वा नैवाश्नुते, न शरणं परमभ्युपैति ॥३॥

'अहो प्रणामाय कृतः समुद्यमः प्रपन्नभक्तार्थविधौ समाहितः ।'
इत्यादिशिक्षा हरिणा यतोऽर्जिता तां राधिकां न प्रणमन्ति मूढाः ॥४॥

येऽपि प्रकृष्टशरणं परिमान्य राधापादारविन्दममलं प्रणयान्नमन्ति ।
तेषां मनागपि मनस्युदितां तु चिन्तां, चिन्तामणिर्व सहसा परिपूरयन्ती ॥५॥

स्त्रीभावलभ्यमथ मञ्जु पदारविन्दं तत्केन केचन नरा अपि सन्नमन्ति ।
नोचेत्कथं प्रणमतामिति पुंविशेष्यं प्रायुङ्क्त शब्दमिह युक्तवचोऽभियुक्तः ॥६॥

सत्यं यदापि ललितादिसखीषु काचित्काचित्तदीयकरुणाश्रयणाथवा चित् ।
राधापदे प्रणमति प्रणमत्यथायं कान्तोऽपि तर्हि तदितीह पुमेकशेषः ॥७॥

राधापदं प्रणमतां किल भावयाच्ञा चित्तेऽभ्युदेति कुहचिच्च रसाधिकारे ।
भावं रसं द्वयमपि प्रविचिन्तितं तु श्रीराधिका वितरतीह कृपैकसिन्धुः ॥८॥

यद्वा प्रियस्य रतिकेलिविलासकाम्यां, मानापनोदनमनोरथकं सखीनाम् ।
वृन्दावनस्थनवकुञ्जलतातरूणां लीलासुखाभिलषितं किल पूरयन्ती ॥९॥

चिन्तामणिः प्रणमतां कथिता भवन्ती वृन्दावने सपरिवारनिवासदा स्यात् ।
इत्यस्म्यनन्यगतिरेकगतिस्त्वदीये पादाम्बुजे मुहुरयं प्रणमामि मन्दः ॥१०॥

चिन्तामणिः प्रणमतामिति सर्ववश्याप्येषाऽस्ति चिन्तकवशेति कुतः स्वतन्त्रा ।
तत्राह-सन्ततमियं 'व्रजनागरीणां चूडामणि' स्तदियमस्ति परं स्वतन्त्रा ॥११॥

'तदभूरिभाग्यमिह जन्म किमप्यटव्यां यद्गोकुलेऽपि कतमाङ्घ्रिरजोऽभिषेकम् ।'
इत्यादिना व्रजजनस्य ततोऽपि चास्य श्रीगोकुलोद्भवजनस्य ततोऽप्यटव्याम् ॥१२॥
आपन्नदिव्यजनुषः परमत्वमुक्तं, सर्वेभ्य एव कतमाङ्घ्रिरजोविशेषः ।
अङ्घ्रेः किलात्र रजसोऽपि परत्वमुक्तमङ्घ्रेरपीह कतमामहिमा समुक्तः ॥१३॥
तासामपीह कतमेति पदोदितानां चूडामणिः परमियं व्रजनागरीणाम् ।
वैदग्ध्यरागरसमुख्यगुणाद्भुतानां चूडामणिर्भवति सर्वत उत्तमेयम् ॥१४॥
सा स्वामिनीह परमेति परं स्वतन्त्रा चिन्ताकृतेः परवशत्वमिहाभिनीता ।
आधाय मूर्धनि यदापुरुदारगोप्यो, यत्पादपद्मनखचन्द्रमणिच्छटायाः ॥१५॥
स्त्रीभावलभ्य इति चापि यदुक्तमत्र, यच्चापि तत्र तरुणीगणनागरीति ।
तत्सर्वमेव भवती व्रजनागरीणां चूडामणिर्भवति नूनमिति प्रसिद्ध्यै ॥१६॥
चूडामणिर्भवति सौभगलक्षणं यत् तद्राधिकैव सकलस्य सखीगणस्य ।
स्वामिन्यमुष्य किल सौभगमेव मूर्तं चूडामणिस्तत इयं व्रजनागरीणाम् ॥१७॥
सौभाग्यमेव सकलस्य सखीजनस्य श्रीराधिकेति भवताऽऽभवता किलोक्तम् ।
कन्याजनस्य पितृमातृपरप्रियत्वे नारीजनस्य च पतिप्रियता सुभाग्यम् ॥१८॥
तत्राह-सा कुलमणिर्वृषभानुनाम्नः, सा श्यामकामवरशान्तिमणिस्तथेति ।
तन्नामकव्रजपतेः कुलकीर्तिवृद्धिं कृत्वा प्रकाशितवती कुलमस्य राधा ॥१९॥
के नामरूपसहिता अपि ते किलासन् राधा न चेत्कुलमिदं निजजन्मनैच्छत् ।
नैतावता कुलमिदं विपुलं न पूर्वमित्यस्तु विज्ञसदसि भ्रमवान् विचारः ॥२०॥
स्तुत्यः प्रकाशक इह प्रथमं परस्तात्स्तोतव्यमेतदुपकारकरं प्रकाश्यम् ।
स्यात्काञ्चनं तु वृषभानुकुलं तदन्तः सम्बन्धतः कुलमणिर्गुणिवत्सुताऽस्तु ॥२१॥
श्रीदाम्यदः कुलमणित्वमभूद्यथार्थं पुत्रा हि नाम निजजन्मकुलं पुनन्ति ।
तस्मिन् स्थितेऽपि वृषभानुमनः सुतायामस्यां जगाम बहुवत्सलतानुबन्धम् ॥२२॥
एषा तु पुत्रशतकादपि वल्लभेति यद्वा कुलस्थसकलद्युतिकारिकेति ।
नारीनरेषु परमा सुखवर्षिणीति, स्नेहैकपात्रमिति सा मणितां दधाति ॥२३॥
अस्याः परं न खलु सन्ततिकामनाभूत् तेनैतयैव निजवंशगतिं स मेने ।
यद्वा स्थितेऽपि सुतके परमोऽनुरागः स्नेहात्मकः कुलमणावभवत्किलास्याम् ॥२४॥
यद्वा किलैष वृषराशिगतस्तु भानुस्तीव्रप्रतापपरितापितसर्वलोकः ।
भानुभ्य एव स परेभ्य इहातिमात्रं तेजस्वितां स्वसहजेभ्य इमां दधाति ॥२५॥
तेजस्वितास्य रसवृष्टिनिदानभूता तापोपशान्तिमिह सञ्जनयत्यवश्यम् ।
यद्वा यशःप्रभृतिनैकगुणाः कराः स्युस्तस्याप्यसौ कुलमणिः परमप्रकाशा ॥२६॥

भानुः प्रकाशकलया प्रथितः पृथिव्यास्तस्य प्रकाशकमितोऽपि महत्तरं स्यात् ।
इत्याशयेन खलु सूक्ष्मविशेषणार्थं राधा तु तत्कुलमणिर्मणिरूपिणीयम् ॥२७॥
यद्वा वृषाभिधतया विदितोऽत्र धर्मस्तस्यापि भानुरिति यः परमोऽस्ति धर्मः ।
तस्याप्यसौ कुलमणिः शिरसार्हणीया, राधापदाब्जशरणा विरतास्ततोऽपि ॥२८॥

'रहस्यं श्रीराधेत्यखिलनिगमानामिव धनं,
निगूढं मद्वाणी जपतु सततं जातु न परम्' ।
इति श्रीमत्पुष्टिप्रपथपथिको विट्ठलमुनी
रहस्यं तां सर्वागमनिगमजातस्य वदति ।

मणावस्मिन् धर्माः सकलजगतो मङ्गलकराः
प्रतापाश्चा उक्ता अथ कथयते शान्तिगुणताम् ॥२९॥

किशोरः श्यामो यः परमसुखरूपः सुविदित-
स्तदीयः कामो वै मदन इति वा कान्तिरिति वा ।
विलासे तृष्णा वा तदुपरमहेतुः किलवरो
भवेच्छान्त्याधायी मणिरिह विशेषात्सुखकरः ॥३०॥

प्रियापाङ्गाज्जाते प्रथितमिह यत्कामवरके
शराणां कोटीभिर्मुदुदयितमूर्छादिकरणम् ।
तदीयायाः शान्तेरुपकरणभूतो मणिरियं
प्रसिद्धा लोके सा सपदि दयिते कामवरदा ॥३१॥

स कामोद्दीप्तावप्यहह नवरूपेन्दुकिरणान्
चकोरः पीत्वायं स्मरति नहि तं शान्तमधिकम् ।
पिधानं त्विच्छानां निजचरणमित्यादिवचने
पिधानं निर्हारार्थकमिति निवृत्तिः खलु शमः ॥३२॥

एतादृशो मणिरयं हि महार्घतायाः सीमानमप्यतिगतः क्व नु लभ्य एषः ।
इत्याह–हन्त खचितः स हि सन्निकुञ्जभूषामणिस्तदयि यात निकुञ्जभूषाम् ॥३३॥
यद्वा निकुञ्जमिह मञ्जुलतादिपुञ्जं वृन्दवनोद्भवमिदं किल भूषयन्ती ।
राकानिशाकरसुगौरमुखच्छटाभिस्तस्या इदं पुनरनेन च सा विभाति ॥३४॥

कुञ्जच्छविप्रणयनेन च भूषितस्याधीनत्वमप्यहह देव्युररीकरोति ।
भूषास्थितोऽपि बहुमूल्यमणिश्च मञ्जूषाभ्यन्तरेषु बहुशो भवतीह रक्ष्यम् ॥३५॥

तत्राह—नो हृदयसम्पुटमध्यवर्ती सन्नित्यमेव मणिरेष विराजमानः ।
चिन्तादिधर्मसहितोऽत्र सखीजनानां यद्वा ममैव मणिधारणगौरवेण ॥३६॥

युक्तं बहुत्वमथवा सकला विशेषाः सिध्यन्ति मद्धृदयसम्पुटसन्मणित्वात् ।
यद्वा वयं परमसौभगशालिनः स्मश्चिन्तामणिः कुलमणिश्च यतोऽस्मदीयः ॥३७॥

"व्यासचित्तस्थिताकाशादवच्छिन्नानि कानिचित् ।
अन्ये व्यवहरन्त्येतान्यूरी कृत्यगृहादिव" ॥

इत्यादिवन्महदिदं मम गौरवं वा नित्यं सखीजनसहस्थितिदर्शनाद्वा ।
यत्नैश्च सेवकपरायणतादिहेतोः किञ्चैकमेकमुपपद्य तथाभिमानः ॥३८॥

यत्र स्वयं सकलधर्मतया स्थितेयं सारङ्गवत्सुरतरुं प्रतिपद्य नान्यत् ।
सेवामहे वयमिति व्रतगौरवं वा, तच्छक्तिधर्मप्रभृतौ न प्रयोजनं वा ॥३९॥

यत्नात्तु पालनमहो परमोऽस्ति लाभः, सर्वेभ्य एव वयमत्र विशेषभाजः ।
अस्मासु सन्मणिरयं निरपेक्षधर्मे, हेतुः परस्य तु भवेदपि चिन्तनादौ ॥४०॥

दृष्ट्वा दृष्ट्वा जीवनं मन्यमानाः, दृष्टेर्भीत्या हृत्समुद्गे दधानाः ।
चिन्ताचूडाकीर्तिशान्त्यादिधर्मैः पुंश्चलद्योऽन्या मद्गतिस्ता हितालयः ॥४१॥

## सप्तविंशः सर्गः

एतामचिन्त्यविभवां मणिमप्यगाधप्रेमैकसिन्धुमहहा किमु वर्णयामि ।
यद्वा भवेद्धृदयसम्पुटसन्मणिर्नो नामात्र सावहिततास्ति तथापि युक्ता ॥१॥

निश्चिन्तता त्वनुचिता किल चिन्तनानि चित्तस्य भावरसवृष्टिमुपाहरन्ति ।
नित्यं तु तत्प्रवणताऽभ्युचितेति चेतो राधां द्रुतं त्वमिह संश्रय साधुभावात् ॥२॥

**मञ्जुस्वभावमधिकल्पलतानिकुञ्जं**
**व्यञ्जन्तमद्भुतकृपारसपुञ्जमेव ।**
**प्रेमामृताम्बुधिमगाधमबाधमेतं**
**राधाभिधं द्रुतमुपाश्रय साध चेतः ॥**

चेतो यदि त्वमसि साधु यथार्थनाम, ज्ञानेन चेतनमसि स्वहितावहेन ।
राधाभिधं किमपि संश्रय तर्हि तूर्णं, प्रेमामृताम्बुधिमगाधमबाधमेतम् ।।३।।

प्रत्यक्षतो हितमहं स्वदृशोः पुरस्तात्प्रोज्जृम्भमाणरसवीचिमपश्यमत्र ।
तस्मात्त्वयात्र न विलम्बलवोऽपि कार्यः,शङ्का च मास्तु न च संशय एव तेऽस्तु ।।४।।

यद्वा भव द्रुतमिह प्रणयप्रकर्षाद् रूक्षेण हि क्वचन बोद्धुमपि त्वशक्यम् ।
किन्त्वैनमाश्रय विना कपटं, निमित्तं, साधुप्रकारक उपाश्रय एव शस्यः ।।५।।

दूरादपि श्रयणमस्तु मनःकृतं वा, इत्याह नूनमुप-पार्श्वत एव यावत् ।
यद्वा निरन्तरतया भजनस्य शक्तिं जानीहि, सेवय, न दूरतयान्वयोऽस्य ।।६।।

राधाभिधास्ति किल यस्य तदस्ति किन्नु ? प्रेमामृताम्बुधिरिति प्रतिवक्ति तत्र ।
लोकोत्तरस्य खलु सा प्रणयस्य मूर्तिर्यस्यामिहेदृशपयोनिधितोपदृष्टा ।।७।।

एषोऽप्यगाध इति धीरगभीरताया अक्षय्यतादिकगुणस्य विबोधकोऽयम् ।
नायं तिमिङ्गिलगिलादिकवाडवाग्निमुख्यैरुपाधिभिरिह प्रतिबध्यते च ।।८।।

सा लावण्यचमत्कृतिर्नववयो रूपञ्च तन्मोहनं,
तत्तत्केलिकलाविलासलहरीचातुर्यमाश्चर्यभूः ।
नो किञ्चित्कृतमेव यत्र न नुतिर्नागो न वा सम्भ्रमो,
राधामाधवयोः स कोऽपि सहजः प्रेमोत्सवः पातु वः ।।

प्रेमामृतेति कथनान्मधुरत्वमुक्तं क्षीरादिसिन्धुषु तदस्ति किल स्वभावात् ।
तत्राह-मञ्जवति यथा प्रकृतिर्जलस्य शैत्यं हि यत्तदिवि मञ्जुरयं स्वभावात् ।।९।।

वाम्येऽपि मञ्जुलतयापरिहार्यधर्मः किं सुन्दरे न खलु सुन्दरमित्यथापि ।
वक्रत्वमत्र किल शोभत एव दिव्यप्रेम्णीति हन्त ! सरलोऽप्यतिवक्र एषः ।।१०।।

उज्जृम्भते यदि कदाचन तत्प्रसादस्तद्वै किमुच्यत इहातितरां मनोज्ञम् ।
यद्यप्यगाधगुणशालितयाऽतिदुःखात्साध्यत्वसिद्धिरिति पर्यवसितेश्वरत्वम् ।।११।।

नो सौकुमार्यसुखसेव्यतया प्रतीतिस्तत्राह नूनमधिकल्पलतानिकुञ्जम् ।
व्यञ्जन्तमद्भुतकृपारसपुञ्जमेवेत्यादौ सुसेव्यमिति दर्शयति स्म भङ्ग्या ।।१२।।

अस्मिन्निकुञ्जकथनात् स्वनिकुञ्जभूषा, प्रेमामृताम्बुधिरपि व्रजनागरीणाम् ।
उक्तं यदद्भुतकृपारसपुञ्जमेव चिन्तामणित्वमथ तन्नवतां व्यनक्ति ।।१३।।

सा तादृशी परमवैभवशालिनी नो भूत्वा वसेद्धृदयसम्पुटसन्मणिर्यत् ।
तच्छ्यामकामवरशान्तिमणित्वमप्याहाथेह मञ्जुप्रकृतिर्वृषभानुनाम्नः ॥१४॥

राधाभिधेति परमा नवसिद्धिरूपा याऽस्त्यष्टसिद्धिमणिमादिपरामतीता ।
या भक्तिरस्ति भगवत्यनुरागरूपा, ताञ्चातिशय्य परप्रेमसुधाम्बुधिः सा ॥१५॥

प्रेमास्पदं भवति यः किल भक्तियोगे, प्रेमास्पदं त्वमसि तस्य किलेश्वरस्य ।
एतादृशोऽपि यदिहैतमिति प्रदिष्टेः प्रत्यक्षवत्किल दृशोर्विषयः स जातः ॥१६॥

यद्वा यदैवमधिकल्पलतानिकुञ्जमभ्यागता किल दृशोर्विषयोऽपि भूतः ।
व्यञ्जन्तमद्भुतकृपारसपुञ्जमेवाप्यस्माद्वयं मनसि विश्वसिमः कृतार्थाः ॥१७॥

सेयं कृपारस इति त्वथवास्य पुञ्जमित्यादि सर्वमपि किञ्चन व्यङ्ग्यमाह ।
मञ्जुस्वभावमिति यत्प्रथमं निरुक्तं पश्चात्तदेवमधिकल्पलतानिकुञ्जम् ॥१८॥

तत्रापि चाद्भुतकृपारसपुञ्जमेव व्यञ्जन्तमित्यहह किं प्रणयत्सुभाग्यम् ।
तस्मात्स्वनामसफलत्वविचारपूर्वं राधाभिधं द्रुतमुपाश्रय साधु चेतः ॥१९॥

प्रेमामृताम्बुधिमगाधमबाधमेतमित्यत्र युक्तमभवद्वदितुं किलैनम् ।
किन्त्वीदृशन्न मयका प्रथमं प्रदिष्टं पश्यामि यद्यदपि तन्नवमेव भाति ॥२०॥

मञ्जुस्वभाव इति दोषचयक्षमा स्यात्, चिन्तामणिस्तदधिकल्पलतानिकुञ्जम् ।
शङ्कस्व मा किल कृपारसपुञ्जवर्षी, प्रेमामृताम्बुधिरिति प्रवहेदसीमम् ॥२१॥

इत्याश्रये न भयमस्ति न च श्रमोऽस्ति तस्मादिमं द्रुतमुपाश्रय साधु चेतः ।
त्वञ्च द्रुतं समसि साधु च विद्यसेऽद्य किञ्चोपवर्ति वपुषा मनसा तथासि ॥२२॥

तस्माद्विलम्बसहनं न किलास्ति कार्यं योग्यत्वमाश्रितगतं श्रयणीयगञ्च ।
अस्मिन् क्षणेऽस्ति परमं, श्रृणुराजवाक्यं राधाभिधं द्रुतमुपाश्रय साधुचेतः ॥२३॥

रत्नानि सोऽम्बुधिरदात्कृपया सुराणां किन्त्वेष लौकिककृपामृतकुम्भमेव ।
राधाभिधोऽम्बुधिरयं पुनरद्भुतायास्तस्याः प्रकाशयति सद्रसपुञ्जमेव ॥२४॥
किं दुर्घटं तदधिकल्पलतानिकुञ्जं किं दुष्करं त्वतिकृपारसपुञ्जपार्श्वे ।
किं दुर्लभं पुनरगाधमबाधमाप्य किं दुर्गमं न्विह सुसिद्धिदराधधातौ ॥२५॥

चेतस्तदाश्रयणमादिशताऽथ राधां यो भावयेद्दशनकुन्दवतीं स धन्यः ।
इत्यादिनाप्रकटसेवननित्यवैहारान्तः स्थितां हृदयभावनिकां तु नौति ॥२६॥

# अष्टात्रिंशः सर्गः

चेतः समाश्रयणमेव हि भावनात्मोपास्तिः प्रियप्रियतमायुगले प्रयुक्ता ।
एतां करोति किल यः स तु धन्य एव तत्रापि नूनमयमस्ति तु धन्यधन्यः ।।१।।

**श्रीराधिकां निजविटेन सहालपन्तीं**
**शोणाधरप्रसृमरच्छविमञ्जरीकाम् ।**
**सिन्दूरसंवलितमौक्तिकपङ्क्तिशोभां**
**यो भावयेद् दशनकुन्दवतीं स धन्यः ।।२८।।**

उक्तं प्रियागतमलौकिकरूपलावण्याद्युत्थसौभगमिहाश्रयणीयतार्हम् ।
अत्र प्रियां प्रियतमेन समन्वितां तां ये भावयन्ति किल ते परमा इतीष्टे ।।२।।
सङ्गे प्रिया प्रियतमस्य च कीदृशीयं तच्चेतसेऽनुगतबन्धुषु च संव्यनक्ति ।
यद्वातिसक्तिपरितापितकान्तशान्त्यै व्यञ्जन्तमद्भुतकृपारसपुञ्जमाह ।।३।।
एतामुपाश्रितवतामपि भावयेद्यो वृन्दानि सर्वमहतामपहाय वैताम् ।
सर्वार्थविस्मृतिपुरस्सरतन्मनोज्ञकान्त्येकलग्नहृदयः स हि धन्यधन्यः ।।४।।
श्रीराधिकां नवकिशोरवयोविशेषामादौ विवाहसमये परभाग्यमेव ।
नन्दादयो निजममन्वत लालयन्तो, वात्सल्यहेतुककृपां दधतो नितान्तम् ।।५।।
लज्जाधिकां परमकौतुकहर्षयुक्तां, व्याजेन केनचन कुञ्जतले निलीय ।
अज्ञातवच्च मिलितां दयितेन मूकमञ्जीरकिङ्किणिनिवेदितलाघवाञ्च ।।६।।
अत्यातुरप्रियरुचिप्रतिपोषणार्थं जातां कृपाजलदसिद्धिमयीतिनाम्नीम् ।
प्रेमाङ्कुरद्विदलकैकरसप्रतीकां पत्नीतयोचिततया दयितार्धगात्रीम् ।।७।।
योऽसौ तृषातुरतया पतिरप्यनन्यलाम्पटचतो निजविटेतिपदप्रयोज्यः ।
आवेशतस्तत इतः पथि दर्शकेनाकस्माद्दृशोर्विषयतामुपलम्भितेन ।।८।।
सिद्धिं परां हृदि विभावयता प्रियेण साकं किमप्यतिरहस्यमिवालपन्तीम् ।
श्यामे त्वयीतिवचनं, हृदयं प्रियत्वमित्यादि वाथ मधुरं प्रतिभाषमाणाम् ।।९।।

'त्वयि श्यामे नित्ये प्रणयिनि विदग्धे रसनिधौ,
प्रिये भूयो भूयः सुदृढमतिरागो भवतु मे ।
इति प्रेष्ठेनोक्ता रमण मम चित्ते तव वचो,
वदन्तीति स्मेरा मम मनसि राधा विलसतु ।।'

'मुष्णन्मे हृदयं प्रियत्वमनयस्त्वत्रैव संराजसे
दत्से नैव मम त्वदीयहृदये तृष्णैव संक्रामिता ।
स्वं शीलं परिगृह्य मामकमनो देहीत्थमत्रागता
साधूक्तं त्विदमेव वच्मि ललने मुष्णासि किं मन्मनः ।।'

तात्कालिकीं छविमथ प्रथयन्नुवाच शोणाधरप्रसृमरच्छविमञ्जरीकाम् ।
शोणे स्वभावत इहाधरबिम्बबिम्बे, सन्ति प्रसारसहजाश्छविमञ्जरीकाः ।।१०।।
कुन्दानि वा च दशनानि लसन्ति यस्या अत्रेतरद्युतिसमाक्रमणं च जातम् ।
इत्याह तां नवनवद्युतिलोभनीयां सिन्दूरसंवलितमौक्तिकपङ्क्तिशोभाम् ।।११।।
सिन्दूरसंवलितमौक्तिकपङ्क्तिरेषा हेमाब्जकोशनिहितेत्यपि कल्पनीयम् ।
कान्त्योश्च संवलनतः स्मितहास्यक्लृप्तिस्तां भावनाविषयतां नयते स धन्यः ।।१२।।
धन्यः स्वयं निजविटोऽथ सखीजनोऽपि नित्यान्तरङ्गरसभावितभावुकोऽपि ।
एतत्कथाकथनतोऽहमपि प्रियाया गाथाभिकर्णनतया सकला भवन्तः ।।१३।।
नूनं विटोऽपि हृदि भावनहेतुनैव श्लाघ्यो न केवलसकामतयेति सिद्धम् ।
अत्यन्तसक्तिविदितः परमानुकूलः कान्तो निजो विट इतीह विलक्षणोऽयम् ।।१४।।
सर्वस्य प्रेमिण इहास्ति हि लोकवेदमर्यादितं प्रियजनोष्वभिलाषुकत्वम् ।
किन्त्वत्र लोकनिगमागमसीमभञ्जिक्रीडान्तरङ्गरससिद्धिरभीप्सितास्ति ।।१५।।
यो धर्मकर्म नहि पश्यति नापि लोकं नो पारलौकिकमपि स्पृहयत्यशङ्कः ।
स्त्रैणः स एव विटनाम बिभर्ति तस्य नैवौपपत्यमुखता गुणतोऽस्तु वा सा ।।१६।।
प्रच्छन्नकामुकतयाऽतिरसातिरेको यैर्दृश्यते तदनुसृत्य निजो विटोऽयम् ।
लाम्पटयघोषकमिदं परमं तृषार्तं तं बोधयत्यथ न किञ्चन तद्विरुद्धम् ।।१७।।
नेष्ये विटेन्द्रशयनं वृषभानुपुत्रीमित्यादिगं विटपदं गुणमात्रवाचि ।
एतच्च वै निजविटेति पदं सहेतु 'पीनारुणच्छविमितीह' तदेव वक्ति ।।१८।।

'दूरे सृष्टयादिवार्ता न कलयति मनाङ्नारदादीन् स्वभक्ता
ञ्छ्रीदामाद्यैः सुहृद्भिर्न मिलति हरति स्नेहवृद्धिं स्वपित्रोः ।।
किन्तु प्रेमैकसीमां परमरससुधासिन्धुसारैरगाधां ।
श्रीराधामेव जानन्मधुपतिरनिशं कुञ्जवीथीमुपास्ते ।।'

'सङ्केतकुञ्जनिलये मृदुपल्लवेन क्लृप्ते कदापि नवसङ्गभयत्रपाढ्याम् ।
अत्याग्रहेण करवारिरुहे गृहीत्वा नेष्ये विटेन्द्रशयनं वृषभानुपुत्रीम् ।।'

सन्ध्यासमयो जयति रतिकरः ।
यमुनोभयतट-रत्नजटित-घटभरणावतर-व्यतिकरः ।।१९।।
इन्द्रनीलमणिनीले सलिले नवघनसारमतिकरः ।
पुलिनप्रसरे शोणितमणिमयमञ्जुनिकुञ्जोपसरः ।।२०।।

काञ्चनधरणिनिचितहीरकसुमसुरभिभरितवारिझरः ।
मत्तमधुपविलसितभृतविकसितहेमसरोजप्रकरः ॥२१॥
कुसुमितकनकलतालिङ्गितनवश्यामतमालतरुवरः ।
अमरचन्द्रहितहृदयविहङ्गममुखरितसकलपरिसरः ॥२२॥
मञ्जुनिकुञ्जाङ्गणनवहर्म्ये
कोमलकमलदलाचितशयने मोहनरतिरसधर्म्ये ।
सुमनोविहितालङ्कृतिसहजालङ्कृतदयितानर्म्ये ॥२३॥
महाप्रेमरससेचितललिताद्यालोकितसुखशर्म्ये ।
अमरचन्द्रहितहेतुहितसखीसूचितमिथुनसुमर्म्ये ॥२४॥

## एकोनत्रिंशः सर्गः

श्रुत्वा विटं निजमपि क्वचनातिवक्रे चेतस्यमुष्य विषये यदि संशयः स्यात् ।
तं सर्वथा निरसितुं, वदितुञ्च तस्याः पूर्णानुरागरससागरतामथाह—॥१॥

**पीतारुणच्छविमनन्ततडिल्लताभां**
**प्रौढानुरागमदविह्वलचारुमूर्तिम् ।**
**प्रेमास्पदं व्रजमहीपतितन्महिष्यो—**
**गोविन्दवन्मनसि तां निदधामि राधाम् ॥२६॥**

गौराङ्गकान्तिजितभास्वरकाञ्चनाभामत्यद्भुतेन भरितामनुरागकेण ।
दिव्योपमा ऽऽश्रयितुमर्हति चेदनन्ताः पीतारुणा दिवि विभान्तु तडिल्लतास्ताः ॥२॥
भायुः कदापि तडितो दिवि ता लताः स्युरित्यद्भुतं न गगने कुसुमं कदापि ।
एषा पुनर्नमनलाघवसौकुमार्यर्लज्जामयी नववधूर्लतिकेव भाति ॥३॥
पीतः स्वभावजनितोऽथ किशोरतोत्थः संवेद्यतामरुणता पतिरागजा वा ।
प्रौढः स्वयं यदनुरागमदोऽस्ति पत्युः, पित्रोश्च नैकविधकेलिकलासु वृद्धः ॥४॥
पाणिग्रहात्त परतः क्षणशो विवृद्धः पीतासवस्य समये मदकारणत्वात् ।
तेनैव विह्वलतरातिमनोहरास्ति मूर्तिस्तनूर्जडिमनि प्रहितेव यस्याः ॥५॥
कान्तिः पुरैव मदविह्वलता तु पश्चात्कान्तिस्ततोऽस्त्यपरिहार्यतया स्थितेयम् ।
प्रायेण चासवमदेन तु नेत्रमात्रे, प्रौढानुरागमदतोऽरुणता च गात्रे ॥६॥
आरुण्यहेतुरनुरागमदोऽयमुक्तः पीतत्वहेतुरथ नन्दयशोदयोः सः ।
पीतः किलाद्भुतरसोऽरुण एव राग इत्यत्र विस्मयकरोऽस्त्यनुराग एषः ॥७॥
प्रेमास्पदं व्रजमहीपतितन्महिष्योर्गोविन्दवद् भृतमिदं किल काचपात्रम् ।
नेमं विरञ्च इति यत्कथितं शुकेन, ब्रह्मन् वृषं किमकरोदिति चात्र राज्ञा ॥८॥

प्रेमास्पदत्वमनयोस्तनये प्रसिद्धं तादृक् स्नुषागतमपीति ततोऽधिकं वा ।
गोविन्दभावभरितौ किल तौ तथायं राधामयोऽस्ति तत ईरितमत्र भूयः ॥९॥
नैवोपमान्तरमिहाधिगतं ततोऽहं गोविन्दवत्कथयितुं विवशो यथास्मि ।
तद्वन्न वत्सलरसस्थितिरत्र दृष्टा वच्म्येष तद् व्रजमहीपतितन्महिष्योः ॥१०॥
गोविन्दमत्र वनचारणहेतवेऽपि, सम्प्रेषयेत्परमिमां निधिवद्दधाति ।
कीर्ते ! सुता तव सुतो मम चायमेवमस्मात्कुतो विनिमयो नव एव कश्चित् ॥११॥
प्रेमाधिकत्वमिह कुत्र ममास्तु तावत्त्वं ब्रूहि यर्हि हितमद्वयमेव सर्वम् ।
प्रेमास्पदे भृतमभूत्प्रपयः पयो वा गोविन्द उत्कणितमेतदहो स्नुषायाम् ॥१२॥
दृष्ट्वा सुतं व्रजमहीपतितन्महिष्योश्चित्ते सदैव युगलस्य समस्य चिन्ता ।
उत्पद्यतेस्म, तनयस्य गृहस्थसौख्यं द्रष्टुं च मानससलालसतामयाते ॥१३॥
दैवेन तत्कृतमहो सदृशी समन्तात्तस्मात्स्नुषा तनयतोऽपि परं प्रियाभूत् ।
मूलादपीह किल वार्धुषिकस्य वृद्धिः प्रेष्ठा भवेदिति समस्तजनानुभूतिः ॥१४॥
तस्मादिमां व्रजमहीपतितन्महिष्योर्गोविन्दवन्मनसि मे निहितामवेहि ।
गोविन्दमप्यहह तं हृदये दधामि, एतामहं विनिदधामि सदैव चित्ते ॥१५॥
अन्यत्र यात्यपि कदाचन नाम सोऽयं राधा तु हन्त मनसो मम नापयाति ।
अत्राश्रयेति कथितं श्रयणं ततश्च तां भावयेति मननं कथितं प्रियायाः ॥१६॥
अत्राधुना च निदधामि पदे निदिध्यास्यामाह चापि दयिताद्दयितत्वमस्याः ।
तत्रोपयुक्तमिह नैकतडिल्लताभं वर्णं विदग्धगुणमाह च मत्तमूर्तौ ॥१७॥
आसज्यता प्रथमतः परतस्तथोक्तास्त्यासक्ततेति न कदापि विभावनीयम् ।
पूर्वानुरूपनवनागरताभिधानमन्यानुरूपकरुणातिशयावधानम् ॥१८॥
यद्वा व्रजे व्रजमहीपतिरस्य राज्ञी चेह क्रमेण वृषभानुसुकीर्तिदे स्ताम् ।
गोवर्धनोद्धरणतः परमाप्तवांश्च गोविन्द इत्यनुपदं श्वशुरप्रियत्वम् ॥१९॥
तद्वत्स्नुषापि किल नन्दयशोदयोः सा प्रेष्ठा बभूव, कृतभूरियशःप्रकाशा ।
श्वश्रूगृहे कुलवधूरहमागतैव प्राप्ता यशोधिकतया जगति प्रसिद्धिम् ॥२०॥
मत्तोऽप्यनन्तयश आप्स्यति राधिकेयमित्युक्तिमाकलयतोः प्रणयोऽधिकोऽभूत् ।
गोवर्धनोद्धरणतः परमेश्वरत्वबुद्ध्याऽभवद् व्रजमहीपतितन्महिष्योः ॥२१॥
देवो, न नाम सुत एष कदापि नौ स्याद् राधागमे तु पुनराप्यत वत्सलत्वम् ।
दीनत्वमस्य नितरां तदधीनताञ्च सपश्यतोः प्रतिहतः परमेशभावः ॥२२॥
'कंसारिरपि संसारवासनाबन्धशृङ्खलाम् ।'
प्राप्य तां विस्मृताशेषप्रभावोऽधीनवत् स्थितः ॥
इत्थं विवाहविधिमङ्गलसूचनेन दूरीकृतो विटपदादुदितः स तर्कः ।
राधारसे प्रभुरसादितया विभिन्ने व्यक्तः स्नुषारस इतीह नवः प्रकारः ॥२३॥

# त्रिंशः सर्गः

वृन्दावनं यदपि नित्यमथ स्वभावाद् राधाविहारविपिनं परमत्र केचित् ।
प्रेमास्पदं व्रजमहीपतितन्महिष्योरित्याश्रयेण ललितार्थमुदाहरन्ति ॥१॥
माधुर्यपोषणमिदं किल लौकिकं सद्, व्यासेन नूनमुररीकृतमित्यवोचम् ।
किं लौकिकञ्च किमलौकिकमत्र तन्नो चिन्त्यं रहो मधुरचारुचरित्रचित्रे ॥२॥
पाणिग्रहात्परत एव सभार्यनन्दप्रेमास्पदत्ववृषभानुसुतात्वमस्याः ।
चित्ते निधाय परमाद्भुतकुञ्जवीथीहर्म्यादिसंवलितमेतददादमुष्याः ॥३॥
पुष्पैर्नवैः किसलयैर्मधुरैः फलैश्च हंसैः पिकैः शुककपोतमधुव्रतैश्च ।
संशोभितेऽथ यमुनासलिलावृतेऽस्मिन् स्वच्छन्दमेव विहरत्विति सोऽभ्यवाञ्छत् ॥४॥
पद्मान्तरस्थनवकर्णिकया समाने देहस्थजीववसनाहसुमर्मतुल्ये ।
नैःश्रेयसोपवनवासिसुरावधेये वृन्दावने स्वतनयेन कृतप्रशंसे ॥५॥
शय्याविहारनवकेलिकलार्हणीये सेवासु तत्परसखीललितादिवृन्दे ।
पुत्रोऽप्यसौ व्रजमहीपतितन्महिष्योरस्मिन्विहारनिरतः सततं विहारी ॥६॥
बाह्येषु वारिजदलेषु च सख्यदास्यशान्तादियोग्यवनचारणकौतुकानि ।
सम्यक् चलन्ति मुकुटप्रतिबिम्बितेन गात्रेण तस्य ललितेन मनोहराणि ॥७॥
किन्त्वन्तरङ्गरसराजसमर्थकानि कार्याणि नित्यनवकेलिषु कर्णिकायाम् ।
विस्मृत्य सर्वमपरं बहुराजकीयकार्योचिताजिरनिबद्धसुराजधान्याम् ॥८॥
अन्तःपुरं गत इवैष च नन्दसूनुर्मुग्धः स्वभावत इहोज्ज्वलकेलिवृन्दे ।
संशिक्षितो निपुणनागरतामुपैति वैदग्ध्यसिन्धुवृषभानुभुवा किशोर्या ॥९॥
तत्रास्म्यहो हितसखी समयोचितासु नित्यान्तरङ्गपरिचारणिका क्रियासु ।
अत्यन्तसावहिततां सततं दधाना वाञ्छामि चारुमुकुटाद्युपहारसेवाम् ॥१०॥

'निर्माय चारुमुकुटं नवचन्द्रकेण
गुञ्जाभिरारचितहारमुपाहरन्ती ।
वृन्दाटवीनवनिकुञ्जगृहाधिदेव्याः
श्रीराधिके तव कदा भवितास्मि दासी ॥३०॥

**श्रीराधिके सकलनागरिकासु मुख्ये सौभाग्यवैभवयुते वृषभानुपुत्रि ।**
**अन्येव पैतृकगृहादिह भाव्यमाने श्वाशुर्यलालनविलक्षणसुन्दरि त्वम् ॥११॥**
**सर्वव्रजस्थितजनैकलजीवनापि वृन्दाटवीनवनिकुञ्जगृहाधिदेवी ।**
**दासी तवास्मि परमद्य तव प्रियस्योपाहर्तुमिच्छति मनो मुकुटादि नव्यम् ॥१२॥**

वृन्देति सर्वसुखधामसु वन्दनीया ख्याताटवी सहजकुञ्जनिकुञ्जदुर्गा ।
या कृत्रिमात्सुभगता सहजे प्रसिद्धा तस्या निदर्शनतया रतिदीपनीयम् ॥१३॥
तस्यां नवं किमपि नूतनस्वाददायि पूर्वं त्वपूर्वमिव सम्प्रति भासमानम् ।
तत्तद्रिरंसितविशेषसमर्थकत्वादावेशकारकतया च गृहं निकुञ्जम् ॥१४॥
नन्दो यदा व्रजमहीपतिरस्य राज्ञी नूनं स्थिताखिलव्रजस्य स्वयं यशोदा ।
राधामसौ नवनिकुञ्जगृहाधिदेवीं कृत्वा प्रकाशयति तां प्रति सात्मभावम् ॥१५॥
अस्त्येव तावदिह तस्य व्रजेऽपि बर्हापीडादिवेषरचनेति निकुञ्जगेहे ।
किं सा विशिष्य विहिता दयितान्तरङ्गसख्यापि तत्कुशलयापि रहो भवत्या ॥१६॥
तत्राह—'चारु मुकुटं नवचन्द्रकेण निर्माय' वल्लभकृतेऽहमुपाहरामि ।
गुञ्जाभिरस्य स विशेषतयाऽऽसमन्ताद् हारं मनोज्ञतरमारचयामि चाहम् ॥१७॥
ग्रामीणताकृतविमुग्धतया व्रजेऽस्य नाभूद् विवेक इह नव्यपुराणयोः सः ।
वृन्दाटवीनवनिकुञ्जगृहे तु देव्या संशिक्षितातिनिपुणास्मि नवं करिष्ये ॥१८॥
तत्कालभूपतितमद्भुतमेव दिव्यमुन्मत्तबर्हिणनवीनशिखण्डमेकम् ।
तैः स्वर्णचित्रमणिभिर्वृषभानुदत्तः संयोज्य चारु मुकुटं तमुपाहरिष्ये ॥१९॥
सौवर्णसूत्रग्रथितोज्ज्वलनीलरत्नमुक्तादिकप्रसृमरच्छविरश्मिजालम् ।
तन्मेघमेदुरमुकुन्दमनोज्ञकेशोपर्याहितं वहति शक्रधनुर्विलासम् ॥२०॥
वृन्दाटवीनवलताजनिताभिराभिः प्रेमानुरागनवबीजतया प्रियाभिः ।
गुञ्जाभिरस्य बहुमान्यतराभिरस्याः प्रेष्ठाभिरप्यतितरां प्रियसन्मुखीभिः ॥२१॥
श्यामेतिनाम मुखसंस्थितमस्ति यासां ताभिः सदा कनकसन्तुलनां गताभिः ।
आ सर्वतो निपुणताप्यथ सूक्ष्मदृष्टिर्यस्याधुना विरचनेषु मया धृतास्ति ॥२२॥
यादृङ् न गोपगणदृष्टिपथं प्रयातं तादृङ् मया विरचितं मणिरत्नजुष्टम् ।
किञ्चात्र कल्पलतिकाप्रसवासु काश्चित्कृष्णानना अथ च काश्चन गौरमुख्यः ॥२३॥
गुञ्जास्तु काश्चन तनौ शितिमानुयुक्ता आस्येऽरुणत्वसहिता विविधस्वरूपाः ।
ताभिर्विरच्य नवहारमहं भवत्या एवार्पयामि, भवती च चमत्कृताङ्गी ॥२४॥
श्यामान्विते हि तव वस्तुनि कोऽपि भव्यो नव्योऽनुराग इति सम्यगवैमि दासी ।
इत्याहृतौ प्रियकृते मयका किरीटहारौ स्वयं प्रियमहो परिधापयेस्त्वम् ॥२५॥
औत्सुक्यतोऽथ प्रियभावविभाविता स्ताद् दध्याः स्वयं शिरसि हारमुरः किरीटम् ।
प्रेम्णा धृतं तदुरसि प्रभवेत्तु चारु तच्चाप्यहो शिरसि संरचितत्वमीयात् ॥२६॥

यद्वा प्रशंसनकलाकुशले ! त्वयेमौ मूर्ध्ना हृदा च विधृतौ किल धन्यधन्यौ ।
त्वद्गात्रसंसृजनमात्रकृतार्थितौ तौ कान्तोऽथ धास्यति प्रसादधिया प्रसन्नः ॥२७
तत्तत्प्रसादमभितः खलु संवरीतुमाशावदीश्वरि विधेहि कृपाकटाक्षम् ।
किञ्चात्मभूषणरुचिस्तवयादृशीयं नो तादृशी प्रियविभूषणकान्तिरास्ते ॥२८॥
त्वद्भूषणं सुखयति प्रियमस्य च त्वां, तत्तत्सुखेन सुखिता भवतीति सिद्धम् ।
अन्योपि वन्यदलसूनुपरागजन्यो भूषाविधिः सहृदयैर्ध्रियतां सुधन्यः ॥२९॥
स्यान्नीलपीतनवकान्तिमनाज्ञयोगो यत्रैव तत्र रचने दयिताभियोगः ।
तच्चन्द्रकेऽस्ति बहुवर्णपरीतपक्ष्म गुञ्जासु चास्ति धवलारुणकृष्णयोगः ॥३०॥
इत्यत्र मुख्यवचनेन कृतं कवित्वं नतावतैव हरिवशहितार्थसिद्धिः ।
तद्वद् व्रजे विमलभावविशेषशालिन्यास्ते स नन्दतनयो वृषभानुजा च ॥३१॥
लोकातिशायि च विलोक्य तयोर्मिथस्तत् प्रेमाणमेष कवयत्यपि तौ निकुञ्जे ।
भाताविमौ नवनिकुञ्जगृहे यथास्य नव व्रजे विचरितौ तु तथास्य भातौ ।३२॥
द्वारं निनीषति गुरुर्वृषभानुगोपस्याराधनाय न निजाननुगान् रसज्ञान् ।
श्यामा हि मोहनहिताय दधाति जन्म, सा प्रादुरस्ति कृपया वृषभानुगेहे ॥३३॥
द्वारं तु नन्दनृपतेरपि नेतुमिच्छत्साऽनन्यदासभजनस्य रसं ग्रहीतुम् ।
नन्दालये निवसता प्रणयैकपात्रेणानेन नूनमिह दासवदासितं यत् ॥३४॥
यत्पादपद्मनखचन्द्रमणिच्छटाया विस्फूर्जितं किमपि गोपवधूष्वदर्शि ।
आधाय मूर्धनि यदापुरुदारगोप्यः काम्यं पदं प्रियगुणैरपि पिच्छमौलेः ॥३५॥
प्रापुः शिवादय इहाधिकृतिं च गोपीभावाश्रयाश्चरणरेणुकणान् निधातुम् ।
प्राप्तं तथा व्रजभृतां निवहैरपीदं कैङ्कर्यमद्भुतरसं कृपया भवत्याः ॥३६॥
इत्यादि रासंसमये बहिरन्तरङ्गतन्मण्डलद्वयविभावनया समर्थ्यम् ।
सामान्यमत्र न विशेषनिवेशितं स्यान्न्यस्तो न चास्तु खलु कश्चन तत्र सोऽयम् ॥३७॥
तद्दैत्यकण्ठनखदानमथ स्तनार्तिः सा पूतनाविषयिणी गिरिधारणं च ।
लोके प्रसिद्धमुपहासतया प्रयुक्तं बिम्बानुबिम्बविषयैक्यविभावनेन ॥३८॥

भोः श्रीत्यादि सुहृज्जनस्य च निजस्य व्रजस्थस्य सा
नो दृश्येत्युपपादनाय कथितं तद्वद्गता दूरतः ।
वीथीषु भ्रमतीह स व्रजपुरे कश्चिन्महालम्पट—
श्चेत्यादेरनुवादमात्रमिति न स्वारस्यमत्र स्थितम् ॥३९॥

दूरे सृष्टिप्रभृतिकथनं नित्य लीलास्थितस्य,
तस्याशेषावतरणमहामूलताबोधनार्थम् ।
अन्यच्चैतादृशमपि वचोऽनन्यभावस्य कुञ्जे

**'उपसंहारः'**

युञ्जीरंस्ते, स्तवमिममहो भाग्यतो ये लभरेन् ॥४०॥
श्रीहरिवंशविरचिते श्रीमद्राधासुधानिधिस्तोत्रे ।
सप्तत्यधिकं द्विशतं पद्यानां राजतेऽनवद्यानाम् ॥४१॥
तानि श्रीहरिलालो व्यासः स्वधिया विवृणुतेस्म ।
अयमहममीरचन्द्रः पद्यात्मकतामथास्य सन्तन्वे ॥४२॥
तत्र मया नवमोंऽशो व्याख्यातस्तस्य रसिकेषु ।
जाग्रति कैश्चन पुण्यैर्वृन्दावनवाससौभाग्ये ॥४३॥
सर्गास्त्रिंशद् गणिता भणिताः श्लोकास्तु नात्र नियमेन ।
न्यूनाधिकतद्रचना नोदनयास्तेऽत्र हितविनोदनया ॥४४॥



# स्तुतिकादम्बरी

## भारतभूमिस्तोत्रम्

१

### स्वतन्त्रभारतध्वजदण्डकम्

जयति जयति सन्ततं रक्तिमावेदिताखण्डभूमण्डलव्याप्तपर्याप्तनैजाप्तताजातभूयःप्रतापानथो शुक्लिमाख्यातसर्वावनीकैश्यशोभाकरश्वेतपुष्पायमाणामलाचारचारूरुसत्कीर्तिमूर्तीनथो नीलिमाभ्युक्तमुक्तिच्छटाच्छन्नसज्जीवनक्षेत्रसंजन्यमानप्रकर्षाधिरूढातिहर्षात्मधन्यातिधन्यार्द्रधान्यप्रभासारभारानथो चक्रसंसूचिताशेषदेशोपरिप्रापणीयैकचक्रात्मकस्वाधिकारान् पुनर्भूरिपर्वोन्नतोद्दण्डदण्डोदितोदारभव्यप्रजान्, (स्वध्वजान्नाकपृष्ठानसंस्पृष्टचेलाञ्चलान् धारयद् भारतम्)।

शोणतोदीरितानन्ततच्छोणितोदारधारावलीतीरजातातिधीरैकवीरात्मदानानहो श्वेततोक्तस्वदेशैकनिष्ठोज्ज्वलस्वार्थहीनानदीनेतरोत्तारशक्तिस्फुरद्भक्तिमानानहो श्यामतासूचितानर्गलामङ्गलोत्तुङ्गकूटाङ्गलस्वाम्यदीपान्त्यनिर्वापणाधूमलेखानहो चक्रसङ्केतितानन्तषड्यन्त्रदुर्मन्त्रवत्पारतन्त्र्योद्धृतिस्पष्टरेखानहो दण्डनिर्दिष्टतत्तत्प्रचण्डारिमण्डलयखर्वोद्धमत्सर्वदुर्गर्वनिर्वासनान्, (स्वध्वजान्नाकपृष्ठानसंस्पृष्टचेलाञ्चलान् धारयद् भारतम्)।

आरुणोद्गीततद्द्वादशात्मप्रभाभासितस्वर्गशोभाभरान्, धावलाधीततच्छारदाम्भोदवृन्दास्पदीभूतधौतान्तरिक्षच्छटानिर्भरान्, हारितान्वीततत्तत्प्रशस्योदघसस्यौघसंवेष्टितश्यामभूमीतलान्, तांस्त्रिलोकप्रतीकायितान्नैर्मलान्, चक्रनिर्वर्तितैक्याख्यसंस्थाबलान् दण्डनिर्वारिताखण्डपाखण्डमज्जद्दलान्, ( स्वध्वजान्नाकपृष्ठानसंस्पृष्टचेलाञ्चलान् धारयद् भारतम् )।

किञ्च बन्धूकबन्धुप्रभाभाषितब्रह्मरूपान् निशानाथसोदर्यकान्तीरितेशस्वरूपान्, नवाम्भोदमित्रच्छटाभ्युक्तविष्णुप्रभावान् स्वचक्रानुसंस्मारितान्त्यद्विदेवान्तरस्थायिभावान्, सुदण्डावबुद्धत्रिगुर्येकमात्रानुभावानथो बिम्बरागोपदिष्टानुरागव्रतान्, शङ्खशोभानुघुष्टातिनिर्मत्सरान्, पल्लवाभावमुष्टातिदुष्टस्मृतीन्, चक्रनिर्विष्टराष्ट्रैकनाभिस्थितीन्, देशिताशेषराष्ट्रीयलोकारवृत्तीन् पुनर्दण्डनिष्कृष्टनानाच्छलान् सर्वथाऽपिच्छलाध्वप्रचारामलान् स्वध्वजान् नाकपृष्ठानसंस्पृष्टचेलाञ्चलान् धारयद् भारतम्।

# सरस्वतीस्तोत्रम्

## तव नौमि सरस्वति पादयुगम् ।

नवराात्रभवैर्ग्रथितानि यवैः, प्रणिपातपरैर्नमितानि सुरैः ।
अलिकानि वदद्यवरेखमिदं, तव नौमि सरस्वति पादयुगम् ॥१॥

अधिगन्तुमितोऽथ सुधां मधुरां, स्वकलङ्कमुदङ्कयितुं च चिरम् ।
शरणागतमूचिवदेव विधुं, तव नौमि सरस्वति पादयुगम् ॥२॥

कृतमस्त्रशतैर्नितरां निशितैर्यदि वाचि वसेर्हृदि वा विलसेः ।
इति विष्णुसमर्पितचक्रमिदं, तवनौमि सरस्वति पादयुगम् ॥३॥

इह ये निरताः किल ते विरताः, जहतोह मुदोऽपि मया वितताः ।
इति कल्पलता यदुपायदिदं, तव नौमि सरस्वति पादयुगम् ॥४॥

इदमाश्रितवान् मतिमांस्तु महान्, मम पातमहो मनुते न तृणम् ।
इति शक्तिसमाश्रितमेतदलं, तव नौमि सरस्वति पादयुगम् ॥५॥

कविकण्ठ इवास्मि यदा सुभगो, मयि किं न करिष्यति तर्हि कृपाम् ।
इति कम्बुरुपाश्रयते यदिदं, तव नौमि सरस्वति पादयुगम् ॥६॥

ज्वलनैर्ज्वलितापि चचाल न सा, तव नामपदश्रवणैकमनाः ।
श्रितवत्यथ यत्किल वेदिरिदं, तव नौमि सरस्वति पादयुगम् ॥७॥

श्रवणेन समं कृतकृत्यपदं, किल कुण्डलमप्युपयाति बुधाम् ।
इति तेन समन्वितमेतदलं, तव नौमि सरस्वति पादयुगम् ॥८॥

अतिगौरववानधिकोन्नतिमानपि पादतलं तव संश्रयताम् ।
इति बोधयता न्वचलेन वृतं, तव नौमि सरस्वति पादयुगम् ॥९॥

इदमाश्रयतां पुरतो विदुषां, नृपतिः परमोऽपि जहाति मदम् ।
इति पूजितमङ्कुशधा हरिणा, तव नौमि सरस्वति पादयुगम् ॥१०॥

'तव मङ्गलरेणुकणस्य बलादियमुन्नतिरस्तु ममाप्यचला ।'
इति यद्ध्वज आश्रयते तदिदं, तव नौमि सरस्वति पादयुगम् ॥११॥

त्वदनुग्रहजाग्रदपारधियो, मम साम्यमहो कवयोऽप्यवदन् ।
इति यत्क्षमयाम्बुजमायदिदं, तव नौमि सरस्वति पादयुगम् ॥१२॥

विहरन्तु परेऽत्र विनोदधिया, तदिदं मम जीवनमेव परम् ।
इति यद्बुधमीनगृहीतमिदं, तव नौमि सरस्वति पादयुगम् ॥१३॥

नितरां विशदं सुतरां विमलं, धृतमङ्गलमङ्गलताकलितम् ।
इति मङ्गलसूचकचिन्हयुतं, तव नौमि सरस्वति पादयुगम् ॥१४॥

शिवस्तोत्राणि

## १—सोमनाथवन्दना

जनयति किल कालं चालयन् दक्षिणाक्षि
क्षपयति विरसत्वं स्पन्दयन् वामनेत्रम् ।
शमयति सममेतद् स्फारयन् भालदृष्टिं
जयति स भगवान् मे शङ्करः सोमनाथः ॥१॥

यं नाम न स्पृशति विष्णुविरञ्चिचिन्ता,
तं चिन्तयन्मनसि वाञ्छति यः स्फुरन्तम् ।
तस्यातिसाहसपरस्य च पामरस्य
सोऽयं हरत्वविनयं मम सोमनाथः ॥२॥

## २—नटराजस्तवः

अष्टादशेमा मम नृत्यशास्त्रे चातुर्यमातुर्ययुतं वहन्ति ।
सङ्केतमात्रं नटराज, लब्ध्वा, तवाङ्गणे नृत्यमुपक्रमेरन् ॥१॥

मनश्च चित्तञ्च मतिस्तथाहङ्कारश्च पञ्चापि च धीन्द्रियाणि ।
वाक्पाणिपादं च सदा सदात्मन्, त्वत्किङ्करीभावमिहार्थयन्ते ॥२॥

ता द्वादशैता अभिनीतिदक्षाः कक्षासु संवेशय नर्तकीनाम् ।
कायेन वाचा मनसा च वेषैश्चतुर्विधान्वाभिनयान् दिशन्तु ॥३॥

आख्यातरूपाप्यभिधानरूपा निपातरूपाप्युपसर्गरूपा ।
वखर्यभेदेऽपि गिरश्चतस्रः पश्यन्तिका मध्यमिका परात्र ॥४॥

अमूस्तु सप्तस्वरमूर्छनाभिः सङ्गीतशास्त्रे परमप्रवीणाः ।
'आरभ्यतां तद् भवतीभि'रित्यादेशेन देवेश ! कृतार्थनीयाः ॥५॥

### ३. सोमनाथ पुनः प्रतिष्ठास्तोत्रम्—

## सा सोमनाथ, भवतो भविता प्रतिष्ठा ।

दक्षैः प्रजापतिभिरेव कृतप्रबन्धे, सत्यादरेण विलसद्विमलानुबन्धे ।
या कार्यतामुपगतातिमहामखान्ते, सा सोमनाथ भवतो भविता प्रतिष्ठा ॥१॥

यस्यां प्रबन्धनिपुणो मणिमान् विराजमानो भृगूनिव महर्षिवरानुपास्ते ।
नूनं प्रजापतिसहायिनि वीरभद्रे, सा सोमनाथ भवतो भविता प्रतिष्ठा ॥२॥

चण्डीशसेवनपरैर्बुधपूषभिर्या, नन्दीश्वरार्चिततराष्टभगप्रवृत्ता ।
यस्यां न कश्चन विरोधलवोऽपि लक्ष्यः, सा सोमनाथ भवतो भविता प्रतिष्ठा ॥३॥

यां स प्रसाद इदमध्वरनेतृवर्यो राजेन्द्र एव समुपक्रमते प्रवीणः ।
एषानिशं प्रयतमानजयन्तकृष्णा, सा सोमनाथ भवतो भविता प्रतिष्ठा ॥४॥
युक्तोऽभिनन्दनविधौ पुरुषोत्तमस्ते, धर्ता सदस्पतिपदं किल पद्मनाभः ।
तेनास्ति यत्र न मनागपि मत्सरत्वं, सा सोमनाथ भवतो भविता प्रतिष्ठा ॥५॥
कस्यापि विश्ववशिनो भववल्लभस्य चेतस्युदीतमभवत्किल यद्यथैव ।
या तत्तथैव परिदर्शयते गरिष्ठा, सा सोमनाथ भवतो भविता प्रतिष्ठा ॥६॥
यस्यां न मोहमददूषणभीतिलेशो, यां चापि नाविशति जात्ववरङ्गजीवः ।
अध्यासिता समतयाखिलभारतीयैः, सा सोमनाथ भवतो भविता प्रतिष्ठा ॥७॥
यस्यां समोऽपि भगवन् भवदीयमानी, दम्भं विहाय भुवनस्य हिताय योक्ता ।
नित्यप्रतिष्ठित, परात्पर, सत्यनिष्ठा, सा सोमनाथ भवतो भविता प्रतिष्ठा ॥८॥
यस्यां समं हरिजनैर्हरिणाङ्घ्रिमूलं, चूलं च पश्यति प्रजापतिना प्रजापि ।
हित्वा समस्तकलुषोद्भवभेदभावान्, सा सोमनाथ भवतो भविता प्रतिष्ठा ॥९॥
या भारते पुनरपि प्रणिपातपूर्वामुद्भावयेदवितथस्य पदस्य पृच्छाम् ।
जाग्रद्विजाग्रशिथिलीकृतसर्वशङ्का सा सोमनाथ भवतो भविता प्रतिष्ठा ॥१०॥
यां प्राप्य हे वरदराज पुनर्जनानां, यातोऽप्यगम्यपदवीं भविकाय भूयाः ।
स्तूयादशेषविधिना च सहस्रको यां सा सोमनाथ भवतो भविता प्रतिष्ठा ॥११॥

## ४. मोहम्मदमूलोन्मूलनस्तोत्रम्

नूनं वराहवपुषा हरिणेव देव ! चित्तेन तेन पदमूलमवापनीयम् ।
धात्रेव वा परमहंसतया श्रितेन, गात्रेण नाथ, न मुखन्तव दर्शनीयम् ॥१॥
देव प्रसीदसितरां तु कृतागसेऽपि शापोदितक्षयभृतेऽपि कलङ्किनेऽपि ।
सोमोपमाय भवदेकगतिं गताय हे सोमनाथ, परमार्तिजुषे जनाय ॥२॥
ये चात्मनः करतलेन शिरः स्वकीयमाच्छिद्य देव, भवतश्चरणेऽर्पयन्ति ।
अर्थात्परं दधति ये बलिदानभावं, ते रावणा अपि वरान् भवतो लभन्ते ॥३॥
संख्योद्गताभिरपि नाथ मनोहराभिर्नारीभिरीडितमना अपि पूर्णकामः ।
अस्पृष्टनीरनवनीरजपत्रकल्पः कृष्णः स कोऽपि पदमर्चति ते वितृष्णः ॥४॥
मोहम्मदं किल जनो भवदीयमानी, हाहा न चेदविनयैः समवर्धयिष्यत् ।
मोहम्मदः स गजनीजनिरार्यभूमिं न द्रष्टुमप्यहह कर्हिचिदागमिष्यत् ॥५॥

गङ्गातरङ्गरमणीयशिरःप्रदेशा चन्द्रं किरीटमिव सन्ततमादधाना ।
भूत्यासिता धृतदिगम्बरपावनाख्या देवार्यभूमिरखिला भवदूर्मिरेव ॥६॥

तामावृणोदहह, दोषचयस्त्वदीयम्मन्यैश्चितः स खलु मोहमदप्रधानः ।
सा भङ्गमाप भगवान् मतिभेदजातं मोहम्मदस्त्वभवदत्र निमित्तमात्रम् ॥७॥

मूर्धानमीश, तव यं न ददर्श हंसीभूयापि हन्त जगतां प्रथितो विधाता ।
तस्मिन्नमुष्य तृणकस्य गदाभिघाते हाहा हठादुदपतन्नचिरेण गृध्राः ॥८॥

गृध्रा न ते न भगवन् स गदाभिघातस्ता गृध्नुताः स च कदाचरणप्रचारः ।
तल्लेशमात्रमपि तिष्ठतु नावशिष्टं, येनावहेत भविकानि पुनः प्रतिष्ठा ॥९॥

हाहा वराहवपुषापि न विष्णुना यत्त्वत्पादमूलमभवत्प्रभुणापि लक्ष्यम् ।
तस्मिन्नपि स्थिरतया स्थितिमादधाना हा वैशसस्य विषया यतयोऽभवंस्ते ॥१०॥

ऐतिह्यमेतदविषह्यरुजा प्रसह्य चेतो दुनोति; विधुनोति चिराय सौख्यम् ।
किन्त्वस्य मूलमनुचिन्तयता त्वदीयेनोन्मूलनाय यतनीयममुष्य नित्यम् ॥११॥

## श्रीसोमनाथपुनःप्रतिष्ठायां

कुण्डलिकाः ।

सोमनाथ, तव कीर्तने, सज्जा वागियमद्य ।
पदे पदे स्खलतीव मे, मत्ता सत्यनवद्य ।
मत्ता सत्यनवद्य—पद्यरचनासु न शक्ता ।
अपि देवेश, तवेशिमवशिममहिम्न्यनुरक्ता ॥
जल्पति यत्किल तेन मे नृत्यति जडमपि रोम ।
सहृदयहृदयकथा तु का कथय कलितनवसोम ॥१॥

देव देव तव मार्गणे, विधिर्हंसतामाप ।
हरिरुदियाय वराहतां, परमनवधिप्रताप ॥
परमनवधिप्रताप—पारमुपगन्तुमनर्हौ ।
प्रत्यागतौ किलात्मनि कलितातुलबलगर्हौ ॥
इति गायन्त्यपि वाङ्न मां रोद्धुमलं क्वचिदेव ।
प्रत्युत दर्शयतीव मे रूपं भूतिमदेव ॥२॥

नीरक्षीरविवेकमिह, हंसो यथा दधाति ।
सत्यासत्यविवेचनं, ज्ञानी तथैव याति ॥
ज्ञानी तथैव याति स याति न सदसत्परमम् ।
तत्त्वभियाति जनो यदि कलयति भावं चरमम् ॥
अहह कलङ्क्यपि शापभाक् क्षय्यपि सोमो वीर !
तव सेवावसरं गतो धृतस्वर्धुनीनीर ॥३॥

किञ्च वराहः स्थलजलारण्येषु गतियुतोऽस्ति,
तद्वत्कर्मी भूर्भुवः,स्वरिति त्रितयगतोऽस्ति ।
स्वरितित्रितयगतोऽस्ति मतिर्मुह्यति पुनरेवम् ।
त्रितयादपि त्रिपादूर्ध्वमयि वेत्ति न देवम् ॥
यस्य न भासकमाह वागनलं विधुं रविञ्च ।
वाचं मनो न लोचनं तस्य लोचकं किञ्च ॥४॥

भक्त एव भगवन्नयं, त्वय्यनुरागवशेन ।
त्वत्सुखसुखितां धारयन्, मनसा भावकशेन ॥
मनसा भावकशेन सदा संयमिना यमिना ।
तव सेवासु रतेन, ऋते त्वामगसागमिना ॥
अश्रद्धाजनितां त्रयासत्तां हरत्यसक्त ।
देव देव, महतां महान् जयसि भक्तजनभक्त ॥५॥

एष तु लभ्य इहाञ्जसा, केवलभक्तियुतेन ।
तदिह दर्शितं तावके, चरणे द्रुहिणसुतेन ॥
चरणे द्रुहिणसुतेन शिरांसि निवेद्य निवेद्य ।
यदिह कृतं दुष्करमितरैरयि भावुकवेद्य ॥
भक्तियोगसंस्थापकः कृष्णोऽपीदमियेष ।
आनर्चाखिलवृत्तिभिर्महिषीभिः सममेष ॥६॥

भक्तियोगपदवी प्रभो, नेदीयसी तवास्ति ।
तया जग्मुषे वस्तुतो, रूपं तदपि चकास्ति ॥
रूपं तदपि चकास्ति न यद्विधिहरिगमनीयम् ।
यच्च भसितसित, चन्द्रकलित, गिरिजारमणीयम् ॥

देव, न दक्षं प्रति भवाँस्तत्क्वचिदपि व्यनक्ति ।
सोमनाथ, पश्यति मनो मुग्धं यद्भृतभक्ति ॥७॥
तत्र मनस्यखिलं जगत्त्वन्मयमेव विभाति ।
जाग्रत्स्वप्नसुषुप्तिषु स्फुरति तव प्रतिभाऽति ॥
स्फुरति तव प्रतिभाति रूपमपि भारतवर्षम् ।
हिमगिरिशिरसिकलितगङ्गं तदनङ्गविधर्षम् ॥
भूत्यासितमथ भास्करानलविधुलोचनमत्र ।
प्रतिशर्करमपि शङ्करं भक्तः पश्यति तत्र ॥८॥

## बुद्ध-मानस-पूजा

### १. उपचारसम्भारः ।

संन्यस्तसर्वविभवस्य तथागतस्य,
प्रीतिं प्रपित्सति जनो वरिवस्ययायम् ।
तत्रान्यदस्तु किमु वस्तु समर्थमेकं
त्यक्त्वा विवेकमिति तेन तमर्चयामि ॥

### २, ध्यानम् ।

पद्मासने स्थितममीलितनम्रदृष्टिं
ध्यायन्तमेव जगतीतलदुःखसृष्टिम् ।
वैराग्यबोधविनयप्रभुतैकसारं
बुद्धं स्मरामि भगवन्नवमावतारम् ॥

### ३. आवाहनम् ।

सिद्धार्थ ! सिद्धिमुपसेदुषि, विश्वशान्ते-
रेकान्तरीतिविदुषि त्वयि भावभागी ।
त्वामाह्वयामि, तदिहेहि, तथोपविश्य,
लब्धप्रतिष्ठ ! वरदो भव भारतस्य ॥

### ४. आसनम् ।

शौद्धोदने ! विरतयुद्ध ! विशुद्धशील !
देशस्य बुद्धिमधितिष्ठ भवप्रतिष्ठाम् ।
येयं कुशासनपरिग्रहकर्कशापि,
धर्मात्मकम्बलमुपेत्य विभाति मृद्वी ॥

५. पाद्यम् ।

सर्वज्ञ ! पर्वविधुवत्तव दर्शनेन,
सिन्धुर्यथोन्नतिमुपैतितरां समाधिः ।
अस्यात्युदारसुखसंविदुपाख्यधारा-
सारैस्तवाद्य पदयोः प्रणयामि पाद्यम् ॥

६. अर्घः ।

सत्यं तथागत ! सनातनधर्मसारः,
किं साधितो न भवता भविनामहिंसा ।
सोऽयं समस्तमलवारि-विशुद्धवारि-
पूरो भवेद् भगवतोऽर्घविधावदूरः ॥

७. आचमनीयम् ।

आस्तेतरां सुगत ! दुःखनिदानतृष्णा-
रोधाय या प्रतिपदा भवदागमेषु ।
तस्याः किलोपशमलं विमलं जलन्तेऽ-
भिज्ञानमेव भवदाचमनीयमस्तु ॥

८. स्नानीयम् ।

हे बोधिसत्त्व ! भवतोऽधिगतः सतत्त्व-
सम्बोधिरम्बुधिरिवास्त्यनवारपारः ।
स्नानीयतां वहति यः शुचिशीतलत्वा-
त्तं सर्वमेव भवतेऽद्य समर्पयामि ॥

९. वस्त्रम् ।

मायासुत ! त्वमनुयातृभिरर्चितोऽसि,
सौत्रान्तिकैरनुमिताखिलवस्तुरूपैः ।
तेषामशेषपरिपाटिकयात्र शाटीं,
कृत्वार्पयामि भवते भवतत्त्ववेदिन् ॥

१०. उपवस्त्रम् ।

वैभाषिकैश्च परिभाषितमैन्द्रियं य-
त्प्रत्यक्षमेव सदिति प्रतिपत्तिरूपम् ।
अस्तूत्तरीयमिदमेव निरुत्तरत्वा-
ज्ज्ञानं वदन्ति विमता अपि तत्प्रमाणम् ॥

११. यज्ञोपवीतम् ।

ज्ञानादृतेऽन्यदसदेव यदाह योगा–
चाराभिधं मतमिदं त्रिवृतं त्रिसूत्रम् ।
हे दक्ष यज्ञविनिवारणशर्वसख्य !
यज्ञोपवीतमिह तेऽपि तदर्पयामि ॥

१२. गन्धम् ।

कामैकजित्वर ! भवेदथ भालमध्ये,
गोरोचनादिरचितं तिलकं सुगन्धि ।
यन्नाम माध्यमिकतामुपयाति शून्या–
कारत्वमेव कलयन्मलयोद्भवस्य ॥

१३. अक्षताः

सङ्कल्पकर्मवचनेषु किल त्वयोक्ताः,
सम्यक्त्वहेतुकगुणा भृशमुज्ज्वलास्ते ।
सन्त्यक्षताश्च विमतैरपि रक्षितत्वा–
च्छोभां प्रयान्तु तव देव ! विशालभाले ॥

१४. दूर्वाङ्कुराः ।

आजीविकोद्यमसमाधिदृशिस्मृतीनां
सम्यक्त्वमेकमपि नैकतया प्ररूढम् ।
दूर्वाङ्कुराननुकरोति तदेतदेव,
हे बुद्धदेव ! भवतेऽद्य समर्पयामि ॥

१५. पुष्पम् ।

हे लोकनाथ ! भुवि दुःखनिरोधरूपं
पुष्पं त्वदीयकरुणार्द्रदृशातिपुष्प्यत् ।
आस्तीर्णसौरभभरं विगलन्मरन्दं
मन्दो मुदा त्वदरविन्दकरेऽर्पयामि ॥

१६. धूपः ।

दिव्यावधूत ! विभवान्यवधूय धर्मः
संन्यासिनां दुरवगाह्यतमः प्रदिष्टः ।
आमोदयंस्त्रिभुवनं निजचारुगन्धैः
सोऽयं त्रिलोकगुरुजोऽगुरुजोऽस्तु धूपः ॥

## १७. दीपः ।

योगिन् ! विशोकतिमिरं नितरामशोक-
कल्पैरनल्पगृहिभिः समुपाश्रितो यः ।
सोऽयं भवेद्भवदुपासकधर्मरूपः,
स्नेहैर्भृतोऽस्मदुपकल्पित एष दीपः ॥

## १८. नैवेद्यम् ।

हे बुद्ध ! शुद्धचरितामृतवारिवाह !
दिव्यं जनुस्तव च कर्म समस्ति दिव्यम् ।
स्वाद्या सुधेव निगमेश्वरयोरुपेक्षा,
नैवेद्यतामुपगतास्तु तवार्हणायाम् ॥

## १९. आचमनीयम् ।

विज्ञानदेशन ! शमाग्रिमसार्थवाह,
यज्ञेषु तेऽस्ति विदिता नितरामनास्था ।
सेयं कलौ सलिलवत्प्रतिभाति शीता,
मृद्वी सितेव च तदाचमनीयमस्तु ॥

## २०. फलम् ।

अर्हन् ! स्वसिद्धिविभवैः सुसमृद्ध ! लोके
निर्वाणमेव फलमन्तिममित्यवोचः ।
नानाफलैः किमधुना मधुनापि पूर्णै-
र्निर्वर्णनीयमिह तत्फलमर्पयामि ॥

## २१. दक्षिणा ।

दक्षेषु दक्ष ! भवदक्षिणगतासु कासु,
सम्पत्सु नैव ददृशे विपदेकनिष्ठा ।
तद् दक्षिणावितरणक्षण एष दत्त-
ऽदो दाक्षिणात्यमतमेव तु हीनयानम् ॥

## २२. प्रदक्षिणम् ।

निर्द्वन्द्व ! वन्दितपदाब्ज ! तवार्चनायां
भक्तिः परोदयति यद्धृदयेऽनवद्या ।
तेनोत्तरीयमतमित्युपदर्शितेन,
यानेन तेऽद्य महतैव परिक्रमेऽहम् ॥

## बुद्ध-षट्पदी ।

१

दुःखं सत्यममुष्य कारणमियं, तृष्णापि सत्या ततः
सत्यं तस्य निरोधनं, प्रतिपदा सत्या पुनर्मध्यमा ।
इत्थं सत्यचतुष्टयं निगदता येयं त्वया सत्वरं
दुःखान्मोचयितुं धृता किल ततः सिद्धार्थ ! सिद्धा वयम् ॥

२

दृष्टौ, कर्मणि, वाचि, चेतसि तथाऽऽजीवे, स्मृतावुद्यमे,
सम्यक्ता चरमा समाधिविषये येयं समुक्ता त्वया ।
तामष्टाङ्गिकमार्ग इत्यभिहितामाश्रित्य सार्वत्रिकीं
दुःखात्यन्तनिवृत्तिमत्र लभते, बुद्ध ! प्रबुद्धं जगत् ॥

३

रूपाद्याः क्षणिकाः पदार्थनिचया; देहोऽशुचिः सर्वथा,
चित्तं चञ्चलमेव चाप्यनुभवाः सर्वेऽपि दुःखात्मकाः ।
एतानि स्मृतिगानि सन्तु यदि नश्चत्वार्युपस्थानका—
न्यायासेन विनैव शान्तिरुदियात्सर्वज्ञ ! सर्वात्मना ॥

४

रक्षेदर्जितमर्जितन्तु सुकृतं नोपार्जितं चार्जयेत्—
मुञ्चेत्सञ्चितसञ्जितं च दुरितं, नासञ्चितं चिन्तयेत् ।
एतद्धानचतुष्टयं सुगत ! ते मन्दोऽप्युपासीत चेत्,
सत्यं दुःखनिधेस्तथागत ! तदात्मानं जनोऽभ्युद्धरेत् ॥

५

श्रद्धां, वीर्यमथो, समाधिमथ च, प्रज्ञां तथा च स्मृतिं,
साक्षादिन्द्रियपञ्चकं सहबलं नादोऽवलम्बामहे ।
नो चेन्मत्तमतङ्गजोऽपि परुषो धानुष्कवर्गोऽथवा,
तत्तत्पाशविकं बलं किमपि नः शौद्धोदने ! नोद्धरेत् ॥

६

वीर्यप्रीतिसमाधिधर्मचयनप्रश्रब्ध्युपेक्षास्मृती —
रेताः संश्रयतः पुनर्भवति नो बन्धाय वै संसृतिः ।
एतत्किं गुणसागरस्य भवतो बोधे ! वदामो वयं
बोध्यङ्गानि तु सप्त सप्तभुवनोद्धारेऽपि शक्तानि ते ॥

## बालकृष्णकेलिमुक्तकानि

१

सरसे जनितो जगतीं सरसां चरितेन करिष्यति सूनुरयम् ।
तिथिलग्नभवासरगौरवतो भविता नितरां भुवि गौरववान् ॥

२

तनुगे च विधौ तनुमान् हरिगे मिहिरे विजयी, बुधि पञ्चमगे ।
बहुसूनुरयं भविता, पितरः श्रयितार इदंनामसु विशयम् ॥

३

माता शाययितुं सुतं प्रणिजगौ रामायणं सुस्वरं
कृष्णस्तद्गतमानसोऽथ नयने सम्मील्य निद्रां गतः ।
किन्तु श्रीजनकात्मजाहरणमाकर्ण्यैव संरम्भतः
सौमित्रे क्व धनुर्धनुर्धनुरिति प्रोवाच नन्दात्मजः ॥

४

मात्रा पुनः पुनरपि स्थगितो दुकूलैः कृष्णः स तानि चपलो मलिनीचकार ।
त्वं शूकरोऽसि गतजन्मनि पूतनारे ! इत्युक्तिसंश्रवणतश्चकितः स आसीत् ॥

५

चौर चौर कुरुषे किमत्र मे मुञ्च मुञ्च नवनीतभाजनम् ।
अत्र सन्ति बहवः पिपीलिकास्ता निवारयितुमातपं नये ॥

६

धूर्त वेद्मि तव धूर्ततामहं किन्निमित्तमविशोऽत्र मद्गृहम् ।
आगतस्त्वरितमोतुतोऽवितुं भाजनं तव नवोद्धृतैर्भृतम् ॥

७

गोपिके, मयि दयस्व कोमले, कर्कशेन न करेण पीडय।
मुञ्च वाममयि वामलोचने त्वं करं मम गृहाण दक्षिणम् ॥

८

आलयञ्चलत रे मदालयं, तत्र चौरमणिरद्य रुध्यते।
पश्य मूढहृदये न मोहनो, वल्लभस्तव पतिस्तमोहनः ॥

९

मुग्धमुग्धवदने नदूषणे, मत्सुते किमु मृषासि रोषणा।
पश्य पश्य तरले त्वया धृतो नन्दनस्तव, न नन्दनन्दनः ॥

## निजेष्टमार्गषट्पदी

१

न द्वैतं नाद्वैतं न विशिष्टं नाविशिष्टञ्च ।
नाचिन्त्यं न च चिन्त्यं रसचिन्तामणिमहं वन्दे ॥

२

वन्देऽहं रसचिन्तामणिबीजं श्रीहिताचार्यम् ।
यस्य प्रीतिनवाङ्कुर इव राधावल्लभो भाति ॥

३

भाति प्रीतिनवाङ्कुरजेव द्विदली सनातनी यस्य ।
नवलकिशोरकिशोरीरूपा सा धुर्यमाधुर्या ॥

४

श्रीमद्भागवतादौ गूढतया सा विनिर्दिष्टा।
इति तद्व्याख्यारूपैर्ग्रन्थैर्नैषा परिस्पृष्टा ॥

५

सा पल्लविता कुञ्जे कुञ्जे केलीकलापकलनाय।
आलीभूतरसिकजनहृदयानन्दाय भात्यमन्दाय ॥

६

सैव विकसिता स्वांशैर्व्रजमण्डलमण्डनत्वमुपयाति।
श्रीमद्भागवतादौ गूढतया या विनिर्दिष्टा ॥

## श्रीराधाचरणतलस्तोत्रम्

१

'अये चेतश्चिन्ताशतमधिकसन्तापजननं
विहाय त्वं वृन्दाविपिननवकुञ्जं श्रय सुखम् ।'
किमेतान् मे वर्णान्नयसि नहि कर्णान्तिकमपि
क्वणन्मञ्जीरं यामुनतरलतीरं न चलसि ॥

२

यदेवेदं सृष्टेर्मधुररसवृष्टेश्च समये
समस्तेभ्यः पूर्वं क्रममरमपूर्वं कलयते ।
तदेतत्सारुण्यं जनितनवपुण्यं प्रणमतां
न राधाया वामं चरणमभिरामं स्मरसि किम् ॥

३

यदेव श्रीरासे नवनवविलासे च सपदि
स्फुरद्भृङ्गीगुञ्जे नवनिभृतकुञ्जे विहरति ।
अये शीतं शीतं शशिभिरुपवीतं नखमिषा—
न्न राधाया वामं चरणमभिरामं श्रयसि किम् ॥

४

परिष्कर्तुं स्वान्तं सुभगमथ कान्तं तरलितं
तिरस्कर्तुं व्यग्रं शरणयितुमग्रं स्फुरति यः ।
तमेव श्रीराधाचरणमिह बाधापहरणम्,
कथं चेतो वामं परममभिरामं न भजसि ॥

५

अये चेतश्चिन्तामरुषु गलितक्षान्तितरुषु
निराकर्तुं तृष्णामटसि किमु कृष्णाचरणकैः ।
इमं भूयश्च्योतद्रसजलनिधेः प्रोतममृतै—
र्न राधाया वामं चरणमभिरामं श्रयसि किम् ॥

६

अये चेतश्चिन्ताम्बुधिलहरिसन्तानपतितं
मुहुर्मज्जस्युन्मज्जसि सपदि मामुन्मदयसि ।
महापोतं भूयो भयपरिगताम्भोधितरणे
न राधाया वामं चरणमभिरामं भजसि किम् ॥

७

अहो दूरादङ्गीकृतरसिकभङ्गीनपि जनान्
दिशं९तं पन्थानं भवजलधिमन्थानमुचितम् ।
अयं स्वीयै रेखाध्वजविधृतलेखाश्वलमुखै
स्त्वया तुल्यानाकारयति नखराकापतिनुतः ॥

८

अयं नूनं रेखाङ्कुशकलनया मत्तकरिणा—
मिवामीषां भीषाकरणमिह दोषाख्यविपदाम् ।
इह श्रीमान् कृष्णोऽप्यविगलिततृष्णोऽस्त्यनुदिनं
न राधाया वामं चरणमभिरामं श्रयसि किम् ॥

९

हसत्पद्माकारं परमसुकुमारं नवनख—
प्रभाभारव्यग्रं मृदुतरमुदग्रं सुललितम् ।
छटामात्रस्पर्शप्रकटितरसोत्कर्षममलं
न राधाया वामं चरणमभिरामं श्रयसि किम् ॥

१०

स्वभावेन द्राक्षामधुरमथ लाक्षारसकृता—
धिकारुण्यं साक्षादरुणकमलाख्यातविरुदम् ॥
हरत्सर्वा बाधा विलसितमसाधारणगुणै—
र्दिदृक्षे श्रीराधाचरणतलमाधाय करयोः ॥

११

इदं वृन्दारण्यं ध्रुवमिह दशानामपि दिशां
　　जये ध्यातान् शङ्खानुपनयति यस्मै सविनयम् ।
तदेवाहं प्रत्यङ्गुलि विशदतद्रेखमुभयं
　　दिदृक्षे श्रीराधाचरणतलमाधाय करयोः ॥

१२

शुभाशीर्वादेषु व्रजजनवतंसायितयव--
　　प्ररोहः श्रीकृष्णः प्रणमति यदारादनुनयन् ।
तदेवाङ्गुष्ठान्तर्धृतयवमहं वाममधिकं
　　दिदृक्षे श्रीराधाचरणतलमाधाय करयोः ॥

१३

इदं चक्रं चक्री नमनसमयेऽस्मै वितरती--
　　त्ययं कल्पः कल्पे क्वचिदपि भवेदादरमितः ।
इहारण्याधीशत्वमुपदधता तेन कलितं
　　दिदृक्षे श्रीराधाचरणतलमाधाय करयोः ॥

१४

निकुञ्जाधिष्ठात्र्याः सहजनयनापाङ्गवलनो-
　　दितात्कन्दर्पार्कादवति खलु नन्दात्मजमिदम् ।
इतीव च्छत्रेणाङ्कितमखिलतापैकशमनं
　　दिदृक्षे श्रीराधाचरणतलमाधाय करयोः ॥

१५

ध्यानं धृतार्धविधुनो विधुनोति यस्य
　तापत्रयं सशकलं सकलङ्कताञ्च ।
　　वामं दधद्व्रततिकां ततिकाममेतद्
　　　राधापदाम्बुजतलं जतुलं नमामि ॥

१६

यत्रार्धचन्द्रकलितावलितालवाले,
वल्ली विराजतितरां नितरां मनोज्ञा।
धृत्वा सुमं शिरसि सा रसिकानुकम्पा—
रूपं फलं वितनुते तनुते च पुष्टिम्॥

१७

श्रीवृन्दारण्यराज्ये मधुररसभृतां सर्वदास्ते सुभिक्षं,
निर्भङ्गा मङ्गलश्रीरिह वसतिजुषामस्त्यनल्पेति जल्पन्।
एकेनोद्भासमानः स्फुरदरुणतलोऽङ्गुष्ठमूले यवेन,
श्रीराधावामपादः स्फुरतु मम हृदि ध्यानकाले कदाचित्॥

## सुधानिधिस्तवस्तुतिकलापकम्

अथ सुधानिधिनामनवस्तवं कलितवानसि चेतसहसैव ते।
दलमनेन शुचां शमयिष्यते वितरता नवजीवनसम्मदम्॥
मधुरसान्मधुरे विमले विधोरपि किलेह नवाभिनवे स्तवे।
प्रतिपदं ध्वनयः प्रतिभान्तु तेऽवदधतो हरिवंशकृपाबलम्॥
प्रणयपूरतताः प्रणतेस्ततीरुपहरन् भवतः सुहृदां कृते।
मुदमुदारतरां श्रयते भवत्प्रणयपात्रतया ममताजुषाम्॥
न कवितेति भवेन्मतिरन्यथा स्तवपदानि हि मन्त्रसमुच्चयः।
ध्रुवमिहैकतमोऽपि हृदा धृतो वितरिता स्फुटदर्शनमेव ते॥

## दैन्यषट्पदी

राधे ! माधवभृत्ये मयि न तवोपेक्षिता युक्ता।
अथवा मानवतीनां निषेधवेषो विधिः प्रथितः॥
सत्यं मय्यनुकम्पामतीव भवती दधाति हृदयेन।
किन्तु प्रदर्शयति मेऽनवधानामेव तां वृत्तिम्॥

राधाजानिं जाने मय्यपराधान्वितेऽपि घृतकरुणम् ।
इत्यपि तटस्थवत्स्यादालापस्तेन भीतोऽस्मि ॥
अथवा मय्यपराधान्विते तवोपेक्षिताऽभ्युचिता ।
योऽहं तवापि पुरतः स्मरामि तं माधवाख्यानैः ॥
राधावल्लभसेवी किलाहमस्मीति युज्यते वक्तुम् ।
राधावल्लभशब्दे न वक्तुमिष्टस्तु तत्पुरुषः ॥
वृन्दावने भवत्याः क्षुधा तृषा बाधितो न निवसामि ।
तेन हि तवैव लज्जेत्यहं बहुव्रीहिमेवेष्टे ।

## कैङ्कर्याभिलाष-कलापकम्

न पूतनाऽहं नवकोऽस्मि नापि प्रलम्बको नैष किलास्मि नागः ।
तथापि किं बालमुकन्द ! मह्यं नोदेति काचिद्धृदये दया ते ॥
स्यां गायिका त्वत्प्रियसद्गुणानां राधेऽथवा त्वां समयेऽनुयायाम् ॥
स्यां मार्जनी वा परिहासमानं लभेय संवाहनमुख्यसेवाम् ।
उद्वर्तनी स्यामथवा किरीटहारादिनिर्माणविधौ नियुक्ता ॥
पत्रादिशय्यारचने प्रसादस्याच्छादने वा परिकल्पने वा ।
एकान्तसेवावसरेषु कान्तशय्यान्तिकं त्वामथवा नयेयम् ॥
सद्गन्धमालावहनेऽत्र केश-वेषादिकार्येऽनुचरीभवेयम् ।

## गायत्र्यर्थ-श्रीराधास्तोत्रम्

ओमित्यवन्तमथ भूरिति तस्य पुत्री ।
ब्रूते तथा भुवरिमां वरसानुभूमिम् ॥
स्वर्गोपमां स्वरिति वक्ति तदित्यमोघां
राधाभिधां सवितुरित्यथ तज्जपन्तम् ॥१॥

उद्वाह्यतां किल वरेण्यमितीह भर्गो
देवस्य तस्य महितं मह एव सेयम् ॥
ध्यायाम तच्च रसिका इति धीमहीति
दास्योत्सुकाश्च सुमतीर्धिय इत्यवोचत् ॥२॥

जप्तारमाह य इतीह न इत्यगादी--
दस्मान् प्रचोदयति चेति प्रचोदयात्तत् ।
इत्थं पदार्थनियमे विहिते वनेऽस्मिन्
गायत्रिका नवमिवाश्रयते स्वगेयम् ॥३॥

राधेति नाम जपितुर्वृषभानुपुत्र्याः ।
श्रीश्यामसुन्दरवरस्य हि तद् वरेण्यम् ।
देवस्य तस्य खलु गौरमिदं च भर्गो
ध्यायाम यः कलयतेऽत्र धियोऽस्मदीयाः ॥४॥

## वृन्दावनविरहविनोदनम्

आत्मानं श्रीहितं विद्धि प्राणं विद्धि च राधिकाम् ॥
मनश्च विद्धि श्रीकृष्णमिन्द्रियाणि सखीजनान् ।
शरीरं श्रीवनं विद्धि हृदयं श्रीनिकुञ्जकम् ।
भक्तिं च हंसजां विद्धि विद्धि लीलामुपासनाम् ॥

## काचिदुत्कण्ठा

महापोताकारं भवजलधिपारं गमयितुः
सुखाम्भोधेः सारं जयति भुवि यन्नाम मधुरम् ।
स एकः श्रीवृन्दावनविभवशाली प्रभुवरः
कदाचित्पन्थानं व्रजतु हरिवंशो मम दृशोः ॥

कालातिक्रमसापराधमपि मां मार्गे समभ्यागतं
पादे मन्थरितं करे सजलितं रोमाञ्चितं वक्षसि ।
कण्ठे गद्गदितं सकम्पमधरे किञ्चिद्विवर्णं मुखे
स्तब्धं लोचनयोर्ललाटफलके स्विन्नं च सार्थीकुरु ॥

## १—कृपाकटाक्षस्तोत्रम् ।

१

ध्यात्वा चिरं न सुकृतं विलोके, येनागतोऽस्मि तव धाम्नि निरस्तशोके ।
निर्वासनं कलयितास्मि किलेति भीते, श्रीराधिके मयि विधेहि कृपाकटाक्षम् ॥

२

अत्रागतस्य मनसो न मनोरथानां, संख्याल्पतां गतवती मम कामजानाम् ।
इत्याकुले स्वदुरिताङ्कुरणाभयेन, श्रीराधिके मयि विधेहि कृपाकटाक्षम् ॥

३

निष्कारणोऽपि मम चेतसि दारुणोऽयं, क्रोधानलो ज्वलति हा स्वजनं दिधक्षुः ।
आशङ्किते परिणतेः करुणार्द्रचिते, श्रीराधिके मयि विधेहि कृपाकटाक्षम् ॥

४

अभ्यागतो नु युगपद्विरहय्य लोकान्, हा हन्त हन्त, मम चेतसि लोभ एषः ।
रात्रिन्दिवं धनसमागमचिन्तयार्त्ते, श्रीराधिके मयि विधेहि कृपाकटाक्षम् ॥

५

नैवापयान्ति मम पुत्रकलत्रमित्र—चित्राण्यनुक्रमसमापतितानि चित्तात् ।
मोहेन तेषु गलितस्वविधेयबोधे, श्रीराधिके मयि विधेहि कृपाकटाक्षम् ॥

६

आरोपितः सकपटैरपि कर्मकाण्डैर्हा मानसे मम कुतोऽप्यमिभानभारः ।
तेनैव मन्थरितसर्वशरीरचेष्टे, श्रीराधिके मयि विधेहि कृपाकटाक्षम् ॥

७

एकद्विवर्णविदिता ध्वनिमात्रविद्या, प्रासूत यं मदयते समदो मदन्तः ।
तेनैव हा प्रतिपदस्खलनाखलेऽस्मिन्, श्रीराधिके मयि विधेहि कृपाकटाक्षम् ॥

८

सन्त्येव तेऽपि बहवस्तवा धम्नि सन्तो येषां जनिः फलवती करुणाकटाक्षैः ।
प्रस्तविताधमतमोद्धरणपरीक्षे, श्रीराधिके मयि विधेहि कृपाकटाक्षम् ॥

## राधामुकुन्दयुगलस्तोत्रम् ।

दीनां दशां समवलोक्य सकृन्मदीयां, प्रोद्यद्दयार्द्रहृदयं सलिलाकुलाक्षम् ।
आगच्छदन्तिकमहो त्वरितैः पदैर्मे, राधामुकुन्दयुगलं तदहं नमामि ॥१॥
रासानुशीलनवशात् सजलाक्षिमत्त्वात्, उद्धारसम्भ्रमजवाच्च विविग्नपादम् ।
प्रत्युद्गतोऽतिशयहर्षविवृद्धवेगो, राधामुकुन्दयुगलं तदहं नमामि ॥२॥
हा हेति मां चरणयोर्निपतन्तमारान्, मा मेति दीनवचनानि निवेदयन्तम् ।
स्तोष्यन्तमप्यलमिति प्रतिषेधयन्माम्, राधामुकुन्दयुगलं तदहं नमामि ॥३॥
एकत्र लोचनरुचा सितमप्यपाङ्गं, दन्तश्रिया च परतोऽप्यरुणोऽधरोष्ठः ।
शुक्लायते करुणया हृदयस्थयेव, राधामुकुन्दयुगलं तदहं नमामि ॥४॥
यत्रासिता सितिमनि, प्रसितोभयस्मिन्, कान्तिः सिताऽसितिमनि प्रवितायते च ।
सन्दर्शितत्रिसरिदुत्सवमप्रयागे, राधामुकुन्दयुगलं तदहं नमामि ॥५॥
गीतेन यत्र जितकोकिलकाकलीका, पूर्वा, परस्तु मुरलीमृदुवादनेन ।
नृत्येन च द्वयमधःकृतनाकलोकं, राधामुकुन्दयुगलं तदहं नमामि ।६॥
एकानुवर्षति सुधामिव दृक्तरङ्गैरन्यश्च तां पिबति यत्र निमेषशून्यः ।
यत्र क्रमः स्फुरति नित्यमयं मनोज्ञो, राधामुकुन्दयुगलं तदहं नमामि ॥७॥
लावण्यपूरमविमान्तमिव स्वदेहे, यत्र प्रिया विभजतेऽविरतं प्रियाय ।
सोऽपि स्वकं मधुरिमप्रसरं प्रियायै, राधामुकुन्दयुगलं तदहं नमामि ॥८॥
काचित्स्वकाञ्चनरुचा तडितस्तनोति, कश्चिच्च नीलमणिनीलतया पयोदान् ।
व्यग्रं निजाङ्घ्रिकमलाश्रिततापहृत्यै, राधामुकुन्दयुगलं तदहं नमामि ॥९॥
सौन्दर्यसाररससिन्धुमिवाद्वितीयां, पीत्वा पयोद इव वर्षति यद् द्वितीयः ।
पाथोज-चन्द्र-सदृशाङ्कुरकारिवारि, राधामुकुन्दयुगलं तदहं नमामि ॥१०॥
यत्रोज्ज्वलस्त्वमिति चन्द्रिकयाऽऽह पूर्वा, चित्रासि नूनमिति बर्हमिषेण चान्यः ।
इत्थं मिथः प्रणयतः शिरसाद्रियाणं, राधामुकुन्दयुगलं तदहं नमामि ॥११॥
"प्रेम स्वभावसरलं सदपीह वक्रं, गत्या भवत्यथ न वेत्ति जनो रहस्यम् ।"
इत्यालपच्चरण-विन्यसन-च्छलेन, राधामुकुन्दयुगलं तदहं नमामि ॥१२॥
दैन्यं विलोक्य मम मास्म गमत्तु शोकं पूर्वा, मुखं मलिनतामिह मास्म धाच्च ।
अन्यस्तु वीक्ष्य करुणां मयि भूरि हृष्येद् येनाननेन्दुरुचितां रुचिमस्य विन्देत् ॥१३॥

## २---कृपाकटाक्षस्तोत्रम्

अयि स्वधामवर्तिनां सुधाभिवेकपण्डिते—
ऽतिधन्यगोपकन्यकास्वनन्यताभिसंहिते ।
अमन्दनन्दनन्दनीयवन्दनाभिनन्दिते,
कदा करिष्यसीह मां कृपाकटाक्षभाजनम् ॥१॥

हरिप्रियासु मुख्यताङ्गते सखीष्वखण्डिते—
ऽखिलाङ्गसङ्गिमाधुरीधुरीणताभिमण्डिते ।
परिस्फुटन्नवीनयौवनोल्लसत्तनूलते,
कदा करिष्यसीह मां कृपाकटाक्षभाजनम् ॥२॥

तडिद्भिरप्यधीतचापलं सुचार्वपाङ्गकं
विधुप्रभाभिरप्यगम्यकोमलश्रि ते स्मितम् ।
विलोकयन्तमन्तरात्मनि स्फुरन्महोत्सवं,
कदा करिष्यसीह मां कृपाकटाक्षभाजनम् ॥३॥

यवार्धचन्द्रचक्रवल्लिकाङ्कुशध्वजाम्बुजैः
समीनशक्तिभिश्च कम्बुवेदि कुण्डलाचलैः ।
स्वसौभगत्वरेखिकाभिराभङ्क्तिताङ्घ्रिके,
कदा करिष्यसीह मां कृपाकटाक्षभाजनम् ॥४॥

व्रजाधिराजनन्दनान्तरङ्गमादनैरहो
स्वभावसौरभैः सुमञ्जुगीतकस्वरैस्तथा ।
हृदि प्रकल्पितैरपि प्रमोदमानमानसं,
कदा करिष्यसीह मां कृपाकटाक्षभाजनम् ॥५॥

तिरस्कृतालिकोकिलस्वरां सुधाविमर्दिनीं
गिरं प्रकामकम्रनम्रमर्मवर्द्धिनीम् ।
उदीरयन्ति, मूकयन्ति राधिके बृहस्पतिं,
कदा करिष्यसीह मां कृपाकटाक्षभाजनम् ॥६॥

अहो विनीततातत: सुकोमलान्तरोल्लसद्—
विलोलवीचिवल्लरीकृपाम्बुधिप्रवाहकैः ।
विलीन-सर्व-शाप-पाप-तापकं प्रकुर्वती,
कदा करिष्यसीह मां कृपाकटाक्षभाजनम् ॥६॥

अयि प्रसिद्धधातुचित्रचातुरीगुरो, गिरां
विशेषसन्निवेशने सरस्वतीविजित्वरे ।
तथाक्षदेवनेषु निर्जितस्वजीवनेश्वरे,
कदा करिष्यसीह कृपाकटाक्षभाजनम् ॥७॥

गिरैव किं दृशापि नैकभावसूचनाचणे,
पटोयसि, त्रपाभरानमद्विमुग्धलोचने ।
मुकुन्दमेघ रूपवारि-मात्रपान-चातकि,
कदा करिष्यसीह मां कृपाकटाक्षभाजनम् ॥६॥

अवार्यधैर्यनिर्जिताखिलक्षमाधरोत्करे,
महागभीरता विलुप्तदृप्तसप्तसागरे ।
सुमञ्जुलास्यहास्यसद्विलासवीचिवापिके,
कदा करिष्यसीह मां कृपा कटाक्षभाजनम् ॥१०॥

जडेन, कम्पिना, जलाविलेन, पाण्डुपाण्डुना,
सकण्टकेन, साश्रुणा, सगद्गदेन, मूर्च्छता ।
निजाङ्गकेन कश्चिदञ्जयन्ति भावमुत्कटं
कदा करिष्यसीह मां कृपाकटाक्षभाजनम् ॥११॥

पदाम्बुजं तव स्वजीवनैकसंश्रयं यदा—
ऽचराणि मन्वते तदा चराणि किन्न मन्वताम् ।
इति स्वधामवर्ति-सर्व-सर्वभाव-भावित्रे,
कदा करिय्यसीह मां कृपाकटाक्षभाजनम् ॥१२॥

## "राधावल्लभपादपल्लवयुग्मकम्

१

आरुण्येन तिरस्कृताम्बुजदले, कारुण्यधारावले,
निर्गच्छन्नखकान्तिनिर्मलजले, निर्धूतधौर्यच्छले ।
श्रीलश्रीहरिवंश-वन्दन-कले, राकासुधांशूज्ज्वले,
राधावल्लभपादपल्लवतले चेतोऽद्य विश्रायम्तु ।।

२

संसारे किल कामभानुजनितक्रोधातपद्दं पिते,
लोभाम्बुप्रसरभ्रमावह महा मोहच्छटाच्छादिते ।
भ्रामं भ्राममनेकधा हरिणवद् दुर्मानमूर्छाञ्चितं
राधाल्वलभपादपल्लवतले चेतोऽद्यविश्राम्यतु ।।

## जयति जयति विशेषकम्

१

जयति जयति राधा प्रेम पूरैर गाधा
जयति जयति कृष्णः सम्भृतानन्ततृष्णः ।
जयति जयति सारो नित्य लीलाविहारो
जयति जयति वृन्दारण्य सत्कुञ्जवृन्दम् ।।

२

जयति सुकृतसारालंकृता कापि तारा
जयति हत तमिस्रश्चन्द्रमा व्यास मिश्रः
जयति स हरिवंशो नित्य केलिप्रशंसो
जयति च हित एव श्रीहितानन्द देवः ।

३

जयति ऋषिकुलं तद्यद्भुता वद्य—हृद्यं
जयति गुरुवर श्रीकृष्णलालो गुरुश्रीः ।
जयति जयति माता भक्तिदा हुक्मदेवी
जयति जयति तातः श्रीदुनीचन्द्रभक्तः ।।

## श्रीराधिकाचरणपंकजमञ्जुरेणुवन्दनम्

वन्देऽतिदुर्लभमनोरथकामधेनुं प्रत्यूहपादपसमूहलसत्करेणुम् ।
तं मागधीकृतमुकुन्दमनोज्ञवेणुं श्रीराधिकाचरणपङ्कजमञ्जुरेणुम् ॥

## श्रीहरिवंशाष्टकम्

### 'कदाचित्पन्थानं व्रजतु हरिवंशो मम दृशोः'

१

महापोताकारं भवजलधिपारं गमयितुं
सुखाम्भोधेः सारं श्रुतमहह यन्नाम मधुरम् ।
स एकः श्रीवृन्दावनविभवशाली प्रभुवरः
कदाचित्पन्थानं व्रजतु हरिवंशो मम दृशोः ॥

२

रसज्ञानां वाणी यदुदयगुणादीन् कथयितुं
परप्रेमावेशात्प्रसरति परं न प्रभवति ।
स तद्धर्मोद्धारी, कलिकलुषहारी, हितमयः
कदाचित्पन्थानं व्रजतु हरिवंशो मम दृशोः ॥

३

महाम्लेच्छाक्रान्तेऽनवरतमशान्तेऽत्र भुवने
श्रुतीनां सर्वस्वं प्रथयति 'रसो वै स' इति यः ।
स भक्तैरुच्छिन्नं पुनरपि परं वर्त्म नवयन्
कदाचित्पन्थानं व्रजतु हरिवंशो मम दृशोः ॥

४

स धन्यो यज्जन्मोत्सवपरमशोभासमुदयै—
र्नवैर्वादग्रामो लसति मथुरामण्डलगतः ।
स सत्कीर्तिं म्लेच्छैरपि विशदयन्नूरुयशसः
कदाचित्पन्थानं व्रजतु हरिवंशो मम दृशोः ॥

५

जगद्यातं नीतिं कलिकलुषरीतिं परिहरत्
मिथः प्राप्तं प्रीतिं त्यजति किल भीतिं यदुदये ।
स ताराक्ष्णोस्तारो निधिरथ महान्व्यासमनसः
कदाचित्पन्थानं व्रजतु हरिवंशो मम दृशोः ॥

६

इमे सर्वे मार्गा ददति निगमान्तैर्निगदितां
रसाधारां भक्तिं नियतमिति यः साध्वचकथत् ।
स गायन् श्रीराधामधुरिपुरहःकेलिनिवहान्
कदाचित्पन्थानं व्रजतु हरिवंशो मम दृशोः ॥

७

'इदं वृन्दारण्यं भजत भुवि धन्यं सहृदयाः !
इतीमानाहूय स्वयमवति यो भावरसभाक् ।
स राधापादाब्जप्रणयिषु लसन्मौलिमणिवत्
कदाचित्पन्थानं व्रजतु हरिवंशो मम दृशोः ॥

८

अहोरात्रं भायाद्यदि स मिहिरो वा हिमकर-
स्तथापि श्रीपादस्फुरितनखकान्तिं न कलयेत् ।
इति ध्यातानन्तच्छविरविरतानन्दजलधिः
कदाचित्पन्थानं व्रजतु हरिवंशो मम दृशोः ॥

## वंश्यादिवन्दनम्

वंश्यादिभिर्भूषितविग्रहात्परं तत्त्वं न ये ब्रह्मविदोऽपि जानते ।
चेत्त्वत्पदाम्भोजरजःकणं श्रये नेक्षे तदा तद्व्रजसः परं पदम् ॥
वन्दे सदा हितसुधानिधिमुत्तरङ्गं मीनद्वयं स्फुरति यत्र विमुक्तरङ्गम् ।
वृन्दावने कृतकुलायकुलैर्मरालैः पेपीयमानरससारमुदारतारम् ॥
राधेति वर्णयुगलं स्वरसप्तकेन श्रीश्यामनिःश्वसितजेन विसारयन्तीम् ।
वंशीं हरेरिह नमामि न मामि यस्या गास्यन् गुणानहमगाधरसामृताब्धौ ॥

## अश्वधाटीयुग्मकम्

जल्पेम किं कथमजल्पेन ना पदमनल्पेहितं विवृणुताम्,
कल्पेत कल्पतरुरल्पेऽपि किं क्वचन तल्पे स्थितस्य कुशले।
मन्दारतां श्रयति मन्दार इत्यहह वन्दारवे प्रियतमा,
नन्दात्मजाय सुखकन्दायते जगति मन्दायतेऽन्यदखिलम् ॥
छायापि यस्य किल मायाभिधा जगति जाया सती विहरति,
कायाधवावितुरनायासमस्य किल सायासमुन्निमिषतः।
आधार एक इह मा धावतात्परमगाधा रसामृतभरी,
राधा हरेत मम बाधानशेषभवसाधारणाननुदिनम् ॥

## वासुदेवस्य देवत्वम्

क्रीडार्थं मम जन्म कर्म च यथा भक्तः प्रमोमुद्यताम्
ग्राह्यं तद् विजिगीषया दलयितुं दुष्टान् पुनर्दानवान्।
मत्कीर्तिश्रवणस्मृतिव्यवहृतेर्मूलं परं तद् भवेत्
विद्योतेत मदस्तिता, स्तुतिशतैर्देवाः स्तवीरन्निदम्।
मोदार्थं पितृमातृबन्धुदयितामित्रानुगानामिदं
किञ्चेदं मदनस्य मोहनतया तत्तन्मदार्थं स्थितम्।
स्वप्नाभं जगदित्यहो गमयितुं, कान्त्या स्वतन्त्रेच्छया
गत्यर्थं स्वपदप्रपित्सु–सदसद्वर्गस्य सर्वस्य तत् ॥
आराधयन्ति मनुजा बहुधाऽत्र देवान्
देवाः शिवं विषविपद्विनिवर्तकं ते।
सोऽयं शिवो मधुपतिं भजते, रसेन,
संसेवते मधुपतिर्वृषभानुपुत्रीम् ॥

## श्रीहरिवंश-वाण्यष्टकम्

पवित्रितजगत्त्रयीं सरसिताखिलक्ष्मातलां
गिरं रससुधानिधिस्तवसवित्रिकां कामपि।

प्रतिध्वनिविराजमानविविधाध्वनीनध्विनं
प्रमोदभरतुन्दिला अपि निकाममाचामहे ।।

बसन्ततिलकालकां, शिखरिणीलसच्छेखरां
सुमालिकृतमालिनीं, विमलमौक्तिकस्रग्धराम् ।
सुमन्दक्रमणामपि श्रिततरक्षुविक्रीडिता-
मनुष्टुबुपजातिभिर्विलसितां सुपृथ्वीं भजेत् ।।

क्वचिन्नमनकम्रतां कलयते नितान्तोन्नता,
क्वचित्स्मरणमाश्रयत्यहह बिभ्रती स्मर्यताम् ।
क्वचिज्जयजयध्वनि प्रकुरुते जयिन्यात्मना
क्वचित्कृतकृपार्थना किलकृतार्थयत्यञ्जसा ।।

अहो मधुरिमा गिरां सहचरीत्वमाशंसत-
स्ततोऽपि महिमा महाननुचरीत्वसम्प्रार्थने ।
पदं प्रथममाप्यते हि वृषभानुभूवाञ्छया
परन्तु चरमं विनापि करुणां स्वयं लभ्यते ।।

अहो युगलमानसे निविशते विना शङ्कया,
विलोकयति चान्तरङ्गमपि रङ्गमञ्चस्थलम् ।
इतीह कियदद्भुतं नहि नहीति वाचां श्रवे
मनोरथमिहातनोति यदि नाम सोऽयं कविः ।।

यदत्रभवतां सतां मतमिदं समाकर्ण्यते,
यदेष कविरस्ति तद्युगलचित्तवृत्ति स्वयम् ।
तदत्यहह मन्महे समुचितं चिरं चिन्तनात्
विना हि भुवि तामियन्ति गहनानि जानीत कः ।।

यदत्र विषये बुधैरिदमनुन्मदैरुद्यते,
यदेष कविरस्ति नित्यसहवर्तिनी वंशिका ।
तदप्यतितरामृतं सुवचनामृतं ब्रूमहे,
विना हि भुवि तामिमानि मधुराणि को गायति ।।

समस्तनिगमागमाविगतमत्यहो गम्यते
रहस्यमिह यन्महामधुरहावभावोज्ज्वलम् ।
तदन्तरिह सन्तनुष्व रतिमेव नापायिनीम्
महाप्रभुहितश्रियोऽद्य चरणारविन्दद्वये ॥

## आत्मनिवेदनम्

१

केचिन्ममेह विनिवेदनभाजनानि केचिच्च सन्ति विनिदेशगिरास्पदानि ।
किन्त्वद्य रौरवविडम्बमितं कुटुम्बं तत्ते निवेदितमिदं चरणारविन्दे ॥

२

पूर्वं ममेह पितरौ विनिवेदितानि श्रुत्वा स्म निश्चिनुत आत्मविधेयमाशु ।
अद्य स्वतन्त्रमभवद्धृदयं तदीयं तत्ते निवेदितमिदं चरणारविन्दे ॥

३

भार्यापि पूर्वमनुरुध्य ममान्तरङ्गं कार्याणि हन्त कुरुतेस्म सहप्रमोदम् ।
स्वच्छन्दतामभिलषत्यधुना हृदेयं तत्ते निवेदितमिदं चरणारविन्दे ॥

४

सा स्वेच्छयैव विजहाति किलाद्य शय्यां न स्नाति न स्नपयति त्रिसुतीं पुरेव ।
गृह्येषु कर्मसु च चेष्टयते न सम्यक् तत्ते निवेदितमिदं चरणारविन्दे ॥

६

यः पद्मकान्तशिशुकः स्म पुरा मदिच्छां छायेव संसरति हर्षविफुल्लगात्रः ।
तस्याद्य रोदनपरस्य दुराग्रहित्वं तत्ते निवेदितमिदं चरणारविन्दे ॥

६

सम्भावितोऽप्यहह शारदचन्द्र एष भ्रातुः पुरानुकुरुते क्वचनाथ मातुः ।
तस्यापि भाति भगवन्न भविष्यभव्यं तत्ते निवेदितमिदं चरणारविन्दे ॥

७

कादम्बरी परमहंससमानचित्ता जानीत किन्नु भविता भवती वाह किम् ।
तस्या मनस्त्वदनुशासनसङ्गतं स्यात्तत्ते निवेदितमिदं चारणारविन्दे ॥

८

एषोऽस्मि सर्वसहतां परिहाय कोपव्याप्तान्तरोऽपर इवास्मि महेश जातः ।
अद्यान्यदेव च नितान्तमशान्तमन्तस्तत्ते निवेदितमिदं चरणारविन्दे ॥

## जन्माद्यस्येतिव्याख्यास्तोत्रम्

पूर्वंवक्त्रा स्ववक्त्राब्जमकरन्दासवेन वः ।
चेतांसि सम्मदयता नूनमुन्मादितान्यहो ॥
वयं तु जन्माद्यस्येति, पद्यं भागवतोदितम् ।
व्याख्यास्यामः पुरोक्तेभ्यः सर्वोर्थेभ्यो विलक्षणम् ॥

**जन्मेह** भावुकमनस्सु विभावनाद्यैर्व्यापारकैर्दधिनवोद्धृतवत्प्रकाशः ।
**आद्यस्य** **सर्वरसमूल**रतिप्रकर्षादादौ भवस्य सुरसस्य किलोज्ज्वलस्य ॥
आलम्बनेऽपि विषयाश्रयभेदभाजि राधात्मकाद्विषयतः स यतः प्रसूतः ।
सम्भोगतो भवति यः स इहा**न्वया**त्स्यात् स्यादन्वया**दितरत**श्च स विप्रलम्भात् ।
**अर्थेषु** नैकविधभावविलासलीलारूपेषु गोपशिशुरप्ययमस्त्य**भिज्ञः** ।
सा स्वेन राजिततयास्ति **स्वराट्**, स्वकीयवृन्दावनाधिपतयाप्यथवात्र राधा ॥
**तेने** निजं परममन्त्रमियं च ब्रह्म नूनं **हृदा** कलयितुं स्वकलाप्रकाशम् ।
आद्यस्य तस्य यमवादिषमादिभेदं तस्यापि चा**दिकवये** हरिवंशनाम्ने ॥
मुह्यन्ति मोहमुपयान्ति महान्तमेव **यद्**यासु केलिकवितास्विह **सूरय**स्ते ।
**तेजो**-हिमांशुमिहिरौ किल यासु कान्तितेजोविहीनजलमृत्समतामुपेतः ॥
**वारि** स्वभावकृतनिम्नगतिं विहाय यासूच्छलज्ज्वलनजालसमत्वमेति ।
दृष्टो **मृदामपि** महान् महिमा पयोवन्नानामलक्षपरताजनितोऽथ यासु ॥
इत्थं यथा **विनिमयोऽस्ति**, तथा **त्रिसर्गः** सद्वारकां च मथुरां च विकुण्ठधाम ।
अध्यासिता बहुविधा रचना **मृषैव** **यत्रा**वनौ भवति सास्ति निकुञ्जभूमिः ॥
वृन्दावनेति जगति **प्र**थितेन **धाम्ना** **स्वेना**त्मना किल सदा प्रसरद्विहारे ।
आस्ते **निरस्तकुहकं** विनिवृत्तविघ्नं **सत्यं** सतीत्वमुपकल्पितचारुदेहम् ॥
यत्त**त्परं** किल परात्परमागमेषु गीतं रसात्मकतया शिवसुन्दरन्तत् ।
ध्यायाम नित्यमधिगन्तुमिहास्य दास्यं किंवा सखीत्वमिति वल्गति धीमहीति ॥

## प्रातः स्मरणस्तोत्रम्

१

तः स्मरामि नवलस्मरवन्दनीयं, प्रस्वेदविन्दुविलसद्वन्दनारविन्दम् ॥
जैत्रं रतेषु शिथिलं तदलम्पटेषु,द्वन्द्वं नितान्तरसलम्पटमेकशूरम् ॥

२

प्रातः स्मरामि सुखवर्षि लतानिकुञ्जेषूत्तुङ्गरङ्गभरितं श्लथदङ्घ्रिपातम् ।
पूर्वानुरागमुदितं युगलं सुगौरश्यामं मधुव्रतविशेषितमञ्जुगानम् ॥

३

प्रातः स्मरामि मिथुनं पृथुकान्ति नव्यकैशोरकेऽपि रतिरङ्गरसार्द्रिताङ्गम् ।
अन्योन्यबाहुलसदंसमिदं चकोरतृष्यद्विलोचननिपीतमिथोमुखेन्दु ॥

४

प्रातः स्मरामि रजनीजनितानि रङ्गसौख्यानि सूचयदनङ्गजयद्भिरङ्गैः ।
दोलाधिरूढमनुरागभरेण गायन् मन्द्रं कलं च नवलं युगलं किशोरम् ॥

५

प्रातः स्मरामि परिरम्भणचुम्बनानि त्यक्तुं कथञ्चिदपि न प्रभवत्प्रियाणि ।
कुञ्जश्रियां समुदयैरथ कृष्यमाणं, किञ्चिद्द्वयं स्खलितकम्पितपादगामि ॥

६

प्रातः स्मरामि ललितादिकचन्द्रवल्लीसम्फुल्लयद्वदनचन्द्रमिषच्चकोरम् ।
द्वन्द्वं तदेव वसनाञ्चलतो हितालीदत्ताशिषं च हरिवंशकृतप्रशंसम् ॥

७

प्रातः स्मरामि दयितेन हृते स्वचित्ते प्रत्याहृतिप्रयतनानि न कर्तुमर्हाम् ।
श्यामां प्रकामशिथिलालकजालकेषु चेतोमृगं सपदि तस्य निबन्धयन्तीम् ॥

८

प्रातः स्मरामि सुकुमारतयाऽधिदोलमान्दोलनासु निभृतं भयवेपिताङ्गीम् ।
किञ्च प्रियस्य नयनाञ्चलतोऽपि चित्तमाकर्षितुं प्रयतितां वृषभानुपुत्रीम् ॥

९

प्रातः स्मरामि पुलकाञ्चिसर्वगात्रीं दोलाभियेव दयितोरसि संलगन्तीम्।
तस्मिन्निखाय नु निजौ कठिनावुरोजौ संस्तम्भनं स्ववपुषा परिकल्पयन्तीम् ॥

१०

प्रातः स्मरामि कटकेन मनोज्ञमालां संश्लेष्य केशलतिकामथ कुण्डलेन।
सौवर्णचम्पकलतामिव सत्तमालेनालिङ्गितामपि कुतश्चन कम्पमानाम् ॥

११

प्रातः स्मरामि दयिताकुचकुङ्कुमेन नीरञ्जितान् मणिसरानुरसा दधानम्।
चित्रेण पत्ररचनेन तु तौ विभूष्य श्यामं सुनिष्क्रयमिव प्रणयैर्ददानम् ॥

१२

प्रातः स्मरामि चपलं मणिहारगुम्फे व्यस्तां प्रियां सुतनुशर्करया विचाल्य।
वक्रं विलोकनशतं चपलञ्च कान्तं सन्दर्शयन्तमनुनादितमञ्जुवंशम् ॥

१३

प्रातः स्मरामि गुरुदेवमभीष्टमन्तर्मा किङ्करीषु शनकैर्विनिवेशयन्तम्।
वर्षन्तमेव करुणाकलितैरपाङ्गै रानन्दनं हितसुधारसमद्भुतं तम् ॥

१४

प्रातः स्मराम्यरुणवर्णजितारुणौ तौ, पादौ गुरोर्विकसदम्बुजकान्तिधौतौ।
आद्यान्तिमा असितजाः सितजाश्च चन्द्राः पश्चात्र पञ्चनखवेषधरा विभान्ति ॥

१५

प्रातः स्मरामि यमुनाजलसिक्तकुञ्जं नित्यं वसन्तशरदीडितपुष्पपुञ्जम्।
मत्तद्विरेफपरिशीलितपुण्यगन्धं वृन्दावनं नवकिशोरहृदेकबन्धम् ॥

१६

प्रातर्नमामि नवलासु रसालमालासूद्भिद्यमानमृदुलारुणपल्लवेषु।
कूजत्पिकालिनवबर्हिणनृत्यशालि वृन्दावनं युगलदर्शनहृष्यदालि ॥

१७

प्रातर्भजामि रुचिरत्रिगुणानिलालम्फुल्लन्नवारुणसितासितपद्मजालम्।
कन्दर्पकोटिपरिसेवितरम्यहर्म्यं वृन्दावनं सरसरासविलासियुग्मम् ॥

## 'बालकृष्णकेलिकलाप'

सरसे जनितो जगतीं सरसां चरितेन करिष्यति सूनुरयम्।
तिथिलग्नभवासरगौरवतो भविता नितरां भुवि गौरववान् ॥ १ ॥
तनुगे च विधौ तनुमान्, हरिगे मिहिरे विजयी, बुधि पञ्चमगे।
बहुसूनुरयं भविता, पितरः श्रयितास्थ हि नामसु विस्मरणम् ॥ २ ॥
कविमन्द-तुलागतिरस्य रिपूनवचित्य विघातमुदीरयति।
अथ राहुखगः किल सप्तमगो बहुनारिपतित्वमुदञ्चयति ॥ ३ ॥
मकरस्थितभूमिसुतोऽस्य शिशोर्बहुमङ्गलवैभवमञ्चयति।
गुरुभे किल मीनगते निधयो नव सिद्धियुताः श्रयितार इमम् ॥ ४ ॥
शनिभे खलु कर्कगते जगतां हृदये प्रतिभास्यति कृष्ण इति।
विशिष्ठमभूद् इति गर्गवचःसु वृषभानुसुतां प्रति भक्तिरिति ॥ ५ ॥
रामो नाम गुणैः प्रकाशितजगज्जातो रघूणां कुले
पित्रा सत्यवशेन सोऽनुजसखः, पत्न्या, वनं प्रेषितः।
तत्राप्यस्य तु राक्षसैरपहृता सीतेति वाचोत्थितः
सौमित्रे क्व धनुर्धनुर्धनुरिति प्रोच्चैः समुच्चारयन् ॥ ६ ॥
गोष्ठे कदाचिद्रममाणमेनं गोमूत्रपङ्केन विलिप्तगात्रम्।
माताब्रवीत् विस्मितमीक्षमाणं 'त्वं पूर्वजन्मन्यभवो नु कोलः ॥' ७ ॥
गवां प्रपेये रभसात्तरन्नसौ आकण्ठमन्तःसलिले निमज्ज्य।
ऊचे जनन्या श्रवणग्रहिण्या "किं त्वं पुराऽभूर्वद वत्स कूर्मः ॥" ८ ।
अथान्यदा तत्र निमग्नगात्रं तरन्तमन्तःसलिले समन्तात्।
हे कृष्ण, सत्यं वद किं जगत्यां त्वमत्र मत्स्योऽप्यभवः कदाचित् ॥ ९ ॥
नवेन नेपथ्यविधानकेन रजःसु लुण्ठन् विनिवारितोऽसौ।
हं हं हहंहेति बलेन गर्जन् सिंहोऽभवः किन्विति पृष्ट आसीत् ॥१०॥
हैयंगवीनं क्वचिदत्र गोपीः संयाचमानः कथितः स मात्रा।
गोपाल किं त्वं बलियज्ञकाले भिक्षामटन् वामन आस्थ भिक्षो ॥११॥
कदापि शाकान् क्षुरिकाग्रकेण च्छिन्दन् गृहीतक्षुरिको जनन्या।
उक्तः स सत्यं कथयाशु वत्स, कदापि जातो जमदग्निपुत्रः। १२॥
क्षेत्रेषु गोपैः सुधृतान् शरांश्च सन्धाय सन्धाय विनिक्षिपन्तम्।
माताब्रवीत्-पुत्रक,किं कदाचित् त्वं रामरूपेण भवेऽवतीर्णः ॥१३॥

श्री :

# चरितकादम्बरी

## श्रीहरिवंशचरितामृतम् ।

### यशोविलासो नाम प्रथमः सर्गः

यस्य श्रीहरिवंश एव परमाभीष्टं तथेष्टं परं
यस्य श्रीहरिवंश एव परमो मन्त्रो गुरुर्मन्त्रदः ।
एतं श्रीहरिवंशमेव मनसा वाचा च तन्वाश्रितं
वन्दे श्रीहरिवंशसेवकमहं दामोदरं मोदरम् ॥

### सेववाण्याः संस्कृतपद्यात्मिका व्याख्या

श्रीहरिवंशचन्द्र इति नाम, शोभनमस्ति निकामललाम माङ्गलिकश्चन्द्रोऽथवा ।।१।
विश्वसुखैकसिन्धुरभिरामहितमूर्तिः प्रतितिष्ठति धाम, प्रेमरूपरससंश्रयम् ।।२।।
प्रतिपलप्रतिघटिकं प्रतियाममनुदिनरात्रिसमुदितं वाम–मिदमपचयमङ्कं विना ।।३।।
उदितः कोऽपि प्राच्यः काम, ग्राहितवान्नेमं श्रुतिसाम, व्यसनिनि तद्व्यसनं यथा ।।४।।
श्रीहरिवंश इतीदं नाम रसास्वादसङ्गादभजाम, स्रवति रसौघमुदी गणात् ।५।।
सत्तरणीकृतमिदं प्रकाम—दृढसाधनमिति सुष्ठ्ववदाम, पुनरावर्ति न चन्द्रवत् ।६।।
नामविकासं वितरति नाम, कीर्तिकलापं जनयति नाम, स्वतःप्रभं परतःप्रभम् ।।७।।
नामिविकासं यथा विधाय, नाम भवेत्तन्मदनुग्रहाय, तथा सुबुद्धिं जनयतात् ।।८।।
सोऽहं बुद्धिसूत्रमादाय, कल्पो रत्नानां गुम्फाय, दिव्यनिधाननिधायिनाम् ।९।।
तां गुणरत्नमालिकामेष, भाग्यशालिकण्ठे विनिवेश्य, धन्यकण्ठपदवीं लभे ।।१०।।
यद्यपि दयितादयितविलास, इह विपिने नियतं प्रादुरास, तेन धनेन धनी तु सः ।।११।।
वर्ण्यं युगलवस्तु ध्यायामि, श्रीहरिवंशगुणान् गायामि, श्रीहरिवंशगुणैर्जितः ।।१२।।
श्रीवृन्दावनवैभवमिति । वैकुण्ठादि निकुञ्जा-सिति । ऐश्वर्यं माधुर्ययुक् ।१३
मम लघुबुद्धिप्रमितिः कियती । रत्नाकररत्नाञ्जलिरियती । चातकचञ्चुपुटोपमा । १४
श्रीहरिवंशधनं तत्सकलम् । यत्तत्पदसम्बन्धाविकलम् । तदिह वदामि विशेषतः । १५

सख्य एव नहि तस्य सखायः। नहि सख्यः किल तस्य सखायः। एष विवेको दुष्करः। १६
पक्षे नियते त्वेकतरेऽपि। हृदयं मम जायेत ह्रेपि। यस्येदं सर्वं स्वयम्। १७
तदहं पुनः पुनर्गर्जामि। सकलां भूयश्चाभिदधामि। प्रभुतां श्रीहरिवंशगाम्। १८
हरिहरिवंशभेदकथनेन। भेदन्यायवचः प्रथनेन। भविता भूर्यनभिज्ञता। १९
प्रभुरीश्वर इति सर्वो वेत्ति। तत्र न्यायवचो नान्वेति। हर्याज्ञा पुनरीदृशी। २०
तौ द्वावेव मताविति वाचि। विज्ञैः कथमनन्यताऽवाचि। तत्त्वं वस्तु किलाद्वयम्। २१
विश्वम्भर इह भवति य एव। आभासयति जगन्ति स एव। तादृश एव हितः स्फुटः। २२
श्रीहरिवंशविलासयशांसि। वितरन्त्यखिलभुवः श्रेयांसि। इति तान्युपगायाम्यहम्। २३
इत्थमभेदे सत्यपि कापि। निष्ठा मे मनसेदृगवापि। श्रीहरिवंशं वन्दितुम्। २४
श्रीहरिवंशमहाप्रभुगेषु। जन्मकर्मगुणरूपमयेषु। वस्तुष्वस्ति न पारता। २५
यदि नामेह तानि कथयेय। नूनमिमानि तथा प्रथयेय। यथा न भविता संग्रहः। २६
वाचामस्ति न गोचर एष। मनसोऽप्यस्ति न शक्तिविशेष इति भूयःस्मरणे दधे। २७
स्म्रियमाणं मनसा सहसैव। लघुरपि मतिरयते ग्रहिलैव। याति न किन्तु परावधिम्। २८
यथाबलं हि खगा विचरन्ति। यद्यपि नभोवधिं न भजन्ति। तथा वदामि यथामति। २९
कविरिव काव्यं नास्मि करोमि। सकलेन्द्रियवृत्तिं वितनोमि। श्रीहरिवंशपदाब्जयोः। ३०
अथवा वद मम मतिरिह कियती। या तस्यैश्वर्यं चिन्तयति। इत्यन्तःकरणेऽर्थये। ३१
यदिह समस्तगिरामधिदेवी। वर्णयितुं यतते हितसेवी। नूनं स्खलति पदे पदे। ३२
श्रीहरिवंशमहाप्रभुकीर्तिः। इयती प्रतिपलकलितस्फूर्तिः। वाङ्मनसाविषयः सदा। ३३
देहि कृपामय बुद्धिप्रकाशम्। यथा मनो मे भवतु धृताशम्। इति याचेऽधिगतं स्वतः। ३४
तटवर्धी किल वृद्धिमुपैति। यथा प्रवाहस्तया कृपैति। कृपाबलं परिरक्षितुम् ३५
श्रीहरिवंशविलासयशांसि। नूनं ददति कृपातेजांसि। इति तान्युपगायाम्यहम् ३६
श्रीहरिवंशं गातुमनाश्च। श्रीहरिवंशं यातुमनाश्च। नान्यत्किमपि वदाम्यहम्। ३७
कलियुगमध्ये वेदविधानम्। द्रव्यदेशकालादिनिदानम्। नितरामास सुदुर्वहम्। ३८
धर्मश्छलदम्भादिमयेन। आवृत आस महावरणेन। इति नासौ समदृश्यत। ३९
सारासारविवेकिजनेन। कथितं कश्चन सम्मनुते न। प्रत्युत तस्मै कुप्यति। ४०
उत्पथगामिनि जगति समेऽपि। देशा उद्वसिता इव तेऽपि। उत्पथगा अभवन्नहो। ४१
धरणी धरणीशैः सममेव। निजधर्मं विजहौ कुलटेव। धर्ममूलमुन्मूलितम्। ४२

राजन्यानधरीकुर्वन्तः । म्लेच्छा भूमितले प्रहरन्तः । याता वृद्धिमधर्मिकाः । ४३
श्रद्धाबुद्धयादीनि विहाय । मनसि कामना एव निधाय । जना अकुर्वन् नवविधीन् । ४४
वेदे विहितं कर्मकलापम् । युक्तिभिरानिन्युस्त्वपलापम् । एषा बालकलालना । ४५
कर्मणि मूढः किं जानातु । ज्ञानं विना च कथमधियातु । भजनमर्म जनदुर्गमम् । ४६
शिश्नोदरपरताप्रभवेषु । जन्ममृत्युमयभूरिभवेषु । मज्जन्नोच्छ्वसितुं क्षमम् । ४७
इत्थं दीनदीन-मतिहीन,-जगदुद्धर्तुं परं प्रवीणमुपगायामि यशः प्रभोः । ४८
मम तु प्रभुरीश्वर इह देव श्रीहरिवंशमहाप्रभुरेव । इति गास्यामि तमेव तम् । ४९
इत्थं राजसु तथा प्रजासु । त्यक्तसत्यशौचादिविधासु । धर्मं वीक्ष्य निराश्रयम् । ५०
म्लेच्छकृतैः परदारधर्षणैः अन्यायेन परस्वकर्षणैः । भूमिं भूरिकदर्थिताम् । ५१
धर्मधर्मिरूपस्य धनस्य । कः स्निह्येद् धनिनं तु निरस्य । श्रीहरिवंशः परमधनी । ५२
तस्य मनोऽतितरां धृतकरुणम् । आर्तपरित्राणेऽनिशतरुणम् । सद्यस्तत्र व्यचिन्तयत् ५३
संसारोऽयं श्रुतिपथविमुखः । दिवानिशं जाग्रद्बहुदुःखः विधिना केन सुखी भवेत् । ५४
वेदविधिं निर्वोढुमलं न । नीरक्षीरविवेकबलं न । इति तत्सारमुदाहरत् । ५५
अवतारेषु निजं प्रकटय्य । भक्तभावनाः किल सफलय्य । भक्तिं प्रथयति स स्म ताम् । ५६
तदनु स्मानुशास्ति रसरीतिम् । व्रजलीलासु सुलसितां प्रीतिम् । शांतदास्यसख्यादिवाम् ५७
व्रजरीतिः किल भक्तेः सारः । तत्सारोऽयं नित्यविहारः । तं निजधर्ममभाषत । ५८
उद्धरि, विस्तरि, उच्चरि, वस्तु । भूतार्थे सेवकमतिरस्तु । श्रीहरिवंशे तदभवत् । ५९
इत्थं सर्वधर्मविग्लानिम् । वीक्ष्य तया सह धर्मिज्यानिम् । श्रीहरिवंशः प्राभवत् । ६०
इत्थं परमकारुणिक एषः । किञ्च धनी जगतः सविशेषः । इति तत्कीर्तिमुदाहरे । ६१
यस्य कृपाबलमुपजीवामि । येनोद्धृतधर्मं च भजामि । श्रीहरिवंशं तं भजे । ६२
श्रीवृन्दावनवैभवशालि । वादग्रामधन्यतामालि । व्रजमण्डलमिह निजधरा । ६३
यत्र वितण्डाजल्पविहीनः । वादो वाद इवास्ति नवीनः । तत्र धनी प्रबभूव सः । ६४
हरिहरिवंशभेदविगमेन । ब्रह्मवराहादिकनिगमेन । यां भूमिं स्वयमस्तवीत् । ६५
वासर-ऋक्षे स्वतः शुभे ये । श्रीहितजनुषा परमशुभे ते । देवज्ञैरपि वन्दिते । ६६
माधवमासि वसन्तऋतौ च । एकादश्यां पुण्यतिथौ च । शुक्ले पक्षे परमशुभे । ६७
गृह्यवाह्यनारीवृन्देन । मंगलमुदगायत नन्देन । मंगलसारयशा हि सः । ६८
तदा हता दुन्दुभयो देव-गणैरथाघ्नंस्ते निजमेव । नेदुस्ते हितमङ्गलम् । ६९

देवगणा अपि तदाऽतिहृष्य । अङ्के वीणादिकमाकृष्य । जयजयकारमुदाहरन् । ७०
धर्मपरमधर्माधिकवृद्धिम् । वीक्ष्य मुदाऽखिलजीवसमृद्धिम् । सर्वे शीतलितान्तराः । ७१
तारा संसृतिसागरतरणात् । व्यासो रसरीतेर्विस्तरणात् । तस्यास्तां पितरौ शुभौ । ७२
देशं कालं लोकमलोकम् । धन्यीकुर्वत्कुलमस्तोकम् । श्रीहरिवंशयशो वदे । ७३
श्रीहरिवंशगुरुर्मम गेयः । स ज्ञेयः किल स मम ध्येयः । तं गातुं खलु लब्धवान् । ७४
श्रीशुकदेवमहामुनिराह । श्रीमद्भागवते सोत्साह–श्रीनन्दोत्सवमुत्तमम् । ७५
श्रीव्यासोऽपि तथैव चकार । सानन्दं सकलं सम्भारमिह न भावगतमन्तरम् । ७६
परमोदारतया प्रणयेन । तनुधनमनसामुपनयनेन । नन्द इवैष ददौ समम् । ७७
श्रीहितजन्मोत्सवरमणीयम् । प्रतिगृहमभवद् द्युतिकमनीयम् तोरणबन्दनमाल्यधृक् । ७८
प्रतिगृहमासीत्पुष्पलतादि । हयगजनरनारीकलशादि । चित्रं मङ्गलसूचकम् । ७९
प्रतिगृहमपि वाद्यानि नवानि । तत-मुख-वितत-शुषिर-सुघनानि । पंचविधानिअवादयन् ।८०
प्रतिगृहमभवद् वस्तुवितरणम् । स्वस्तिपदैरथ तत्स्वीकरणम् । विप्रैः पात्रगुणोदयैः । ८१
प्रतिगृहमानन्दोल्लसितानि । नृत्यन्ति स्म कलितललितानि । बालतरुणवृद्धाः समे । ८२
प्रतिगृहमुदगायन् वानताश्च । मङ्गलगीतीनवकविताश्च । श्रीहरिवंशाहतस्तुतीः । ८३
प्रतिगृहमित्थं नवमुल्लासम् । दधतः सन्दधिरे परिहासम् । बालतरुणवृद्धा नराः । ८४
गायति नृत्यति वादग्रामः । अखिले जगति महत्स्वभिरामः । इति गेयं गायाम्यहम् । ८५
व्याससूनुरपि सकलं लोकम् । कुरुते वत्सलताया ओकम् । तं गातुं मन उत्सुकम् । ८६
सकले जगति समुल्लसितेषु । निखिलचराचरवस्तुचयेषु । श्रीहितजन्ममहामहे । ८७
वृष्टिमन्तराऽन्तरा च झरणम् । प्रतिसर आसीज्जलपरिसरणम् अजलं सजलं ।
तदभवत् । ८८
नवविटपेष्वपि पल्लवजाल-मुदभवदिति किं वच्मि विशाल-तरुपल्लवघनतामहम् । ८९
वैरं शाश्वतिकं परिहाय । व्यालो बर्हिणबर्हमियाय । आतपतः स्वरिरक्षिषुः । ९०
केसरिणी निजशिशुना स्तन्यमपाययन्मृगशिशुमपि धन्यमहो ! महिषहयखेलनम् । ९१
इत्थं सर्वः सर्वसुखाय । संजज्ञे रोषं परिहाय । श्रीहितरूपममूदृशम् । ९२
अधनाः प्रापुस्तर्पकमशनम् । सधनाश्चापुर्निर्भयशयनम् । नित्यनवैः सुसुखोदयैः । ९३
उदपादयदवनी भृशमन्नम् । अल्पमूल्यमकुरुत प्रसन्नम् । सकलं दिक्षु सतां मनः । ९४

सहसा जगदभवन्निर्व्याधि । निष्पीडं तदभूच्च निराधि । परचक्रादिभयं गतम् । ९५
म्लेच्छा अपि कलिकलुषजयानि । उदगायन्हरिकीर्तिचयानि । रागद्वेषनिरोधिनः । ९६
दीनतया विनयैः परमाणि । स्निग्धतया व्यवहृतिललितानि । वचनान्येवमुदाहरन् । ९७
तेऽपि सुविमलं ज्ञानमवाप्य । भक्तिभावजिज्ञासुतयाऽप्य । गुरुमभजन्हरिमञ्जसा । ९८
मुख्ये राजनि धर्मपरे तु । कः सामन्तः पापमुपैतु । इति सर्वं समवन्प्रजाः । ९९
अभये सकले लोके जाते । वसति यथारुचि धर्मव्राते । वयमपि निर्भयतां गताः । १००
यदुदयमात्रे मङ्गलमीदृक् । विलसति तस्मिन्भविता कीदृक् । इति तद्
विमलं यशो ब्रुवे । १०१
इति विनिवारितपापकलापम् । विस्तारितनवमङ्गलजापम् । श्रीहरिवंशं तं ब्रुवे । १०२
इत्थं धर्मिजनाधिनिवृत्तिम् । कथयित्वाह स धर्मविवृत्तिम् । धर्मधर्मिधनिसम्भवे । १०३
स्वस्वधर्ममथ जनाश्चरन्ति । वर्णाश्रमवर्त्मानुसरन्ति । सत्त्वशुद्धिविधये क्षमम् । १०४
मुख्ये धर्मपरे ह्यपरेऽपि । तथा भवन्ति, भवन्ति न तेऽपि । तदनुमतेः परिहारिणः । १०५
अथ विप्रेषु समेषु रतेषु । अध्ययनाध्यापनसदृशेषु । षट्सु स्वोचितकर्मसु । १०६
धर्मे वेदार्थे फलसिद्धौ । धर्मपराणां सौख्यसमृद्धौ । भग्नाः सर्वे संशयाः । १०७
संशयतो हि भवेदज्ञानम् । अज्ञाने सति न श्रद्धानम् । इति विनाशपथ ईरितः । १०८
संशयविनिवृत्तौ सहसैव । मुञ्चति विपथं मतिरपगेव । जाते हन्त घनात्यये । १०९
इति यां रीतिं स्वीकृतवन्तः । नृपाः प्रजाः कलियुगं भजन्तः । सा रीतिस्तरसा गता । ११०
भानावुदिते कुतोऽन्धतमसम् । तत्त्वे शुद्धे तमोऽपि विवशम् । धावति सर्वविरोधकृत् । १११
तस्मिन्धावितवति चाजस्रम् । नवनवमैत्री भजति सहस्रम् । लक्षं कोटिमथो गुणम् । ११२
भवति खलानां प्रीतिः क्षीणा । सुजनानां सा भवति नवीना । नित्यं वृद्धिमुपेयुषी । ११३
श्रीहरिवंशहिते हि प्रकटे । सत्ययुगीया रीतिर्जघटे । प्रेममयी मङ्गलमयी । ११४
भवजनिता विपदो निर्गलिताः । यदा तदा का भूतैर्वलिताः । दैवैराकलितास्तथा । ११५
निर्विपदो मनसो हि निराधौ । अचला बुद्धिर्भवति समाधौ । तत्रोदयते नवा रुचिः । ११६
इति विवेकशालिषु भजनादि । कुर्वत्स्वभवत्स्वतोऽप्रमादि । स्त्रीशूद्रादिमनोऽप्यहो । ११७
तेऽप्यथ भगवद्धर्मे स्वादु । स्वादु वस्तु रसयितुं तदाऽदुःरन्तःकरणमनुक्रमात् । ११८
इति सर्वेषु रसं रसयत्सु । स्वस्वधर्ममादृत्य चलत्सु । अन्त्यजादिमनुजेष्वपि । ११९
मम निजधर्मे भवति विशेष उत्साहो गातुं तदशेषयशो विलासिविलासजम् । १२०

विप्राः कुर्युः षट्कर्माणि । गायेयुर्वा हरिनर्माणि । भक्ता भावितचेतसः । १२१
यथा यथाहं तान्पश्यामि । तथा तथोत्साहं कलयामि । श्रीहरिवंशं वन्दितुम् । १२२
इत्थं श्रीहितजन्म पठामि । देशकाललोकान्वयगामि । सौभाग्यातिशयैः स्फुटम् । १२३
श्रीनन्दोत्सवताऽप्यतिरिच्य । जाने प्रतिगृहमहं विविच्य । श्रीहितजन्ममहोद्भवम् । १२४
जडजङ्गमभेदैरविशेष-मुल्लासं प्रतिधर्मि विशेषमाकलये तदनन्तरम् । १२५
धर्मिषु चेत्थं सोल्लसितेषु । धर्मो ववृधे तेष्वथ तेषु । ये न धर्ममपि जानते । १२६
छन्दोभिस्तु चतुर्भिरवोचि । श्रीहितसम्बन्धिषु धृतरोचिरद्भुतमहिमा तस्य सः । १२७
इत्युदीर्य तटगामि प्रभाव-मधुना निजगामिनमिममाह । बालविनोदानिवेदनैः । १२८
व्यासमिश्रभवने सम्भूय । बालविनोदमाधुरीभूय-ममुना यत्प्रकटीकृतम् । १२९
तल्लोकोत्तरमहमनुवच्मि । लघुमत्या नावेव हि वश्मि । तर्तुमगाध सागरम् । १३०
राधानाम्नि तत्किल करणम् । राधासुधानिधेरुच्चरणम् । वयसि परं षाण्मासिके । १३१
यावदात्मबलबुद्धिमनस्तु । समुपदिशामि तदद्भुतवस्तु । गाय, गाय रे गाय तत् । १३२
गानं दूरे हन्त न गणनामपि कर्तुं तदलं मम तु मनाग्लीला बाल्ये यावतीः । १३३
अथवा प्रतिबोधितमपि साधु । प्राकृतशिशुवच्चरितं स्वादु । गातुं तदलं नैव मे । १३४
अप्राकृतलीलास्तिष्ठन्तु । प्राकृतलीलाः के गणयन्तु । दूरे गानकथा गता । १३५
अथ निजबालविनोद इवैष । बालविनोद इतीदमशेष–मनुकम्प्योपदिशेन्मनः । १३६
मनस्तु पश्यति बालचरित्रमप्यपारमतिशयितविचित्रमक्षममपि गणनाविधेः । १३७
सत्यं गुणरूपे हरिसदृशे । वाङ्मनसापारे भृशमकृशे । अत एव स्वसमे मते । १३८
हरिहरिवंशभेदविगमेन । 'अपनौ सो' इत्युक्तमनेन । विदुषा भावुकचेतसा । १३९
इयमपारताप्यनुकम्पाभिः श्रीहरिवंशमहाप्रभुजाभिः । शक्या वेदयितुं मया । १४०
अहह लोकबहिरङ्गं वस्तु । कृपया लोके प्रकटयदस्तु । किं न विचित्रतमं हितम् । १४१
यत् सामुद्रिकसारमुद्रया । कथिता शेषविशेषभद्रया । महापुरुषलक्ष्मोदितः । १४२
रूपविशेषविमोहितकामम् विभ्रद्वपुरतिशयमभिरामम् । प्रकटो जगति बभूव ह । १४३
अथवा लावण्येन मनांसि । मोहयदस्य वपुः स्वमहांसि । वितरति कामं ध्वंसितुम् । १४४
यद्वा मदनं मोहयतेह । मोहोऽवापि श्रीहरिणेह । मारविमोहनहितबलात् । १४५
दर्शं दर्शं हृष्यति चित्तम् । रङ्कोऽवाप्य यथाधिकवित्तम् । आशा किन्तु न शाम्यति । १४६
अनिमिषनयनैः पुनः पिबन्ती । आनखशिखमिममाकलयन्ती । तृप्यति हन्त न
सा क्षणम् । १४७

सर्वेन्द्रियवृत्तिर्मम वैतु । प्रतिरोमणि वा नयनमुदेतु । जीवेयं शुभदर्शनैः । १४८
श्रुत्वा व्यासमूनुमुद्भूतम् । द्रष्टुं कस्य न चेतो भूतम् । दृष्ट्वा कश्च न मोहितः । १४९
मोहित इमं न लालयते कः । धृत्वा नाङ्के चालयते कः । को न वदत्यमना इमम् । १५०
हन्त हन्त निर्दन्तमपीदं, वदनं मृदुहसितैर्हृतपीडं, कं न वशीकुरुतेऽद्भुतम् । १५१
राधे राधे इत्यभिधानैः । उच्छलदखिलावयववितानैः । बालकल्पतरुराबभौ । १५२
इत्थं वितरितदशकहर्षः । सहसा स्पर्शकमनसः कर्षः । कस्य न वत्सलतामियात् । १५३
तत्र व्यासामश्रवात्सल्यम् । किं ब्रवीमि सन्ततमतिकल्यम् । वाणी गद्गदतां गता । १५४
श्रीतारव महाभागेयम् । योल्लसितं हृदि सुभागधेयम् । पाययति श्रीहितं रसम् । १५५
कोऽपि न मुंचति सन्निधिमस्य । सन्निधिमधियन् सन्निधिमस्य । कोऽस्ति निजः को वा परः । १५६
सन्निधिमहहा स्नेहाधीनः । लोको मुञ्चति नैव मुदीनः तद्यशांसि गायाम्यहम् । १५७
दर्शं दर्शं स्पर्शं स्पर्शम् । मृदुमृदु चाङ्के कर्षं कर्षम् । श्रीहरिवंशं वर्णये । १५८

श्री व्यासः प्रिययोः प्रिय, नेपथ्य विदधाति ।
सहसा तत्तु मिथस्तयोः, परिवर्तनमुपयाति ॥
परिवर्तनमुपयाति स तस्मिन्विस्मितचेताः ।
जयकारं तु निशम्य देव-कुलता बहिरेता ॥
श्रीहरिवंशकृतप्रिया—प्रियनेपथ्यविनोद—
श्यामगौरबालकयुगलदर्शी भ्रमं नुनोद ॥ १५९
श्रीहरिवंशो विटपिनोः, शृङ्गारं परिकल्प्य ।
ध्यायति नानाफलमय, भोगं तयोः समर्प्य ॥
भोगं तयोः समर्प्य च मोदकमिष्टं व्यासः ।
ध्यायति मन्दिरतो बहिराद्दतगीतविलासः ॥
घटिकाद्वयतः परं गतो, मन्दिरमयं ददर्श ।
फलपूर्णानि पुटान्यथो, ज्ञात्वा वस्तु जहर्ष ॥ १६०
सेवासमयं निदिशन्, हरिवंशः कपटेन ।
ब्राह्ममुहूर्ते जागृतो, नाथति बालहठेन ॥
नाथति बालहठेन स चरणामृतप्रसादम् ।
बहुविधिबोधनतोऽपि न मुंचति हन्त विवादम् ॥

मन्दिरमागतवति न किं द्वारं विघटितमस्तु।
परिहसतोः प्रिययोः पुरो राजतु किं च न वस्तु ॥ १६१

प्रियौ शरत्कृतमञ्जुनवश्रृङ्गारौ तु निशम्य।
करतालं ददताऽऽहृतं गानं मनो नियम्य ॥
गानं मनो नियम्य विदधता युगलं दध्ये।
तदपि प्रसह्य तमानयदन्ते मध्ये मध्ये ॥
प्रियया तूत्तरमम्बरं, मुक्तासरः प्रियेण।
किमु प्रसादीकृतमभूद् विस्मयकारिश्रिये न ? १६२

श्रीहरिवंशकराञ्चितोदञ्चद्दोलारज्जु।
हिन्दोले दोलायते प्रियतमयुगलं मञ्जु ॥
प्रियतमयुगलं मञ्जुप्रकल्पितदोलावेगम्।
रज्जुममोचयदस्य चकार न हृदयावेगम् ॥
स्खलितं पीताम्बरमुरलिवनमालादिकमस्य।
सहसान्तर्हितमास तत् करकमले विन्यस्य ॥ १६३

अधुना यद्धेतुकमवतरणम्। काले काले वस्तु वितरणम्। तस्योपक्रम उच्यते। १६४
अन्यं साधनपथं विहाय। भक्तिपथं श्रय सत्यसुखाय। इत्युपदेशस्त्वादिमः। १६५
अयमुपदेशश्चित्ते यस्य। यथावस्थितस्तथैव तस्य। फलमपि लेभे भक्तिमान्। १६६
यदिह वाञ्छ्यते तन्मनसैव। तल्लाभः स्यात्सफलतयैव। तद् भवतः क इहाशयः ? १६७
वाञ्छति सर्वो ज्ञातं वस्तु। परममभीष्टं किल मनसस्तु। इति तद्वाञ्छित-मधिगतम्। १६८

यत्र तु मनसोऽप्यस्ति गतिर्न। यत्स्प्रष्टुं स्यादलं मतिर्न। तत्फललाभः सफलता। १६९
भक्तिमात्रकथनेऽपि जगत्सु। नानाभक्तिपथानुपयत्सु। श्रीहरिभक्तीरचकथत्। १७०
श्रवणं कीर्तनमर्चनमेव। पदसेवामथवेतरदेव। यस्मै यदरोचत ततः। १७१
तदनुसरन्तः सर्वे शरणम्। अभजन् भवतः श्रीमच्चरणम्। आचरणं चैतादृशम्। १७२
साधनेषु सकलेष्वविरोधम्। धृतेतरेतरमहदनुरोधम्। कथयामास ततो गुरुः। १७३
वेदपुराणसदागमसारः। सन्देहादेर्न किलाधारः। शुद्धो भक्तिमयः परः। १७४
बुद्ध्या ये जानन्ति विवेक्तुम्। दुग्धं पातुं जलं निषेक्तुम्। ते जानन्ति तमञ्जसा। १७५

इत्थं भवदुपदेशमहिम्ना। सर्वेऽकलयन् भक्तिगरिम्णा। हृदयोद्यतमवभासनम्। १७६
आगमनीरे मिलितं भजनम्। दुग्धमिवोद्धरतः प्रतिसुजनम्। हंसस्यैव यशो ब्रुवे। १७७
इति यः पश्यन् प्रीतिप्रयोगम्। जगतामाह सकरुणायोगम्। तं गास्यामि महाप्रभुम्। १७८
अतः परं मतभेदप्रयुक्तम्। व्याख्यानं द्विविधं तु निरुक्तम्। श्रीमद्व्याख्याकर्तृभिः। १७९
केचिच्चरितमिदं मन्यन्ते। अन्यैः प्रभुतास्तस्योच्यन्ते। निर्जलसजलसरो यथा। १८०
तत्र पुरस्तान्मतमिह पूर्वम्। व्याख्यास्यामः सम्यगपूर्वम्। श्रीहरिलालाद्युपगतम्। १८१
बालविनोदै रसिकान्मदयन्। धवलदले नवविधुरिव कलयन्। दिने दिने
वर्धिष्णुताम्। १८२

श्रीमद्व्यासऋषेरभ्याशम्। कुर्वन् नवनवविद्याभ्यासम्। ददृशे विस्मितपण्डितैः। १८३
पूर्णपण्डितः श्रीहरिवंशम्। वीक्ष्यापृच्छत्सहप्रशंसम्। ज्यौतिषमपि किं पाठितः। १८४
ज्योतिःशास्त्रिभिरर्चितचरणे। श्रीमति व्यासमिश्रपितृचरणे। शृण्वति
सत्ययमचकथत्। १८५

द्वादशचन्द्रेत्यादिकपद्ये। ज्योतिर्विद्यादिश्यनवद्ये। भक्त्युपदेशचमत्कृते। १८६
अयमुपदेशस्तत्रस्थानाम्। चित्तेऽकुर्वन्नानाभानाम्। प्रीतिप्रतीतिं पात्रवत्। १८७
वैकुण्ठाद्यैश्वर्यं केचित्। व्रजलीलामाधुर्यं केचित्। परे परात्परमाधुरीम्। १८८
सेवितुमिदमीयं तात्पर्यम्। कलयन्तो दधिरे निजवर्यम्। वस्तु सफलताकारणम्। १८९
मलयजकुङ्कुमलेपनमङ्गे। धूपदीपमाल्यादिकसङ्गे। श्रीहरिसद्गुणकीर्तनम्। १९०
इत्याकारां साधनभक्तिम्। अथ साध्यां तां लसदनुरक्तिम्। नीराजनपदयोर्जगौ। १९१
अधिकारानुसृता रुचिरुदिता। अधिकारानुगतेति निगदिता। भक्तिः
साधनसाध्यभिद्। १९२

साधनभक्तः श्रीमद्व्यासः। युगपदनेकक्रियाभिलाषः। सिद्धः श्रीलप्रबोधजिः। १९३
इत्याद्यै रागत्यागत्य। श्रीचरणेषु निपत्य निपत्य। सेवासुखमधिकं श्रितम्। १९४
नन्वेवं प्रकृतीनां भेदे। कथमेकं सकलोऽपि प्रपेदे। इत्यपनोदितुमुच्यते। १९५
ज्ञानयोगगतसाधनभेदः। भक्तेरङ्गतया न विभेदः। नास्ति निरोधो वस्तुतः। १९६
भक्तेरङ्गं यदि न तदु स्यात्। नूनमुभयमपि मध्ये दुःस्यात्। वेदपुराणागममतम्। १९७
इदमखिलं किल ते जानन्ति। ये सुविवेकधियं वितरन्ति। नारदव्यासशुकादयः। १९८
इत्थं भवता कृते प्रकाशे। भक्तिरहस्यं जगति चकाशे। सर्वैः सम्यगबुध्यत। १९९

इत्थं श्रीहरिवंशविलासैः । यद्विमलं सुयशः सविकासैः । ध्रियते तदहं वर्णये । २००
इति कल्पितनवभूसंस्कारम् । वर्षितुमस्याममृतमपारम् । श्रीहरिवंशं वर्णये । २०१
इत्थमुपासनमार्गमुदीर्य । अवताराणां मर्म विकीर्य । श्रीहरिवंशप्रभुर्जगौ । २०२
तस्य हि मनसि समेऽपि वसन्ति । तत्तदुपासकवर्गा,यन्ति । ते हि चरणशरणं प्रभोः । २०३
तेषामवताराणां चर्चां । अथवा कथयित्वाऽत्र तदर्चां । आदिदेश साधनमिदम् । २०४
साध्या श्रीकृष्णांघ्रिसरोजे । सन्निधिमात्रनिरस्तमनोजे । भक्तिरिति स्म स भाषते । २०५
व्रजे निवासः श्रीकृष्णस्य । अहोरात्रमपि धृततृष्णस्य । नवनीतक्षीरादिषु । २०६
श्यामो न व्रजपार्श्वं त्यजति । प्रियमिति तन्मंडलमाभजति । वनगह्वरगिरिषु भ्रमन् । २०७
आविर्भावं वेणुनिनादम् । तत्कृतजडजङ्गमप्रसादम् । उक्त्वा स्वनुभूताः कथाः । २०८
व्रजनिकुञ्जसेवनचित्तेभ्यः । एकां रीतिमाह सकलेभ्यः । अर्थद्वयतः संगताम् । २०९
रक्ष वपुः सततं सत्सङ्गे । सिञ्च मनः प्रेम्णा रसरङ्गे । कृष्णकल्पतरुमाभज । २१०
इत्थं वपुषा मनसा वाचा । चित्ते निश्चयतो नावाचा । आयुः सुखतो यास्यति । २११
सर्वेषामपि मनसि विजज्ञे । सुदृढो विश्वासः सर्वज्ञे । अविरुद्धान्तःकरणतः । २१२
इत्थं श्रीहरिवंशविलासैः । चतुरतया कृतसर्वविकासैः । लब्धं सुयशो वर्णये । २१३
हरिहरिवंशभेदविगमेन । इह सर्वाचार्यानुगमेन । श्रीहरिवंशं वर्णये । २१४
यद्वा पूर्वं भक्त्युपदेशम् । तदनु हरेरवतारविशेषम् । अथ व्रजरीतिमुपादिशत् । २१५
तत्र तत्र यो नैवासज्यत । तदधिकारिता हृदयेऽभज्यत । तस्मै निजधर्मः कृतः । २१६
यथावतारभेदकथनेषु । तथा व्रजीयरीतिप्रथनेषु । विबुधाः शास्त्रमशिश्रियन् । २१७
वत्सलमूचे वल्लभरूपः । मधुरं श्रीचैतन्यसरूपः । सख्यं तूभावूचतुः । २१८
इत्थं गोपीगोपसमाजे । प्रीत्या यया दिशा विरराजे । तां दिशमादिशदीश्वरः । २१९
इत्थं निगमागमनिधिभूताम् । प्रकटयतां व्रजरीतिमभूताम् । कीर्त्या जगति वितस्तरे । २२०
प्रेमभूमिका बालचरित्रम् । चित्तद्रुतिकरमतिशयचित्रम् । प्रेमहर्म्यमुपधारयत् । २२१
प्रेमहर्म्यमिह नित्यविहारः । श्रीहितमात्रकृताविष्कारः । तत्र न निगमागमगतिः । २२२
बालचरित्रं समसुखसीमा । नित्यविहारः प्रेम्णः सीमा । कथनश्रवणैः सेवितः । २२३
सुखसीमाभूतं तत् प्रेम । विनायासमुपजनयति क्षेममित्यन्ते कथयिष्यति । २२४
तल्लाभेन जीवनं सफलम् । व्रजवसतीनामितीदमखिलम् । श्रीसेवकवचनोच्चये । २२६
साधनादिगमनीया नेयम् । भावगभीरतयाऽपरिमेयम् । किमपि बिभर्ति तु वैभवम् । २२६
सेयं विस्तरशः कथितेह । सकले संसारे प्रथितेह । विश्वसनीयतया स्थिता । २२७

भ्रमच्चेतसां विश्वासोऽभूत् । विश्वस्तानामुच्छ्‌वासोऽभूत् । उच्छ्‌वसतां सुखमुत्तमम् । २२८
सेयं विविधापि व्रजरीतिः । जनितावनायासाद्‌भुतप्रीतिः । ईश्वरभावनिवारणात् । २२९
भक्त्यवतारभक्तिविस्तारः । व्रजरीतेरधिगतये सारः । व्रजरीतिस्तु स्वतः परा । २३०
इत्येवं यस्य प्रेरणया । आचार्या अब्रुवत करुणया । तद्विलासयश उच्यते । २३१
श्रीहरिरूपं फलं प्रपित्सुः । परमं सुखमिदमिह चादित्सुः । यं श्रयते सर्वो जनः । २३२
तमहं श्रीहरिवंशं गातुम् । भृशमुत्सुकचेतास्तं यातुम् । तं गास्यामि जगद्‌गुरुम् । २३३
आगन्तुकवैभवमथ लोके । अन्यैरपि कथनीयं लोके । प्रकटीकरणीयं परैः । २३४
निजवैभवमथ वपुरित्यादि । यस्मै श्रीहितमनःप्रसादि । तेनैवास्तववलोकितम् । २३५
कियद् भणानि रसनयैकया । कृपालब्धसम्यग्विवेकया । अपि वक्तुं मन्थरितया । २३६
प्रत्येकं वैभवगतमंशम् । कैः कैर्वचनैः कृतप्रशंसम् । कथयेयं मितया तया । २३७
श्रीराधायुगचरणनिवासम् । तन्नखकान्तिलसितमितिहासम् । श्रीवृन्दावनमात्रकम् । ५३८
कथयन्नेव श्रीलप्रबोधः । शतशतकैरपि धृतानुरोधः । नहि वक्तुं तदपारयत् । २३९
श्रीराधायुगचरणतलस्य । सामुद्रिकचिह्नान्यतुलस्य । ब्रुवे लक्षितान्यपि कथम् । २४०
युगपदतो युगलोपासनया । निर्हृतसकलमनोवासनया । केवलमेतदु कांक्ष्यते । २४१
अस्य चतुर्विधनैकविधस्य । प्रतिपलमथवा नवनवलस्य । वैभवस्य कथयाप्यलम् । २४२
वैभवशाली श्रीहरिवंशः । विलसति नानारूपो हंसः । तस्य यशांस्युपवर्णये । २४३
एकं चित्तमथैका बुद्धिः । एका रसना, सा विरुणद्धि । नूनमनेकैर्भाषणैः । २४४
यस्मिन्नेकस्मिन्कथिते तु । कथनीयं निखिलं परिवेत्तु । लोकस्तं कथयाम्यहम् । २४५
श्रीहरिवंशमहं गास्यामि । श्रीहरिवंशमहं यास्यामि । सेविष्ये सकलात्मकम् । २४६
श्रीराधायुगचरणनिवासे । श्रीवृन्दाविपिनेऽप्रतिभासे । राधा नित्यस्थायिनी । २४७
श्रीराधायुगचरणनिवासः । श्रीहरिवंशस्यात्मावासः । अन्यत्रैतच्छासनम् । २४८
तपति जगन्त्यथ कलियुगधर्मे । शुष्यति जलवत्परमे धर्मे । प्रसरति पापावग्रहे । २४९
श्रीहितसिन्धोः पायं पायम् । अमृतं हृदोत्थायमुत्थायम् । बुधजलदा भुवि सुस्रुवः । २५०
अथ शरदिन्दुरिवोज्ज्वलरूपः । श्रीहरिवंशः सद्‌गुरुभूपः । उदितः सिन्धूल्लासकृत् । २५१
शास्त्रैः सकलभक्तिसरणिः सा । यथा तथा कथिता गुरुभिः सा । सारासारविवेचकैः । २५२



## रसविलासो नाम द्वितीय. सर्गः

उक्त्वा श्रीहितयशोविलासम् । प्रकटितपरमैश्वर्यविकासम् । रसविलासमथ गायति । १
यत्र श्रीहितमहामधुरिमा । विशदीकृतचतुरस्रनवलिमा । सम्प्रकाशमुपयास्यति । २
यद्यपि केलिः प्रथिता प्रिययोः । एको धनी तु धनयोरनयोः । श्रीहरिवंशमहाप्रभुः । ३
धनलोला परमार्थविचारे । धनिनो भवतीति व्यवहारे । केलिः श्रीहरिवंशजा । ४
सेयं केलिरनिशमनिमित्ता । एकरसव्यापृतयुगचिता । इति नित्या च वरोदिता । ५
अस्यां केलौ नवनववृद्धिम् । प्रतिपलमपि प्रवहद्रसऋद्धिम् । प्रेमरसव्रततिः श्रिता । ६
दर्शं दशमथैनां व्रततिम् । सख्यो यान्ति प्रेमरसाविततिम् । यथा तया तरवः स्तृताः । ७
प्रेमरसैकमूर्ति तद्द्वन्द्वम् । भुजवेष्टितकण्ठं स्वच्छन्दम् । अन्योन्यं संक्रीडति । ८
वननं भजनं प्रीतिप्रकर्षम् । प्राप्ता वनिता हर्षं हर्षम् । दर्शं दर्शं तद्द्वयम् । ९
केलिरसं तं पायम्पायम् । नेत्रतृषां निर्हरणोपायम् । कुर्वन्त्योऽप्यतितर्षिताः । १०
मुहुरपि दर्शं दर्शं तासाम् । नयने नो मुञ्चतः पिपासाम् । केलिरसासवपायिनी । ११
प्रेमरसैकमूर्ति सदपीदम् । गौरश्यामवपुः स्फुटधीदम् । आसज्यासक्तत्वयोः । १२
श्रीललितादिकमुख्यसखीनाम् । यूथा यूथा नवयुवतीनाम् । सान्द्रा अनयोः परिकराः । १३
तासां मध्ये श्यामकिशोरः । गौरकिशोरी चाभ्यां चौरः । नेपथ्यो मनसो धृतः । १४
अनयोरासां चातिविवृद्धाः । रतयो वा प्रीतयः समृद्धाः । नो संख्येयाः केनचित् । १५
प्रतिपलमथ नवनवायमानम् । प्रेम हि पारावारसमानम् । कः कलयेदाद्यन्ततः । १६
नित्यं नित्यं नवनवलीलाः । इति न पुराणैरभिहितशीलाः । सा न व्रजलीलोपमा । १७
नैमित्तिकरासः किल तस्याम् । अभवच्छारदनिश्येकस्याम् । रासस्त्वत्र निरन्तरः । १८
नूनं साधनसिद्धा गोपीः । अङ्गीकर्तुं क्रियते सोऽपि । इत्युक्तो नैमित्तिकः । १९
अयमथ नित्यसिद्धपरिकरतः । प्रतिपलमानन्देनोल्लसतः । नित्यस्तौर्यत्रिकवतः । २०
शृणु हे शृणु हरिवंशविलासम् । रसिक रसय रसमप्रतिकाशम् । सर्वाङ्गीण-
सुमङ्गलम् । २१
एवं नित्या वराश्च केलीः । कलयन्तं सकलानवहेली । गास्याम्यहमेकाश्रयः । २२
आश्रयविषयकथा कथितेयम् । अनुभावैः स्फुटतयानुमेयम् । स्थायि तत्त्वमपि
वर्णितम् । २३

सञ्चारिभिरपि प्रकटीभूतम् । इह वनिताभिर्मुदानुभूतम् । रसय रसिक रसमुज्वलम् । २४
उद्दीपनमथ वक्ति तटस्थम् । तद्धि प्रियतमयोरिह स्वस्थम् । गौरश्यामतया स्फुटम् । २५
काञ्चनरत्नभवनबाहुल्ये । सत्यपि सम्भृतसुखवैपुल्ये । भवने छायाशीतले । २६
सान्द्रलतानवपल्लवललिते । विकसत्कुसुमसुरभिभरकलिते । प्रसर-
त्त्रिविधसमीरणे । २७
नूपुरकिङ्कणिकाकलरावि । विहगविरावकृतान्तर्भावि । रमते रमणमनोऽधिकम् । २८
यत्र पुनर्हितरूपसुखेन । कलितं लताभवनमगमेन । स्नेहच्छायाशीतलम् । २९
तत्र हितालिमनोरथमात्र—प्रकटकुसुमशय्यामधुपात्र–रजनीमुखे तु का कथा । ३०
वसति हकारो हितहरिरूपः । रेफः किल हितराधानूपः । हितवृन्दावनमथ च वः । ३१
श्रीहितसखी स्वयं च सकारः । इत्ययमखिलो रसपरिवारः । यस्मिँल्लसति निरन्तरम् । ३२
अथवा यत्र श्रीहरिवंशः । नित्यं वसति स रसिकवतंसः । श्रीहितसखीस्वरूपतः । ३३
तत्र श्रीहरिवंशादितरः । न श्रीहरिरपि तत्को न्वपरः । यस्य निषेधति वैभवम् । ३४
सत्यं सत्यं, यद्यप्येवम् । श्रीहरिवंशादन्यं देवम् । नाहं जाने कर्हिचित् । ३५
ये तु प्रिययोर्वैभवमाहुः । तत्तर्कोऽवितथेन्दौ राहुः । माभूदिति बुधयोजना । ३६
प्रियौ किलासाते निधिभूतौ । श्रीहरिवंशविभोराकूतौ । इति नैवेतरवैभवम् । ३७
ननु निधिभावे हरेरभिहिते । स्थिते च निधिशालिनि श्रील-हिते । धर्मं कः परिरक्षति । ३८
निधिधर्मान् रक्षति निधिरेव । निधिमन्मानसमनुसरदेव । निजधर्मस्य तु हानिषु । ३९
धृत्वा क्वचिदथ वंशीरूपम् । श्रित्वा वा सहचरीस्वरूपम् । तं धर्मं स्फुटयत्ययम् । ४०
निजधर्मं प्रति यद्यहमेव । नावहितः स्यां तर्हि क एव । अन्यस्त पाररक्षिता । ४१
शृङ्गारादिरसेभ्यो दूरे । नो मिलिता या दास्यसुपूरे । सा रसरीतिरलौकिकी । ४२
सा सर्वस्मिन्नपि विश्वेऽस्मिन् । पूर्णतया भरितेति पदेऽस्मिन् । वंश्याचार्यसमानता । ४३
वंश्या या नदिताऽस्फुटनादैः । आचार्येण तु सा स्फुटवादैः । उक्ता संजीवनौषधिः । ४४
अस्फुटनादैरनुपलक्षिता । व्रजपर्यन्तं सा विवक्षिता । निगमागमसञ्जीवनम् । ४५
स्फुटवादैस्तु स्फुटां प्रतीतिम् । प्राप्तामगमां तां रसरीतिम् । रसिकाः संजीवनमगुः । ४६
वेणुगीतमुपश्रुत्य व्रजस्थाः । सख्यमधुरवत्सलताव्यस्ताः । मुदिता मनसि
हसन्त्यलम् । ४७
हिताचार्यवाणीं त्वाकर्ण्य । निगमागोचरमपि निर्वर्ण्य । मुदिता हृदि सख्योऽहसन् । ४८

शृणु हे शृणु हरिवंशविलासम् । रसय रसिक रसमप्रतिकाशम् । व्रजगं वापि
निकुञ्जगम् । ४९
श्रीहरिवंशमहं गास्यामि । हृदये त्वाचार्यं धास्यामि । स्फुटवाणीपरिभावकम् । ५०
कश्चिदाह ललितादिकनाम । श्यामश्यामावित्यपि नाम । नाम श्रीहरिवंश इति । ५१
किञ्च प्रेमरसेत्यपि नाम । अपि चेदं धामेत्यपि नाम । जगति प्रकटं ज्ञायताम् । ५२
एतान्यखिलान्यपि नामानि । रसिकानां प्रियतया समानि । संजीवनमूलं परम् । ५३
राधाबल्लभ श्रीहरिवंश । श्रीवृन्दावन श्रीवनचन्द्र ।' इत्येतत्किल कीर्तनम् । ५४
अस्तीदं परमिह प्रसङ्गे । श्रीहरिवंश विलासेऽभङ्गे । अन्यत्तस्य प्रयोजनम् । ५५
कथित यत्संजीवनमूलम् । तद्व्याख्यातु रसानुकूलम् । नूनं नवल उपक्रमः । ५६
ललितादिकसख्यः प्रत्येकम् । वनवसतेः संजीवनमेकम् । तासामथ संजीवनम् । ५७
श्यामाश्यामौ परमोदारौ । मिथः कण्ठकल्पितभुजहारौ । सारौ प्रेमरसाम्बुधेः । ५८
किन्तु तयोः संजीवनमूलम् । श्रीहरिवंशः सदानुकूलम् । तयोः प्रेम रसधाम तत् । ५९
नन्विह तत्संजीवनमूलम् । श्रीहरिवंश इति प्रतिकूलम् । तयोरयं नहि तस्य तौ । ६०
इत्येतामङ्गीकृतपङ्काम् । व्यपनेतु जडधीजनशङ्काम् आह प्रमितिं सम्मताम् । ६१
नास्ति भेद इह नामनामिनोः । न स सम्बन्धः स्वस्वामिनोः । नापि विशेषविशेष्ययोः । ६२
नाम च श्रीहरिवंश इतीदम् । जगति प्रकट पञ्चरसीदम् । संजीवनमूलं परम् । ६३
श्रीहरिवाची यत्र हकारः । रेफः श्रीराधाव्याहारः । अपि च वकारो वनवदः । ६४
श्रीललितादिकसखीवाचकः । अयं सकारो वांशताऽऽपकः । श्रीहरिवंश इति स्मृतः । ६५
नन्विह हरिरपि सा राधापि । वनमपि सख्योऽपि च सर्वापि । सम्पत्प्रेममयी स्थिता । ६६
श्रीहरिवंश इतीदं नाम । सकलं वक्ति प्रेमरसधाम । शकलान्यस्य तु तच्च तत् । ६७
अथ प्रेमरसधामत्वेऽपि । माभूच्छङ्कापङ्किलतेति । युक्त्या साधयति स्फुटम् । ६८
श्रीहरिवंशनामजपजनितम् । श्रीहरिवंशवंशजैर्भणितम् । श्रीहरिवंशकृपोदितम् । ६९
इति तच्छ्रीहरिवंशजमेव । यत्र प्रेम भवेल्लव एव । तत्राम्बुधितामेष्यति । ७०
तत्र तु के व्रतसंयमनियमाः । न स्पृशन्ति यत्सीमां निगमाः । वृथा यत्र साधनकथा । ७१
ननु लब्धं तत्प्रेम रक्षितुम् । प्रेम्णः परमं फलं च भक्षितुम् । यतनीयं श्रीहितानुगैः । ७२
श्रीहरिवंशजनितमिह प्रेम । उदयात्पूर्वं वितरति क्षेममखिला अपि सुखसम्पदः । ७३
अपि च समग्रे साधनमार्गे । विलसति भेदो वार्णे वार्गे । उत्तममध्यमनीचगः । ७४
श्रीहरिवंशजनितहितसरणौ । नो भेदौ कुलजात्यनुसरणौ । क्वचन विचार्येते न तौ । ७५

को वा ग्राम्यः को नागरिकः । को मारव्यः कः सागरिकः । को मूर्खः कः पण्डितः । ७६
श्रीहरिवंशभजनमिह सारः । निर्मूलीकृतसर्वविकारः । निःसारोऽभजनो जनः । ७७
को भुवि भजनं पश्यति कस्य । भजति च नायं पश्यति यस्य । इति सर्वोऽपि जनोऽधुना । ७
व्रतसंयमनियमान् परिहाय । श्रीहरिवंशानुगं विधाय । आत्मानं, विचरिष्यति । ७९
तत्र श्रीहरिवंशानुगते । यत्प्रथमं चिन्हं समुदयते । तत्कथयति करुणामयः । ८०
कामः क्रोधो लोभो मोहः । यद्वा विधिनिषेधसन्दोहः । रागद्वेषौ दुःखसुखे । ८१
इत्येकैको भवत्रासस्य । हेतोरुद्भवतीति सुपश्य । रसमग्नस्य न ते मनाक् । ८२
शृणु हे शृणु हरिवंशविलासम् जहिहि जहीहि च भवसंत्रासम् । रसिक रसं रसयन्निमम् । ८३
श्रीहरिवंशमहं गास्यामि । प्रेमशिथिलतां विनिनीषामि । भवत्रासनिजकारणम् । ८४
श्रीहरिवंशभजनमिह सारः । इति कथितस्यायं विस्तारः उपक्रम्यत साम्प्रतम् । ८५
श्रीहरिवंशः सुयशोऽगायत् । स्वेष्टमनन्यतयाऽन्वध्यायत् । चतुराशीतौसुधानिधौ । ८६
परवर्तिभिरथवा सहजातैः । स रसोऽवापि सुरसिकव्रातैः । स हि रसरसिकाधार इति । ८७
तैस्तैदानव्रतपुण्यानि । कीतनवन्दननपुण्यानि । विाहतान्यफलस्तत्क्षणम् । ८८
विना हि साधनभक्ति प्रेम । नैव लभ्यत सकलक्षेम-मूल तादति वचः श्रुतम् । ८९
वस्तुतस्तु नमित्तिकतायाम् । दोषान् पश्यति निगमो यान् यान् । तैस्तैर्भक्तिरहैतुकी । ९०
भक्तिरहैतुक्यथ तत्प्रेम । कि भविता श्रितसकलक्षेममहो हेतुपरिकल्पितम् । ९१
इति हरिवंशकृपैव निमित्तम् अनिमित्ता फलितेति तु चित्तम् । कस्य विनिश्चिनुते न तत् । ९२
ननु हरिवशकृपेति निमित्ते । सत्यपि ते दोषा मम चित्ते । भासन्ते भवतोदिताः । ९३
इति चेतसा हरिवंशकृपैव । प्रीतिरितीह न दृष्ट दैवमेव हेतुरभिधीयते । ९४
अत्र रसे न विधिर्न निषेधः । तयोर्हि साधनवर्त्मसु वेधः । न पुनः साध्ये प्रेमाण । ९५
मेषादिकलग्नानि न तत्र । आदित्यादिग्रहाः पुनरत्र । नारिमित्रभाव गताः । ९६
तत्र न कुदिनं नापि च सुदिनम् । यत्र श्रीमद्वृन्दाविपिनम् । विधुर्विहुतभुगभासितम् । ९७
तत्र न शुभमशुभं न च मिश्रम् । न च मानापमानतामिस्रम् । प्रेमणि साधकबाधकम् । ९८
मिथ्याज्ञानं तत्कृतदोषाः । कपटाः कृतचातुर्यनुपोषाः । एकरसे न रसे क्वचित् । ९९
किमुप्रयोजनं स्नानक्रियया । जपतपसी अपि नैव प्रियया । प्रियेण चान्वयमाप्नुतः । १००
तत्र च सकलं दर्शनज्ञानम् । अष्टाङ्गानुगतं च ध्यानम् । अविषय इति श्रममात्रकम् । १०१
श्रीहरिवंशकृता ह्यनुकम्पा । नित्यचमत्कुर्वद्धरिशम्पा । वर्षति रसकादम्बिनी । १०२
शृणु हे शृणु हरिवंशविलासमुवृष्टं तया तमप्रतिकाशम् । रसिक रसय रसमुज्ज्वलम् । १०३

श्रीहरिवंशमहं गास्यामि । अनुकम्पां संप्रादास्यामि । रसिकचातकैरोप्सिताम् । १०४
नहीं अमृत भ्रम कपट सयान । इति यदभिहित नहि संज्ञानमथ तद्विस्तर उच्यते । १०५
यत्र श्रीहरिवंशजनितया । प्रीत्या परमोत्कर्षं गतया । उद्द्योतत उन्मत्तता । १०६
तत्र कुतो मग्नस्य स्वार्थः । कुतः प्रतीतः स्यात्परमार्थः । निःस्वादः स्वादोऽथवा । १०७
तर्काविषये ब्रह्मणि वादः । किञ्च न तत्राप्ययं विवादः । प्रेमणि परमे तौ कुतः । १०८
यासां हृदयं वंशोमुग्धम् । यै रसितं श्रीहितरसदुग्धम् । ते उभयेऽपि समा गतौ । ११०
ते न पतन्ति पुनः कुलकर्मणि । मग्ना वंशारवनवनर्मणि । मर्मणि श्रीहरिवंशजे । १११
तेषामेव जीवनं सफलम् । कालप्रभुत्वं तत्र हि विकलम् । जन्ममृत्युविनिवर्तनात् । ११२
ते हि पुरस्तान्नित्यविहारम् । प्रविशन्त्येव भक्तिरससारम् । प्रियाकिङ्करीभावतः । ११३
ननु कुलधर्माणां रक्षार्थम् । श्रीमद्गीतास्वपि तं पार्थम् । वयं सचिन्तं मन्महे । ११४
अवितथमवितथमेषां त्यागे । भवति महोपप्लव इति रागे । सति ते भजनीया जनैः । ११५
किन्त्वयमेव कुलक्रमधारा । कथयति कालवशकुलमारात् न तु शरणाश्रयिण जनम् । ११६
इति सत्येव कुले भुवि वक्रम् । भ्राम्यति विकटकालकृतचक्र । कि चक्रं तु कुलं विना । ११७
अथवा ये ये कुलाभिमानाः । ते कुलालचक्रोत्थ समानाः । भज्यन्तेऽत्र मुहुर्मुहुः । ११८
आहोस्वित् कुलमेव चतुष्कम् । स्नेहविहीनतयाऽत्र हि शुष्कम् । भस्म विकाण रेखया । ११९
यद्वा कुलं विना भूतेषु । कानि लक्षणान्यभिभूतेषु । प्रेमोन्मत्ततया नृषु । १२०
को वा त्यक्तकुलेषु कृतोऽङ्कः । येन न तैर्लभ्यो भवतोऽङ्कः । प्रत्युत विमुखाः साक्षिणः । १२१
सहजे प्रेमरसेऽस्मिन्क्वापि । सत्यपक्वता जनैरेवापि । यया श्रिता त्वविनाशिता । १२२
अथवा सहजप्रेममतेन । ये रसधातुघटितघटकेन । रचितास्ते न मृता भुवि । ११३
यद्वा सहजप्रेममयीभिः । पक्वं यद्रससामग्रीभिः । तत्र न काचिदपूतता । १२४
किंवा सहजप्रेमरसेऽस्मिन् । यः परिपाकः स हि भुवनेऽस्मिन् । सत्यो रसिव ज्ञापकः । १२५
आहोस्विद्य सहजे प्रेमणि । सत्यरसे पक्वाः सहृदयमणि-मालायां प्रोतास्तु ते । १२६
इत्यखिलोऽप्यर्थः परिणम्य । सिद्धान्तं गमयति भुवि रम्य-प्रेम धेहि कुलकम मा । १२७
सहजप्रेमरसामृतपाके । के रङ्का अथ नराधिपाः के । इति बोधोऽपि विलीयते । १२८
को विप्रः कः शूद्रः कस्य । किं च कुलं कस्येति विशिष्य । धीन विवेचयतुं क्षमा । १२९
शृणु हे शृणु हरिवंशविलासम् । प्रेमोन्माद-निर्मितोल्लासम् । विस्तीर्णत्क्षयजीवनम् १३०
श्रीहरिवंशमहं गास्यामि । रसिकरसं तुभ्यं दास्यामि । सहजप्रेमामृत-
मयम् । १३१

इति रससम्मुखचित्तचरित्रम् । प्रेमोन्मत्ततयाऽतिविचित्रम् । कथितं सारमयं परम् । १३२
अथ रसविमुखानामाचारम् । भजनविहीनतया निःसारम् । भारभूतमभिभाषते । १३३
आकर्षति सरसिकसभम् । हा अस्मिन्त्रसके । प्रसभम् विमुखाः केचन जाग्रति । १३४
कांक्षन्तोऽन्यवपुष्यपि लभ्या-शिश्नोदरविषयानतिसभ्याः । कुलकर्माणि प्रकुर्वते । १३५
प्रेम विना यद्यदपि क्रियते । तेन तेन मतिरस्य ह्रियते । अभिमानक्रकचैः क्रमात् । १३६
ते क्रकचाः प्रपतन्त्युद्दण्डम् । कृत्वा नृमतेः खण्डं खण्डम् । बहुशाखां प्रणयन्ति ताम् । १३७
यद्वा प्रेम विना कृतकर्म । कृन्तति कर्तुर्ममतामर्म । भक्तिर्येन विलीयते । १३८
अथवा प्रेम विना विहितानि । तानि मार्गमवरुध्य धृतानि । रुन्धन्त्यस्य गतिक्रमम् । १३९
विप्रोऽस्मीति वृथाऽहङ्कारम् । शिरसि विभर्षि कथं रे,भारम् । पूज्योऽहं पूतोऽस्म्यहम् । १४०
यं लब्धुं तव नानाऽऽघाताः अस्पर्शादिमुखा उपचाराः तं जानासि न किं सखे । १४१
श्रीहरिवंशस्तत्त्वमद्वयम् । श्यामाश्यामसखीवनाह्वयम् । श्री कृष्णोस्तु स गोकुले । १४२
यद्वा सन्त्ववतारवतंसाः । वंशीयोगात्स तु हरिवंशः । परशुराम-बलरामवत् । १४३
श्रीहरिवंशो नित्यकिशोरः । नैमित्तिकलीलास्वाभीरः । विप्रैरस्पृश्यः परः । १४४
तत्राप्येष बहुस्त्रीसंगः । क्रीडति ताभिरनिशमविषङ्गः । प्रेयस्याः क्रीडामृगः । १४५
दिवानिशं वा प्रातः सायम् । यमुनातीरे विहरति चायम् । त्यक्तसकलकुलबन्धनः । १४६
नैतावानिह श्रुतिपथत्यागः । हा हा, सीमगतोऽस्य तु रागः । इदमुच्छिष्टं भक्षति । १४७
आचार्याः श्रीवल्लभमुख्याः । इति कथयन्तो नितरां रूक्षाः । भूत्वा प्रकरणमत्यजन् । १४८
किन्तु कथेयं सततमवितथा । रोषावेशस्तत्र किल वृथा । श्रीमद्भागवतं श्रुतिः । १४९
श्रीहरिवंशो वक्ति । यच्चविहारं नित्यव्यक्ति । सदपि परोक्षं प्राणिनाम् । १५०
तदनिमित्तमिति तदेव सत्यम् । तच्च सत्यमिति तदेव नित्यम् । यन्नित्यं तच्छोभनम् । १५१
शृणु हे शृणु हरिवंशविलासम् । रसिक, रसय रसमप्रतिकाशम् । सत्यं शिवमथ सुन्दरम् । १५२
श्रीहरिवंशमहं गास्यामि । आचारं भारं हास्यामि । विधिनिषेधमसमञ्जसम् । १५३



## श्रीहरिवंशचरितामृतम्

( द्वितीयम् )

—*—*—

१

वन्दे वृन्दावने विन्दद् वन्दनानन्दमद्‌भुतम् ।
द्वन्द्वं किमपि निर्द्वन्द्वं स्वच्छन्दं मन्दसुस्मितम् ।।

२

अथ श्रीहरिवंशस्य चरितामृतमारभे ।
भगवन्मुदितादीनामाधारेण भवन्मुदे ।।

३

सिकन्दरो नाम लोदी-वंशजः पृथिवीपतिः ।
निपुणः शासकः सोऽभूद् यवनोऽतिदुराग्रही ।।

४

लुण्ठयित्वा मधुपुरीं नाशयित्वा च तच्छ्रियम् ।
भ्रंशयित्वा मन्दिराणि स लोदीकुललाञ्छनः ।।

५

कदाचिदाज्ञापितवान्नापितान् क्रूरमानसः ।
द्रष्टुमिच्छामि हिन्दूनां देहे गेहे च न श्रियम् ।।

६

तेषां देहेषु रोहन्तां श्मश्रूणि मुखमण्डले ।
गेहेषु च प्ररोहन्तां तृणानि च्छदिमण्डले ।।

७

मा स्म मुण्डयतैतेषां यूयं श्मश्रूणि नापिताः ।
को नु खण्डयितैतेषां तृणान्युद्वसिताद् गृहात् ।।

८

इत्थं मताहवान्धेन तेनान्यत्रापि हिन्दवः ।
हिंसिता दूषिताश्चेति नीता नामानुरूपताम् ।।

९

अथास्य पापाविष्टस्य परिणामात्तु बिभ्यतः।
किम्मे भविष्यतीत्यासीज्जातु चिन्तातुरं मनः॥

१०

दैवज्ञं कञ्चिदन्विष्य यदि रक्षामि पार्श्वतः।
तदा मे पाप-क्लिष्टस्य मनः शान्तिमुपैष्यति॥

११

इति चिन्तयतस्तस्य सभायां मन्त्रिणोऽवदन्।
अस्ति देववने देव, दैवज्ञानां शिरोमणिः॥

१२

'व्यासमिश्र' इति ख्यातो ज्ञातानन्तचमत्कृतिः।
तस्यैव संग्रहे यत्नं कुरु चिन्तानिवृत्तये॥

१३

तदा तदादेशमाप्य देशाटनपटीयसाम्।
मौलिभूताः केपि दूता जग्मुर्देववनं पुरम्॥

१४

तैः प्रार्थितोऽथ विप्रोऽसौ पश्यन् विश्वहितक्षणम्।
स्वीचकार नृपस्यास्य कंसस्याक्रूरवद् वचः॥

१५

अयं सिकन्दरो हन्तासिच्छिन्नानेककन्धरः।
मया निवारणीयोऽस्मादन्यायाध्यवसायतः॥

१६

चत्वारः पुरुषार्थश्च हिंसयाऽनेन हिंसिताः।
चत्वारि श्रीफलान्यस्मै दास्याम्याशीर्मिषादहम्॥

१७

इत्यालोच्य ससम्भारः सरोजदललोचनः।
अनुयातो भूपभृत्यैर्दिल्लीमभ्यागमद्द्विजः॥

१८

अयं साक्षाद्यजुर्वेदो दीप्तो मध्यन्दिनार्कवत् ।
अपरः कश्यपस्तस्य सभायां प्रविवेश यत् ॥

१९

तेन ज्योतिर्विदस्तस्य ज्योतिषा भासिता सभा ।
आसीद्धतप्रभा चित्रन्यस्तेव प्रथमे क्षणे ॥

२०

परस्तादूर्ध्वमुत्क्रामत्प्राणैः सा प्रेरिता सभा ।
अभ्युत्थानाभिवादाभ्यां पुनस्तान् प्रत्यपद्यत ॥

२१

"अभिवादनशीलस्य नित्यं वृद्धोपसेविनः ।
चत्वारि तस्य वर्धन्ते ह्यायुर्विद्या यशो बलम् ।"

२२

इति ते वितराम्येषां श्रीफलानां चतुष्टयम् ।
इत्युक्त्वा व्यासमिश्रेण लोदी सम्भावितः फलैः ॥

२३

सोऽप्यस्मै ज्ञानविज्ञानसम्पन्नाय महात्मने ।
ब्राह्मणाय चतुःसाहस्राधिकारं नमन् ददौ ॥

२४

उद्वासने निमग्नास्य भूपस्य मलिना मतिः ।
निवासनेऽद्य लग्नेति क्षणान्निर्मलतां गता ॥

२५

अग्रे वाञ्छसि कल्याणं पुरमग्रे निवासय ।
इत्यादिष्टः स गुरुणाऽग्राख्यं वासितवान् पुरम् ॥

२६

कस्यां भूमौ पुण्यबीजं वपामीदं पुरात्मकम् ।
इति पृष्टः स दैवज्ञमूर्धन्यस्तमभाषत ॥

२७

पूर्वं विस्तारणीयं ते लोकेषु प्रेम-मङ्गलम् ।
तस्यास्य लोकप्रेम्णश्चोद्भविष्यति महांस्तरुः ॥

२८

तत्र भूमौ त्वयारोप्यं पुण्यबीजं पुरातमकम् ।
गच्छाद्य पश्य तां भूमिं व्रजमण्डलपार्श्वतः ॥

२९

एवं स गुरुणाज्ञप्तः ससैन्यामात्यमण्डलः ।
तां भूमिं दृष्टवान् प्रीत्या हसन्तीमिव सादरम् ॥

३०

प्रत्यागतं महीपालं प्रणतं निजपादयोः ।
उत्थाप्य गुरुरेतस्मै वितेने मङ्गलाशिषः ॥

३१

एकदा स्वजनस्वान्तसान्त्वनायै गुरुर्गतः ।
गृहं देववने रम्यं श्रीताराद्दक्परिष्कृतम् ॥

३२

अभ्यागताय तस्मै च मुदैकादश बन्धवः ।
व्याजह्रुः स्वागत गाढपरिष्वङ्गपुरस्सरम् ॥

३३

तारादेव्या च यत्पाद्यमर्घ्यमाचमनीयकम् ।
समर्पितं तद्विमलं मधुरं शीतलं जलम् ॥

३४

स्वीकुर्वन् व्यासमिश्रोऽसौ तस्या हृदयमस्मरत् ।
प्रणयं चास्मरत्तस्या वचनञ्चारु चास्मरत् ॥

३५

प्रोषिते मयि यद्देवि, त्वयेयं कर्शिता तनूः ।
प्रतिपच्चन्द्रलेखेव सा मे मङ्गलदा भवेत् ॥

३६

गूढाभिप्रायविज्ञायाः साश्रुणी नयने क्षणात् ।
पत्युर्नयनयोर्बाष्पपूर्णयोः प्रतिबिम्बिते ॥

३७

अस्मिन्नेव क्षणे ज्येष्ठः श्रीनृसिंहाश्रमो मुनिः ।
खाट्कृत्यान्तः प्रविष्टोऽभूद् व्याकुलो दर्शनात्तयोः ॥

३८

बताद्य युवयोर्बाष्पमरुद्धप्रसरं वहत् ।
प्रक्षालयितुमुद्युक्तं कतमां विधिदुर्लिपिम् ॥

३९

सर्वसौभाग्यसम्पन्ने गृहेऽस्मिन्वसतोरपि ।
कथमेतत्सतोरन्तः क्षुब्धवत्प्रतिभाति मे ॥

४०

व्यासोऽब्रवीद्–गुरो, युष्मत्कृपादृष्टिबलाद्वयम् ।
सुखिनः स्मः परं पुत्राभावाच्चेखिद्यते मनः ॥

४१

श्रीनृसिंहोऽवदद्–भ्रातस्त्वं दैवज्ञशिरोमणिः ।
सर्वं जानासि यद्भावि न तद्भावि किलान्यथा ॥

४२

तारोवाच–परं साधो, सिद्धयस्तेऽपि नान्यथा ।
तत्र सङ्कल्पमात्रेण, सिद्ध्येज्जनमनोरथः ॥

४३

तथा स्यादिति गम्भीरमुक्त्वा मुक्तात्मनां गुरुः ।
स साधुर्बहिरागत्य विलीनो सहसा वने ॥

४४

वने समाधिधौतेन चेतसा चेतनाश्रयम् ।
परमात्मानमाध्याय प्रार्थयत्प्रार्थितं वरम् ॥

४५

स्वप्ने तमब्रवीद् देवः-साधो तव तपोबलात् ।
व्यासमिश्रगृहे भावी हरिर्वंशीसमन्वितः ॥

४६

श्रीनृसिंहेन कथितं श्रुत्वा तद् भगवद्वरम् ।
व्यासमिश्रोऽभवच्चन्द्रस्तारा तारास्वरूपिणी ॥

४८

यथार्थयन्निव वचो महात्मपरमात्मनोः ।
आविवेशाथ ताराया गर्भं वंशीधरो हरिः ॥

४८

यास्यन्तमथ भूपालस्यान्तिके पुनरेव तम् ।
विलोक्य स्वपतिं तारा किलासीद् विरहातुरा ॥

४९

तान्तथा दुःखितां दृष्ट्वा करुणार्द्रमना बुधः ।
अनयत्सहैव हसता मुखचन्द्रेण शोभिताम् ॥

५०

प्रत्यावृत्ताय गुरवे सपत्नीकाय भूपतिः ।
सद्वृत्तायेव विज्ञानं, सन्मानं सन्न्यवेदयत् ॥

५१

आवेदयच्च-भगवन्, भवदादेशमाश्रयन् ।
वाञ्छाम्यहं स्थापयितुं, तस्यां भूमौ पुरं नवम् ॥

५२

साधीयांस्ते विचारोऽयं कालश्चायमुपस्थितः ।
यत्र काले प्रस्थितानां कार्यविघ्नवहितं भवेत् ॥

५३

एवं स गुर्वादेशेन प्रेमावेशेन चान्वितः ।
तं पुरस्कृत्य तां भूमिं निश्चेतुं सानुगो ययौ ॥

५४

गच्छतस्तस्य विश्रान्त्यै स्थाने स्थाने च तिष्ठतः ।
प्रजाः स्वागतसम्भारैर्भूरिसम्भावनां व्यधुः ॥

५५

मध्येमार्गं स कालिन्दीकूलस्यैवोपकण्ठतः ।
उत्कण्ठितः स्थितो वादग्रामे ग्रामाधिपाग्रहात् ॥

५६

"गुरुपत्न्या अवस्था हि समीचीना न कायिकी ।"
राज्ञीभिरिति सन्दिष्टो यात्राभङ्गं नृपोऽकरोत् ॥

५७

"तारादेवी धर्मपत्नी व्यासमिश्रस्य धीमतः ।
प्रसूतिजां व्यथां काश्चित्प्रमोदानुगता दधौ ॥

५८

एकादश्यां सिते पक्षे, माधवे मासि मञ्जुले ।
शुभवासरनक्षत्रे पुत्ररत्नमसूत सा ॥

५९

नारीभिर्मङ्गलं गीतं देवीभिः स्थगितं नभः ।
देवैर्निजा दुन्दुभयोऽवाद्यन्त भयवारकाः ॥

६०

तदा जय जयेत्यासीत्सर्वतो विततो रवः ।
हृदयानि च सर्वेषां प्रासद्यन्त विशेषतः ॥

६१

नन्दस्त्वात्मज उत्पन्ने यथोत्सवमकारयत् ।
तथैव व्यासमिश्रोऽपि महोत्साहमधारयत् ॥

६२

गृहे गृहे तोरणानि द्वाराण्यथ गृहे गृहे ।
गृहे गृहे पञ्चवाद्यं दानादानं गृहे गृहे ॥

६३

सर्वे नृत्यन्ति गायन्ति वादयन्ति च मङ्गलम् ।
उल्लसन्ति च हृष्यन्ति हसन्ति च गृहे गृहे ॥

६४

निर्जलानि सरांस्यासन् सजलानि च तत्क्षणम् ।
तरुष्वङ्कुरिताः सद्यो नवीनाः पल्लवाः पुनः ॥

६५

सर्वेऽपि सुखिनो जाताः शयनाऽऽसनभोजनैः ।
सुभिक्षमभवद्विश्वे विश्वस्मिन्नाशुभं क्वचित् ॥

६६

म्लेच्छानामपि चेतःसु प्रभुप्रेम तदुद्गतम् ।
प्रासारयन्हरेः कीर्ति यदधीनतयाऽथ ते ॥

६७

तेऽपि वाचं सुकल्याणीं व्याहरन् ललितां पराम् ।
प्रजाः स्वरुचिवासिन्योऽपाल्यन्त परितो नृपैः ॥

६८

सर्वे स्वधर्मरुचयः षट्कर्माणो द्विजातयः ।
सर्वेषां भ्रमरहितं हृदयं कञ्जवत् स्थितम् ॥

६९

कलिरीतिर्विगलिता सुमैत्री फलिता तथा ।
परस्परोपरिप्रीतिर्वर्धिता स्पर्धितात्मनाम् ॥

७०

आविर्भूते शिशौ तस्मिन् शशिनीव सुनिर्मले ।
भवसन्तापजनिता आपदो न स्थिताः क्वचित् ॥

७१

रुचिर्नवनवोदीर्णा धर्माभ्यासविवर्धिनी ।
सर्वं सत्यं शिवं सर्वं सर्वं सुन्दरमुद्गत म्॥

७२

इति निजजनिमोदे मज्जयन्तं जगत्तां,
कविभिरभिविमृश्यं दृष्टवान् व्यासमिश्रः।
हृदयमुदधिमस्य प्रोल्लसन्तं, च पश्यन्—
समजनयत तारा चन्द्रमित्यस्मि मन्ये॥

## द्वितीयः सर्गः।

१

अथास्य तारातनयस्य विप्रस्तज्जातकर्मादि यथाविधानम्।
विधापयामासुरशेषशोभासौभाग्यजागर्तिकरं क्रमेण॥

२

एकादशे चाह्नि पिताऽस्य चक्रे वरानुरूपं हरिवंशनाम।
'प्रतिष्ठितं स्यादिदमत्र लोके' इति द्विजा वेदविदस्त्रिराहुः॥

३

मातुर्मुदां श्रेणिमिमामुदारां को नाम कार्त्स्न्येन कविर्ब्रवीतु।
या तस्य जातस्य विलोकनेनाभवद्विमुग्धेन च रोदनेन॥

४

स्तनन्धयं तं दधती निजाङ्के तारा स्तनप्रस्रुतदुग्धधारा।
आराधयामास, परानुरागात्पुनः पुनर्मञ्जु मुखं मिषन्ती॥

५

दोलाङ्कसुप्तं निजमञ्जुगीतैर्दोलायते स्म स्वसखीभिरम्बा।
ता वीक्ष्य चैतच्छिशुचेष्टितानि परस्परं प्राहुरभीक्ष्यन्त्यः॥

६

पश्यास्य चन्द्रे चरणौ चलन्तौ, वीक्षस्व भद्रे! स्मयमानमास्यम्।
निभालय प्रेमलतेऽस्य पाणी, विलोकय श्यामसखि! भ्रुभङ्गम्॥

७

दृशा पिब श्रीमति! नेत्रशोभां, राधे! विनिध्याय सुधाधरोष्ठौ।
राधेति नाम श्रुतिमात्रतोऽसौ मुदं व्यतानीत् किलकारिकाभिः॥

८

तदाप्रभृत्यस्य मुदे तु नार्यो, राधेति नामाभिदधत्यभीक्ष्णम् ।
अयञ्च तच्छ्रोत्रपुटेन पीत्वा, हृष्यत्समस्तावयवः सदासीत् ॥

९

इत्थं समस्तस्वजनाय मोदं विस्तारयन्तं कतिचिद् दिनानि ।
वादाभिधे ग्रामवरे तु तातौ तं पोषयामासतुरादरेण ।

१०

पश्चात्तु रक्षापुरुषैः सखीभिर्दासीभिरावेष्टितदोलिकास्था ।
ताराऽतिहर्षोल्लसिताक्षितारा, प्रत्यागता देववनं स्वकीयम् ॥

११

श्रीव्यासमिश्रस्तु सिकन्दरेण सत्रागतस्तत्र किलाग्रभूमौ ।
यत्र स्थितो दक्षिणपूर्वयोः स, प्रदेशयोः शासनमञ्जसाऽधात् ॥

१२

तां भूमिमालोक्य सकण्टकाभिर्वनीभिराक्रान्ततरां जनेशः ।
उद्घातिनीञ्चापि गुरोर्निदेशाद् भृत्यान् समीकर्तुमथादिदेश ॥

१३

ते सावधानाः परिरक्ष्य छायावृक्षान् सपुष्पान् सुहृदः फलाढ्यान् ।
सकण्टकान् कष्टकरांस्तु मूलादून्मूलयामासुररीनिवान्यान् ॥

१४

ततस्तु यस्मिन् दिवसेऽत्र तारा समागता देववनं सपुत्रा ।
ततः प्रभृत्युत्सवमङ्गलानां कश्चित्क्रमोऽखण्ड इव प्रवृत्तः ॥

१५

षाण्मासिकस्यास्य शिशोर्मुखेन्दो राधेतिनामैकसुधां निपीय ।
कुतूहलिन्यो वनिता अभूवन् पुनःपुनस्तत्कथयन्त्य एनम् ॥

१६

स वार्षिकः सन् प्रचलन् पदाभ्यां मुहुर्मुहुर्मन्दिरमाविवेश ।
नैवाङ्गणे क्रीडनकेषु तस्य मनः किलान्तः प्रतिमासु लग्नम् ॥

१७

तत्रापि राधाप्रतिमासु तस्य सुतस्य दृष्ट्वा प्रचुरां प्रसक्तिम् ।
प्रसूः प्रसूनादिभिरस्य राधासमं तु नेपथ्यविधिं व्यधत्त ॥

१८

स नाम्नि रूपे च शिशुर्विचित्रो राधाप्रधानः प्रथितः पुरेऽस्मिन् ।
बालैर्वयस्यैरथ खेलतोऽस्य क्रीडासु भक्तेरुपदेश आसीत् ॥

१९

राधेति नाम्नः स्फुटकीर्तनेन बालान् स नामश्रवणं शिशिक्षे ।
तानात्मनश्चानुकृतौ प्रवीणान् संकीर्तनस्योपदिदेश रीतिम् ॥

२०

स्वगेहवाटीतरुषु प्रकामं राधाञ्च कृष्णञ्च सभाजयित्वा ।
तेभ्यश्च लब्धैर्विविधोपचारैरभ्यर्च्य सोऽर्चामपि तान् दिदेश ॥

२१

पितुः स पूज्यस्य सुविग्रहस्य सद्मन्यथ क्षालनमार्जनानि ।
क्रीडासु कुर्वन् सवयस्कविप्रान् अध्यापयामास च पादसेवाम् ॥

२२

पित्रा च मात्राऽसकृदुच्यमानान् श्लोकान् सुमेधा निजकल्पितांश्च ।
तानेव बद्धाञ्जलिमीलिताक्षः पठन्नयं वन्दनमादिदेश ॥

२३

भूस्पृष्टमष्टाङ्गमथास्य काञ्चिन्नतिं नमस्येषु यथाचचक्षे ।
निजानुबिम्बेष्विव पूर्णमस्या विधिं वयस्येषु तथा शिशिक्षे ॥

२४

दैन्यावबोधीति जनेषु मा भूत्, पूज्येषु चाभूदथ तस्य दास्यम् ।
तद्दास्यशोभां श्रयतां शिशूनां दृष्टं स्वरूपाभिधयोस्तदेकम् ॥

२५

सख्यं तु साक्षात्स सखीनशिक्षत्तोऽमन्यताहो हरिवंश एषः ।
यदा सखा नोऽथ हरिः सखा नो, हरेर्न भेदो हरिवंशतो यत् ॥

२६

न्यवेदयत्तेषु मिषत्सु, सोऽयमात्मानमिष्टाङ्घ्रितले सनाथ्यम् ।
तेऽधीतवन्तो नवमीं ततोऽस्माद्भक्तिं द्विजानां शिशवः सखायः ।।

२७

व्यासः कदाचिन्निजदेवमूर्तौ यन्तस्य नेपथ्यविधिं व्यधत्त ।
पुनः पुनर्विस्मितमानसस्तं श्यामासदृक्षं समलक्षयत्सः ।।

२८

श्यामातनौ यान्यथ भूषणानि वासांसि तस्यां परिधापितानि ।
तान्यप्यहो श्यामतनूचितानि जातानि, सोऽमन्यत तं प्रमादम् ।।

२९

मुहुर्मुहुः सोऽवहितोऽपि यं यं योग्यन्तु नेपथ्यविधिं चकार ।
विपर्ययं तं स स एव भेजे, तेनैष कौतूहलमाबबन्ध ।।

३०

हेतुं विचिन्वन्नथ तस्य मिश्रोऽकस्माद् बहिर्द्वारि दृशं न्यधत्त ।।
तत्रास्य पुत्रो हरिवंशनामा सुहृत्समाजेन समं स्थितोऽभूत् ।।

३१

कृत्वा प्रसूनैर्बहुभूषणानि विन्यस्य चैकं नवकाष्ठपीठम् ।
श्यामं च गौरं च शिशुं वयस्यं कृष्णं च राधां च विधाय तस्मिन् ।।

३२

अन्योन्यवेषस्य विपर्ययेण क्रीडन्नसौ मोदनिमग्न आसीत् ।
मित्राणि चैतस्य तदीयरूपामृतासवेनोन्मदितानि तस्थुः ।।

३३

अथैकदोद्यानगतः स बालैः क्रीडापरः प्राह हसन्-'सखायः ।
फलानि यूयं चिनुताङ्घ्रिपेभ्यः खेलाम, कृत्वा सुममण्डलं तत् ।।

३४

वृक्षौ विधायात्र च मण्डलेऽसौ पुष्पैर्नवैः कौचन नीलपीतौ ।
तौ पर्यधत्ताद्भुतवाससाद्धा सुवर्णवल्लीकुसुमैश्चितेन ।।

३५

हारौ ग्रथित्वा नवकुड्मलौघैर्न्यस्तौ तयोर्मूर्धनि बालकेन ।
अन्यैस्तु नानाफलसंचयेन सम्भावनाऽकार्यनयो रसेन ॥

३६

बद्ध्वा करौ ते शिशवः समेऽपि सम्प्रार्थयन्त प्रणयेन देवम् ।
अस्माकमङ्गीकुरु बालकानां भावाहृतान्यद्य फलानि देव ॥

३७

व्यासेन चान्तर्मधुराणि नानामिष्टान्नपानानि निवेदितानि ।
द्वारं पिधाय द्विघटीं प्रतीक्ष्य दृष्टानि मिष्टान्नपदे फलानि ॥

३८

अद्यापि नूनं शिशुना क्वचिन्मे देवार्चनाया रचितोऽस्ति खेलः ।
इत्यन्तराभाष्य बहिर्गतेनोद्याने स दृष्टो रचयन्समर्चाम् ॥

३९

स जातु सुप्तो जननीप्रयत्नैः प्रत्युत्थितो ब्रह्ममुहूर्तकाले ।
मातः क्षुधार्ताय प्रभुप्रसादं प्रदेहि मह्यं त्विति साग्रहोऽभूत् ॥

४०

नान्तोऽस्ति लीलाचरितस्य तस्य प्रकाशरूपस्य गुरोर्जगत्याः ।
तथापि यावन्मम लेखितव्यं तत्वत्कदाचिल्लिखितं मया स्यात् ॥



# मारुतिचरितम्

प्रथमम्

**'जननी जनयेद् भक्तं शूरं दातारमात्मजम् ।'**

१

भक्तमौलेर्हनुमतश्चरितं किञ्चिदुच्यते ।
येन श्रोतृसमाजेन तत्स्वरूपं विबुध्यते ॥

२

देवेन्द्रस्यातिदयिताप्सरसः पुञ्जिकस्थला ।
ब्राह्मणातिक्रमेणाभूदञ्जना नाम वानरी ॥

३

तामेतां सुन्दरीं मेरौ केसरी वानरेश्वरः ।
उपयेमे स्वस्वरूपानुरूपां कामरूपिणीम् ॥

४

पत्या सह भ्रमन्तीं तां परिष्वजति मारुते ।
नभोवाणी बभाणार्ये ! पुत्ररत्नमवाप्नुहि ॥

५

तेजस्विनं महावीर्यं भक्तं बुद्धिमतां वरम् ।
दिव्यं प्रतापरुद्रांशमवतीर्णं धरामिति ॥

६

अथ वानरराजस्य हर्म्याणि किलकारजैः ।
निजैः कलकलै रम्यैर्ध्वनयन्नुदभूत्सुतः ॥

७

पितृभ्यां लाल्यमानाय पाल्यमानाय चानिशम् ।
वने हिन्दोलविटपसरःसु क्रीडतेऽद्भुतम् ॥

८

तस्मै शास्त्रस्त्र शास्त्रस्य विद्यां दापयितुं द्वयीम् ।
मेरुराजेन गुरवो गुरुकल्पा नियोजिताः ॥

९

तैर्ग्राहितोऽपि विनयं, चापलं नोज्झितुं क्षमः ।
अभवद् वानरो बालः पित्रोर्दुर्ललितश्च सः ॥

१०

उच्चैरुत्प्लवता तेन गिरिशृङ्गं विलङ्घितम् ।
तिर्यक्च कूर्दता क्रान्ता दूरपाराऽतला नदी ॥

११

पित्रोरथैकदा सन्ध्यावन्दने मग्नयोः प्रगे ।
बुभुक्षितोऽसौ भास्वन्तं मन्वानो दाडिमीफलम् ॥

१२

उत्प्लुत्य दारयन्मेघान् वारयन् मरुतः खरान् ।
ताडयंस्तारकाण्येष भास्वन्तमभियातवान् ॥

१३

मारुतो वीक्ष्य तं तस्य तापाद्रक्षितुमात्मजम् ।
शीतलान् शीकरान् बिभ्रद्वेगादनुगतोऽभवत् ॥

१४

भास्वानमुं तु रुद्रांशमागच्छन्तं प्रियातिथिम् ।
विनयावनतः शान्ततेजाः सदकरोत्करैः ॥

१५

बुभुक्षितोऽपि भोज्याप्तेर्निराशोऽपि स मारुतिः ॥
कौतुकात्स्यन्दने रेमे सप्तसप्तिसमन्विते ॥

१६

स्थगिते स्यन्दने कालगतिः सा स्थगिताऽभवत् ।
राहुश्च ग्रसितुं सूर्यं प्रत्यैक्षत तदागमम् ॥

१७

अनागच्छन्तमालोक्य भीतमाक्रमणादिव ।
मन्यमानो राहुरागाद्वेगात्सूर्यं प्रति स्वयम् ॥

१८

आगतं तमसौ विघ्नं मत्वा कौतुककेलिषु।
मुष्टिभिश्चरणैर्दन्तैः पीडयामास खण्डितम् ॥

१९

अथ 'त्रायस्व देवेन्द्र, त्रायस्व सुरनायक'।
इत्युच्चैर्घोषमातन्वन् राहुर्जीवन् दिवङ्गतः ॥

२०

तन्मुखाद्वृत्तमखिलं श्रुत्वापि सुरनायकः।
पुनरेनं समाश्वास्य प्रैषयद् ग्रसितुं रविम् ॥

२१

मारुतिस्तु पुनः कुप्यन्मुष्टिभिस्तमतीतडत्।
अथेन्द्रः शरणायातं रक्षितुं तमधात्पबिम् ॥

२२

पबिना प्रहितेनाथ सुरनाथस्य हेतिना।
हनौ सन्ताडितो भूध्रं चूर्णयन्निपपात सः ॥

२३

मारुतस्ताडिते पुत्रे भृशार्तः स्थगितोऽभवत्।
जगच्छ्वासावरोधेन हाहाकारैररूरुदत् ॥

२४

ततो देवाः समभ्येत्य सेन्द्राश्च सविरञ्चयः।
प्रसाद्य मारुतं मूर्छामग्नमेनमजीवयन् ॥

—०—०—

## द्वितीयम्

## उत्तिष्ठत जाग्रत प्राप्य वरान्निबोधत

१

अथ स्वस्थमवेक्ष्यैनं विरञ्चिरचयद्गिरम्।
'रुद्रोऽसौ देवकार्यार्थमवतीर्णः प्रपूज्यताम्।'

२

तत्रेन्द्रः प्राह–'वज्रेण मम भग्नहनुर्भुवि ।
हनुमान्नामतो भूत्वा भूयान्मद्धेतिनिर्भयः ॥'

३

इत्याकर्ण्य रविः प्राह–'मम तेजोंऽशमाश्रितः ।
कामरूपो भवेद्धीमान्मत्तो विद्यां पठत्विति ॥

४

वरुणः पाशमुक्तत्वं विश्वकर्माऽप्यवध्यताम्' ।
ब्रह्मा ददौ वरं चास्मै ब्रह्मास्त्रैरप्यधृष्यताम् ॥

५

भविष्यमाह चागस्त्यो–'वायुदेव ! सुतस्तव ।
बलवान् वेगवान् मृत्युञ्जयो भावी च कीर्तिमान् ॥

६

रामरावणयोर्युद्धे यदशक्यं किलेतरैः ।
तदेष कर्ता रामस्य भविता प्रीतिभाजनम् ॥

७

इति सुरगणवाग्भिः सम्भृतानन्तशक्ति–
र्मनसि कृतनमस्यं मारुतः सप्रमोदम् ।
शिशुकमुरसि कृत्वा मेरुशैलेऽवतीर्य
व्यतनुत सुतमारादञ्जनाकेसरिभ्याम् ॥

८

अतिशयचपलोऽसौ मारुतिर्वानरत्वात्
अथ पितृललितत्वाद् बालकत्वाच्च भूयः ।
सुरगणवरदानैः प्राप्तशक्त्यास्पदत्वात्
क्वचिदपि न विरामं प्राप्तवांश्चापलानाम् ॥

९

क्षणमयमधिरोहन् पृष्ठपीठं मुनीनां
विकृषति सहकर्णं तज्जटाश्मश्रुकूर्चम् ।
क्षणमिदमुटजान्तारक्षिते कन्दमूले
करचरणमुखेनाकर्षतिस्मातिकूर्दन् ॥

१०

क्षणमथ तरुशाखासूत्प्लवन्नामपक्वैः
किल फलनिकरैस्तन्मूर्ध्नि लक्ष्यं बबन्ध ।
क्षणमहह ! समाधौ मग्नचित्तानचेष्टा-
न्विटपिविटपमूले लम्बमानांश्चकार ।

११

क्वचिदपि वसनानां वल्कलानां च खण्डा—
न्व्यधित, कुहचिदेषां चाभिनद् भाजनानि ।
क्वचन च शिवलिङ्गं नार्मदं पूज्यमानं
दृषदमपि च शालग्रामरूपामहार्षीत् ॥

१२

इति चपलतयाऽस्योद्विग्नचित्ता मुनीन्द्राः
कथमपि निजकृत्ये त्वेकवृत्तिं न बभ्रुः ।
निजसुतचरितानां दर्शनाच्चातिमात्रं
धृतिरिह परिजह्रे चाञ्जनाकेसरिभ्याम् ॥

१३

अथ मुनिगणमेत्य प्रोक्तवन्तौ प्रणम्य,
प्रणिदधत मुनीन्द्राः साधितः स्याद्यथेति ।
अतिशयबलगर्वाच्चापलं यात्यखर्वं
शिशुरिति करणीया विस्मृतिस्तद्बलस्य ॥

१४

इति मतिमुपकल्प्यैनं शपन्तोऽब्रु वंस्ते–
'पवनसुत ! बलं स्वं विस्मर त्वं प्रकामम् ।
सति च तदुपयोगे स्मारितं स्यात्त्वैत–
न्मदपरिहृतबुद्धिक्षीबवत्तन्निरासे ।।

१५

इति मुनिजनशापोऽप्यस्य कल्याणदोऽभू—
दभवदिह हनूमान् लौकिको बालको ही ।
अथ सुखितपितृभ्यां प्रेषितोऽध्येतुमर्का–
त्सनिगमनिगमान्ताः सर्वविद्याः स लेभे ।।

१६

सर्वेषामागमानां यमिह बुधगणाः प्राहुराचार्यमेकं,
सोऽपि स्वीयानि शास्त्राण्यधिगत इति मे विस्मितं नान्तरङ्गम् ।
रङ्गे रोरुद्यमानोऽपि हि भवति नरो मानसेन प्रसन्न—
स्तस्मिन्मोमुह्यमानः क्वचिदथ मनसा दूनदूनोऽपि दृष्टः ।।

## तृतीयम्

## यो यमिच्छति तस्य सः

'स्वांशं स्वेष्टस्व पार्श्वे नयति किल शिवः सिद्धमेतत्तदाभूत्
साकेते यर्हि यातौ कपिनटवपुषौ मारुतिः शङ्करश्च ।
पूर्वः सङ्केतमात्राद् यदपररचितात्कौतुकान्यद्भु तानि
प्राकाश्यं नीतवांस्तत्किल नगरनृणां विस्मयौघं वितेने ।।

२

उत्प्लुत्याकाशमार्गे पवनरथमिवारुह्य नेत्रौघपारे
गच्छन् स्वच्छः स कीशः सकलजनदृशो दूरमारोहयद्यत् ।
पृष्ठे चारोप्य नैकान् स नगरशिशुकान् वायुवेगेन धावन्
लोकानां मानसानि ध्रु वमधिकदवीयःप्रदेशाननैषीत् ।।

३

उल्लुण्ठन्नेष चक्रभ्रममजनयत, प्रोत्क्षिपन्वै गुरूणि
द्रव्याणि द्रागकार्षीदहह ! जनतनूरुत्थिता भूतलाच्च ।
नृत्यन्नेत्रादिभङ्गीर्व्यरचयदिह या वानरस्ता नरास्ते
कुर्वन्तो विस्मृताः स्वं कथमपि न विदुः शिष्यतामात्मनिष्ठाम् ।।

४

एतेषां कौतुकानामविशदिह कथा राजहर्म्येषु चार्वी
सोर्वीपालाभिराज्ञापित इह महिषीभिस्तयोरागमश्च ।
लब्ध्वा शम्भुः प्रवेशं प्रमुदितमनसा वीक्षमाणो निजेशं,
व्यस्मार्षीद् वानरं तं डमरुमथ जजागार कैश्चित्क्षणैः सः ।।

५

किन्त्वासीद्रामशोभाकलनगलितवेद्यान्तरो वानरोऽसौ
तस्योद्बोधाय शम्भुश्चिरमिह डमरुं नादयामास सिद्धम् ।
तस्मात्सप्त स्वरास्ते सपदि निरगमन् ग्राममूर्छादियुक्ता,
यस्मात्पश्चाद्विजज्ञे त्रिमुनिवचनमूलं नवं सूत्रजालम् ।।

६

एतन्नादेन जाग्रत्कुतुकशतमसौ वानरोऽदर्शयत्तान्,
रामादीन्राजपुत्रान्निजनिजजननीजानुसंस्थान् क्षणाय ।
नृत्यारम्भे तु रामाङ्घ्रिकमलनमनायैष यातो दिशं तां
कौशल्यामातुरन्तर्भयमजनयतान्यस्य कौतूहलं च ।।

७

मूर्धानं रामपादाम्बुजयुगलतले घर्षयन्तं विलोक्य
स्मेरं विस्मेरमासीत्सकलमपि तदन्तःपुरं कौतुकेन ।
रामे तूत्थाप्य वक्षस्यमुमुपदधति, प्रेमपूर्वं भुजाभ्या—
मालिङ्गत्यस्य चुम्बत्यथ वदनमहो भीतभीतं तदासीत् ।।

८

भूलोके भक्तभूम्नोरिदमिह मिलनं सर्वथाऽपूर्वमासीद्
दासीभूतेषु भावप्रकटनमपि तत्सर्वथा श्लाघ्यमासीत्
'चित्रोऽयं चित्रबुद्धिर्महति जनगणे ज्ञातवान्नाममेनं
साकेतप्राणभूतं, दशरथनयनज्योतिरेकं किलेति ॥

९

रामं नत्वा क्रमेण प्रणतवति समन्तात्स्थितान् राममातृ—
राजामात्यादिवर्गाण्डमरुमनुसरन्नृत्यकेलिं स तेने ।
रामस्तु स्नेहबद्धः कुतुकनिगडितो निर्निमेषश्च पश्यन्
सम्पन्नेऽप्यस्य खेले कथमपि न जहावद्भुतं वानरं तम् ॥

१०

सोऽपि त्युक्तं न वाञ्छत्यमुमितिविषमाऽऽसीत्समस्या पुरस्ता—
त्कौशल्याऽथादिदेश–द्रविणमिह नटाय प्रदीयेत भूरि ।
क्रीयेतासौ च कीशो, न तु मम तनयस्याभिलाषोऽस्ति वध्यो,
धन्योऽयं कौतुकी,योऽस्मदभिमतमिमं खेलमादर्शयन्नः ॥

११

इत्यादिष्टास्तु भृत्यास्तमथ कपिनटं मार्गयन्तोऽपि नापुः,
प्रापुः कैलाशशैले खलु गिरितनयाकर्णयोस्तेऽप्युदन्ताः ।
केनागत्यात्र सर्वं दशरथनगरान्तःपुरस्यापि वृत्तं
प्रोक्तं, मा भूद्विशङ्का स्वयमिह भगवान् भूतनाथो नटोऽभूत् ।

## चतुर्थम्

### विद्या शास्त्रस्य शास्त्रस्य द्वे विद्ये प्रतिपत्तये ।

१

आक्रीडं वानरं प्राप्य प्राहृष्यद्रामबालकः ।
सोऽपि क्रीडापरे तस्मिन्प्रामोदत निरन्तरम् ॥

२

सहयानं सहस्नानं सहपानं सहाशनम् ।
कुर्वन्तौ तृप्यतो न स्म जातुचिद् रामवानरौ ॥

३

अथाध्येतुं वसिष्ठस्याश्रमं गच्छत्सु बन्धुषु ।
पञ्चमो देहलीपान्थो हनूमानपि संययौ ॥

४

पठत्सु तेषु चैकाग्रचेताः सोऽपि पपाठ यत् ।
यच्च सेवाक्षणेष्वेषां सिषेवे गुरुमादरात् ॥

५

तेनास्मिन्नपि सम्प्रीतिर्गुरोरन्तरजायत ।
सरहस्यानि साङ्गानि शास्त्राण्यस्यापि सोऽन्वशात् ॥

६

अधीतसर्वशास्त्राश्च स्नातका नरवानराः ।
सहैव च समावृत्ताः प्रत्यावृत्ता गृहं प्रति ॥

७

दृश्यमाना जनैरासन् विशन्तोऽथ पुरीं निजाम् ।
सकौतुकं राजपुत्रास्तेऽयोध्यामेरुराज्ययोः ॥

८

एकदा तु सभामध्ये समासीने सपुत्रके ।
महाराजे दशरथे विश्वामित्रोऽभ्युपाययौ ॥

९

स्वयज्ञरक्षार्थमसौ ययाचे रामलक्ष्मणौ ।
महाराजश्च खिन्नोऽपि ददौ तौ तस्य धीमतः ॥

१०

अथ यास्यन्मुनिमखं हनुमन्तं रघूद्वहः ।
ऋष्यमूके गिरौ स्थातुमादिदेशातिसङ्कुचन् ॥

११

सोऽपि सङ्कुचितस्वान्ताम्भोजः परवशो भृशम् ।
प्रभोरादेशमालम्ब्य मन्दं मन्दं ययौ वनम् ॥

१२

तत्र विद्याव्रतस्नातो हनुमान् बन्धुदूषितम् ।
सुग्रीवं दुःखितं दृष्ट्वा स्वीचकारास्य मन्त्रिताम् ॥

१३

रक्षामन्त्रितया सैन्यं तस्य सङ्घटयन्नयम् ।
भक्तिशक्तिमतां कोटीर्वानराणां समग्रहीत् ॥

१४

सैन्यसङ्घटनेनासौ सुग्रीवस्य भयं नुदन् ।
सेवमानो दाशरथिं भाविकार्यार्थमावसत् ॥

१५

श्रीरामायणसङ्कथासु हनुमानायाति रामान्तिकं,
तं पृच्छत्यथ कोऽसि, कोऽयमपरः कस्माद्वने भ्राम्यथः ।
सोऽप्याख्याय समस्तमात्मचरितं स्वात्मानमस्मारयत्,
सुग्रीवस्य च सख्यमाप्य दयितां प्राप्नोद् द्विषां निर्जयात् ॥

पञ्चमम्

## ओम् नमः शिवाय

नासीत्सीतासमा माता नासीत्तेन समः सुतः ।
तस्याः स्नेहं चास्य भक्तिं वक्तुमीशीत कः कविः ॥१॥
सहस्रं दासदासीनां सेवावसरमीक्षते ।
सीतेङ्गितेन चलति वक्ति तिष्ठति चेष्टते ॥२॥
तथापि हनुमान् सेवावसरान् हरतेऽखिलान् ।
माताप्येनं भृतस्नेहा वत्सं धेनुरिवेक्षते ॥४॥
एकदा तं भोजयितुं नानापाकान् प्रकल्प्य सा ।
स्वहस्तेनैव पात्रेषु पर्यवेषयत प्रसूः ॥४॥

अम्बाहस्तावसृष्टानि सोऽन्नपानानि चर्वयन् ।
न तृप्यतिस्म साप्यस्मै न श्राम्यति वितन्वती ॥५॥
यदा तु भोज्यवस्तूनि समाप्तानीव पश्यति ।
तदातिविस्मिता रामं भगवन्तमसिस्मरत् ॥६॥
रामस्मरणमात्रेण प्राप्तदिव्यविलोचना ।
विलोकयति यत्साक्षान्महादेवः स खादति ॥७॥
प्रलये सकलं लोकं यो निर्गीयावतिष्ठते ।
अतृप्त इव सोऽन्नाद्यैः कथं तृप्यतु शङ्करः ॥८॥
तदोन्नमः शिवायेति मन्त्रं तन्मूर्ध्नि साऽलिखत् ।
अस्तौच्चैनं समर्यादं तेन तृप्तोऽभवत्कपिः ॥६॥
इत्थं सीता भगवती हनुमन्तमबुद्ध तम् ।
साक्षाद्रुद्रं रामसेवारसाद् वानरतां गतम् ॥१०॥
यस्त्वस्मै रुद्ररूपाय भक्त्या नैवेद्यमर्पयेत् ।
तस्मै तुष्टो महादेवो वितनोत्यभयं वरम् ॥११॥

### षष्ठम

## सत्संगतिः कथय किन्न करोति पुंसाम्

अश्वो रामाश्वमेधस्य व्यसृज्यत यथाविधि ।
शत्रुघ्नपुष्कलाद्याश्च नियुक्तास्तस्य रक्षणे ॥१॥
हनुमानपि तैः साकं तेषां रक्षार्थमुद्यतः ।
बहुत्र बहवो युद्धप्रसङ्गास्तह्यु पस्थिताः ॥२॥
तेषु सर्वेषु तैर्वीरैर्दर्शितः स्वपराक्रमः ।
चक्राङ्कायां नगर्यान्ते प्रविष्टाः सैनिका यदा ॥३॥
तदा सुबाहुर्भूपालस्तानरुद्ध विरुद्धवत् ।
अथ तस्य तु तैः सार्धं प्रवृत्तो भीमसङ्गरः ॥४॥
अन्ते हनुमता पादप्रहारेण हतो नृपः ।
मूर्च्छामगच्छत्तत्रैष चापश्यस्त्वप्नमुत्तमम् ॥५॥

अयोध्यायां नदीतीरे यजमानं रघूद्वहम् ।
देवा ब्रह्मादयः सूक्तैः स्तुवन्ति मुनिभिः सह ॥६॥
लोकाभिरामं तं रामं घनश्यामं विलोकयन् ।
मोहितः स महीपालस्तदवस्थश्चिरं स्थितः ॥७॥
मूर्च्छायामपयातायां तदज्ञानं व्यपोहितम् ।
तदा स ऋषिवर्यस्य शापमात्मनि पातितम् ॥८॥
निवेद्याकथयत्तत्र महिमानं हनूमतः ।
यत्पादस्पर्शमात्रेण रामतत्त्वं स वित्तवान् ॥९॥
अधुना तु वयं सर्वेऽप्ययोध्यायां रघूद्वहम् ।
उपासितुं बहुविधैरुपचारैर्व्रजाम हे ॥१०॥
इति सम्पूज्य राजासौ हनुमन्तं सहानुगम् ।
श्रीरामचन्द्रचरणं सुचारु शरणङ्गतः ॥११॥
इत्थं विरुन्धन्नपि यत्पादस्पर्शेन मानवः ।
प्राप्नोति परमं तत्त्वं किं पुनस्तं प्रसादयन् ॥१२॥

सप्तमम्

## रामनाम जपतां कुतो भयम्

रामाश्वमेधसमये काशिराजोऽपि कोपवान् ।
न सेहे रामचन्द्रस्य वर्धमानं महन्महः ॥१॥
तं सैन्यैः साकमायातं शत्रुघ्नाद्या न्यवारयन् ।
शिवदत्तप्रकर्षस्तु स तान् सर्वानहन् बली ॥२॥
हनूमांस्तु महातेजा अजरामरतावरात् ।
न शक्यः शङ्करेणापि तरसा जेतुमाहवे । ३॥
आहतान्निहतान् दृष्ट्वा रामसैन्ये स मारुतिः ।
वीराञ्जीवयितुं तत्र नानोपायानरीरचत् ॥४॥
तं तथा व्यस्तमालोक्य सहसैव महेश्वरः ।
तदग्रे नीलकण्ठाभाशोभितः स्फुटतामगात् ॥५॥

तत्कण्ठे नीलनीलं तं रागमालोक्य मारुतिः ।
कालकूटं तु गरलं तद्धेतुं मनसाऽस्मरत् ॥६॥
कुतो नु नाम गरलं पीत्वाप्येष महेश्वरः ।
जीवत्यनन्तकल्पान्तजगदन्तकरः परः ॥७॥
गङ्गाम्भोधारणादेष यद्यास्ते चिरजीवनः ।
तदा सा जह्नुना पीता कथं नीताभवत्क्षयम् ॥८॥
प्रतिपच्चन्द्रकलया भालालङ्कारभूतया ।
यद्येषोऽस्ति चिरञ्जीवी कथं चन्द्रस्तदा क्षयी ॥९॥
सूर्याचन्द्रमसावस्य नेत्रे दीर्घायुरापके ।
नैव सम्भवतो यस्मादस्तं तावपि गच्छतः ॥१०॥
अयं ललाटगो वह्निरपि नायुष्यकारणम् ।
अनेन दग्धः कामो हि शिष्यतेऽद्यापि घासवत् ॥११॥
यावत्स शिष्यते तावन्नैष निर्वापमेष्यति ।
नूनं निःशेषतां याते तस्मिन्नेष न शेषभाक् ॥१२॥
तर्हि केनाभ्युपायेन चिरञ्जीवति शङ्करः ।
अपि पीतत्रिलोकीधवकालकूटमहागरः ॥१३॥
इत्थं चिन्तयता तेन दृष्टं यद् भगवान् हरः ।
व्यादत्ते वदनं भूयो भूयः किञ्चिज्जपन्निव ॥१४॥
वैयाकरणमूर्धन्यः स्थानयत्नसमीक्षया ।
निश्चिकायाञ्जनेयस्तं रामनामजपे रतम् ॥१५॥
यदीदं रामनामास्य चिरजीवनकारणम् ।
तदा न किमहं तेन जीवयेयं प्रभोर्बलम् ॥१६॥
हनूमानथ रामेति जपन् यं यं स्पृशत्यसौ ।
स स जीवति तत्कालमित्यभूत्तत्र कौतुकम् ॥१७॥
रामनाम्नस्तु माहात्म्यं यत्रेदं प्रकटीकृतम् ।
तत्पुरं प्रथितं नाम्ना काश्यां रामपुराख्यया ॥१८॥

## अष्टमम्

## अभेदः शिवरामयोः

यदा देवपुरे सोऽश्वो बद्धो भूपतिना बलात् ।
शैवेन वीरमणिना तदाऽभूद्युद्धमुल्वणम् ।।१।।
शङ्करेण सहायेन शत्रुघ्नाद्यास्तु ताडिताः ।
मूर्च्छामगच्छन् केचिच्च मृतप्रायास्तदाभवन् ।।२।।
इतो हनूमद्रूपेण ततः शङ्करमूर्तिना ।
युध्यमानेन विहिता लीला कापि कपालिना ।।३।।
स हि शङ्करमाहूय विनयादिदमब्रवीत् ।
शिव, त्वं रामभक्तोऽसीत्यासीदाकर्णितं मया ।।४।।
किन्त्वद्य रामसैन्यस्य विघातं कुर्वतस्तव ।
रामभक्तेः स्वरूपं मे प्रकाशत्वमुपागतम् ।।५।।
शिवोऽवदद्—भद्र सत्यं प्रियञ्चेदं त्वयेरितम् ।
स्मारितो मे स भगवान्मन्मानसमरालराट् ।।६।।
किन्तु भक्त्या देवमणेर्विवशोऽस्मि सहायताम् ।
तस्य कर्तुमिहायातोऽनिच्छन्नपि करोमि किम् ।।७।।
ततः प्रववृते युद्धं तुमुलं तुल्ययोस्तयोः ।
हनूमता शिलाघातै रथश्चूर्णीकृतो विभोः ।।८।।
आयुधानि च सर्वाणि त्रिशूलादीनि मारुतिः ।
विफलीकृतवान् शम्भोर्जर्ज्जरं च वपुर्मृदु ।।९।।
पलायिते नन्दिकेशे शिवो मारुतिमब्रवीत् ।
वीर, धन्योऽसि धन्या च तव भक्ती रघूद्वहे ।।१०।।
अहं तवाद्य शौर्येण प्रभुभक्त्या च तोषितः ।
वरं याचस्व यत्किञ्चिद्वाञ्छितं ते भवेदिह ।।११।।
आञ्जनेयो बभाषेऽथ—श्रीरामानुग्रहाद्विभो ।
न मे मनोरथः कश्चित्कदाचिदपि शिष्यते ।।१२।।

तथापि तव शूलाद्यैर्हताः केप्याहताः परे ।
एतान् रक्ष गणैः साकं यावत्सञ्जीवनीं हरे ॥१३॥
एवमस्त्विति रुद्रेण समाश्वस्तः स मारुतिः ।
द्रोणाचलं स्वलाङ्गूलेनावेष्टयाशूदपाटयत् ॥१४॥
तावत्तद्रक्षकैर्देवैराक्रान्तः पवनात्मजः ।
तरसा तान् धरापृष्ठेऽपोथयत्प्लायिताः परे ॥१५॥
आवेदितस्तैरथेन्द्रो बृहस्पतिमुपागमत् ।
तेन चोद्बोधितो वीर्यमविषह्यं हनूमतः ॥१६॥
गुरुणा तेन साकञ्च देवैश्चान्यैः समन्वितः ।
हनूमन्तमुपागच्छत्सञ्जीवन्या वरैस्तथा ॥१७॥
प्राह संग्राममागत्य पुष्कल जीवयन् कपिः ।
चेदस्मि मनसा वाचा कर्मणा च हरिं श्रितः ॥१८॥
तदा सञ्जीवनीस्पर्शादयं जीवतु पुष्कलः ।
इत्थं तदुक्तिमात्रेण पुनरुज्जीवितः स वै ॥१९॥
ततः शत्रुघ्नमभ्येत्य मूर्च्छां तस्य निवारयन् ।
हनुमान् रामरामेति जल्पंस्तमिदमब्रवीत् ॥२०॥
श्रीरामकृपया ब्रह्मचर्य्यं यद्यक्षतं मम ।
तदा जीवतु शत्रुघ्न इत्युक्ते सोऽपि जीवितः ॥२१॥
उत्थाय च शिवः क्वेति तं हनिष्याम्यहं क्षणात् ।
इति चोच्चारयन्युद्धभूमिं प्रत्यागमत्पुनः ॥२२॥
शिवशत्रुघ्नयोर्युद्धं तदाभूल्लोमहर्षणम् ।
व्याकुलं शिवबाणौघैस्तमाह हनुमांस्ततः ॥२३॥
स्मर रामं जयाराममिति सोऽपि तथाकरोत् ।
उपस्थितश्च भगवान् रामस्तं शङ्करोऽस्तवीत् ॥२४॥
क्षमापयन्तं तं रामः प्रत्याह—भगवंस्त्वया ।
साधु कार्यं कृतं यस्माद् भक्तरक्षा भवद्व्रतम् ॥२५॥

त्वयि वा मयि ये भेदं कल्पयन्ति मृषाग्रहाः ।
ते यान्ति निरयं घोरं, मोक्षं यान्त्यभिदादृशः ॥२६॥
भगवत्करपाथोजस्पर्शपीयूषजीविताः ।
रामानुगामिनः स्तोत्रैः शङ्करं सोममस्तुवन् ॥२७॥
राजा वीरमणिः सर्वैः सहायैः सह राघवम् ।
प्रीतिपूर्णैः स्तवैस्तत्र नवैराराधयच्चिरम् ॥२८॥
शैवास्तु वैष्णवा जाता वैष्णवाः शैवतां गताः ।
भक्त्यभेदे स्वयंसिद्धश्चाभेदः शिवरामयोः ॥२९॥
हनुमच्चरितमिदं मे त्रुटितमपि स्यादखण्डितं क्रमशः ।
एतदपूर्णं पूर्णं भविता भगवत्प्रसादतश्च पुनः ॥३०॥



# श्रीमद् दीनदयालुशर्मचरितम्

(सर्गत्रयात्मकं खण्डकाव्यम्)

## आदिमं चरितम्

१

वन्देऽहं वारिलहरीवदेकञ्च द्वयात्मकम् ।
श्रीराधावल्लभं नाम तत्त्वं प्रियतमं परम् ॥

२

अस्ति स्वस्तिमयं द्वीपं जम्बूद्वीपाभिधानकम् ।
शोभारतो यत्र देशो भारतोऽयं विराजते ॥

३

यस्मिन् स आदिपुरुषो बहुधाववतार ह ।
परित्राणाय साधूनां विनाशाय च दुष्कृताम् ॥

४

ऋतुभिः सेवितः षड्भिः स्वस्वसम्पत्समर्पणैः ।
निम्नोन्नतैर्मर्वनूपैः प्रदेशैश्चोर्वरोषरैः ॥

५

वर्णैश्चतुर्भिः सद्धर्मपरिपालनतत्परैः ।
आश्रमैश्च स्वस्वकर्मनिरतैः परिशीलितः ॥

६

नराः संयमिनो यत्र नार्यश्चैव पतिव्रताः ।
ख्यापयन्ति सदैवास्य सदाचारपवित्रताम् ॥

७

उपह्वरे यद्गिरीणां यन्नदीनाञ्च सङ्गमे ।
धीरा विप्रा अजायन्त वीराश्च क्षत्रियाः परम् ॥

८

अत्र कान्ततरः प्रान्तः पञ्चाम्बुरिति गीयते ।
यत्र जातस्य सहजे ख्याते धार्मिकवीरते ॥

९

यत्र पश्चिमदेश्यानां दुराक्रमणशालिनाम्।
म्लेच्छानां मानभङ्गोऽभूत् भूयो भूयोऽभिधावताम्॥

१०

तस्य नानाचमत्कारकथा वेदेऽपि गीयते।
दस्युकौशिकवृत्ताद्या शतद्र्वादिनदीतटे॥

११

अत्र प्रान्तेऽपि भूभागो हरियानेति विश्रुतः।
लक्ष्मीनारायणारोहपावितो हरियानवत्॥

१२

गवाञ्च पुङ्गवानाञ्च महिषीणाञ्च शोभया।
हृष्टपुष्टाङ्गकृतया हरितो भरितः सदा॥

१३

कर्मठैः कृषकैरत्र नृगणस्यायनं प्रभुः।
समाजरूपः सश्रद्धं सादरञ्च निषेव्यते॥

१४

अत्रास्ते तद् रोहितकं मण्डलं वीरमण्डनम्।
उदधार्षीद् भागवत्या गोकर्णो यत्र बान्धवम्॥

१५

पुरा म्लेच्छैः समाक्रान्ते वृन्दारण्येऽतिभावुकः।
श्रीराधावल्लभं कश्चिदानिनायात्र रक्षितुम्॥

१६

यत्र विद्वत्तया विप्रा वीरत्वेन च बाहुजाः।
पशुपालनया वैश्याः शूद्राश्च परिचर्यया॥

१७

केदाराणां च दाराणां पोषणे निरता नराः।
पत्यपत्यावने नार्यश्चोपचक्रुः परस्परम्॥

१८

ग्रामोऽभिरामोऽत्र गुणै र्झञ्झरः प्रीतिनिर्झरः।
यत्राब्दुल् रहमानाख्यश्चिरश्चक्रे तु शासनम्॥

१९

गौडब्राह्मणजातीयः श्रोत्रियान्वयभूषणम्।
तत्र गङ्गासहायाख्यो विद्वान् कोऽपि बभूव ह॥

२०

यवनानां शासनेन यवनानी स्म पठ्यते।
तदा वेदविदां वंशे समुत्पन्नैरपि द्विजैः॥

२१

भाषालिपिप्रभावोऽयं विदूषयति दुर्बलान्।
सबलांस्तु विषोग्रोऽपि विभूषयति शम्भुवत्॥

२२

गङ्गासहायो निष्णातो यावन्यापीह शिक्षया।
न जहौ विमलं धर्मं नीलकण्ठो विधुं यथा॥

२३

साध्वी माध्वीकमृदुगीर्भार्याप्यस्य द्विजन्मनः।
शौचाचारपरा नित्यमासीत् पतिपरायणा॥

२४

तौ दम्पती धर्मपरौ कलिकालेऽपि निर्मलौ।
अलभेतां प्रियं पुत्रं महापुरुषलक्षणम्॥

२५

सूर्योदयात् पूर्वमेवारुणो निर्याति कान्तिमान्।
तथास्य जन्मनः पूर्वं पिताऽगात्त्रिदशालयम्॥

२६

दिवङ्गतः पिताप्यस्मै नवजाताय सूनवे।
प्रादाश्शुभाशिषां राशीन् कृतनानागुणोदयान्॥

२७

पत्युर्वियोगात्क्लान्तापि पुत्राननविलोकनात् ।
धारयन्ती धृतिं काञ्चिन्माता पर्यष्वजच्छिशुम् ॥

२८

मातापितृगतान् धर्माञ्जन्मनैवैष लब्धवान् ।
जातकर्मादिभिस्त्वेतान् स समेतानवर्धयत् ॥

२९

गुणमन्दिरमेनञ्च सुन्दरं शिशुमीक्षितुम् ।
झाञ्झरी जनता धारा नैर्झरीव जवादगात् ॥

३०

श्रीकृष्णजन्मगीतानि गायन्तीस्तु सुवासिनीः ।
वीक्ष्यायं सम्मदोल्लासं किलकारैरकाशयत् ॥

३१

वर्धापनानि गायद्भिर्मागधैः सूतवन्दिभिः ।
यद्यद् गीतं तत्तदेव व्यानगेष स्वकर्मभिः ॥

३२

दीनेषु हिन्दुषु दयां कर्तुमेष बृहस्पतिः ।
अवतीर्ण इति ज्ञात्वा दैवज्ञा नाम चक्रिरे ॥

३३

अयं दीनदयालुः स्यात् स्वनामानुगुणैर्गुणैः ।
इत्याशास्यान्वमन्यन्त तन्नामास्य कुलाग्रजाः ॥

३४

अथैष बालक्रीडाभिदालाञ्च गृहकुट्टिमम् ।
प्राङ्गणं द्वारदेशञ्च वीथीश्चारादशोभयत् ॥

३५

तथापणेऽपि पणकैः क्रीणन् क्रीडनकान्यसौ ।
श्रीरामकृष्णमूर्त्यादि—प्राप्तावाग्रहिलोऽभवत् ॥

३६

सवयस्कान् वयस्यांश्चोपवेशयति शाद्वले ।
स्वयं शिलादि चारुह्य प्रवक्ति स्म ससाहसम् ॥

३७

एतादृशीभिः क्रीडाभिर्भविष्णुरयमर्भकः ।
मातुरासीत्प्रमोदाय विनोदाय च पश्यताम् ॥

३८

द्विजन्मनो गृहे तस्याभवन्मङ्गलमुज्ज्वलम् ।
परन्तु परितो देशमाङ्गलोत्थममङ्गलम् ॥

३९

ईसवीयमतालम्बि————पादरीद्रावितस्तदा ।
मङ्गलायतनं धर्मो यत्र तत्र व्यलीयत ॥

४०

तदुक्तियुक्तिभिः केचिन्मतिमौग्ध्यात्प्रतारिताः ।
हिन्दवोऽपि तदेवाहुः समाजोद्धारकब्रुवाः ।

४१

'सर्वनाशे समुत्पन्ने ह्यर्धं त्यजति पण्डितः ।'
इत्युक्तिमवलम्ब्येव तेऽर्धं धर्ममरक्षिषुः ॥

४२

,द्वे वाव ब्रह्मणो रूपे मूर्तञ्चामूर्तमेव च ।
सच्चासच्च तथा तच्च त्यच्चेति श्रुतिभाषितम् ॥

४३

पठन्तोऽपि ब्रह्मदेवप्रार्थनार्यसमाजकाः ।
अमूर्तोपासनापक्षदुराग्रहजुषोऽभवन् ॥

४४

'आयन्तु नस्ते पितरः सोम्यासोऽग्निषु संस्कृताः ।
इत्यादि चाभ्यस्यन्तोऽपि श्राद्धे श्रद्धां न तेऽदधुः ॥

४५

सेवमाना मृतान् पुत्रा जीवतस्तान्न ते जहुः ।
खण्डिते श्राद्धपक्षे तु जीवत्सेवाऽपि खण्डिता ॥

४६

'विविदे प्रथमः सोमो गन्धर्वस्त्वां द्वितीयकः ।
पतिरग्निस्तृतीयस्ते चतुर्थोऽयं मनुष्यजः ॥'

४७

चतुर्णां पूरणे पत्यावाम्नातेऽपि मनुष्यजे ।
विधवानां विवाहं ते पुनराहुर्मनुष्यजैः ॥

४८

'दशास्यां पुत्रानाधेहि, पतिमेकादशं कृधि ।'
इतिस्पष्टार्थमप्येते, विक्लिष्टार्थमकल्पयन् ॥

४९

'मृगो न भीमः कुचरः, इदं विष्णुर्विचक्रमे ।'
इत्यादि कोलखर्वाद्यानवतारान्न मेनिरे ॥

५०

अवनाद् 'ओम इति यथा, 'रामोऽपि रमणात्तथा ।
तथापि पूर्वं गायन्तः परजापं न्यनिन्दयन् ॥

५१

सुचिरादृषिभिर्जुष्टं गङ्गादिपरिपावितम् ।
हरिद्वारादि तीर्थन्ते न माहात्म्यादपूपुजन् ॥

५२

'आ ब्रह्मन् ब्राह्मणो ब्रह्मवर्चस्वी जायतामिति ।
तथा राष्ट्रेऽत्र राजन्यः शूरोऽतिव्याधिरेधताम् ॥

५३

इत्यादिमन्त्रैः सुव्यक्तां जन्मना वर्णशृङ्खलाम् ।
अपवादवचोभङ्ग्या कर्मणा प्रत्यपीपदन् ॥

५४

अन्यमिच्छस्व सुभगे पतिं मदिति च श्रुतिम् ।
भगिनीभ्रातृसंवादां नियोगार्थाञ्चचक्षिरे ।।

५५

धृतराष्ट्रादिकां व्याससन्ततिं वरदानजाम् ।
तत्र दृष्टान्तरूपेणोपन्यास्यन्नविचारणाः ।।

५६

नियोगप्रक्रिया लोके जनिष्यति तु विक्रियाम् ।
नरनारीसदाचारभञ्जिनीमिति नामिषन् ।।

५७

व्यक्तोपास्तिनिषेधेन मृतश्राद्धविवर्जनात् ।
विधवानां विवाहेनावताराणां निवारणात् ।।

५८

नामोपास्त्युपहासेन तीर्थसेवानिषेधनात् ।
वर्णव्यवस्थाभङ्गेन नियोगादिसमर्थनात् ।।

५९

अन्यैरपि प्रकारैश्च धर्मस्यास्य विरूपताम् ।
कुर्वद्भिः प्रार्थनाब्रह्मदेवार्यादिसमाजकैः ।।

६०

मौलवीपादरीवृन्दसहितैरर्धनास्तिकैः ।
तैर्धर्मो दूयमानोऽभूद् दूष्यमाणश्च शाश्वतः ।।

६१

'सत्यं ब्रूयात्प्रियं ब्रूयान्न ब्रूयात्सत्यमप्रियम् ।
प्रियञ्च नानृतं ब्रूयादेष धर्मः सनातनः ।।

६२

इति धर्मस्य सत्यं ते नीत्वा त्यक्त्वा प्रियं वचः ।
किं सत्यार्थप्रकाशादि नाग्रथ्नन् सर्वदूषणम् ।।

६३

धर्मस्यैकमिहांशं ते वहन्तो जहतः परम् ।
नदीमज्जन्मित्रशीर्षकर्त्तृविज्ञा इवाभवन् ॥

६४

शाश्वती धार्मिको दृष्टिरार्थिकीयमशाश्वती ।
इत्यद्यत्वे समस्यानां समाधौ श्रीयतामियम् ॥

६५

आपद्धर्माभिधानानां कर्मणां दृष्टिरार्थिकी ।
नित्यनैमित्तिकानान्तु दृष्टिर्भवति धार्मिकी ॥

६६

परिस्थितिपरिष्कारे सदाचारे प्रतिष्ठिते ।
विधवाः स्वयमेवेमाश्चरिष्यन्ति पतिव्रतम् ॥

६७

तावदार्थिकदृष्ट्यासां विवाहः परिकल्प्यताम् ।
अधर्मो धर्मनाम्ना मा पण्डितैर्व्यपदिश्यताम् ॥

६८

अधर्मं धर्ममिति या मन्यते तमसावृता ।
सर्वार्थान् विपरीतांश्च बुद्धिः सा पार्थ तामसी ॥

६९

इमां बुद्धिमुपाश्रित्य सज्जा धर्माभिदूषणे ।
सर्वार्थविपरीतत्वदृशस्ते हास्यतामगुः ॥

७०

ईशवीयैर्मुस्लिमैश्च येऽत्र तर्का उपोहिताः ।
अपोहितुमशक्तास्तान् स्वीचक्रुः स्थूलबुद्धयः ॥

७१

स्वरेखावर्धनेऽशक्ताः पररेखाप्रमार्जनम् ।
कुर्वन्तस्ते मिथो द्वेषं मतानामुदपादयन् ॥

७२

इत्थमज्ञानलीलानां परितो वीक्ष्य विस्तरम् ।
द्रष्टुं विज्ञानसम्पन्नं तं पितामह इष्टवान् ॥

७३

बौद्धबुद्धिविशुद्ध्यर्थं कुमारोऽथ कुमारिलः ।
बौद्धविद्यालये विद्याः समध्येतुं यथागतः ॥

७४

तथायमपि संस्कारैः संस्कृतो ब्राह्मणोचितैः ।
पठितुं यावनीं भाषां हा ! ईसुकुलमीयिवान् ॥

७५

स्वल्पेनानेहसा पूर्णां योग्यतां प्राप्य तत्र च ।
अस्थापयत् सभामेकां 'रिफाहे आम' नामिकाम् ॥

७६

हिन्दवो यवनाश्चैव समानादधिकारतः ।
अस्यां सभायामभवन् सदस्या इति नः श्रुतम् ॥

७७

एकत्र वसतां नूनं सतां स्नेहोऽभिवर्धते ।
असतां तु विरोधस्य प्रसरः परिसर्पति ॥

७८

न चैते यवना देशमिमं यवनदेशतः ।
समायाताः, परमिमे सन्त्यार्याणां स्ववंशजाः ॥

७९

न जातु कामान्न भयाज्जीवनस्यापि कारणात् ।
धर्मं जह्यादिति स्मार्तमादेशमत्यजन्निमे ॥

८०

इस्लामाङ्गीकृतेरेते यदि दूषितविग्रहाः ।
हिन्दूधर्मोररीकारात् पुनः सन्तु पवित्रिताः ॥

८१

इत्येतेषां तिरस्कारे नार्यैराधीयतां मतिः ।
सौहार्देन सदाचारं शिक्षणीया यथाक्रमम् ॥

८२

सदाचारञ्च भजतां कदाचारजिहासया।
आर्यता हिन्दुता वैषामन्तर्जागरिता भवेत्॥

८३

इत्यादि मनसाऽऽचिन्त्य सभामेतामरीरचत्।
सर्वसौख्यप्रदां स्नेहशान्तिविस्तारकारिणीम्॥

८४

तदैव मासिकं पत्रं 'हरियाणा' भिधानकम्।
प्राकाशयदयं वाग्मी तरुणः करुणान्वितः॥

८५

अथाचारपवित्राणां मित्राणां नोदनादयम्।
व्रजमण्डलयात्रार्थमगच्छन्मथुरापुरीम्॥

८६

ततः श्रीराधिकाकान्तप्रीतिप्रसरपावनम्।
भक्तवृन्दावनं यातो मुदा वृन्दावनं वनम्॥

८७

पौराणिकानि तत्रास्य नानास्थानानि पश्यतः।
ऐतिहासिकवास्तूनामप्यभूद् दर्शनोत्कता॥

८८

अग्राख्यं स पुरं यातो द्रष्टुं यावनकालिकम्।
यत्रास्ति ताजमहलं मुमताजममत्वजम्॥

८९

फतेहपुरमस्माच्च सीकरैकान्तमण्डनम्।
गतस्तत्रापि सोऽपश्यत्तान्यैतिह्यानि तत्क्षणम्॥

९०

तत्र सुप्तस्य केनापि हृतः कोट उपाहितः।
तद्द्रव्यमपि तेनैव सह मार्गव्ययोचितम्॥

९१

अथ प्रत्यावर्तमानो व्ययाभावादसौ युवा।
पद्भ्यामेव ततस्तूष्णीं प्रातिष्ठत निराश्रयः॥

९२

मध्येमार्गं तमिस्राभूद् घनतामिस्रवेष्टिता ।
किञ्चिच्छत्रमिवालोक्य तच्छायायामसौ स्थितः ॥

९३

निद्राक्रान्तहृदस्तस्य शयानस्य तु वक्षसि ।
महान् भारोऽभवत्कोऽपि येनाक्रोशत्स सस्वनम् ॥

९४

जागरित्वा घोररूपं कृष्णं सत्त्वमुरःस्थितम् ।
निवारयितुमार्तोऽसौ कुलदेवीमचिन्तयत् ॥

९५

तच्चिन्तनाच्चिन्तितार्थपूरणी जगदम्बिका ।
प्रादुरासीदहार्षीच्च तत्सत्त्वं सिंहवाहिनी ॥

९६

इत्थं दुर्गाकृतत्राणः श्रद्धावान् वेदशास्त्रयोः ॥
अभयं साहसञ्चारादादधे धर्मरक्षणे ॥

९७

ततश्चासौ धृतोत्साहः सोल्लासं मथुरापथात् ।
वृन्दावनं पुनर्द्रष्टुं मुहुरायात्समुत्सुकः ॥

९८

तीर्थेऽत्र केशिघट्टाख्ये स्वामी नारायणो वसन् ।
तमज्ञातमपि प्राह चिरज्ञातमिव स्वयम् ॥

९९

'एहि वत्स ! चिरादेष प्रतीक्षेऽहं त्वदागमम् ।
तव हस्तेन सुमहद् धर्मकार्यं भविष्यति ॥'

१००

इति कालं कञ्चनास्य न्युष्य पार्श्व महात्मनः ।
श्रीकृष्णोपासनादीक्षां शिक्षाञ्चैवाप हैन्दवीम् ॥

—o – o—

## द्वितीयः सर्गः

१

**अथ** स्वामिदयानन्दसतीर्थ्यात्पण्डितादयम् ।
अध्यगाच्छास्त्रमुदयप्रकाशाद् देवशर्मणः ॥

२

एकस्माद् विरजानन्दसंन्यस्तात्समधीतिनोः ।
तयोरासीन्महान् भेदो विष्णोर्नयनयोरिव ॥

३

चन्द्रः सौम्यप्रकाशात्मा सूर्यः प्रखररश्मिमान् ।
पूर्वः सर्वप्रमोदाय परः सर्वप्रबुद्धये ॥

४

चन्द्रादिवैष पीयूषं, शास्त्रं श्रीदेवशर्मणः ।
निपीयोद्‌गारमिव तं प्रोचे धर्मं सनातनम् ॥

५

मथुरा अखबाराख्यं पत्रं साप्ताहिकं तथा ।
सम्पादयामास पटुस्तत्राप्युर्दूलिपौ बटुः ॥

६

अत्र पत्रे प्रथमतो धर्ममेष सनातनम् ।
सम्बोधयितुमुद्युक्तः प्रत्यभात्प्रतिभावताम् ॥

७

अथ योग्यतमः सोऽयं पत्रसम्पादनेष्विति ।
मत्वान्यैर्बहुभिः पत्रकारैराकार्यतादरात् ॥

८

अयं स्वकर्मणः क्षेत्रं मत्वा पञ्चनदं क्षमम् ।
'कोहेनूरं' लवपुरे दैनिकं समपादयत् ॥

९

नेतृत्वं, धार्मिकत्वञ्च, राष्ट्रियत्वमथोत्तमम् ।
पत्रसम्पादकत्वेन, सत्रा तत्राभ्यराजत ॥

१०

अथासौ राष्ट्रियमहासभाया अधिवेशने ।
कालिकाताभवे भव्ये समुपातिष्ठत द्विजः ॥

११

'अदालत व आजादी' नामकं लघुपुस्तकम् ।
स्वकृतं व्यतरत्तत्र कृती जनितविस्मयम् ॥

१२

गगर्यां सागरमिवाभृतं भावं तु पुस्तके ।
अधीक्ष्य स्वागताध्यक्षः प्रशशंस तदादरात् ॥

१३

इदं च राष्ट्रियमहासभासङ्घटनं मिषन् ।
सनातनस्य धर्ममस्यापीदृशं सोऽचिकीर्षत ॥

१४

महामनास्तु मदनमोहनो मालवीयजिः ।
तत्रैवानेन मित्रत्वमधान्नित्यविवृद्धिमत् ॥

१५

सतां साप्तपदीनं यच्छ्रूयते सख्यमागमे ।
यद्दिनस्य परार्धोत्थच्छायावच्च तदुच्चयः ॥

१६

तद्द्वयं तदद्वयस्याऽऽसीत्सख्ये प्रत्यक्षतां गतम् ।
उदलासीत्तयोश्चात्र वार्तारत्नाकरो महान् ॥

१७

तत्रानेन स्वदेशस्य स्वातन्त्र्याथ समुद्यमे ।
प्रेरितः स विशेषेण संलग्नोऽभून्महामनाः ॥

१८

तेन चोत्साहितो दीनदयालुः कर्मठो युवा ।
सनातनस्य धर्मस्य समुन्नत्यां मनो दधे ॥

१९

अथाहं कतमं देशं प्रथमं समुपाश्रये ।
इति चिन्तयतश्चेतस्यसीदस्य प्रतिस्वनः ॥

२०

यतो धर्मस्ततः कृष्णो यतः कृष्णस्ततो जयः।
इति गच्छ हरिद्वारं धर्मद्वारं हि तद् भवेत् ॥

२१

तीर्थान्येव हि धर्मस्य पोषणानि प्रचक्षते।
तीर्थानि गङ्गा पुष्पाणि गङ्गापुत्राश्च तद्गताः ॥

२२

गङ्गापुत्रा इमे सम्यगाचारे निरता यदि।
तदा न गङ्गामाहात्म्यं कदाचिदपि ह्रास्यते ॥

२३

स्थिते च गङ्गामाहात्म्ये धर्ममाहात्म्यमेधते ॥
समिद्धे धर्ममहिमन्याविर्भवति वै हरिः ॥

२४

आविर्भावे हरेर्जीवो न कदाचित्प्रमाद्यति।
अप्रमत्तश्च विश्वस्य मङ्गलायोपकल्पते ॥

२५

इति मत्वा स पण्डाख्यान् गङ्गापुत्रान् समुन्नयन्।
सभामिमां व्यरचयत् सुधर्मामिव पावनीम् ॥

२६

सनातनस्य धर्मस्य नेतॄनेवं सुधार्य सः।
नैयान् संघटयंश्चित्ते संस्थामन्यामचीक्लृपत् ॥

२७

तत्र चायं धर्मधुरं वहन् भुवनभाविनीम्।
श्रीभारतधर्ममहामण्डलं समतिष्ठिपत् ॥

२८

अस्याधिवेशने दिव्ये द्विजोत्तमनृपोत्तमाः।
समागम्य स्वधर्मस्य रक्षायै व्रतमादधुः ॥

२९

ततः पञ्चाम्बुदेशेऽसौ धर्मशिक्षाप्रवृत्तये ।
अभियातो लवपुरं नास्तिकाऽऽक्रन्दितं चिरात् ॥

३०

तत्रायं धर्मसम्बन्धे प्रश्नानां त्रिंशतं पुरः ।
स्थापयित्वा भाषणानां मालामेकामवर्तयत् ॥

३१

पुरा रावणलङ्केति यत्पुरं विजुगुप्सितम् ।
तदेव तस्य व्याख्यानै रामायोध्येत्यकीर्त्यत ॥

३२

अस्या व्याख्यानमालायाः सौरभेण सुगन्धितम् ॥
पूरितं चान्तरा दीनदयालोस्तैर्दयालवैः ॥

३३

लवेनाऽऽवासितं पूर्वं लवैरद्य सुवासितम् ।
द्विधा लवपुरं नाम सार्थकीकृतवत्पुरम् ॥

३४

अस्यैव शाखानगरे वच्छोवालीति विश्रुते ।
स सनातनधर्मस्य सभामाद्यामचालयत् ॥

३५

अस्याश्च शोभायात्रायां वेदानां मञ्जुवाहने ।
नरा नार्यश्च सौगन्ध्यफलमिष्टाद्यवाकिरन् ॥

३६

प्रतापसिंहः काश्मीरनरेशो नग्नपादगात् ।
शेखूपुरेश्वरश्चायं हरिवंशोऽपि तामनु ॥

३७

अन्येऽपि बहवो भूपाः श्रेष्ठिनश्चानुपानहः ।
अन्वगुस्तत्प्रवचनैः श्रद्धाबन्धमुपाश्रिताः ॥

३८

इत्थं सनातनं धर्मं पञ्चाम्बुषु च सिन्धुषु।
स सभाभिर्धार्मिकीभिः शालाभिश्चासभाजयत् ।।

३९

अथोत्तरप्रदेशेऽपि विहारेषु च नैकशः।
राजस्थाने मध्यदेशे नगरं नगरं गतः ।।

४०

व्याख्यानैश्चाप्युपाख्यानैर्मोहनिद्रां निवारयन्।
तेष्वजागरयद्धर्मं चायमस्थापयत्सभाः ।।

४१

व्याख्याय धर्मं व्याख्यानवाचस्पतिरयं महान्।
सभाशालामन्दिराद्यैरभूषयत भारतम् ।।

४२

श्रीभारतधर्ममहामण्डलस्याधिवेशनम् ।
आयोजयत्स देहल्यां काश्यां वृन्दावने तथा ।।

४३

विक्रमस्योनविंश्याश्च शताब्द्या अन्तिमेऽयने।
एकादशाहिकं दिल्ल्यामभूद भूयोऽधिवेशनम् ।।

४४

रूप्यकाणां सहस्राणां पञ्चविंशतिसंख्यया।
द्विप्रासादं मण्डपं तत् कल्पितं विस्मयावहम् ।।

४५

यद्दृष्टवा मालवीयेन साधुवादैः सभाजितः।
परास्तराष्ट्रियमहासभाशोभः स मण्डपः ।।

४६

युधिष्ठिरमहाराजराजसूयमखोपमा ।
अस्य बालमुकुन्दादिपत्रकारैरुदाहृता ।।

४७

अस्यामेव सुवेलायां शिमलायामयं द्विजः।
सभां सनातनीयानां व्यधात्सहरिमन्दिराम् ॥

४८

दिल्ल्याञ्च हिन्दूकालेजं, तथा लवपुरेऽद्भुतम् ।
श्रीसनातनधर्मस्य कालेजं समयूयुजत् ॥

४९

मोहमय्यां कालिकातानगरे च यथाक्रमम् ।
मारवाड़ीश्रीविशुद्धानन्दविद्यालयावपि ॥

५०

इत्थं स आङ्गलाधीतिच्छात्रेष्वपि सनातनम् ।
धर्मं प्रति शुचिस्नेहस्याङ्कुरानुदपादयत् ॥

५१

अमोघयच्च मेकाले–योजनां कौटनैतिकीम् ।
यत्रासौ भारतीयानां भविष्यमिदमब्रवीत् ॥

५२

'बहिरङ्गे भारतीयान् अन्तरङ्गे किलाङ्गलान् ।
हा ! ईसुकुलकालेजा जनयिष्यन्ति नश्चिरम् ॥'

५३

तत्र काश्यां मालवीयो विश्वविद्यालयं नवम् ।
स्थापयन् पण्डितस्यास्य लेभे साहाय्यमुत्तमम् ॥

५४

श्रीदुर्गादत्तपन्तोऽपि हरिद्वारे ऋषेः कुलम् ।
स्थापयित्वेन्द्रराजादिगङ्गापुत्रसहायवान् ॥

५५

नानाहिन्दूराजमानपात्रतां गच्छतश्च तत् ।
ब्राह्मणस्यास्य साहाय्यादपालयदपोषयत् ॥

५६

कृत्स्नभारतवर्षीयस्तरोपरि समुज्ज्वलम् ।
श्रीसनातनधर्मस्य सम्मेलनमयं व्यधात् ॥

५७

हरेर्द्वारे मधोःपुर्यां लवस्य च पुरे महत् ।
धर्मसम्मेलनस्यास्याकार्षीद्विप्रोऽधिवेशनम् ॥

५८

श्रीगोवर्धनपूजातो यावद् गोपाष्टमीमयम् ।
गोवंशरक्षासप्ताहं समस्थापयदुत्तमम् ॥

५९

तदा च बालकेनैव मयापि हरिगीतिकाम् ।
आलम्ब्य रचितं हिन्द्याम् 'आर्यवीरे' तिकाव्यकम् ॥

६०

यस्मिन् काव्ये गवां काव्यरश्मीनां च समानताम् ।
निरूप्य तासां तेषां चास्तित्वे जागरितो जनः ॥

६१

गोरक्षको यदा युद्धे गतो गोभक्षकान् प्रति ।
तदा गव्यैः कव्यहव्यैस्तर्पिताः पितृदेवताः ॥

६२

अपि तस्य सहायत्वं गता भूतानि पञ्च च ।
येनास्य विजयो जातः सुरैश्चैषोऽभिनन्दितः ॥

६३

प्रसद्यानेन काव्येन श्रीमान् घूटरझागुरुः ।
प्रादादृषिकुलाचार्यो मह्यं बालकवेः पदम् ॥

६४

स्थाने स्थाने च 'गोरक्षाश्रितं भारत' मित्यहो ।
लिखितं दृश्यते पठ्यमानं च श्रूयतेस्म तत् ॥

६५

हिन्दुस्थानं तथा हिन्दूजातिमुन्नमयन्नयम् ।
हिन्दीभाषाप्रचारेऽपि नैव पश्चात्स्थितोऽभवत् ॥

६६

श्रद्धारामः फिलौरीयः प्रसिद्धारार्तिकारकः ।
नवीनचन्द्ररायश्चाभूतां धर्माभिरक्षकौ ॥

६७

एतौ यथा पञ्चनदेष्वास्तां हिन्दीप्रचारकौ ।
काश्यां तथाम्बिकादत्तव्यासो हिन्दीं समाश्रयत् ॥

६८

किन्तु मद्रासदेशेऽपि ग्रामं ग्रामं पुरंपुरम् ।
परिभ्रमन्नयं हिन्द्यां धर्मसन्देशमादिशत् ॥

६९

विश्वस्य विश्वा भाषाश्च देवनागरिकालिपौ ।
शक्या लेखितुमित्यासीद्विदुषोऽस्य सदाऽऽग्रहः ॥

७०

सन्त्यन्याः पुच्छला लिप्यो विपुच्छा देवनागरी ।
पुच्छलत्वं पशोर्लक्ष्म नरलक्ष्म विपुच्छता ॥

७१

ए. बी. सी. डीत्यादिगता मात्रास्ते निष्प्रयोजनाः ।
किञ्च दन्तविहीनेव दन्त्यान् ब्रूते न सा लिपिः ।

७२

अलिफ् बे. पे. प्रभृतिषु चान्त्या अवयवा वृथा ।
ऊडा आयेत्यादिषु च व्यर्थास्ते पुच्छवत् स्थिताः ॥

७३

अआ इईति वर्णानां जातमात्रा नरार्भकाः ।
अपि रोदनकालेषु कुर्वन्त्युच्चारणं सुखात् ॥

७४

अतोऽत्र नरभाष्याणां भाषाणां लेखनं सुगम् ।
अस्माच्च कारणादेषा श्रेष्ठाऽऽस्ते देवनागरी ॥

७४

एतस्याः पुष्टये मित्रं शारदाचरणं प्रियम् ॥
आश्रित्य लिपिविस्तारपरिषत्स्थापनं व्यधात् ।

७६

तया स मासिकं पत्रं 'देवनागर' नामकम् ।
प्राकाशयत्सर्वभाषालेखैतल्लिपिलेखनम् ॥

७७

लिप्यभेदे हि भाषैक्यमनायासं प्रसेत्स्यति ।
इत्यसौ लिप्यभेदाय प्रथमं यत्नमाचरत् ॥

७८

मयराष्ट्रे पण्डितश्रीगौरीदत्तसहायवान् ॥
अस्थापयदयं विद्वान् सभां हिन्दीप्रचारिणीम् ॥

७९

स्वस्वकार्यं निर्वहेयुर्हिन्द्या केवलयेति या ।
सम्प्रार्थयत्सर्वसंस्था धार्मिकीरथ राष्ट्रियाः ॥

८०

भारते जन्मभूबुद्धिं बिभ्राणैः सकलैर्जनैः ।
हिन्द्यैव सर्वः पत्रादिव्यापारः क्रियतामिति ॥

८१

एतामाज्ञां मूर्ध्नि धृत्वा हिन्दीशिक्षामशिश्रियन् ।
सभाः सर्वाः स्वकार्याणि सर्वाण्यपि तयाऽवहन् ॥

८२

बीकानेरेऽप्यलवरे स्थिते न्यायालयेऽपि यत् ।
समाद्रियत हिन्दी तद्विदुषोऽस्य प्रयत्नतः ॥

८३

तथा काश्यामागरायां स्थिते ये नागरीसभे ।
तयोः सदस्यः सन्नेष भूयो द्रव्यमदापयत् ॥

८४

पञ्चाम्बुहिन्दीसाहित्यसम्मेलनसभापतिः ।
भूत्वा विलक्षणमसौ ददावध्यक्षभाषणम् ॥

८५

कलकत्तासमाचारो 'हिन्दूसंसार' संज्ञया ।
अस्य संरक्षणे दिल्लीमेत्य हिन्दीमशिक्षयत् ॥

८६

अस्मादेव गता जन्म पुरा लवपुरेऽमले ।
इयं ख्याता प्रतिनिधिसभा शाश्वतधर्मिणाम् ॥

८७

गणेशदत्तो गोस्वामी सरगोधाधिवेशने ।
दधे शिशुं तां धात्रीवन्मुख्यमन्त्रिपदं गतः ॥

८८

कृत्स्नभारतवर्षीया चैषा हिन्दूमहासभा ।
षष्ठेऽधिवेशने मान्यमिममध्यक्षमाश्रयत् ॥

८९

तत्राधिवेशने नव्यं भव्यं श्लोकं स्वकल्पितम् ।
पठित्वा लक्षणं हिन्दोर्व्याचचक्षे विचक्षणः ॥

९०

'भारतीयं भजेद्धर्मं भारतीयां च संस्कृतिम् ।
भारते पुण्यभूर्यस्य स हिन्दुरिति कीर्तितः ॥'

९१

बौद्धा जैनास्तथा शिष्या अनया परिभाषया ।
हिन्दुभ्यो न विभिद्यन्ते देशादपि बहिः स्थिताः ॥

९२

धर्मो ह्येषां भारतेऽत्र सम्भूतः समयानुगः।
सदाचारप्रधाना च भारतीयैव संस्कृतिः॥

९३

भारते सन्ति तीर्थानि सर्वेषामिति पुण्यभूः।
इयं यथास्ति हिन्दूनां तथा तेषामपि स्फुटम्॥

९४

चेदियं परिभाषात्राभविष्यद् रूढतां गता।
बौद्धास्तदा ते चीनस्था आक्रमिष्यन्न भारतम्॥

९५

न चीनस्थाः परं ब्रह्मजापानदिगता अपि।
बौद्धा हिन्दुषु संख्याता अनेष्यन्नर्वतां तु तान्॥

९६

महद्भिर्दर्शितं वर्त्म नानुयन्तीह बालिशाः।
परिणामे रुदन्त्येव भारतीया यथाऽधुना॥

९७

नैवाक्रमणभीतानां भारतीयविदामियम्।
हिन्दूशब्दपरीभाषा वर्तते, पारमार्थिकी॥

९८

हिमालयस्य 'हिं नीत्वा 'न्दु' नीत्वेन्दुसरोवरात्।
अगस्त्यसँहिता हिन्दुशब्दं देशार्थमभ्यधात्॥

९९

'तद्देशसम्भवं धर्मं तद्देशोत्थां च संस्कृतिम्।
तद्देशे पुण्यभूबुद्धिं बिभ्रत् स्याद् हिन्दुरेव ना॥"

१००

एकजातीयता नूनमनया परिभाषया।
एशियाद्वीपमाधिक्यादेकसूत्रे न्यभन्त्स्यत॥

## तृतीयः सर्गः

१

"त्रिभिः सन्धि समेत्यात्र त्रीणि कर्माणि कुर्वता ।
जन्ममृत्युमयो घोरस्तर्तव्यो भवसागरः ॥"

२

इत्यौपनिषदादेशमनुसृत्य महात्मना ।
हिन्दूहिन्दुस्थानहिन्दीकर्माण्याचरितान्यहो ॥

३

अथैतस्य त्रिकस्यापि पावनी यास्ति जाह्नवी ।
सा न बद्धा भवेज्जातु तत्रासौ यत्नवानभूत् ॥

४

अघोषयच्च गङ्गाया नैवेदं निर्मलं जलम् ।
केनचिच्छक्ष्यते बद्धुं, भन्त्स्यते रक्तरञ्जितम् ॥

५

"नेतुरस्य महावाणी किलाऽऽसीच्छक्तिशालिनी ।"
इत्याङ्गलः सर्वकारोऽस्थगयन्निजयोजनाम् ॥

६

न केवलमयं हिन्दूजनमान्योऽभवद् भुवि ।
अपि मुस्लिमविद्वद्भिरयं सम्मानितो भृशम् ॥

७

अद्वैतवादसिद्धान्तं सूफीवादेन सङ्गतम् ।
व्याख्याय मानं व्याख्यानवाचस्पतिरगात्परम् ॥

८

अनेनैव च मानेन हैदराबाददक्षिणम् ।
भूयो भूयो गतस्तत्र हिन्दून् हिन्दीमबोधयत् ॥

९

गोसेवायां पुरस्कृत्य श्रीभोलानाथपण्डितम् ।
कृत्स्नभारतवर्षीयगोकान्फ्रेंसमरीरचत् ॥

१०

मज्जन्मभूमिसम्बद्धे मञ्जुले झङ्गमण्डले ।
शास्त्रार्थः श्राद्धविषयेऽस्याऽऽर्यसामाजिकैरभूत् ॥

११

तत्रास्य श्राद्धविज्ञानविज्ञापनमनुत्तमम् ।
भाषणं शृण्वतां चित्ते श्रद्धा श्राद्धेष्वजागरीत् ॥

१२

वेदादिशास्त्रप्रामाण्यात्संस्कृतज्ञैस्तदादरात् ।
आकर्णि फारसीमिश्रतया मौलविभिर्मुदा ॥

१३

विज्ञानयुक्त्या सन्तुष्टैराङ्गलादिषु शिक्षितैः ।
युवकैरपि तद्भूयो विनम्रावनतैः श्रुतम् ॥

१४

साधारणैर्जनैरेतद् दृष्टान्तपरिकल्पितम् ।
निशामितं सहर्षञ्च मनोरञ्जनपूर्वकम् ॥

१५

इत्यासीज्जनसम्मर्दो महान् चण्डीसरोवरे ।
विपक्षस्य च तर्काणां खण्डा आसन् पदे पदे ॥

१६

अस्य शास्त्रार्थशैलीकभाषणस्य प्रभावतः ।
सनातनस्य धर्मस्याभवन्सर्वेऽनुयायिनः ॥

१७

शिष्याश्च मुस्लिमाश्चार्यसमाजस्यानुयायिनः ।
पितॄणां तर्पकं दानमकुर्वन्नन्नपानयोः ॥

१८

अपि संस्कृतसाहित्यसम्मेलनमयं बुधः ।
दानमानादिना दार्ढ्यं स्थैर्यञ्च प्रापयत्पुरा ॥

१९

संस्कृतं सर्वभाषाणां मूलं भारतसंविदाम् ।
सर्वा हिन्द्यादयो भाषा उपजीवन्ति तत्सदा ।।

२०

न केवलं तद् भाषाणां भावानामपि भाविनाम् ।
संस्काराणां च भव्यानामाधारः संस्कृतं विशाम् ।।

२१

इत्यादीनां विचाराणां चारूणामाश्रयेण सः ।
प्राचीचरत्पर्यचरत्सस्कृतं संस्कृतिं तथा ।।

२२

अस्पृश्यतापमानेन स्वधर्मं त्यजतोऽन्त्यजान् ।
परधर्मं च भजतो न्यवारयदयं महान् ।।

२३

सहयोगं प्रदायात्र मालवीयस्य गान्धिनः ।
वृथा विरुन्धतो विप्रानयं सम्यगबोधयत् ।।

२४

महामहोपाध्यायेन श्रीलगिरिधरशर्मणा ।
व्यवस्थां दापयित्वा च तेषां शुद्धिमकारयत् ।।

२५

व्याख्यानभास्करः श्रीमान् स लीलाधरशास्त्र्यपि ।
ग्रामे ग्रामे शुद्धिकार्येऽनेन साकं किलागमत् ।।

२६

स्वामी श्रीरामतीर्थोऽथ वेदानुवचनं पठन् ।
समाधानाय बहुधा समागच्छति तं बुधम् ।।

२७

परिव्रजन्नयं रामो यदा द्रष्टुं तमागतः ।
तदा न साक्षात्कारोऽस्याभवद्भव्यगुणाम्बुधेः ।।

२८

इति वेदानुवचनग्रन्थस्यैव तु वेष्टने ।
स महात्मातिसम्मानादलिखल्लेख्यमक्षरम् ।।

२९
'वेदव्यासं गुरुं गेहे त्यक्त्वा यातः शुको यथा ।
तथाहमपि गच्छामि मा स्म शोकं वृथा कृथाः ॥'

३०
लोकमान्यस्तु तिलकस्तद्व्याख्यानहृतान्तरः ।
उवाच—'नूनमपरः समायातोऽस्ति शङ्करः ॥'

३१
अन्येऽपि गण्या मान्याश्च वदान्याश्चेह सज्जनाः ।
अस्याऽऽत्मीयेन भावेन सिद्धार्था मानयन्त्यमुम् ॥

३२
श्रीराजेन्द्रप्रसादाय प्रसादोऽस्याभ्यरोचत ।
श्रीजवाहरलालस्य स्नेहोऽस्याभूदतिप्रियः ॥

३३
श्रीमोतीलालममतां वन्द्योपाध्यायवन्दनाम् ।
पटेलपूजां मौलानामानं चायमवाप ह ॥

३४
श्रीलाजपतरायस्य हंसराजमहात्मनः ।
सौहार्दं, टण्डनस्यायमविन्ददभिनन्दनम् ॥

३५
मारवा ददुरेतस्मै मानं दानं च गौरवात् ।
बिडलाबाङ्गलाद्याश्च तस्यात्मीयतया स्थिताः ॥

३६
मारवाणां समाजेऽसौ शिक्षां दीक्षां सुधारणाम् ।
विस्तारयामास बुधस्तारयामास सङ्कटात् ॥

३७
भारतीया महाराजा आद्रियन्ते स्म तं सदा ।
काश्मीर-नाभा-गोपाद्रि-दरभङ्ग-वटोदराः ॥

३८
चम्बा-पन्ना-धौलपुराऽलवराश्च किशनगढः ।
पटियाला-जयपुरे रीवाँ-भरतपूर्भवौ ॥

३९

भगवन्नाममाहात्म्ये परां श्रद्धामयं दधत् ।
जीवनस्याऽन्तिमे पञ्चविंशत्यब्दे त्वनेहसि ॥

४०

'हरे राम हरे राम राम राम हरे हरे ।
हरे कृष्ण हरे कृष्ण कृष्ण कृष्ण हरे ॥'

४१

इति नाममहामन्त्रं कलिसन्तारणं जपन् ।
सोऽन्वष्ठात् पञ्चकोट्यात्मपुरश्चरणपञ्चकम् ॥

४२

करमालां परित्यज्य श्वासमालामथाऽश्रितः ।
अजपत्सोऽजपाजापं नूनमर्बुद संख्यया ॥

४३

याभिर्मालाभिरभितो गणयन् स जजाप तत् ।
तासामद्यापि सम्मानं क्रियते तत्कुटुम्बिभिः ॥

४४

बहुधा कृच्छ्रसाध्येषु रोगेषु शिरसा धृताः ।
एता माला अनायासं सरुजो नीरुजो व्यधुः ।

४५

इत्थमाध्यात्मिकीराऽधि दैविकीराऽधिभौतिकीः ।
विपदो बाधयन् यत्नैः सम्पदः साधयन्निजैः ॥

४६

देशस्यजाति धर्मस्य राष्ट्रस्यापि च संस्कृतेः ।
सेवासु लग्नः स्वानन्दमग्नो वाचस्पतिस्स्वयम् ॥

४७

अथ देहेन पञ्चत्वमात्मना परमं पदम् ।
साधयित्वा कीर्ति देहं निरन्तरमपूपुषत् ॥

४८

न केवला वेदविद्या, न सद्धर्मश्च केवलः ।
तत्सेविताः सुसंस्कारा अपि गौरवमाश्रिताः ॥

४९

हरिद्वारे ऋषिकुलेऽप्यस्याऽस्मान् शोकवृत्ततः ।
वितस्तार महाशोको नानारूपैर्गिराञ्चयैः ॥

५०

मया तत्र कृताः श्लोकाः शोकश्रद्धाञ्जलिस्पृशः ।
इहोद्ध्रियन्ते तद्वृत्तपूरका इति भावतः ॥

५१

श्रवणे श्रवणे सुधाकिरां किल वाचस्पतिकीर्त्तिसद्गिराम् ।
विषमं विषमंजसाऽऽहितं कटुकाकोदरसोदरेण हा !

५२

हहहा ! नतराजमण्डलः सुमनोमोदकरस्तमोहरः ।
सततर्षिकुलाभिनन्दितोऽस्तमितो दीनदयालुभास्करः ॥

५३

अथवा दुरितै दुंरात्मनां स्फुटितो भारतभाग्यभूधरः ।
भवतः परमार्थशालिनामुदयास्तौ हि जगत्कृतोद्भवौ ॥

५४

अधुना मधुनाऽपि संस्तुतं परमस्नेहमयं कुतो वचः ।
जगदारसयद् यदादराद् अमृतत्वाय सदा सुखाय च ॥

५५

स्थिरता श्रुतिनिष्ठ-विप्रता धृतिमत्ता स्पृहणीयवक्तृत ।
मृदुताऽपि विचारशीलता सममप्येकपदे लयं गतम् ॥

५६

अपराधपरम्परा-परा अपरागं जनयन्ति मानवाः ।
परमीश्वरधर्मरक्षक ! स्मर धर्मेण किमाश्रितं तथा ॥

५७

विरुदं विरुदन् अयं जनस्तव, गायन्नपि शान्तिमेष्यति ।
परमं परमंतराकुलं कलयेत्कं नु मतं पुरातनम् ॥

५८

न सनातनधर्मं धारयेदधुना धैर्यमये मनागपि ।
नहि वाञ्छसि चेन्निराश्रयां भुवने वर्तुमहोकृतज्ञताम् ॥

५९

भरताग्रजकृष्ण-शंकरैरवरहानां सहनेऽसि शिक्षितः ।
परमाश्रयबाधने कथं क्षणमेकं तव जीवनं वरम् ॥

६०

अथवा विजयस्व खिद्य मा सुचिरं जीव सखे सुखं वसन् ।
हरताद् विरहस्य वेदनां जगतामाकुलभावमर्जताम् ॥

६१

भुवने तमसाऽऽविलीकृते, हृदये शोकजवैः खिलीकृते ।
सहसा पतितेन हारितं पविना हन्त ! न तद विदारितम् ॥

६२

जय पण्डितवर्य ! शाश्वतं तव कीर्तिर्भुवनेषु राजताम् ।
अधिगत्य निरन्तरां धृतिं जगती जीवतु सन्ततं यया ॥

# श्रीगान्धिगरिमा

## अमृतस्य मृत्युः,

१

सा मातृभूमिनतिपातितजानुयुग्मा, देशस्थितिप्रकटनादृतकार्श्यभुग्ना।
नासाग्रलग्नकरसूचितभूरिचिन्ता, कल्याणपूर्तिरपयाति हृदो न मूर्तिः॥

२

सा संवृनातिलघुना स्वविनिर्मितेन, वस्त्रेण हस्तधृतसंयमसूचिदण्डा।
यान्ती निरन्तरपदक्रमदर्शनीया, स्फूर्ति परामुपगता मम कापि मूर्तिः॥

## श्रीगान्धिनं प्रति

३

अन्ये जना बहु विलप्य, विरुद्य भूयो, दुष्टं विनिन्द्य, करुणार्द्रहृदो भवेयुः।
त्वन्मात्रपुत्रविधृता नवराज्यदुःस्था, माता तु हन्त कतमां गतिमभ्युपैतु॥

४

चिरं यस्या बन्धानिह दृढतरांस्तान् शिथिलयन्,
धृतः कारागारेष्वपि न समहासीद् व्रतविधीन्।
स्वकीयेनाकस्माद विषमविरहेणाद्य विकलां
गां धीमान् गान्धी किमवति न गां धीरयति किम्॥

५

यथाभूतत्प्रेम्णा ध्रुवमधिगता मातृपदवी,
यया चास्मिन् कालेऽप्यकलि महिमा भूरि भुवने।
अहो तामेवाद्य स्वविरहकृशां भारतभुवं
स गाँ धीमान् गान्धी किमवति न गाँ धीरयति किम्॥

६

अहिंसा-राकेन्दो, शमविशदविन्दो, शुभमते,
दयासिन्धो हिन्दोऽखिलभुवनबन्धो वरयते।
गुरो नेतर्मातः पितरथ सुहृत्सर्वजगत—,
स्त्वदस्थनां भस्मेदं छुरयति धरा सर्वंवपुषि॥

७

अनित्येऽस्मिंल्लोके किमिति महदायुष्यकलनं
वृथारागद्वेषात्मककलुषकालुष्यवलनम् ।
इतीव त्वच्छोकान्मनसि परनिर्वेदमयिता
महात्मंस्तीर्थानि प्रति विचलिता भारतधरा ॥

८

स्वकीयैर्वाष्पौघैरिव नवनवैस्तीर्थसलिलै—
स्त्वदङ्गानां भस्म च्छुरयति समस्तेऽपि वपुषि ।
क्रियाणां संहारादियमनुमिता निःस्पृहमना
इतीयं मुक्तापि प्रविचरति योगं सुविषमम् ॥

९

त्वमेवास्या ध्येयं मनसि किल गेयं च वचसा,
वियोगार्तामिनां त्वमपि मनुषे योगनिरताम् ।
वियोगात्सम्मोहं मुहुरियमहो ! मोहन, गता,
गतप्रायप्राणां सकरुणमिमां पश्यसि न किम् ॥

**भारतं प्रति**

१०

यस्ते दृढान् बन्धनशृङ्खलांस्तान् सत्याग्रहै निर्गलितानकार्षीत् ।
अत्याहितं तस्य महात्मनोऽद्य, हा मातृभूमे, हतभाग्यभूमे ॥

११

यं विश्वशान्तेः समुपासकं त्वं प्रसूय सत्पुत्रमभूः सगर्वा ।
वृत्तं हहा, तस्य किमप्यवाच्यं, हा मातृभूमे, हतभाग्यभूमे ॥

१२

येन स्वकीयं धनमिन्धनौघं विधाय कायं च घृतं त्वदर्थम् ।
अयाजि मन्त्रैर्मनसा प्रणीतैः स्वराज्यदस्ते स गतो हहास्तम् ॥

१३

सौभाग्याङ्कुरिता, व्रतद्विदर्जिताः, सद्योजनापत्रिता,
मन्त्रित्वादितताः स्वराज्यसुमिता, ऐक्यद्रुमालम्बिताः ।
मूले दूरविसारिणि प्रगुणिते गूढे दृढे संस्थिता,
हाहा मत्तगजेन दर्शितफला आशालताः खण्डिताः ॥

१४

हतभाग्य न भारत त्वया सुकृतं किञ्चन तादृशं कृतम् ।
सुचिरस्थिरता यथा भवेत्तव सौख्यस्य किलान्यराष्ट्रवत् ॥

१५

तुलनाविषयेऽत्र मौनभाग्, अभवद् वाक्पतिरप्यहो ! तव ।
नररत्नमजीजनो यतस्त्रिजगद्ध्वान्तनिवारि गान्धिनम् ॥

१६

नररत्नमिति प्रभाषिता भषिता नूनमसौ न भाषते ।
जलधेस्तदुदेति किन्त्वयं स्वयमासीद् गुणरत्नसागरः ॥

१७

अथवा गुणसागरः कथं कथनीयः स महोदयो मया ।
अभिवर्षति यः पयोदवत्तरमं शान्तिकरं रसामृतम् ॥

१८

स पयोदवदप्यहो न मे मनसेऽरोचत नित्यरोचनः ।
इति मोहनदासगान्धिनं कथयन्ती स्थगितैव भारती ॥

१९

अहहा स महामना मनागपि रोषं नहि घातकेऽदधात् ।
व्यदधादभिवादनं ततः प्यदधान्नेत्रयुगं सुधामुचम् ॥

२०

अयि भारत मन्महे महे समुपस्थायिनि दुःखमागतम् ।
पिहिते यदि तेन लोचने ध्रुवमन्धत्वमिह त्वयाऽऽश्रितम् ॥

२१

अथवा हतभाग्य भञ्जिता रिपुणान्धस्य तवाद्य यष्टिका ।
अहहा ! स्खलता पदे पदे कलिता स्यादुपहास्यता त्वया ॥

**मानसं प्रति**

२२

अयि निर्मम, मानस त्वया कथमेषार्तिरपि प्रसह्यते ।
अपि भारतवन्न किं द्विधा समयेऽस्मिन् विषमे विभज्यते ॥

२३

इह देशविभाजनक्रियां किल निन्दन्ति मुधा बुधाबुधाः।
इयमस्ति किल प्रतिक्रिया बहुशोकार्दयितव्यचेतसः॥

२४

विषमामिह दारुणां दशामगमिष्यद्धरणी विदीर्णहृत्।
यदि दिव्यचिकित्सकैः सुरैरभविष्यन्न पुरा द्विधाकृतम्॥

२५

अथवा निजभाव्यनर्थतः स्फुटितं मातृहृदेष योजयन्।
पिशुनैरसहिष्णुभिर्जनैर्निजनाशाय रुषा विनाशितः॥

२६

जनको गुरुरेकनायकः प्रियमित्रं जगतोऽखिलस्य च।
करुणाविमुखेन मृत्युना हरतैनं वद किं न नो हृतम्॥

२७

अयि भारतभूमिके त्वया भुवनालङ्कृतिभूतपुत्रया।
किमिमेऽतिकलङ्किनः सुता जनिता जातियशोविदूषकाः॥

## हा हा महात्मा हतः!

२८

यस्यात्मा प्रकृतेः समीक्ष्य विकृतीरप्यास निर्विक्रियः,
पङ्ग्वन्धाविव यस्य हिन्दुयवनौ कार्येषु युक्तौ मतौ।
सानुस्वारसकारिणश्च सगरान्यस्तेजसाऽधारयत्
सोऽयं सांख्यविरोधकोऽद्य कपिलो हा हा महात्मा हतः॥

२९

मिथ्याज्ञानमिदं मियो जनयते द्वेषादिदोषान्नृणां,
दोषोत्था विविधा प्रवृत्तिरिह तान् युङ्क्ते पुनर्जन्मना।
दुःखं जन्मनि जन्मनीति निदिशन् सत्याग्रहं गोतमो
नो वैशेषिकदर्शनान्यभिलषन् हा हा महात्मा हतः॥

३०

मैत्रीं धारय पुण्यशालिनि जने पापेऽत्युपेक्षां व्रजे,--
दु:खार्ते करुणां श्रयस्व मुदितां सौख्यास्पदे चावह ।
ईर्ष्याद्वेषसखीं परित्यज घृणामेतामसूयामिति
प्रोञ्छंश्चित्तमलं पतञ्जलिरयं हा हा महात्मा हतः ॥

३१

आसीदेव सहैतुकं तदखिलं यद्यत्प्रतिज्ञातवान्,
आत्मोदाहरणेन चाप्युपनतं सिद्धान्तयामास तत् ।
पश्चाङ्गैस्तु परार्थकामनुमितिं प्रत्यक्षवद् दर्शयन्,
सर्वन्यायकरः कणाद इतरो हा हा महात्मा हतः ॥

३२

यस्याभूद विविधेषु कर्मसु रते कर्तव्यपूर्वं फलं,
यश्चासीदिह विश्वरूपकलने रात्रिन्दिवं तन्मनाः ।
देवानामिह का कथा ? नहि नृणां यः सोढवान् विग्रहं,
सोऽयं कोऽपि नवोऽद्य जैमिनिमुनिर्हा हा महात्मा हतः ॥

३३

सत्यं ब्रह्म तदेकमेव बहुभिः संस्मर्यते नामभि--,
स्तस्माज्जातमिदं च तेन ध्रियते तस्मिन्निदं लीयते ।
इत्थं सत्यवतीसुतेन धरणेरुद्धारगीर्भाषिता,
येन, व्यासमुनिः स भारतकरो हा हा महात्मा हतः ॥

३४

वृद्धिं वाञ्छति यः समस्तभुवनैश्वर्यादिषु प्रोज्ज्वलां,
हिन्दोर्वा यवनस्य काङ्क्षति गुणं यश्चात्र नानाविधम् ।
तुल्यं चेच्छति सम्प्रसारणमयं यूनो मघोनः शुनैः
सोऽयं पाणिनिरिष्टभूमिसखितो हा हा महात्मा हतः ॥

३५

ख्याता यस्य जगत्सु कीर्तिरमला, वृत्तिस्तथा विश्रुता,
विश्वस्मिन्नपि जानकीकुशलवान् यस्त्रातवान् भारते ।
निर्दोषां मिथिलाभुवं च विकलां योऽसान्त्वयत्सर्वथा,
बाल्मीकिः स च रामनाम कथयन् हा हा महात्मा हतः ॥

# श्रीगान्धिविचारदोहनम्

## सत्यं ब्रह्म

ब्रह्म सत्यमिति श्रीमद्वेदान्ताचार्यसम्मतम् ।
सत्यं ब्रह्मेति च मतं श्रीमद्गान्धिमहात्मनः ॥१
ब्रह्म सत्यमिति प्रोक्ते जगन्मिथ्येति सिद्ध्यति ।
सत्यं ब्रह्मेति तूदीर्णे स्यादसत्यमनीश्वरः ॥२
जगन्मिथ्येति कथनात्प्रथन्ते भूरि दुष्प्रथाः ।
लोके जगत्प्रधानानां जीवानां बहुसंख्यया ॥३
अन्नं प्राणा मनो बुद्धिरानन्दश्चेति पञ्चभिः ।
कोषैर्भिन्नेषु जीवेषु भूयो भेदप्रकल्पनम् ॥४
आस्तां विश्वस्य रक्षार्थमेतत्कोषप्रकल्पनम् ।
समाजस्य व्यवस्थार्थं वर्णभेदश्च तादृशः ॥५
अथानन्दमये कोषे मोक्षधर्मार्थकामजः ।
ब्रह्मक्षत्रियविट्शूद्रवर्णभेदः प्रकल्प्यते ॥६
नैतावता तु तुष्यन्ति जगन्मिथ्यात्वदर्शिनः ।
कांश्चिदार्यान् प्रभाषन्तेऽनार्यांश्चान्यानकारणम् ॥७
आर्येष्वपि च पूज्यत्वतारतम्यं तु जन्मतः ।
साधयद्भिः समाजस्य व्यवस्था कलुषीकृता ॥८
जन्मतो ब्राह्मणत्वादि कर्म रक्षति भक्षति ।
इति श्रुतिस्मृतिप्रोक्तं सर्वमन्तरितं च तैः ॥९
ब्रह्म सत्यमिति ब्रह्म प्रेप्सुभिः सत्यमिष्यताम् ।
जगन्मिथ्येति जगतो भवर्तमिथ्यात्वमर्थ्यते ॥१०
व्यवहारेषु मिथ्यात्वं परमार्थे च सत्यता ।
इत्यस्याः कलुषभ्रान्तेर्वेदान्तवचनं पिता ॥११
नीरक्षीरविवेकस्य स्थाने तन्मिश्रणं श्रितम् ।
तुलायां परिमायां च जगन्मिथ्यात्वमादृतम् ॥१२

अद्यत्वे च यदुत्कोचकृष्णापणसमुद्भवः ।
जगन्मिथ्यात्वमेवैकं तत्र तत्र प्रयोजकम् ॥१३
वस्तुतो व्यवहाराणां परमार्थान्न भिन्नता ॥
इति प्रतीतिमाधातुं सत्यं ब्रह्मेति दर्शनम् ॥१४
ब्रह्म सत्यमिति ब्रह्मगतं सत्यत्वमुच्यते ।
सत्यं ब्रह्मेति सत्यस्य ब्रह्मत्वमभिधीयते ॥१५
ब्रह्मगामिनि सत्यत्वे ब्रह्मात्मैकत्वदर्शिनाम् ।
महात्मनामस्तु महान् विचाराचारयोर्ग्रहः ॥१६
संसारिणान्तु ब्रह्मात्मभेदाध्यासेन धावताम् ।
विचारमूढताव्यूढो भ्रष्टाचारः प्रवर्तते ॥१७
इति तेषामपि क्षेमं साधयन् भूतभावनः ।
मोहनं दासयन् ज्ञानं गान्धी युक्तमनूक्तवान् ॥१८
नायमात्मा प्रवचनैर्मेधाभिर्न बहुश्रुतैः ।
वृणुते तु यमेवैष तेन लभ्य इति श्रुतेः ॥१९
यमेव वृणुते काये वाचि चित्ते स ईश्वरः ।
सत्यनामा, स तेनैव लभ्यो नान्येन केनचित् ॥२०
तस्य सत्यस्य सिद्ध्यर्थं सत्यमेवास्ति साधनम् ।
साध्यसाधनभेदोत्था नात्र सास्ति कृतघ्नता ॥२२
कृतघ्नतैव सा नूनं कर्मभिः पावितान्तराः ।
ज्ञानमासाद्य कर्माणि त्यजन्ति च दहन्ति च ॥२२
ब्रह्मत्वे चास्य सत्यस्य साध्यसाधनरूपिणः ।
सर्वोऽप्यसत्यसन्तानो दुराचारः प्रलीयते ॥२३
सत्याग्रहमहिम्नैव प्रह्लादः सत्यदर्शनम् ।
प्राप यन्नरसिंहस्य साक्षात्कार उदीर्यते ॥२४
किंवा पुराणगाथानामुदाहरणमाद्रिये ।
सत्याग्रहोऽद्याप्यभवद् भारतस्य जयश्रिये ॥२५
विनैव रक्तसम्पातं विना चायुधतोलनम् ।
सत्याग्रहबलेनैव लब्धास्माभिः स्वतन्त्रता ॥२६

इत्थं साधनभूतस्य तस्य माहात्म्यमास्थितम् ।
अथ साध्यस्य विद्वद्भिराराध्यस्य तदुच्यते ॥२७
हिरण्मयेन पात्रेण सत्यस्यापिहित मुखम् ।
तत्त्वं पूषन्नपावृणु सत्यधर्माय दृष्टये ॥२८
यस्मादुपनिषत्तस्य सत्यस्येच्छति दर्शनम् ।
कायवाङ्मनसव्याप्तः पूषा सत्याग्रहः स्मृतः ॥२९
सत्यं ज्ञानमनन्तञ्च, शिवं सत्यञ्च सुन्दरम् ।
इत्यादावपि तस्यैव सत्यस्य स्तुतिरिष्यते ॥३०
ईष्टे सत्यं हि तत्कर्तुं यत्कर्तुं कोऽपि न क्षमः ।
तेनेशावास्यमेवेदं यत्किञ्चिज्जगतीगतम् ॥३१



# श्रीनेहरूचरितचर्चा

## श्रीमन्नेहरूचित्रपरिचय

अयं शान्तिप्रतीकेन कपोतेन समन्वितः।
शान्तिदूतो नेहरूर्नः श्रद्धाञ्जलिभिरर्चितः ॥१
हर्षमुद्रान्वितः श्रीमान् युक्तो विस्मयमुद्रया।
स्थितो विचारमुद्रायां निर्णीतिमुद्रयान्वितः ॥२

## किं कं प्रति ब्रूमहे

सृष्टस्त्वं विधिना नवेन विधिना तन्वा मनोज्ञोत्तमो,
वाचा वाक्यपतिरेव हन्त मनसा चन्द्रादपि प्रोज्ज्वलः।
देशस्यास्य च नेतृता त्वयि धृता, किन्त्वद्य तद्दुःस्थितौ,
आच्छिन्नोऽसि रुदत्सु सत्सु हहहा! किं कं प्रति ब्रूमहे ॥

## को भयस्यावकाशः ?

त्वयि विलसति चिन्ता भारतस्यास्य किन्ताः,
प्रमुखसचिव ! जाता लीनतां न प्रयाताः।
त्वयि खलु परदेशैराश्रितां राजनीतिं,
विदितवति च नोऽभूत् को भयस्यावकाशः?"

## आजौ कुतः संशयः ?

१

वाणीवाणनिवारस्तिाखिलविदेशीयक्षपाचारिणि
श्रोतुं तां जनकस्य भीरुसदृशीं वाचं न चापि क्षमे।
त्यक्त्वाऽऽनन्दगृहं तपस्विसहजां बृत्तिं दधानेऽधुना
धीरे वीरजवाहरे परिपतत्याजौ कुतः संशयः ॥

२

गुर्व्या वाग्गदया विदारितमहादुःशासनोरःस्थले
श्रीमन्मोहन–भङ्गभञ्जित–चलद्दुर्योधनोरुद्वये।
उद्विग्नं धृतराष्ट्रनन्दनशतं कुर्वत्यहो युक्तिभि–
र्धीरैर्धीवीरजवाहरे परितत्याजौ कुतः संशयः ॥

## नमः स्तान्नेतृजनगुरवे

नमः स्तान्नेतृजनगुरवे, जवाहरलालनेहरवे

१

स्वदेशस्याङ्गमङ्गं ते, समानं प्रेम यद्भजते ।

तदेतां ब्रह्मऋषितां ते मनोऽस्माकं परिष्वजते ।। नमः०

२

विदेशानामपि स्वान्ते, त्वयाऽऽरोप्यङ्कुरः शान्तेः ।

फलं तस्याक्षयं भूयात्, प्रतिष्ठा तेऽपि कल्पान्ते ।। नमः०

३

मिषन्तो नैकरूपं त्वां, न चित्रीयेमहि श्रीमन् !

समक्षं विश्वरूपं त्वां, यदा वीक्षामहे धीमन् ।। नमः०

४

स्मृतिः कीर्तिर्धृतिर्मेधा, क्षमा गीः श्रीश्च नारीणाम् ।

तदेदत्सप्तकं लज्जां, सदाऽजनयत्तवारीणाम् ।। नमः०

५

कुतश्चिज्जायते स्वर्णं, कुतश्चिच्चैष निकषाश्मा ।

परं तव वर्तते द्वेधा, गुणिन् गुणगौरवज्ञाऽऽत्मा ।। नमः०

६

क्वचित्स्याद्राजनैतिकता, क्वचिच्चैषास्तु भावुकता ।

क्वचित्स्याद्धन्त लेखकता, त्रयाणां त्वय्यथैकगता ।। नमः०

७

क्वचिद्वज्रात्कठोरस्त्वम्, क्वचित्त्वं कोमलः पुष्पात् ।

त्वदीयालौकिकत्वं नः, परिज्ञातं किलामुष्मात् ।। नमः०

८

न कनकं नाप्यहो कान्तां, त्यजन्त्येतेद्य सन्तोऽपि ।

त्वया श्रीरामवत्त्यक्त्वा, द्वयं तत्, स्वं स्वरारोपि ।। नमः०

९

त्वदीयोऽयं वियोगो नः, परं मर्माविधो जातः।
क्व यातो हिन्दुमुस्लिमोः, प्रियो भ्राता जगत्तातः ।। नमः०

१०

न भक्तस्त्वं भवाभवयोः, न भवतो देवदानवयोः।
परं भक्तस्त्वमेकोऽभूर्विभूमन् भूमिमानवयोः ।। नम०
नमः स्तान्नेतृजनगुरवे, जवाहरलालनेहरवे।

## उत्तराधिकारलेखः

मदीयदेशप्रजया मदीयैर्देशबन्धुभिः।
मयि प्रेम कृतं भूयो, भूयान् स्नेहः कृतो मयि ।।१
तस्य प्रेम्णोऽथवा स्नेहस्यैकमंशं लघोर्लघुम्।
अपि प्रत्युपकर्तुं मे शक्तिर्नास्ति कथञ्चन ।।२

वस्तुतः प्रेम तद्वस्तु, यस्य मूल्यं न विद्यते।
एतद्विनिमये लोके दातुं किञ्चिन्न युज्यते ।।३
अस्मिञ्जगति भूयांसोऽभवन्, मत्त्वेह यान् जनाः।
भद्रान्, महीयसो भव्यानाद्रियन्तार्ययंस्तथा ।।४

किन्तु सर्वे भारतीया लघवो गुरवस्तथा।
धनिनो निर्धनाः सर्व-विधाः स्निह्यन्ति ते मयि। ५
स्नेहस्य तस्य विषये मया वक्तुं न पार्यते।
अत एवास्मि तद्भारपराभूत इवावशः ।।६

आशासेऽहं जीवनस्य शेषेऽशे देशवासिनाम्।
सेवां कुर्याञ्च तत्प्रेम-पात्रतां बिभृयामहम् ।।७
असंख्यानां च सुहृदामपाराणां च सार्थिनाम्।
ममोपरि महीयांस उपकारास्तु जाग्रति ।।८

महत्तमेषु कार्येषु वयमन्योन्यसङ्गताः ।
सम्मिल्याकुर्म कर्माणि सफलासफलान्यपि ।।९
वयं सिद्धावसिद्धौ च समानेनैव चेतसा ।
सुखान्यपि च दुःखानि सहमाना अभूम वै ।।१०

इच्छामि मनसेच्छामि—मृते मयि तु धार्मिकी ।
रूढिः कापि न कर्तव्या, नाहं मन्ये किलेदृशीम् ।।११
रूढिं च केवलां मत्वा तया कृत्वात्मबन्धनम् ।
आत्मवञ्चनमेवाहं मन्ये कुर्वदिदं जगत् ।।१२

यदा म्रियेय, वाञ्छामि तदाऽहं दाहसंस्क्रियाम् ।
विदेशे चेन् म्रियेयाहं, तत्र दाहं तदाऽऽर्थये ।।१३
अस्थिभस्म प्रहेयं मे गङ्गायां मुष्टिसम्मितम् ।
विशिष्टस्तस्य शिष्टोंऽशः क्वनेय इति वच्म्यहम् ।।१४

ममास्थिभस्मनः कश्चिद् भागः कुत्रापि कर्हिचित् ।
कस्याञ्चनाप्यवस्थायामवशेष्य न रक्ष्यताम् ।।१५
गङ्गायामस्थिनिक्षेपकामनायां ममात्मनः ।
न कश्चिद् धार्मिको दृष्टि-कोणः केनचिदूह्यताम् ।।१६

नास्त्यत्र विषये कापि धार्मिकी मम भावना ।
शैशवादेव सङ्गो मे गङ्गाञ्च यमुनां प्रति ।।१७
यथा यथा वर्धितोऽहं स सङ्गो मम वर्धितः ।
दृष्टे ऋतुपरीवृत्त्या तद्रूपे परिवर्तिते ।।१८

वार्ताश्च काश्चन मया स्मृतास्ता इतिहासगाः ।
परम्परागता गाथाः पौराणिक्योऽथ गीतगाः ।।१९
या युगानुयुगादाभ्यां सहयुक्ताः सुविश्रुताः ।
मिश्रिता अनयोर्धारावाहिन्तर्स्मिश्च वारिणि ।।२०

गङ्गा पुनर्भारतस्य विशेषेणोदिता नदी।
इयं वै भारतीयाया जनतायाः प्रिया मता ॥२१॥
आलिङ्गितेयं जातीयस्मृतिभिर्भारतस्य यत्।
आशाभिर्भीतिभिः श्रेयोगीतिभिश्च जयाजयैः ॥२२॥

गङ्गेयं भारतीयायाः सभ्यतायाः प्रतीकताम्।
चिह्नतां च दधानास्ति प्राचीनादेव कालतः ॥२३॥
सदा परीवर्तमाना, वहमाना सदाप्यहो।
सेयं गङ्गा सैव गङ्गा प्राचीनापि नवा नवा ॥२४॥

सा स्मारयति शृङ्गाणि हिमालयमहीभृतः।
हिमावृतानि, येष्वास्ते मम प्रीतिरनारतम् ॥२५॥
तस्याधस्ताच्च विततान्युर्वराणि स्थलान्यपि।
कुर्वतो यत्र कर्माणि व्यतीतं मम जीवनम् ॥२६॥

गङ्गामिमामहं प्रातःकालिके महसि स्फुटम्।
स्मयमानामुच्छलन्तीं कूर्दन्तीमप्यवैक्षिषि ॥२७॥
पुनश्च सायङ्कालिक्यां छायायामुन्मनायिताम्।
कृष्णोत्तरीयाच्छन्नां च सरहस्यामिवाद्भुताम् ॥२८॥

शीतकाले सङ्कुचन्तीं वहन्तीश्च शनैः शनैः।
काञ्चिन्मनोरमां धारामिमामालोकयं मुहुः ॥२९॥
वर्षास्वेतामपश्यञ्च विततं बिभ्रतीमुरः।
तर्जयन्तीञ्च गर्जन्तीं विधातुं सागरक्षयम् ॥३०॥

इयं गङ्गा भारतस्य प्राचीनत्वप्रमापकम्।
चिह्नं मदग्रे जागर्ति त्रैकालिक्याः स्मृतेरपि ॥३१॥
या स्मृतिर्वहमानाऽऽगाद् वर्तमानदिनावधि।
या च यास्यति धावन्ती भविष्यद्भव्यसागरम् ॥३२॥

मया नाम परित्यक्ताः स्युः स्वकीयाः परम्पराः।
रीतयो रूढयश्चैव, तथा वाञ्छामि चाप्यहम् ॥३३॥

यदिदं भारतं वर्षं भञ्जयेद्शृङ्खला इमाः ।
याभिर्निबद्धमस्तीदं, यास्तं रुन्धन्ति वर्धनात् ॥३४॥

याश्च देशेऽत्र वसतां मिथो भेदं प्रकुर्वते ।
असंख्यानथ या लोकान्निगृह्य स्थापयन्ति च ॥३५॥

वाञ्छामि नाम तदिदं सर्वं यद्यपि चेतसा ।
सर्वथा तु न वाञ्छामि पृथग्भावं पुरातनात् ॥३६॥

अस्याश्चिन्तास्ति भव्याया उत्तराधिकृतेर्मम ।
याऽऽसीदस्माकमस्तीह भविष्यति च याऽनिशम् ॥३७॥

इदञ्च सम्यग्जानामि—अहमप्यस्मदोघवत् ।
एकोऽस्मि वलयस्तस्याः शृङ्खलायाः खलु स्फुटम् ॥३८॥

या शृङ्खला क्वचिज्जातु न भग्ना नापि भङ्क्ष्यते ।
यस्याः परम्परा हिन्दुस्थानातीतात् प्रवर्तते ॥३९॥

इमां परम्परां जातु नाहं भङ्क्तुमपि क्षमः ।
अपारमादरं चित्ते दधाम्यस्याः कृते यतः ॥४०॥

अस्याश्च प्रेरणां नव्यां, भव्यं विन्दामि साहसम् ।
दिव्यश्चास्या लभे धैर्यं स्तुत्यश्चोत्साहमात्मनि ॥४१॥

अस्याः स्वकीयाकाङ्क्षायाः पुष्टये प्रार्थयाम्यहम् ।
संस्कृत्यै भारतीयायै श्रद्धाञ्जलिमिहार्पयन् ॥४२॥

मुष्टिमात्रं भस्म मम प्रयागे क्षिप्यतां, यथा ।
तन्महासागरं यायाद् हिन्दुस्थानपरिष्वजम् ॥४३॥

मद्भस्मनस्तु शेषोंऽश क्व नेय इति वस्तुनि ।
इच्छाम्येतद् वायुयानेनोच्चैर्नीत्वा विकीर्यताम् ॥४४॥

तेषु क्षेत्रेषु येष्वेते कुर्वन्ति कृषकाः श्रमम् ।
यथा तद्भस्म मृत्स्नायां भारतस्याङ्गतां व्रजेत् ॥४५॥

## काश्मीरिकं कुलम्

काश्मीरिकाणां विप्राणां राजकौलो महामतिः।
संस्कृते पारसीके च साहित्येऽभूद् विदांवरः॥१
तस्य भाषाद्वयेऽन्यूनानधिकां योग्यतां जनः।
सानन्दञ्च सहाश्चर्यं प्राशंसत्प्रेमपूरितः॥२

मृतेऽत्ररङ्गजीवे च 'फर्रुखसियर' नामकः।
जगाम दिल्लीभूपालः काश्मीरान् स यदृच्छया॥३
काश्मीरिकाणां प्राज्ञानां श्लाघायां बहुशः श्रुतम्।
राजकौलं म्लेच्छराजो द्रष्टुमभ्यलषच्चिरम्॥४

तत्र चैनं महाप्राज्ञं वीक्ष्यामन्त्रयदादरात्।
सकुटुम्बं समायातं चैनं दिल्ल्यामवासयत्॥५
अनेन गुरुणाऽदूरवर्तिना स सुरेन्द्रवत्।
महिमानमधाच्चित्ते महान्तं यवनेश्वरः॥६

अस्मै यद्भवनं या च भूमिसम्पत्तिरर्पिता।
अभवत् किल कालिन्दीकुल्याकूलेऽत्र तद्द्वयम्॥७
कुल्यां 'नेहर' इत्याहुर्नीरहारितया बुधाः।
तत्कूले निवसन्तं च 'नेहरू'रिति ते पुनः॥८

जाते मुगलराजानामथानुक्रमिके क्षये।
नेहरूरपि सम्पत्तेः क्षयेनासीदुदासितः॥९
अथास्य वंशेऽभूल्लक्ष्मीनारायण इति द्विजः।
कम्पनीराज्यकाले यो वाक्कीलोऽभवदग्रिमः॥१०

तस्य सूनुरभूत्स्वङ्गो गङ्गाधर इति श्रुतः।
योऽभवद् विप्लवात्पूर्वं 'कोटपाल'-पदे स्थितः॥११
चतुस्त्रिंशद्वत्सरायुर्दैवं यदसौ मृतः।
नेहरूपरिवारस्य व्यवस्था तेन दुःस्थिना॥१२

मोतीलालाग्निगर्भाऽभूदरणिर्महिलामणिः ।
श्रीगङ्गाधरभार्या सा देवरद्ववरक्षिता ॥१३
अथ दिल्लीं परित्यज्य यत्रतत्रापि गच्छताम् ।
मध्येऽयं परिवारोऽगादागरां जीविकाऽऽदरात् ॥१४

तत्रैवेयं प्रसुषुवे प्रसूषु परमोत्तमा ।
मोतीलालाभिधं पुत्रं रवीन्द्राविर्भवे दिने ॥१५
मोतीलालपितृव्यौ तौ यामुदारपरम्पराम् ।
मुदामवापतुस्तत्र शेषोऽप्येषोऽस्तु शेषवाक ॥१६

तयोर्वंशोधरो न्यायविभागे भृतकोऽभवत् ।
नन्दलालस्तु खेतड्या राज्ये मन्त्रित्वमादधात् ॥१७
पश्चादयं न्यायधाराध्ययनेनातिदक्षताम् ।
अवाप्य वाक्कीलवृत्तिमागरामागतः श्रितः ॥१८

मोतीलालोऽप्यनेनैव संवसन् साधु पालितः ।
बन्धुप्रेम्णा, पितृप्रेम्णा, वात्सल्येन च लालितः ॥१९
माता तु मोतीलालस्य लालने मृदुमानसा ।
कुटुम्बशासने चाभूदभूतप्रभुतामयी ॥२०

उच्चन्यायालयोऽथागादागरातः प्रयागकम् ।
नेहरूपरिवारोऽपि तेन तत्रागमन्मुदा ॥२१
मोतीलालः कर्णपुरे प्रयागे च यथाक्रमम् ।
प्राप्तः परावरां शिक्षां यावनीमाङ्गलीमपि ॥२२

प्रवृत्तेर्बुद्धिवर्तिन्यास्तस्यारोचत कायिकी ।
यत्र क्रीडां तथा पीडां जनयन्ति जना मिथः ॥२३
प्रखरेण स्वभावेन धृष्टोऽप्येषाङ्ग्लसंविदाम् ।
प्राध्यापकानामगमत् प्रियतां रक्षणीयताम् ॥२४

सुधीरयं कदाचिच्च सम्यगस्यस्य पाठितम् ।
अधिकक्षं शिक्षकाणां समक्षे दाक्ष्यमाश्रयत् ॥२५
परीक्षा उत्तरन्, व्यानङ् नैष काञ्चिद्विशिष्टताम् ।
न च स्नातककक्षायां साफल्यं प्राप चापलात् ॥२६

उच्चन्यायालयीये तु वाक्कीलानां परीक्षणे ।
प्राथम्यं प्राप्य सौवर्णं लेभे स पदकं युवा ॥२७
ततः कर्णपुरे न्यायकार्यमेषोऽन्वचालयत् ।
प्राकाशयत्स्वसाफल्यं मनःपद्मं व्यकासयत् ॥२८

मल्लयुद्धे रुचिस्तस्य तत्र सत्यमतृत्यत ।
इदं हि नगरं मल्लयुद्धे ख्यातिमशिश्रियत् ॥२९
वर्षत्रयात्परं कर्णपुरं त्यक्त्वा प्रयागगः ।
उचचन्यायलये कार्यमकरोदेष तत्परः ॥३०

अकस्मात्तु पितृव्यस्य नन्दलालस्य मृत्युना ।
मोतीलालमनो दूनं, कस्तिष्ठेदाश्रयं विना ॥३१
कुटुम्बभृतिभारन्तु दुर्धरं दुर्बलैर्नृभिः ।
उत्थापयितुमव्यग्रो व्यग्रतां तां जवाज्जहौ ॥३२

अथास्य कार्यलग्नस्य भूयः कार्यमुपस्थितम् ।
कीर्त्या सह श्रिया चास्य भवनं समधिष्ठितम् ॥३३
खलेकपोतन्यायेन कार्याणां समुपस्थितेः ।
मोतीलालः परार्थेभ्यः कार्येभ्योऽभूद्विमोचितः ॥३४

अथ स्वपौरुषेणैव न परानुग्रहेण सः ।
आरुरोहाभ्युदयदां तां सोपानपरम्पराम् ॥३५
सन्नप्यसौ राष्ट्रवादी, गुणग्राहितया मनाक् ।
दधावाङ्ग्लेषु सम्मानं भारतीयेषु चारुचिम् ॥३६

स राजनैतिकान् पुंसो वावदूकान् स्म पश्यति ।
अथवा सर्वतो भ्रष्टानेतत्क्षेत्रमुपाश्रिताम् ॥३७
वस्तुतो वचनेनैव विचारान् राजनैतिकः ।
सङ्क्रामयति, बुद्ध्या तु सर्वतो भ्रश्यतेऽत्र च सः ॥३८

इत्यजानन् अमन्वानो, वा स आन्दोलने रतान् ।
अवज्ञयेव निध्यायन् न स्म तान् समवेक्षते ॥३९
स्वार्थेषु मोतीलालस्य निरतस्याथ सिद्धयः ।
परितः समुपेतास्तं सुसम्पन्नं तु चक्रिरे ॥४०

आयानुरूपो गृहिणो व्ययो भवति सन्ततम् ।
इत्याये परिवृद्धेऽस्य व्ययोऽपि परिवर्द्धितः ॥४१
भारतीयः क्रमो यातः, पाश्चात्यो जीवनक्रमः ।
आयातस्तस्य सदने, वदने, हृदयेऽपि च ॥४२

धर्मपत्नी तु तस्याऽऽसीद् भारताम्बा स्वरूपिणी ।
अतः स्वरूपरानीति दिव्यामाख्यामधादसौ ॥४३
तस्य सूनुरभूत्तस्यां 'जवाहरलाल' नामकः ।
अपेतं देशस्वातन्त्र्यं यो जवेनाऽऽहरत्सुधीः ॥४४

पितुः पाश्चात्यसंस्कारान् मातुस्तान् भारतीयकान् ।
आदाय नेहरूरासीद् विश्वविश्वस्य नायकः ॥४५
'कृष्णा' विजयलक्ष्मी'श्चास्याभूताममुजे ततः ।
तनूजाऽभूद् 'इन्दिरा' च 'राजीव'-'सञ्जय' प्रसूः ॥४६

सकलगुणसमुद्रे मातृभूस्नेहमुद्रे,
द्रुतमनसि गभीरे नेहरूनाम्नि वीरे ।
गतिवति परलोकं शोकसम्मग्नलोकं,
विचलति शुभरीतिः कम्पते राजनीतिः ॥

इत उत उपयातोऽयं समायालि देशं,
परमिह निजदेवं नेहरूं नावलोक्य ।
अथ किमु करणीयं ? कोऽद्य पन्थाः प्रशस्य,
इति बहुविधशङ्काः वै समाधत्त एकः ॥

तव विरहविदूना मातृभू रद्य चीनै—
स्तदनुगमननीचैः पाकदेश्यैश्च नीचैः ।
नमयितुमिव सर्वाभ्योऽस्ति दिग्भ्यः परीता,
कथय, कथमिवास्याः क्लेशशान्तिर्विधेया ॥

नव-भरतभुवोऽस्याः सौववश्यं गताया,
विषयमयमिहागाद्, गान्धिवत् सत्कथायाः ।
अभवदिव च वर्षे षोडशेऽस्मिन् व्यतीते,
निखिलभविकमूर्ति——प्रस्तुताध्यायपूर्तिः ॥

हृदि हृदि जनतानां देश्य–वैदेशिकीनाम्,
स्थितिमधिगतवांस्त्वं प्रेरणां देहि तासाम्।
निजनिजमधिकारं पालयन् वै परेषा—
मपि हित मवधत्तां पञ्चशीलेन लोकः॥

बहव इह गतास्तेऽस्तं च भव्या विशेषाः,
नव भरतभुवो येऽस्तित्व एकाङ्कमासन्।
सुचिरमिदमचिन्त्यं चाभवद्यत् 'स्वदेशे,
न स वसति विजेता, साम्प्रतं लोकनेता'॥

वहति भरतभूमिस्तद्वियोगेन जाताम्,
स्थितिमिह सुचिरादप्यञ्जसा नानुकूलाम्।
निजनवयतनानां साधने साधु लग्ना–
पिच न सफलतायाः पार्श्वमायाति भव्या॥

अपि नवरचनायां तत्परः सान्त्वदानाद्,
विचरति परदेशे चात्मदेशे सुमन्त्री।
परमिह परितस्तं कार्यसम्मर्द एषः,
स्थगयति सहसार्यानार्यसङ्घर्षजातः॥

बहुजनपरिवीतोऽप्यद्य शास्त्री मनस्वी,
समनुभवति चित्ते कश्चिदेकाकिभावम्।
गतवति सति गान्धिन्यास्तयादृक् स तादृक्,
शुगभिगत इहायं नैव मुञ्चत्युपायम्॥



# श्रीशास्त्रिचरितचर्चा

**अस्माकं नूतनः प्रधानमन्त्री भागवतः पुरुषः**

"अस्य व्यक्तित्वमत्यन्तं मोहकं मधुरं भृशम् ।
सात्त्विकं परमं नम्रं सरलं चाप्यकृत्रिमम् ।।
मस्तिष्कं सद्विचाराणां सदनं हृदय पुनः ।
दीनान् प्रति दयाभावेनाप्लुतं विह्वलं तथा ।।
विश्वनाथाद् भगवतो वाराणस्यां स्वपत्तने ।
आजीवनं प्रेरणास्ताः प्राप्तवानेष पावनीः ।।
धेन्वा समोऽसौ सारल्ये, चरित्रञ्चास्य निर्मलम् ।
स्वचरित्रबलेनायं सत्याग्रहदृढग्रहः ।।"

भगवान् निजकार्याणि सृजत्यत्र रहस्यवत् ।
तस्य सृष्टौ संघटन्ते चमत्कारा महोज्ज्वलाः ।।१।।
प्रत्येकं प्राणिनो जन्ममृत्युकालः सुनिश्चितः ।
परं स एव जानीते कालं कलयतां वरः ।।२।।
जरामृत्युवशे चास्मिन् मर्त्यलोके निवासिनः ।
जीवामः केवलं तस्य कृपयाऽकृपणेहया ।।३।।
भगवान् नेहरूं तस्य कार्ये पूर्णे समाह्वयत् ।
तस्य चाकस्मिको मृत्युरभूच्छोकभरावहः ।।४।।
स सुषुप्तेः समुत्थायारुणोदयसमादरम् ।
गायत्रीमन्त्रजापेनाकरोत्, पुष्पाण्यलोकयत् ।।५।।
चटकानां कलरवं चाशृणोदधिवाटिकम् ।
प्राभातिकानि कृत्यानि यथाविधि समाचरत् ।।६।।
ततः स्वपुत्र्या संक्लृप्तकल्यवर्तजिघृक्षया ।
गच्छतस्तस्य हृन्नाडी स्फुटता, चेतना हृता ।।७।।
अन्तिमाह्वानपर्यन्तं प्रधानामात्यतां श्रितः ।
असारात्सोऽथ संसारात्प्रस्थानं कृतवान् महत् ।।८।।

ईर्ष्या किलेदृशे मृत्यौ जायते चिरजीविनाम् ।
येन विश्वं शुचाच्छादि, दिल्लीभूमिरकम्पि च ।।९।।
विश्वस्य विश्वदेशेभ्यो विशिष्टा व्यक्तयः किल ।
शान्तिदूतस्य तस्यासन् सम्मानार्थमिहागताः ।।१०।।
तस्य चान्त्येष्टिसंस्कारः साक्षाल्लक्षैरलक्ष्यत ।
संदृश्यदूरभाषेणान्यत्रापि जनकोटिभिः ।।११।।
तत्समाधिस्थलं नाम्ना शान्तिघट्ट इतीरितम् ।
तद्युक्तमेव, लोकानां शान्तिं घट्टयतादयम् ।।१२।।
नैव नेहरुणा कश्चिदुत्तराधिकृतः कृतः ।
परं तद्धृदये शान्तो दान्तः कोऽप्यकरोत्पदम् ।।१३।।
प्रधानमन्त्रिणां कश्चित् राष्ट्रियाऽसौ महासभा ।
वरिष्यतीति तस्यासीद् ध्रुवा नीतिर्मनीषिणः ।।१४।।
गतेभ्यो दशवर्षेभ्यो राजनैतिकभूमिषु ।
उत्तराधिकृतेः प्रश्नश्चर्चितो भूयभूद् बुधैः ।।१५।।
विषये चात्र बहुलान्यनुमानान्यकल्पयन् ।
अनेकासां सुयोग्यानां व्यक्तीनां नाम चागृणन् ।।१६।।
वैदेशिकैस्तथा विश्वमुद्रणेष्वधिकारिभिः ।
रुचिरत्र विशेषेण दर्शिता पक्षपातिभिः ।।१७
श्रीनेहरूश्च बहुधा पृष्टो मुद्रणयन्त्रिभिः ।
परं स कस्यचिन्नाम कदाचिन्नोदचारयत् ।।१८
उदचीचरदेतावद् यदहं निजपुत्रिकाम् ।
प्रतिष्ठापयितुं नेहे प्रधानामात्यविष्टरे ।।१९
इन्दिरापीदमाभाष्य लोकभ्रान्तिं न्यवारयत् ।
यदस्मि पितुराज्ञायाः स्वेच्छायाश्च वशंवदा ।।२०
तर्हि प्रधानमन्त्री स्यात्को नु नेहर्वनन्तरम् ।
इति चिन्ता समग्रस्य लोकस्याजनि तापिनी ।।२१
सहसा निधनं तस्याकरोद्विश्वं तु निर्धनम् ।
मयीमासे सप्तविंशे दिनाङ्के दिनलाञ्छने ।।२२

जनताया जनः कश्चित्पदं तस्यास्य मन्त्रिणः ।
सम्भालयितुमत्राग्रे समायातोऽस्त्यतर्कितः ॥२३
यन्नाभूत्कल्पितं लोकैर्यन्नाभूच्चिन्तितं जनैः ।
तदकस्मात्तु घटितं संवृत्तं सहसैव तत् ॥२४

नाप्रसिद्धो न प्रसिद्धः शास्त्री लालबहादुरः ।
नायं नेहरुवच्छिक्षामाङ्ग्लदेशे हि लब्धवान् ॥२५
न प्राड्विवाको जातोऽयं नापि श्रीगान्धिवद् गतः ।
विदेशान् न्यायविद्यायाः शिक्षितुं च वरस्तरम् ॥२६

लोकवल्लभकांग्रेसाध्यक्षश्रीकामराजवत् ।
जनसाधारणावस्थामध्यादेवायमुत्थितः ॥२७
नायं वक्ताऽऽङ्लभाषाया नापि नेता महानयम् ।
तथापि नररत्नं सद् भविता जनताप्रियः ॥२८

मा भून्नेहरुवन्नाम व्यक्तित्वं तस्य तद् विराट् ।
गान्धिनेहरुमार्गन्तु नीत्वा गन्तुमयं क्षमः ॥२९
यथा हनूमान् रामस्याभवदेकान्तसेवकः ।
श्रीशास्त्र्यपि तथा गान्धिनेहर्वोरनुगो हृदा ॥३०

विद्यापीठे तु काशीस्थे स्नातकत्वं प्रपद्य सः ।
तस्या राष्ट्रियसंस्थायाः शास्त्रीति पदवीं श्रितः ॥३१
विंशत्रिशाब्दयोरन्तर्दशकेऽसौ महात्मनः ।
श्रीगान्धिनः सुसम्पर्कादभूदसहयोगभाक् ॥३२

अस्य व्यक्तित्वमत्यन्तं मोहकं मधुरं भृशम् ।
सात्त्विकं परमं नम्रं सरलं चाप्यकृत्रिमम् ॥३३
मस्तिष्कं सद्विचाराणां सदनं, हृदयं पुनः ।
दीनान् प्रति दयाभावेनाप्लुतं विह्वलं तथा ॥३४

विश्वनाथाद् भगवतो वाराणस्यां स्वपत्तने ।
आजीवनं प्रेरणास्ताः प्राप्तवानेष पावनीः ॥३५
सहस्रकृत्वो गङ्गायां स्नात्वा पावनतां गतः ।
रक्षित्वाऽयं कायशुद्धिमधाज्जीवनमुज्ज्वलम् ॥३६

धेन्वा समोऽसौ सारल्ये चरित्रश्चास्य निर्मलम् ।
स्वचरित्रबलेनायं सत्याग्रहहृढग्रहः ॥३७
संस्कृतौ भारतीयायां प्रीतिमान्, शुद्धनीतिमान् ।
परिणामस्वरूपेण प्राप्तवानुन्नतं पदम् ॥३८
श्रीशास्त्रिणो नम्रतया स्वभावेन च साधुना
प्रभावितः पवित्रेण जीवनेनाऽऽस्त नेहरूः ॥३९
श्रीजवाहरलालेन शास्त्री लालवहादुरः ।
निजमित्रेष्ववचितो मनोहारिप्रसूनवत् ॥४०
श्रीशास्त्रिणं स चाजानात् चत्वारिंशत्समाधिकात् ।
कालादनारतं पश्यन् देशसेवाव्रते रतम् ॥४१
मित्रे कारां प्रविष्टेऽस्मिन् स्वातन्त्र्यरणसैनिके ।
श्रीनेहरूर्हृदयतः स्नेहरूढोऽभवत्तराम् ॥४२
नेहरोर्नेह रुग्णस्य रुचितं जीवनं यदा ।
तदा मन्ये स तं देहं त्यक्त्वा लोकमगात्परम् ॥४३
"अयं दयापरो लोके प्रजानां प्रीतिभाजनम् ।
श्रीशास्त्री मम कार्याणि निर्वक्ष्यतितमाम्" इति ॥४४
श्रीशास्त्री षष्टिवर्षाणि स्वायुषो यदपारयत् ।
तेनासौ नेहरूकोटेर्भाविकोटेश्च मध्यगः ॥४५
"भगवन् ! अनुकम्पस्व यथाऽस्माकमयं नवः ।
प्रधानसचिवो गान्धिनेहर्वोर्नीतिमार्गगः ॥४६
सर्वासां साधुबुद्धीनां मूल भगवतो भयम् ।
मन्यमानश्चिरञ्जीव्यात्कुर्यात्कार्याण्यविक्लवः" ॥४७
पश्यंश्च मन्त्रिणं श्रीमच्छास्त्रिलालबहादुरम् ।
सर्वः स्मरति 'क्लीमेन्ट-रिचार्ड-ऐटली' बुधम् ॥४८
अभूत्प्रधानमन्त्री यस्त्वाङ्ग्लदेशेऽनुचर्चितम् ।
भूयांसः सद्गुणास्तस्य वर्तन्ते किल शास्त्रिणि ॥४९
ऐटलीत्यस्य हृदयं मस्तिष्कं च विशेषतः ।
श्रीशास्त्रिणोऽस्य हृदयं मस्तिष्कं चानुगच्छति ॥५०

उभावपि विनम्रौ स्तः सरलौ कोमलावपि ।
जन्मतः पदतश्च स्तः शक्तिसौविध्यवञ्चितौ ।।५१
साधारणपरिस्थित्याः प्रतिष्ठां ख्यातिमाश्रितौ ।
नम्रताकम्रया स्वार्थमुक्तया सेवया स्वया ।।५२

श्रीमान् 'सर् एन्थनी एडन्' नामा निजविरोधिनः ।
ऐटलीत्यस्य विषये यान् शब्दानभ्युदाहरत् ।।५३।।
ते शब्दाः कृत्स्नशः शोभां यान्ति लालबहादुरे ।
इति पाठकवर्गस्य मुदेऽत्रोदाहरामि तान् ।।५४।।

"अभिव्यक्तौ तदीयायां नम्रतायास्तु पृष्ठतः ।
उद्देश्यदृढता काचिल्लक्ष्यते निश्चयात्मिका ।।५५।।
कल्पनाशीलतायाश्च तत्र सत्यामपि स्फुटम् ।
स्वकार्यसीमां चक्षाणो न तामेषेऽतिवर्तते ।।५६।।

सहिष्णुता काऽप्यगाधा प्रहारानभिलाषिता ।
तीव्रा प्रहारशक्तिश्च साम्यातिशयवर्जिता ।।"५७।।
इति विश्वसिमो गाढं शास्त्री लालबहादुरः ।
प्रधानमन्त्री भूत्वाऽयं द्वितीयो भारतस्य नः ।।५८।।

स्वकीयकार्यैः सम्मानं मातृभूमेः समेधयेत् ।
देशस्य चास्य जनता प्रेरणां प्राप्नुयात्ततः ।।५९
कन्हैयालालमुन्शीतिनाम्ना चारु विनिर्मितः ।
प्रबन्धोऽमीरचन्द्रेण पद्यै रेभिरनूदितः ।।६०

## अयं शास्त्री चिरं जीव्यात्

'प्रधानामात्य' इति दीव्यात्,
अयं शास्त्री चिरं जीव्यात् ।
यदीयः कोमलो देहः,
प्रगीतः सर्वगः स्नेहः ।
सदार्थिप्रावृतो गेहः,
स लोकान् कीर्तिभिश्चीव्यात् ।।१।।
अयं शास्त्री चिरं जीव्यात् ।।

१ चीवृ संवरणे ।

यदीया संस्कृतौ प्रीतिः,
प्रसिद्धा संस्कृतेऽधीतिः ।
पवित्रा शासने रीतिः,
स वैरं वारिवत् स्रीव्यात् ।।२।।
अयं शास्त्री चिरं जीव्यात् ।।

।यं नीतिनैपुण्यं,
प्रतीतं चोपकृतिपुण्यम् ।
चरित्रं चारु शुचि गुण्यं,
स विच्छिन्नं पुनः सीव्यात् ।
अयं शास्त्री चिरं जीव्यात् ।।

## अर्जुनस्य प्रतिज्ञे द्वे

१

इष्टा पाकस्थानदेशेन साकं मैत्री विश्वप्रेयसो भारतस्य ।
सत्यं खल्वेतत् परन्तु प्रयाता नास्मद्देशः कर्हिचित्क्वापि दैन्यम् ।।

२

चीनेनापि स्वात्मसम्मानपूर्वं, कर्तुं किञ्चित्सत्समाधानमुत्कम् ।
एतद्वर्षं भारतं, किन्तु नाभिः पश्चात्पादं भावि तद्भापनाभिः ।।

## शास्त्री लालबहादुरो विजयताम्

१

शास्त्राण्यस्य वसन्ति चेतसि सदा धर्मार्थभाञ्जि स्फुटं,
लालित्येन च कायवाङ्मनसजेनायं जनैर्लाल्यते ।
वीरार्थञ्च बहादुरेतिविरुदं बिभ्रत्स्वकर्मस्वयं,
शास्त्री लालबहादुरो विजयतां विद्यावदातान्तरः ।।

---

२ स्रिवु शोषणे ।

२

धर्मे सत्यधुरीणताम्, अकपटां वृत्तिं च सत्ये स्थिताम्,
अर्थे दीनसहायताम्, सरलतां दैन्ये च यो वाञ्छति।
प्रत्येकं तु गुणं गुणान्तरकृतान्वारम्भमित्थं दधत्,
शास्त्री लालबहादुरो विजयतां साद्गुण्यपुण्यान्तरः॥

## वास्तविको नेता साधारणः पुरुष

१

'को नु वास्तविको नेता ? को नु साधारणः पुमान् ?'
व्याख्यातः शास्त्रिणा प्रश्नोऽयं प्रधानेन मन्त्रिणा॥

२

अस्मद्देशस्य पुरुषाः सन्ति साधारणा इमे।
बहुसंख्यास्तु कृषका येऽत्र क्षेत्रपरायणः॥

३

ये च निर्माणशालासु श्रमिका मध्यमाश्च ये।
ये भूयसीश्च विपदः प्रापुर्दुःखानि नैकशः॥

४

नहि वास्तविको नेता रेखामेवानुगच्छति।
परिस्थित्यनुसारेण स्व—नीतीः स्थापयत्ययम्॥

## रक्षाबन्धनकाले प्रधानमन्त्रिणः सन्देशः

१

रक्षाबन्धनपर्वणि सन्देशमिमं समग्रदेशस्य।
व्यतरत्प्रधानमन्त्री यदिदं गर्वप्रदं पर्व॥

२

अस्मिन् वयं मिथो यद् भगिनीभ्रात्रादिवर्गसेवार्थम्।
प्रतिजानीमो राष्ट्राभिरक्षणस्याङ्गमेवेदम्॥

३

नारीजीवनमुच्चैर्नेतव्यं नूनमत्र धृतदीक्षैः ।
निजदेशवासिवासस्तरः समुन्नेय एव चास्माभिः ॥

४

उज्ज्वलमेव भविष्यति निकटस्थं तद्भविष्यदस्माकम् ।
यदि निरवद्यं कर्तुं यतिष्यते वर्तमानमिदम् ॥

## श्रीशास्त्रि-प्रशासन-प्रशंसनम्

—षट्पदी—

१

राष्ट्रियमहासभाया अध्यक्षः कामराजनाडारः ।
प्राकाशयदुद्गारानिमान् विशेषाधिवेशने समितेः ॥

२

श्रीमान् लालबहादुरशास्त्री नूतनः प्रधानमन्त्री नः ।
त्रैमासिककृतिकाले कुशलः सफलश्च सिद्धोऽयम् ॥

३

श्रील-जवाहरलाले दिवङ्गते देशशासनभरोऽयम् ।
श्रीमति लालबहादुरशास्त्रिणि विन्यस्यते स्म जनैः ॥

४

देशस्यास्य समक्षं सन्ति समस्या असंख्यविषमा याः ।
सुस्थिरतया दृढतया सम्भूयैताः समाधेयाः ॥

५

श्रीशास्त्रिणा प्रशासनभारः सम्यक्तरां निरूढोऽयम् ।
मासैस्त्रिभिः प्रभावोपेतसरण्या च दक्षतया ॥

६

राष्ट्रियमहासभायाः सभ्यैः शास्त्रिप्रशासनं साधु ।
सहयोगसमर्थनयोः परया वृत्त्यैव पोषणीयमिदम् ॥

## सद्योलाभासु योजनासु बलाधानम्

१

प्राङ्नवोद्योगनिर्माणात् कार्यमारब्धपूरणम् ।
आरब्धस्यान्तगमनं कथितं बुद्धिलक्षणम् ।

२

इति श्रीशास्त्रिभिः प्रोक्तमुद्योगानामनुक्रमे ।
सद्योलाभास्वपि बलं योजनास्वाहितं च तैः ।

३

महोद्योगेषु निर्माणशालादीनामुपक्रमात् ।
पूर्वं तत्पूर्यतां कार्यं यदद्याप्यवशिष्यते ॥

४

नानेन गण्यते देशविकासः क्वापि कर्हिचित् ।
कियन्निर्माणशालानां यदत्र स्थापिताः शिलाः ॥

५

अपि त्वनेन तथ्येन विकासः परिगण्यते ।
यद्यमूभिः कृता देशे समृद्धिर्दृश्यते स्फुटम् ॥

६

महोद्योगेषु योज्यानां निधीनामिह सन्तुला ।
स्थापनीयाऽथ सा सद्योलाभास्वायोजनास्वपि ॥

७

यदि निर्धारिते काले निर्माणालियनिर्मितिः ।
भवेदुत्पादनञ्चात्र वस्तूनामस्तु भूरिशः ॥

८

तदैव तासु शालासु निधीनां विनियोजना—
सफला स्याद्यदा देशो लाभं विन्दति वाञ्छितम् ॥

## जय भारत

जय भारत ! जय जीव च शास्त्रिन् !
ह्वाने ह्वाने तव चह्वानः,
दिशतु चमूः प्रह्वाप्रह्वा नः ।
वायु-स्थल-जल सेनाध्यक्षाः,
सिंह-चतुर्धुरीण-सोमानः,
रिपून् नरस्येयुर्दृढतास्त्रिन् !
जय भारत ! जय जीव च शास्त्रिन् !

जय भारत ! जय जीव च शास्त्रिन् !
आस्तां पाकः करुणविपाकः,
कुमतिः किल जयन्त इव काकः,
भवतु पराधीनोऽसौ चीनः,
यथा न माद्यतु सन्ततिदीनः,
सत्यमेव जयताद् ऋतशास्त्रिन् !
जय भारत ! जय जीव च शास्त्रिन् !

जय भारत ! जय जीव च शास्त्रिन् !
ब्रिटिशास्तव सम्मतपथमेयुः,
कुटिला अपि सरलाश्च भवेयुः,
स्यादमेरिकाऽपीह सखी तव,
रूसाः प्रेमा भरं निवहेयुः,
एधि विश्वबन्धुराशास्त्रिन् !
जय भारत ! जय जीव च शास्त्रिन् !

जय भारत ! जय जीव च शास्त्रिन् ।
दीनानुद्धर तांस्तान् देशान्,
प्रीणय चरितबलैर्निःशेषान् ।
संस्कुरु निजदेशस्थविशेषान्,
धिक्कुरु विकृतमतीनरिशेषान् ।
दनुजान् दमय सततमनु शास्त्रिन् !
जय भारत ! जय जीव च शास्त्रिन् !

## शोकाश्रुबिन्दवः

श्रीशास्त्रिणः कृते—

१

अनलः सनलो नु दीपतो गरलं वा तरलं किमर्पितम् ।
अशनिर्नु शनिप्रकल्पितः सहसा श्रोत्रपुटे निवेशितः ।।

२

अतिदुःश्रव एव नाभवत्किल योऽभूदतिदुःसहश्चिरम् ।
कलितोऽपि न भाति च स्म हा दुरुदन्तो महदन्तसूचनः ।।

३

अहहा भुवि ताशकन्द ! ते कुत आयात्तु हताशकन्दता ।
यदिहाखिलविश्वदुसःहा घटनेयं घटिता कटीयसी ।।

४

इह विग्रह एव शोभनो यदि सञ्जीवयते बहादुरम् ।
न तु सन्धिरसौ प्रशस्यतेयमुपाश्रित्य भजेत स क्षयम् ।।

५

यदि भारतभाग्यहीनतामिह जल्पन्ति जनाः परेऽपरे ।
किमु भारति ! भाग्यसम्पदं तव हीनां न वदन्ति ते हृदा ।।

६

चिरकालमभूरुपेक्षिता नरपैश्चापि नरैः सरस्वति ।
इह लालबहादुरोऽभवत्तव विख्यापयितुं प्रपूज्यताम् ।।

७

परमत्र विधौ प्रतीपगे विफला स्याद् बहुसाधनापि धीः ।
इति दर्शयितुं किमप्यभूदवितर्क्यञ्च कदाप्यतर्कितम् ।।

८

कलिरेव भुवि प्रशस्यते कलिकाले विकरालताजुषि ।
कथयन्ति बुधा मुधा न यत्स च भाषाभिदमाश्रितः श्वसेत् ॥

९

इह कालबहादुरेऽभवद् भुवि यो लालबहादुरो बुधः ।
स तु यत्पथुगानिनीषया किल भाषां भजतिस्म संस्कृताम् ॥

१०

परिहृत्य स भाषयानया भरतानां भुवि कालदूषणम् ।
कलहं शनकैः समन्ततो जगतोऽपि प्रजिघासति स्म तम् ॥

११

परमत्र कलिस्वरूपतां दधता केनचनापि पाप्मना ।
न मनागपि नश्चिरायितं फलदाने त्वरमाणचेतसा ॥



# व्याख्यानकादम्बरी

## कालिदासस्य महिमा

[भारतीयविद्याभवने, कर्जनरोडस्थे कालिदासजयन्तीसमारोहे डा० मण्डन-मिश्रशास्त्रिणां संस्कृतविद्यापीठनिदेशकानामाध्यक्ष्ये लेखकेन स्वयमुपस्थापितः पद्यात्मको निबन्धः]

कालिदासस्य महिमा मया कश्चिन्निरूप्यते ।
गरुत्मानपि नैवान्तं गगनस्याधिगच्छति ॥१॥
'सर्वे नन्दन्ति यशसा' इत्येषा स्तौति यं श्रुतिः ।
'कीर्तिः श्रीर्वाक्च नारीणा' मितीयं नौति यं स्मृतिः ॥२॥
'यः पठेत् स्कन्दसम्बद्धां कथां मर्त्यो महामतिः ।
शृणुयाच्छ्रावयेद्वापि स भवेत्कीर्तिमान् नरः ॥३॥
इति मत्स्यपुराणोक्ता वन्दते यं फलश्रुतिः ।
'पठन् द्विजो वागित्यादिः सा च रामायणोद्भवा ॥४॥
'निर्गतासु न वा कस्य कालिदासस्य सूक्तिषु ।
प्रीतिर्मधुरसान्द्रासु मञ्जरीष्विव जायते ॥५॥
इत्यादिकविवाक्येषु गीयन्ते यस्य सूक्तयः ।
आचार्यैरपि नन्तव्या कवेर्यस्य च भारती ॥६॥
तस्याहं महिमानं वा गरिमाणं प्रकाशयन् ।
नूनं विद्वत्समाजेऽस्मिन् गमिष्याम्युपहास्यताम् ॥७॥
'सर्वे नन्दन्ति यशसागतेन सभासाहेन सख्या सखायः ।
किल्विषस्पृत्पितुषणिर्ह्येषामरं हितो भवति वाजिनाय ॥
इत्यस्यामृचि भाव्यर्थप्रकाशिन्यामुदाहृतः ।
किल्विषस्पृत्पितुषणिः कालिदासो न संशयः ॥८॥
किल्विषं स्पर्धते द्वेष्टि वेष शाकुन्तले भृशम् ।
भारतोक्तः स दुष्यन्तोऽप्यनेनात्र हि भूष्यते ॥९॥

पितुं च दक्षिणारूपं कौत्सायैष प्रसानयन्।
रघुवंशे पितुषणिः प्रथितो भवति ध्रुवम् ॥१०॥
जनस्य साकेतनिवासिनस्तौ द्वावप्यभूतामभिनन्द्यसत्त्वौ।
गुरुप्रदेयाधिकनिःस्पृहोऽर्थी नृपोऽर्थिकामादधिकप्रदश्च॥
इत्यस्मिन्ननवद्ये च पद्ये दातॄन् स ऐरयत्।
अतोऽपि कथ्यते लोकैरसौ पितुषणिर्न किम् ॥११॥
अयमेषां समानानां कवीनामप्यरं हितः।
वाजिनापरपर्यायवीर्याय भवति स्फुटम् ॥१२॥
शक्तिर्निपुणतेत्यादौ काव्यशास्त्राद्यवेक्षणात् !
उक्ता निपुणता काव्यं कालिदासस्य वाञ्छति ।१३॥
काव्यं हि दृश्यं श्रव्यञ्चेत्युभयं भव्यतावहम्।
कालिदासस्य पश्यामो न लोकेऽन्यस्य कस्यचित् ॥१४॥
अत एव सखायोऽस्य यशोभिः श्रुतिमागतैः।
सभासहैरमी सर्वे नन्दन्तति न संशयः ॥१४॥
अहो पश्यत माहात्म्यं कालिदासस्य सत्कवेः।
दुष्यन्तो येन कामात्मा धर्मात्मा प्रतिपादितः ॥१६॥
भवभूतिस्तु तं रामं प्रथितं पुरुषोत्तमम्।
पृच्छन् 'किमयशो घोरमतः परमिति श्रुतः ॥१७॥
'ग्रह भेषज जल पवन पट, पाइ कुजोग सुजोग।
होहिं कुवस्तु सुवस्तु जग लखहि सुलच्छन लोग॥'
इत्युक्तं तुलसीदासेनानयोः स्फुटमन्तरम्।
कालिदासस्य महिमाभिगीतो दोहयाऽनया॥
'सम प्रकासतम पाख दुहुँ,नाम भेद विधि कीन्ह।
ससि पोषक सोषक समुझि, जग जस अपजस दीन्ह॥'
असाध्वपि पदं हस्ते कस्यचित्साधुतां व्रजेत्।
असाधवेदथान्यस्य हस्ते वस्त्वपि साधु च ॥१८॥
अयमेव कलाकारतारतम्यप्रदर्शकः।
निकषः कालिदासस्य विशुद्धौ नः प्रमाणकम् ॥१९॥

'तत्सन्तः श्रोतुमर्हन्ति सदसद्व्यक्तिहेतवः।
हेम्नः संलक्ष्यते ह्यग्नौ विशुद्धिः श्यामिकापि वा ॥'
इत्युक्त्या यः कलामात्रनिकषः प्रतिघोषितः।
सोऽपि क्वचन सत्कर्तृपरीक्षायां कृतार्थितः ॥२०॥
आ परितोषाद्विदुषां न साधु मन्ये प्रयोगविज्ञानम्।
बलवदपि शिक्षितानामात्मन्यप्रत्ययं चेतः ॥
इति, यत्परितोषार्थं नाट्यविज्ञानमिष्यते।
त एव सदसद्व्यक्तिहेतवः सन्त ईरिताः ॥२१॥
'चीयते बालिशस्यापि सत्क्षेत्रपतिता कृषिः।
न शालेः स्तम्बकरिता वप्तुर्गुणमपेक्ष्यते ॥२२॥
इत्थं विशाखदत्तेन कृषिश्चैव कलाकृतिः।
नीता समानतां वाचोयुक्तिमात्रेण नार्थतः ॥२३॥
कलाकृतिः प्रयोगस्य प्रयोज्यस्य विशिष्टताम्।
अन्वेवाकाङ्क्षते काञ्चित्प्रयोक्तुरपि शिष्टताम् ॥२४॥
सा शिष्टता कालिदासे यादृशी विनिभाल्यते।
नान्यत्र तादृशी नूनमनुच्छिष्टतयाऽन्विता ॥२५॥
'निर्माय नूतनमुदाहरणानुरूपं काव्यं मयात्र निहितं न परस्य किञ्चित्।
नास्वाद्यते सुमनसां मनसापि गन्धः कस्तूरिकाजननशक्तिभृता मृगेण।
इत्युक्त्या श्रीजगन्नाथो न स्तौत्यात्मानमेव सः।
यावत्स कालिदासेऽपि शङ्कालेशं निरस्यति ॥२६॥
वाग्जन्मवैफल्यमसह्यशल्यं गुणाधिके वस्तुनि मौनिता चेत्।
खलत्वमल्पीयसि जल्पितेऽपि तदस्मि वन्दिभ्रमभूमिकास्थः ॥
'नरत्वं दुर्लभं लोके विद्या तत्र सुदुर्लभा।
कवित्वं दुर्लभं तत्र शक्तिस्तत्र सुदुर्लभा ॥'
इत्यादिना पुराणेन विद्यया नृतरः स्मृतः।
नृतमश्च कविः प्रोक्तः शक्तिमांस्तु नरोत्तमः ॥२७॥
नरोत्तमस्य तस्यास्य सर्वा अपि विशिष्टताः।
नरस्येमा इति क्लृप्त्या नार्यस्तावदुदीरिताः ॥२८॥

'कीर्तिः श्रीर्वाक्च नारीणां स्मृतिर्मेधा धृतिः क्षमा।
इत्येताः कालिदासस्थाः परिगीता विभूतयः ॥२९॥
कीर्तेर्हेतुर्हि तस्यास्ते न देशो न कुलं महत्।
अज्ञातकुलदेशस्य तस्य श्रीर्वाचि संस्थिता ॥३०॥
'सक्तुमिव तितउना पुनन्तो यत्र धीरा मनसा वाचमक्रत।
अत्रा सखायः सख्यानि जानते भद्रैषां लक्ष्मीर्निहिताधिवाचि ॥'
इत्यत्रापि श्रुतौ मन्ये सन्माने बहुता कृता।
एकस्य कालिदासस्य वैशिष्ट्यं वक्तुमिच्छता ॥३३॥
कोऽन्यस्तितउना सक्तुवद् वाचं मनसाऽपुनात् ॥
कश्चाजानीत वाक्सख्यं वाचि श्रीः कस्य चाहिता ॥३४॥
वाचि श्रिया निहितया कश्च कीर्तिमिहातनोत्।
कालिदासः कालिदास इत्येव स्यात्तदुत्तरम् ॥३५॥
पुरा कवीनां गणनाप्रसङ्गे कनिष्ठिकाधिष्ठितकालिदासा।
ततश्च तत्तुल्यकवेरभावादनामिका सार्थवती बभूव ॥
इत्युक्त्या कालिदासस्यासाम्यातिशयतां ब्रुवन्।
सदसद्विवेकमत्या मत्या सिध्यति पण्डितः ॥३६॥
अस्तु, प्रस्तुतमायामः स्मृतिवाक्यविवेचनम्।
कीर्तिः श्रीर्वागिति वचः प्राहाधारं परं परम् ॥३७॥
वागाश्रिता श्रीस्तनुते कीर्तिं यस्य स वै हरिः।
तस्याख्यानं च मन्येऽहं भक्तेन हरिकीर्तनम् ॥३८॥
एवमेव स्मृतेर्मूलं मेधा, मूलं धृतेः क्षमा।
एषापि सापि भवतः कालिदासे प्रतिष्ठिते ॥३९॥
मेधाविनोऽस्य काव्येषु वाल्मीकिव्यासभाषिताः।
शब्दा वा शब्दगुम्फा वा स्वभावात्समुपागताः ॥४०॥
स्थानादस्माच्च सरसनिचुलादुत्पतेति गीः।
क्रियासमभिहारेण विराध्यति किलाक्षमा ॥४१॥

'मनागनभ्यावृत्त्या वा कामं क्षाम्यतु यः क्षमी ।
क्रियासभिहारेण विराध्यन्त क्षमेत कः ॥'
मात्स्ये चतुर्दशाध्याय्या स्कन्दस्य परिकीर्तिताम् ।
कथां पठन् प्रतिदिनं कालिदासो महामतिः ॥४२॥
'यः पठेत् स्कन्दसम्बद्धां कथां मर्त्यो महामतिः ।
शृणुयाच्छ्रावयेद्वापि स भवेत्कीर्तिमान् नरः ॥'
इति मत्स्यपुराणोक्तफलश्रुत्येह कीर्तिमान् ।
कुमारसम्भवं काव्यं प्रणीयाभवदञ्ज तः ॥४३॥
अस्याः कथाया नवमादध्यायात्प्रस्तुता कथा ।
सानेन कालिदासेन कविन्यायेन वर्णिता ॥४४॥
कवीनामधिकारोऽयं प्रत्यष्ठाप्यत तेन यत् ।
गृहीत्वा ख्यातवृत्तं तेऽलङ्कुर्वीरन् स्वकल्पनैः ॥४५॥
यथार्थकल्पनायोगः कविभिः परिकल्पितः ।
मणिकाञ्चनसंयोगः सौन्दर्यस्य सहोदरः ॥४६॥
इमां कथाञ्च तुलसीदासोऽपि स्व्यकरोन्निजे ।
श्रीशालिरामचरितमानसे कीर्तिदायिकाम् ॥४७॥
कालिदासे च तुलसीदासे चेह समानताम् ।
कीर्त्या श्रितां प्रब्रुवन्तो मान्याः सन्तीह पण्डिताः ॥४८॥
परं स तुलसीदासः स्वयमेवाधमर्णताम् ।
कालिदासस्यात्मनिष्ठां प्रकाशयति शब्दतः ॥४९॥
नानापुराणनिगमागमसम्मतं यद्रामायणे निगदितं क्वचिदन्यतोऽपि ।
स्वान्तः सुखाय तुलसीरघुनाथगाथाभाषानिबन्धमतिमञ्जुलमातनोति ॥
इत्यत्र तेन यत्प्रोक्तं क्वचिदन्यत इत्यदः ।
वचनं कालिदासस्य काव्येभ्य इति भाषते ॥५०॥
क्वास्ते चिदन्या सा यादृक्कालिदासेऽवतिष्ठते ।'
व्युत्पत्त्या ह्यनया धन्यः 'क्वचिदन्यः' स कथ्यते ॥५१॥

मात्स्ये तारकजन्मादि तारकान्तान्तमीरिता ।
चतुर्दशध्यायगता कथास्ति पुरुविस्तृता ॥५२॥
कालिदासे तु नवमस्याप्यर्धात्परतः स्थिता ।
कथा सा तुलसीदासेऽप्यस्तितां तावती गता ॥५३॥
अत एवाधमर्णत्वे क्वचिदन्योऽस्ति कारणम् ।
नानापुराणनिगमागमानां संस्थितावपि ॥५४॥
यथा मत्स्यपुराणस्य स्थितिः कौमारसम्भवे ।
तथा बाल्मीकिकाव्यस्य रघुवंशे प्रतिष्ठितिः ॥५५॥
पाठैर्वाल्मीकिकाव्यस्य वाक्पतित्वमुपस्थितम् ।
रघुवंशेतिविदिते काव्ये कविरदर्शयत् ॥५६॥
पठन् द्विजो वागृषभत्वमीयात्स्यात्क्षत्रियो भूमिपतित्वमीयात् ।
वणिग्जनः पण्यफलत्वमीयाज्जनश्च शूद्रोऽपि महत्त्वमीयात् ॥
इत्युक्तेः कालिदासोऽयमास्ते चाद्यं निदर्शनम् ।
इति ब्रुवाणा विद्वांसो भजन्ते सत्यवादिताम् ॥५७॥
वाल्मीकीयान्महाकाव्यादादायापि कविः कथाम् ।
सङ्क्षिप्य न चिक्षेप किमप्युज्ज्वलमद्भुतम् ॥५८॥
प्रत्युतात्र प्रस्तुतानि रघोर्वंश्यानि तान्यपि ।
अपत्यानि न यान्यासन् श्रुतपूर्वाणि पण्डितैः ॥५९॥
शाकुन्तलस्य दुष्यन्त भूषयन्त महाकविम् ।
रघुवंशे रामचन्द्रं दूषयन्तं न चक्ष्महे ॥६०॥
अपि त्वत्रापि सीताया वचनं रचनोज्ज्वलैः ।
उदात्तता रामचन्द्रचरितस्य प्रकाश्यते ॥६१॥
'कवयः कालिदासाद्या भवभूतिर्महाकविः ।
तरवः पारिजाताद्याः स्नुहीवृक्षो महातरुः ॥'
इति भव्यश्च सम्वादो भवकालीरतिस्पृशोः ।
पक्षयोः पक्षपातेन शून्यो धन्यः प्रतीयते ॥६२॥
वाणी वाणो बभूवेति गीतं गोवर्धनेन यत् ।

यच्च वाणेन संगीतं श्रीहर्षचरिते नवम् ।।६३।।
निर्गतासु न वा कस्य कालिदासस्य सूक्तिषु ।
प्रीतिः सरससान्द्रासु मञ्जरीष्विव जायते ।।
इत्येतदुभयं सत्यं शिवं सुन्दरमीरितम् ।
गोवर्धनैः स्तुता वाणी वाण्या चायं कविः स्तुतः ।।६४।।
श्रीशारदावतारैश्च मम्मटाचार्यसूरिभिः ।
काव्यप्रकाशप्रारम्भे या स्तुता कविभारती ।।६५।।
सा न कस्यचिदन्यस्य कालिदासस्य केवला ।
कवेरित्येकवचनं तत्प्रमाणतया स्थितम् ।।६६।।
'नियतिकृतनियमरहितां ह्लादैकमयीमनन्यपरतन्त्राम् ।
नवरसरुचिरां निर्मितमादधती भारती कवेर्जयति ।।'
गीत्यानया सनयया गीता यस्यैव भारती ।
तस्यैव 'यशसे' व्याख्यावसरे नाम कीर्तितम् ।।६७।।
काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये ।
सद्यः परनिर्वृतये कान्तासम्मिततयोपदेशयुजे ।।
इत्यत्र कालिदासादीनामिवास्ति यशः स्मृतम् ।
आदिः स येषां तेऽप्यत्र गृहीतास्तस्य चादयः ।।६८।।
स पूर्ववर्तिवाल्मीकिव्यासभासादिमण्डले ।
किञ्चास्ति परवर्तिश्रीबाणहर्षादिसद्दले ।।६९।।
कीर्तनीयो विशेषेणेत्यत्राचार्यः स भक्तिमान् ।
समासद्वयमाश्रित्य गीतवांस्तद्यशस्विताम् ।।७०।।
अथात्र कालिदासस्य कवेर्वाचो विनिर्मितिम् ।
तत्तद्विशेषसंजुष्टां व्याख्यामि महिमस्पशाम् ।।७१।।
नियत्या विहितांस्तांस्तान् नियमान्यदि लङ्घयेत् ।
कविवाङ्निर्मितिर्नूनं भवेल्लोकविरोधिनी ।।७२।।
विरुद्धां लोकतश्चैनामप्रमाणेषु कातरः ।
लोकः श्रोतुं प्रवर्तेत कथं चैषात्र दर्श्यताम् ।।७३।।

यदि चैतान् सुनियमानेव सा सेवतां सदा ।
तदा न तस्याः सिद्धा स्यात्काचिल्लोकोत्तरा स्थितिः ।।७४।।
इति नोल्लङ्घयित्रीतिपदेनैषा प्रदिश्यते ।
नापि तेषां पालयित्री सा प्रतिज्ञायते बुधैः ।।७५।।
अपि त्वस्याः स्वतन्त्रत्वं सर्वथैवोपदर्शयत् ।
रहितेति पदं न्यस्तं सहितत्वविरोधकम् ।।७६।।
नियत्या च कृतांल्लोके नियमान् को नु वर्णयेत् ।
गणयेदपि को न्वेतानसंख्यानन्तवश्चितान् ।।७७।।
तथापि नियतिस्तांस्तान् पदार्थान्नियतस्थितीन् ।
विधाय तैः क्रीडतीव न बहिर्यान्ति ते स्थितेः ।।७८।।
केचित्स्थले जले केचित्केचिन्नभसि संस्थिताः ।
केचिज्जलस्थलद्वन्द्वे केचिज्जलनभोद्वये ।।७९।।
केचित्स्थलनभोयुग्मेऽपि चरन्तो विलोकिताः ।
त्रिष्वप्यबाधगतयो भूमिजैर्न प्रकल्पिताः ।।८०।।
वसिष्ठमन्त्रोक्षणजातप्रभावादुदन्वदाकाशमहीधरेषु ।
मरुत्सखस्येव बलाहकस्य गतिर्विजघ्ने नहि तद्रथस्य ।।
इत्यत्र पार्थिवस्यापि पार्थिवस्य रथस्य ताम् ।
गतिं प्रगीतवान् दिव्यमन्त्रोक्षणनिदानतः ।।८१।।
ननु मन्त्रा नियत्यैव तत्र तत्र स्थिरीकृताः ।
इति तेषां प्रभावस्य नास्ति तन्नियमोज्झता ।।८२।।
इति चेच्छ्रूयतां किञ्चित्कारणं चेन्न कल्प्यते ।
तदा कविनिबद्धानां वचसां स्यादहेतुता ।।८३।।
निर्हेतुकत्वदोषस्य निवृत्त्यै लोकविश्रुतम् ।
विहाय कारणं प्राह कविः किञ्चिदलौकिकम् ।।८४।।
यदि नामालौकिकं तद् वैदिकं भवतेर्यते ।
तदा कवीनां समयात्प्राप्तान् हेतूनुदाहरे ।।८५।।

यच्च वाणेन संगीतं श्रीहर्षचरिते नवम् ॥६३॥
निर्गतासु न वा कस्य कालिदासस्य सूक्तिषु ।
प्रीतिः सरससान्द्रासु मञ्जरीष्विव जायते ॥
इत्येतदुभयं सत्यं शिवं सुन्दरमीरितम् ।
गोवर्धनैः स्तुता वाणी वाण्या चायं कविः स्तुतः ॥६४॥
श्रीशारदावतारैश्च मम्मटाचार्यसूरिभिः ।
काव्यप्रकाशप्रारम्भे या स्तुता कविभारती ॥६५॥
सा न कस्यचिदन्यस्य कालिदासस्य केवला ।
कवेरित्येकवचनं तत्प्रमाणतया स्थितम् ॥६६॥
'नियतिकृतनियमरहितां ह्लादैकमयीमनन्यपरतन्त्राम् ।
नवरसरुचिरां निर्मितमादधती भारती कवेर्जयति ॥'
गीत्यानया सनयया गीता यस्यैव भारती ।
तस्यैव 'यशसे' व्याख्यावसरे नाम कीर्तितम् ॥६७॥
काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये ।
सद्यः परनिर्वृतये कान्तासम्मिततयोपदेशयुजे ॥
इत्यत्र कालिदासादीनामिवास्ति यशः स्मृतम् ।
आदिः स येषां तेऽप्यत्र गृहीतास्तस्य चादयः ॥६८॥
स पूर्ववर्तिवाल्मीकिव्यासभासादिमण्डले ।
किञ्चास्ति परवर्तिश्रीबाणहर्षादिसद्दले ॥६९॥
कीर्तनीयो विशेषेणेत्यत्राचार्यः स भक्तिमान् ।
समासद्वयमाश्रित्य गीतवांस्तद्यशस्विताम् ॥७०॥
अथात्र कालिदासस्य कवेर्वाचो विनिर्मितिम् ।
तत्तद्विशेषसंजुष्टां व्याख्यामि महिमस्पशाम् ॥७१॥
नियत्या विहितांस्तांस्तान् नियमान्यदि लङ्घयेत् ।
कविवाङ्निर्मितिर्नूनं भवेल्लोकविरोधिनी ॥७२॥
विरुद्धां लोकतश्चैनामप्रमाणेषु कातरः ।
लोकः श्रोतुं प्रवर्तेत कथं चैषात्र दर्श्यताम् ॥७३॥

यदि चैतान् सुनियमानेव सा सेवतां सदा ।
तदा न तस्याः सिद्धा स्यात्काचिल्लोकोत्तरा स्थितिः ॥७४॥
इति नोल्लङ्घयित्रीतिपदेनैषा प्रदिश्यते ।
नापि तेषां पालयित्री सा प्रतिज्ञायते बुधैः ॥७५॥
अपि त्वस्याः स्वतन्त्रत्वं सर्वथैवोपदर्शयत् ।
रहितेति पदं न्यस्तं सहितत्वविरोधकम् ॥७६॥
नियत्या च कृतांल्लोके नियमान् को नु वर्णयेत् ।
गणयेदपि को न्वेतानसंख्यानन्तवञ्चितान् ॥७७॥
तथापि नियतिस्तांस्तान् पदार्थान्नियतस्थितीन् ।
विधाय तैः क्रीडतीव न बहिर्यान्ति ते स्थितेः ॥७८॥
केचित्स्थले जले केचित्केचिन्नभसि संस्थिताः ।
केचिज्जलस्थलद्वन्द्वे केचिज्जलनभोद्वये ॥७९॥
केचित्स्थलनभोयुग्मेऽपि चरन्तो विलोकिताः ।
त्रिष्वप्यबाधगतयो भूमिजैर्न प्रकल्पिताः ॥८०॥
वसिष्ठमन्त्रोक्षणजातप्रभावादुदन्वदाकाशमहीधरेषु ।
मरुत्सखस्येव बलाहकस्य गतिर्विजघ्ने नहि तद्रथस्य ॥
इत्यत्र पार्थिवस्यापि पार्थिवस्य रथस्य ताम् ।
गतिं प्रणीतवान् दिव्यमन्त्रोक्षणनिदानतः ॥८१॥
ननु मन्त्रा नियत्यैव तत्र तत्र स्थिरीकृताः ।
इति तेषां प्रभावस्य नास्ति तन्नियमोज्झता ॥८२॥
इति चेच्छ्रूयतां किञ्चित्कारणं चेन्न कल्प्यते ।
तदा कविनिबद्धानां वचसां स्यादहेतुता ॥८३॥
निर्हेतुकत्वदोषस्य निवृत्त्यै लोकविश्रुतम् ।
विहाय कारणं प्राह कविः किञ्चिदलौकिकम् ॥८४॥
यदि नामालौकिकं तद् वैदिकं भवतेर्यते ।
तदा कवीनां समयात्प्राप्तान् हेतूनुदाहरे ॥८५॥

गत्वा चोर्ध्वं दशमुखभुजोच्छ्वासितप्रस्थसन्धेः
कैलासस्य त्रिदशवनितादर्पणस्यातिथिः स्याः ।
शृङ्गोच्छ्रायैः कुमुदविशदैर्यो वितत्य स्थितः खं
राशीभूतः प्रतिदिनमिव त्र्यम्बकस्याट्टहासः ॥

राशीभावो नियत्या हि मूर्तानामेव कल्प्यते ।
कविवाचा त्वमूर्तानां हासादीनामयं पुनः ॥८६॥
ननु साध्यतयाऽऽख्यानं सम्भावितया स्थितम् ।
न नियत्या नियमगं नाप्यनेन विवर्जितम् ॥८७॥
इति प्राप्ते वदिष्यामः समस्तर्तुफलश्रियाम् ।
युगपच्चैकदेशे च नसम्भाव्यामुपस्थितिम् ॥८८॥

हस्ते लीलाकमलमलके बालकुन्दानुविद्धं
नीता लोध्रप्रसवरजसा पाण्डुतामानने श्रीः ।
चूडापाशे नवकुरवकं चारु कर्णे शिरीषं
सीमन्ते च त्वदुपगमजं यत्र नीपं वधूनाम् ॥

इत्यत्र शारदं पद्मं स्थितं कुन्दं च हैमनम् ।
शैशिरं लोध्रकुसुमं तथा वासन्तिकं कुरम् ॥८९॥
निदाघजं शीशिषं च नीपं वर्षाभवं मुहुः ।
न कस्य विस्मयाय स्यान्नियतेर्नियमाद् बहिः ॥९०॥
अथ ह्लादैकमयता कविवाङ्निर्मितौ स्थिता ।
शकुन्तलाविप्रलम्भादिन्दुमत्याश्च मृत्युतः ॥९१॥
न कालिदासकलिताद् दृश्याच्छ्रव्यात्सचेतसः ।
विरज्यन्ते ऽनुरज्यन्ते प्रत्युतैतेन हेतुना ॥९२॥
देशवंशादि विज्ञाय कविष्वन्येषु भावुकाः ।
विरक्तिमनुरक्तिं वा भजन्ते स्वपरत्वतः ॥९३॥
अनभिज्ञातदेशादौ कालिदासे तु कश्चन ।
न बाह्यहेतुतो भावभेदं क्वचन विन्दति ॥९४॥

इत्यस्यैव कवेर्वाचां निर्मितिर्ह्लादकारिणी।
सर्वथा जायते लोके रसोल्लासैरभीक्ष्णशः ॥९५॥

अनन्यपरतन्त्रत्वं समानमपि वाङ्मये।
यथा कविकृते व्याख्याकृद्भिराधिवयभाक् स्मृतम् ॥९६॥

तथैव कालिदासीयेऽतितरां तद्विलोक्यते।
कवित्वशक्तेः सहजात्प्रभावादस्य सत्कवेः ॥९७॥

गुरुदेवप्रसादादिलब्धशक्तिविशेषकाः।
कवयः कृतिषु प्राप्ताः प्रसादपरतन्त्रताम् ॥९८॥

जातमात्रस्तु योऽदृष्टात्कस्माच्चित्कारणात्कविः।
तस्य वाङ्निर्मितिर्दृष्टहेत्वधीना न जायते ॥९९॥

अतो वाङ्निर्मितिर्धत्तेऽस्यानन्यपरतन्त्रताम्।
सर्वेषां दृष्टकल्पानां हेतूनामप्यसत्त्वतः। १००॥
अथेयं यन्नवरसा रुचिरा चास्ति तत्र ते।
शृङ्गाराद्या रसाः सर्वे यान्त्युदाहरणीयताम् ॥१०१॥
रुचिरत्वस्य हेतूनाँ गुणालङ्काररीतिभिः।
शब्दैरप्युपदिष्टानां यात्यपेक्षां विचेयता। १०२॥
शृङ्गार ऋतुसंहारे तथा कौमारसम्भवे।
रघुवंशे मेघदूते चेति श्रव्येष्विवास्थितः ॥१०३॥
शाकुन्तले विक्रमेऽपि साग्निमित्रे विशेषतः।
सम्भोगविप्रलम्भाभ्यां दृश्येषु द्विविधोऽपि सः ॥१०४॥
रसराजमुपास्यैव यातस्य कविराजताम्।
कालिदासस्य कतमा कृतिरत्र विवेच्यताम् ॥१०५॥
वीरोऽपि कामदहने, दिग्जये, रक्षसां वधे।
तेषु तेष्वस्य काव्येषु नाट्येषु च निरूप्यते ॥१०६॥
युद्धवीरातिरिक्तानां धर्मदानदयात्मताम्।
अस्ति तेषां दिलीपादिरघ्वादिगतया स्थितिः ॥१०७॥

करुणोऽजस्य च रतेर्विलापे पुष्टिमश्नुते ।
हास्यो विदूषकादीनां चेष्टासु प्रतितिष्ठति ॥१०८॥
रौद्रो रुद्रस्य रुद्रत्वे, प्रभोः सुग्रीवबोधने ।
ऐलस्य केशिदमनेऽभिज्ञानावसरे च सः ॥१०९॥
भयानकोऽपि मृगयामृगानुगमनादिषु ।
बीभत्सस्ताडकादीनां वेशभूषादिवर्णने ॥११०॥
अद्भुतः सिन्धुरूपस्य विष्णुरूपस्य च स्तवे ।
शान्तश्च मुनिवृन्दानामाश्रमेष्वनुभूयते ॥१११॥
इत्थं नवरसा तद्वाङ्निर्मितिः सुप्रबन्धगा ।
निर्दशिता समासेन विनोदाय सचेनसाम् ॥११२॥



## कालिदासजयन्तीभाषणम्

### द्वितीयम्

देशे काले भवति जनुषा सङ्गते प्रीतिरुद्घा—
प्युद्घातिन्यां भुवि कलियुगे प्रीतिमन्तो यथा स्मः ।
'सौधोत्सङ्गप्रणयविमुखो मा स्म भूरुज्जयिन्या'
इत्यादेशादनुमिनुमहे तां कवेर्जन्मभूमिम् ॥

'शापान्तो मे भुजगशयनादुत्थिते शार्ङ्गपाणौ'
वित्युल्लेखात्कविकुलगुरोर्वासरो निश्चितोऽयम् ।
अस्मिञ्जातः परिणयविधिं प्राप्तवान्वा वियुक्तो
भूयः कान्तामिह शुभदिने लब्धवान् कालिदासः ॥

अनन्तशयनात्समुत्थितवतेऽत्र यद्विष्णवे
कवीश्वरकृता नतिः स्मृतिनतेरभिप्रेयते ।
अतोऽस्य शुभवासरे परिषदः पतित्वे बुधै—
रनन्तशयनो भवान्भविकवान् वृतः सादरम् ॥

'तां तामवस्थां प्रतिपद्यमानं स्थितं दश व्याप्य दिशो महिम्ना ।'
सिन्धोर्हरेस्तेऽनवधारणीयमिदृक्तया रूपमीयत्तया च ॥'
'अमुं युगान्तोचितयोगनिद्रः संहृत्य लोकान् पुरुषोऽधिशेते ।'
भवन्तमाशय्य स धर्महानिं निरस्य सम्यक् परिपाति साधून् ॥'
नाभिप्ररूढाम्बुरुहासनेन संस्तूयते स प्रथमेन धात्रा ।
नाभिप्ररूढाम्बुरुहासनैस्तु संस्तूयसे त्वं विधिभिर्विभिन्नैः ॥
स्तोकैरमीभिः किल वीतशोकं, श्लोकैरुपश्लोक्य विरामकामम् ।
मामक्षमं 'मण्डन'कालहानेः क्षमिष्यते सम्प्रति संसदेषा ॥
विवृद्धिमत्राश्नुवते वसूनि अङ्गादिकान् शासति राज्यपाले ।
आशाप्रदं संस्कृतवाङ्मयस्य प्रह्लादनं ज्योतिरजन्यनेन ॥
पर्यङ्कबन्धस्थित एष साक्षाच्छेषोऽप्यशेषः शशिवद् विभाति ।
विद्वद्भिराभाति च पीठमेतदाकाशमाविष्कृतचारुतारम् ॥'
सम्मेलनस्यास्य नवैर्विकासैः संशोभते यः सुखदोऽद्य कायः ।
सेव्यः स सर्वैरपि भूतिकामैः 'पूर्वैः किलायं परिवर्धितो नः ॥'

## स्फुटाः सिद्धान्ताः

ख्यातो व्रजेऽवतरति स्वगुणैरनेकलीलोचितैरनुभवत्यखिलानुरक्तिम् ।
ऐश्वर्यवान्बहुरुचिर्दयिताचकोरीपेपीयमानमुखचन्द्रसुधः स बालः ॥
तस्माद्विलक्षणतया विपिने तु लक्ष्यो नित्यावतारिगुणनिर्गुण एकरूपः ।
माधुर्यवान् हितरुचिर्दयितास्यचन्द्रपीयूषतर्षितचकोर इतः किशोरः ॥

धर्मार्थकाममोक्षास्ते भक्तिरैकान्तिकी च सा ।
रोचते नैव राधाङ्घ्रिद्वयपीयूषपायिनाम् ॥
प्रेम्णोऽपि हृदयं चारु शृङ्गारस्यापि चावधिः ।
पूजनीया भगवतोऽपीशता राधिका यतः ॥
माधुर्यसारमैश्वर्यभारं वाराधतां जगत् ।
अस्माकं तद्द्वयाधारा राधाऽऽराध्यात्र केवलम् ॥
शिति श्रीशङ्कराचार्यो रीति निम्बार्क ईडितः ।
रेति रामानुजो धेति माध्वो वलिति वल्लभः ॥
तैः सर्वैर्लम्भनीयोऽर्थः श्रीराधावल्लभः स्मृतः ।
तस्येदं भाष्यमारब्धं मतिभेदविनुत्तये ॥
रामानुजे चिदचितौ तथा च पुरुषोत्तमः ।
इति प्रमेयत्रितयं प्राधान्येन निर्दशितम् ॥
आभ्यां विशिष्टं ब्रह्माहुः पुरुषोत्तममीश्वरम् ।
इमौ चास्य प्रभाष्येते कायस्थानीयतां गतौ ।
श्रीरामानुजवन्मध्वे ब्रह्मजीवजगत्कथा ।
प्रमेयनिर्णये त्वेषां काचिदस्ति पृथक्प्रथा ॥
स्वतन्त्रं चास्वतन्त्रं ते पदार्थं द्विविधं विदुः ।
अस्वतन्त्रा जगज्जीवाः स्वतन्त्रः पुरुषोत्तमः ॥
माध्वी प्रथास्ति निम्बार्के भेदाभेदस्तु मौलिकः ।
परकीया न राधेयं स्वकीयैवेति चोदितम् ॥
परस्परोपरि—प्रेमपरिवाह—पुरस्सरम् ।
एकीभूतं रसमयं नमामि द्वयमव्ययम् ॥

## रसोपास्तिः

**समन्वयवादः**

१

केचिद् भजन्ति मनुजा बहुकामदेवान्, देवाः शिवं विषविपद्विनिवर्तकं ते ।
सोऽयं शिवो मधुपतिं भजते रसेन, संसेवते मधुपतिर्वृषभानुपुत्रीम् ॥

२

एषास्त्यनन्यभजनाधिगमप्रणाली, यत्रेष्टवस्तुनि परात्परतानुभूतिः ।
तत्रेश्वरत्वमनुसन्दधतान्तु दास्यं, माधुर्यमाश्रितवतामथ सख्यमुख्यम् ॥

३

सख्यादि साध्यमपि साधनमप्यथेदं, दास्यं तु साधनमितीह विवेचनायाम् ।
नो हीयते किमपि नाप्युपचीयते वा, स्वस्वाधिकारसदृशं भुवि चेष्टितव्यम् ॥

४

नानन्यतैव यदि किं रसिकत्वलाभात्, नैवास्ति चेद्रसिकता किमनन्यभावात् ।
इत्यन्य एव विपिने प्रथितोऽस्ति पन्थाः, यत्राधिकारमुपयाति सदार्द्रहार्दः ॥

५

अत्रौ दृगुत्थितमहस्यपि वर्तमाने, चन्द्रं विना कुमुदिनो न विकाशमेति ।
लोकोत्तरे किल जनेऽभ्युदितः प्रभावान्नापेक्ष्यते प्रभवमत्र स दीनभावः ॥

६

मुक्त्वा हि राममपरं भगवानुवाच गीतासु सर्वमवतारमिति भ्रमोऽयम् ।
तस्माद्विभूतिमति भक्तिमुदीरितव्यामाह स्म तत्र भगवानिह दास्यरूपाम् ।

७

एकत्र ये धृतहृदो भगवद्विभूतौ ते नाम नाभिदधतामभिधानमन्यत् ।
येषां विभूतिमति भक्ति रुदिरितास्यात्ते ते कांस्त्यजन्तुकतमां च भजन्त्वनन्याः ॥

८

इत्याशयेन बुधसम्मतमेतदस्याचार्यस्य राजति समन्वयवादनाम ।
शैवे च वैष्णवजने च विरोधगन्धीन्याह स्म यत्र तुलसी वचनानि तानि ॥

## सूक्तिषट्कम्

१

लापे लाभे लोभ एवोदितः स्याल्लास्ये लास्ये तालमेवाहितं स्यात्
लापे लापे मित्रता संभृता स्याज्जग्धौ जग्धौ तृप्तिरप्याश्रिता स्यात् ॥

२

पद्मे पद्मे गुञ्जताद् भृङ्गमाला, तल्पे तल्पे षोडशी चारि शेताम् ।
राज्ये राज्ये राजतां तस्य कीर्तिर्यस्मिन् यस्मिन् वाङ्मयं यस्य यायात् ॥

३

विद्यास्ववद्यास्वपि केचिदत्र प्रावीण्यमालम्ब्य भवन्ति भव्याः ।
ज्ञानं हि नास्त्यर्चनकारणं नु—र्नवीनता तस्य तथाविधाऽद्य ॥

४

दानं प्रशंसन्ति च मैत्रमेके शीलं पुरोभाषणरूपमन्ये ।
निन्द्यः स जातोऽस्ति गुणैरमीभिः परप्रियागोचरतामवाप्तैः ॥

५

कः कामशास्त्रं कथयेत्तु शास्त्रं पशुप्रवृत्तिप्रविधायकत्वात् ।
तथापि तज्ज्ञे निरता रमण्योऽतज्ज्ञान् पशूनेव विभावयन्ति ॥

६

आलस्यमेते नरदोषमाहुर्भीरुत्वमन्ये कृपणत्वमेके ।
वन्द्योऽस्ति जातस्त्रिभिरेव दोषैरयं परस्त्रीविषयैरमीभिः ॥

## युगरूपानुसारतः ।

जनरूपानुसारेण प्रवर्तेत युगं नु किम् ।
आहोस्वित्स प्रवर्तेत युगरूपानुसारतः ॥
इत्यत्र संशये प्राप्ते द्वयमप्युपपद्यते ।
जनरूपानुसारेण युगरूपानुसारतः ॥
वीरान् धीरान् अनुसरन् कालो रूपाणि विन्दति ।
सरन्ति भीरवः क्लीबा युगरूपानुसारतः ॥
इत्यत्र संशये ब्रूयुर्नरोऽवसरवादिनः ।
पुमानेव प्रवर्तेत युगरूपानुसारतः ॥

वयं तु नूतने देहे पुराणं पुरुषं स्थितम् ।
विदन्तो मन्महे नेहां युगरूपानुसारतः ॥
अनाचारः समेधेत भ्रष्टाचारः प्रवर्धताम् ।
यदि लोकाः प्रेवर्तेरन् युगरूपानुसारतः ॥
सदाचारः स्थितिं पूर्वां शिष्टाचारश्च विन्दताम् ।
यदि नैते प्रवर्तेरन् युगरूपानुसारतः ॥
शैथिल्यं वर्णधर्माणां वैकल्यं चाश्रमस्थितेः ।
जायमानं दुनोत्यस्मान् युगरूपानुसारतः ॥
भारतीयः समाजोऽयं योरोपीयत्वमागतः ।
परित्यजंश्चरित्रं स्वं युगरूपानुसारतः ॥

## संयोजकाभिभाषणम्

अयि कृतसंस्कृतविद्वसभासभाजन, सुभाग्यभाजन, हे ।
सुरभारतीसःश्रितमज्जन, सज्जनसमाज, विनयोऽयम् ॥
कविसम्मेलनकर्मणि संयोजकमन्त्रिणा मया भाव्यम् ।
इत्ययमादेशो मां मुखरयतितरां पुरो वरिष्ठानाम् ॥
यद्यपि दूरनिवासी, तथापि विद्वच्चरणरजउपासी ।
इत्यहमिह विनियुक्तो, रसिकसभाजनगुणैर्वियुक्तोऽपि ॥
वयमिह संस्कृतभाषाक्षीरनिधिं वासरैरमथ्नीम ।
अलभेमहि कल्पद्रुमसदृशानि च सद्विचाररत्नानि ॥
सुललितचन्द्रमुखीयं संस्कृतविद्वत्सभाद्य विज्ञेभ्यः ।
दित्सति सुधालकरतः काव्यसुधां मोहिनीव देवेभ्यः ॥
तत्रावहिताः सन्तः श्रवणपुटैस्तां सुधां पिबत देवाः ।
कोलाहलमिह केचिद् दैत्याः कुर्वन्ति चेत् प्रकुर्वन्तु ॥
को नाम वात्र दैत्यः सर्वे भूदेवताश्च भूदेव्यः ।
पुरुषाः प्रभुनामानः स्त्रियश्च शान्त्यादिनामभाजोऽत्र ॥
एते स्वभावचपला अपि बाला बालिकाश्च मौनेन ।
सुरभारतीसपर्याकर्मणि साहाय्यमर्पयिष्यन्ति ॥

यो नाम मन्दिरेषु प्रलपति नूनं स मूकतां याति।
यो वा तिष्ठति मूकस्तं वाचाऽलङ्करोति देवकृपा ॥
प्रत्येकं कविरस्मिन्नेकामेकां प्रकाशयेत्पूर्तिम्।
गीतिं गजलकवालीरूपां वाऽप्येकलां गायेत् ॥

**संस्कृतात्संस्कृतिर्नः—**

श्रुतिकरणमपि स्यात् यज्ञकर्मापि च स्यात्,
मुखभुजजघनोत्थेष्वत्र कर्तापि च स्यात्।
त्रिकमिदमनुकूलं ह्योञ्च तत्सच्च सूते,
तदिदमवितथं यत् संस्कृतात्संस्कृतिर्नः ॥

**महर्घता:—**

अयं धनागमः कपिर्यथा यथाभिवर्धते,
तथा तथा महामुखी महर्घतात्र जायते।
अयं रघूद्वहो जनोऽद्य जीवनाब्धिलङ्घने,
तनुत्वमस्य शिक्षयेत्तदा तु हन्त भिक्षयेत् ॥

**आचारविभ्रंशः—**

'जातिं विस्मर, मा स्मरेः खलु कुलं, माऽधोष्व पौराणिकी—
र्गाथा, गाय कथाः किलार्थिकजगज्ज्वाल्यमानात्मनाम्।'
इत्थं शिक्षितवत्सु वाञ्छसि मुधैवाऽऽचारसंरक्षणम्,
एतत्तेऽन्धजनेषु नृत्यकरणं, वीचीषु सन्ताडनम् ॥

## अनिर्देश्यं ब्रह्म

अभिधा लक्षणा गौणी चेति तिस्रोऽत्र शक्तयः।
शब्दार्थस्य परिज्ञाने सतां साधनतां गताः ॥१॥
तत्र सङ्केतितार्थस्य बोधनादग्रिमाऽभिधा।
सङ्केतितश्चतुर्भेदो जात्यादिर्जातिरेव वा ॥
इत्यादिमननात्सिद्धा जात्यादिरहितस्य सा।
निर्गुणस्य किल ब्रह्मतत्त्वस्यानभिधेयता ॥
मुख्यार्थबाधे तद्युक्तो ययाऽन्योऽर्थः प्रतीयते।
रूढेः प्रयोजनाद्वासौ लक्षणा शक्तिरर्पिता ॥

इत्यत्र लक्षणालक्षमण्यपि तद्योग इष्यते ।
निर्गुणे ब्रह्मतत्त्वे तु न स योगो निविश्यते ।।
सादृश्यात्तु मता गौण्य इत्यस्ति सुधियां मतम् ।
ब्रह्मणा तु समं किञ्चिद्वस्तु नास्त्येव वस्तुतः ।।
इत्येतदखिलं चित्ते विचिन्त्यैव परीक्षिता ।
अनिर्देश्यत्वमाख्याय शङ्किता श्रुतिवाच्यता ।
अध्यासवादमाश्रित्य श्रीशुकेन महर्षिणा ।
जगत्स्रष्टृत्वमाख्यातं निर्गुणस्यापि तस्य नः ।।
कार्यकारणसम्बन्धमेवाश्रित्य च लक्षणाम् ।
तत्त्वमस्यादिवाक्येषु श्रुतिराश्रयते स्फुटम् ।।

**राजधानीय माध्यमिकविद्यालयेषु संस्कृतस्यानिवार्यत्वम् ।।**

माध्यमिकी या विद्या तस्या अप्यालये मया दृष्टम् ।
संस्कृतमिदमनिवार्यं तस्माद्युक्तं भवद्भिरिदमुक्तम् ।।१।।
बुद्धस्य मतं समतं, विमतमबुद्धस्य भवति धीराणाम् ।
युद्धस्य गतं सुगतं बिगतमयुद्धस्य हन्त वीराणाम् ।।२।।
प्राथमिकी किल कक्षा प्रादेशिक्यैव भाषया सुकरा ।
आन्तिमिकी पुनरेषाऽन्ताराष्ट्रियबन्धुनाङ्ग्लवचनेन ।।३।।
माध्यमिकीं तु ददन्तां संस्कृतभाषा श्वसेदियं भूमौ ।
पश्यति, नरो हि, भद्रं यदि जीवति श्वसिति चेत्सः ।।४।।
प्रथमः, पितुः प्रियत्वाच्चरमो, मातुश्च नैव, हेयः स्यात् ।
किन्तु शुनःशेपो वा, मध्यम इह शक्यते सुखं हातुम् । ५।।
इत्यपि, विचार्य, कुशलैरार्यैराचार्यचर्ययाभिज्ञैः ।
माध्यमिके विद्यालय इयमनिवार्यत्वमिष्यते नेतुम् ।।६।।
देहल्यां माध्यमिके, विद्यालय एव दीपिकेव धृता ।
अन्तर्बहिश्च, कुर्यात्प्रभाप्रसारं, स्वयं सुराणां गीः ।।७।।
इत्यपि चेतसि दधता समवदधानेन संस्कृतेर्मूलम् ।
संस्कृतभाषा सेयं माध्यमिके रक्षितुं किलायाचि ।।८।।

## प्रतिनिधिभाषणम् ।

श्रीमद्भिस्तावदस्याः प्रतिनिधियुगलं निश्चितं यत्सभाया,
विश्वाद्यां संस्कृतान्तां परिषदमयितुं, तस्य कार्यं शृणुध्वम् ।
सत्यं प्रायोऽप्रियं स्यादिति नियममहं लङ्घितुं संयतिष्ये,
संस्कारैः संस्कृतोऽपि प्रभवति मधुरः किन्तु पथ्योऽत्र निम्बः ॥

प्रातिस्विकं जिगमिषोः प्रातिनिध्यं तु मन्त्रिणः ।
लब्ध्वा श्रीमत्सभाध्यक्षात्क्लेशनविवर्जितम् ॥
प्रतिनिध्यन्तराद् भिन्ने वर्गे मार्गे च निर्गतः ।
भिन्ने कालेऽभ्युपेतोऽस्मि काशीमाकाशनिर्मलाम् ॥
पञ्चदश्याञ्च षोडश्यां तिथौ तत्राधिवेशितम् ।
साक्षादकरवं सम्यगधिवेशनपञ्चकम् ॥
तत्र यद्यदभूत्तत्तत्सर्वं वर्णयितुं क्षमः ।
नाहमस्मीति कथनं हेतुन्यासमपेक्षते ॥
विवृण्वे यदि तं हेतुं ब्रुवे दोषं तदात्मनः ।
न विवृण्वे कथं नाम प्रातिनिध्येऽपराध्यति ॥
श्रूयतां भवतामेतत्तत्र प्रतिनिधिद्वयम् ।
भुक्तवल्लब्धवत्तत्तन्न त्वनुष्ठितवन्मनाक् ॥
आद्येऽधिवेशने तावन्नासीदवसरोऽपि नः ।
द्वितीये तु किमप्यासीद् वक्तव्यं वटपत्तनात् ॥
किन्तु कार्यक्रमः कश्चिन्नात्र वा तत्र वा मया ।
लब्धः प्रतिनिधेः श्रीलात्सभाया मुख्यमन्त्रिणः ॥
शास्त्रार्थार्थं स्थिते तावत्तार्तीयीकेऽधिवेशने ।
भागं चेदभजिष्याम सभा नोपाकरिष्यत ॥
नूनं वैदुष्यमात्मीयं तत्राख्यास्यत केवलम् ।
तथापि प्रार्थितां तस्मिन्नाट्ये नाप्नुम पात्रताम् ॥
यत्नैरपि न लेभाते तत्र यौ नाट्यपात्रताम् ।
तावाप्नुतामयत्नेन पूजायां दानपात्रताम् ॥
अपरेद्युश्चतुर्थेऽपि प्रवेष्टुमधिवेशने ।

न कश्चिदपि यत्नोऽभूत्प्रतिनिध्योरिहत्ययोः ॥
अथाधिवेशनेऽवन्त्ये हरिशङ्करशास्त्रिभिः ।
निर्यात्स्वस्मासु नामोक्तं सभायाः प्रमुखश्रियाम् ॥
वटोदरप्रतिनिधेर्बदरीनाथशास्त्रिणः ।
प्रधानमन्त्रिणा नाम पत्रेऽलिखयत तत्क्षणम् ॥
अथोत्कलजगन्नाथपुरीप्रतिनिधी बुधौ ।
स्वस्वभाषणसंरम्भवशीकृतसभाहृदौ ॥
अस्मान् स्मारितवन्तौ यत्तन्नामालेखि भाषितुम् ।
तदा मया सूचिताः श्रीप्रमुखास्तेन वस्तुना ॥
तैः स वक्तृत्वभारोऽथ निक्षिप्तो मुख्यमन्त्रिणि ।
तेनाप्यसौ विनिक्षिप्तस्तत्क्षणं सहमन्त्रिणि ॥
सहमन्त्री तु भाराणां सहः सर्वसहोपमः ।
स्व्यकरोन्नाथ मां कश्चित्तद्द्वारेणाप्यपीपिडत् ॥
किंवा नूत्नमिदं नाम नग्राह्यमिति मन्त्रिणा ।
समयाल्पावशिष्टत्वमुपन्यस्य न लेखितम् ॥
यो वक्ष्यति स एवात्र धास्यते गौरवं परम् ।
इति बुद्ध्या तु तन्नाम नाग्रे संप्रैष्यताथवा ॥
ततः श्रीप्रमुखैरेव वक्तव्यमिति निश्चिते ।
किञ्चित्पत्राद्यमानेतुं ते निवासस्थलं गताः ॥
प्रत्यागच्छद्भिरेभिस्तु विघ्नो मार्जारनिर्मितः ॥
अलम्भि सभया चापि विरासः कालनिर्मिः ॥

इति विवरणमेतत्साधु विद्वत्सभायाः प्रतिनिधियुगलस्य प्रस्थितस्यास्ति काशीम् ।
अथ परिषदि तस्याज्ञातमासीत्तु यद्यत्सुविदितमिह सम्यक्तत्तु वो वृत्तपत्रात् ॥
व्ययमपि गमनादेः प्राप्यसर्वं भवद्भ्यः किमपि न कृतवान् हा ! यः सभाकार्यमार्याः ।
न खलु मुखमपीदं तत्र गत्वोदघाटि क्वचन वचनसज्जो लज्जतेऽमीरचन्द्रः ॥

## निर्णायकभाषणम्

करोडीमल्लेजं नवलमपि कालेजमधुना;
लसन्मङ्गुत्रामं विगलितविरामं प्रगतिमत् ।
मनो दर्शं दर्शं मम करुणाकर्षं कलयते,
तमेनं वेदारात्सपदि शिवनारायणबुधः ॥
इहैवाधीयानः कलितकविमानः सहृदयः
स्थितो निष्णातान्तः किल कमलकान्तो मम सुतः ।
चतुर्भी रक्षोभिर्दुरवसरविक्षोभिहृदयै—
र्हतोऽभूदाशाभिः सह बत विकाशाभिमुखितः ॥
कथास्तेनारब्धास्त्रिदश परिदृब्धाः समभवन्
उपन्यासा द्वित्राः प्रकरणविचित्राश्च समयुः ।
त्रयाणां काव्यानां प्रणयनमयानां विदधता
शते द्वे क्लृप्ते स्तो नवलकवितानां सुरुचिरे ॥
इतीदं साहित्यं गणितविषयेऽधीतिनमपि
प्रसादाद्देवानामनुगतमभूदेव सहजम् ।
प्रकाशं तद्यास्यत्यथ यदि कदाचिन्मतिमतां
सतां तद्युष्माकं करकमलयोरेष्यति युगम् ॥
भवद्भिर्नः कर्णामृतमिव वितीर्णं मृदुतरैः
स्वरैर्गायं गायं खलु शिखरिणीपञ्चकमिदम् ।
अतोऽस्माभिर्दूनैरपि पठितमूनैरपि नवैः
पदैर्योजं योजं करुण करुणं किन्तु तरुणम् ॥

—*—

# वैदिकसाहित्यपरिचयः

## तत्र ऋग्वेदपरिचयो नाम

### प्रथमोऽध्यायः।

( संस्कृत विद्यापीठे संस्कृति वर्गानध्यापयितुं विरचितमिदं ग्रन्थकारेण )

ऋग्यजुःसामाथर्वाणो वेदाश्चत्वार ईरिताः।
क्वचित्त्रयीपदेनैषां मन्त्रशैली निरूप्यते ॥१॥
अर्थव्यवस्थिताः पादा येषां तेऽत्र ऋचः स्मृताः।
मन्त्राः सामानि ये गेयास्ते यजूंषि न ये तथा ॥२॥
इति वैदिकमन्त्राणां त्रैविध्यात्कथिता त्रयी।
ऋचां त्वः पोषमित्यादिकर्मभिश्च चतुष्टयी ॥३॥
तत्र ऋग्वेदशाखानां संख्या स्यादेकविंशतिः।
उक्तं वाक्यपदीये हि श्रीभर्तृहरिणा तथा ॥४॥
आनन्दसंहितास्कन्दपुराणे त्वणुभाष्यतः।
चतुर्विंशतिशाखत्वमृग्वेदस्याहतुः स्फुटम् ॥६॥
तैत्तिरीये प्रातिशाख्ये भाष्ये वा माहिषेयके।
पातञ्जले महाभाष्येऽष्टाध्याय्यां काशिकादिषु ॥७॥
कल्पसूत्रे पुराणे च शाखानां पञ्चविंशतिः।
ऋग्वेदीयानां प्रदिष्टा, चतुस्त्रिंशदथ क्वचित् ॥८॥
एषा संख्याभ्यनिर्णीतिरनुसंधानमिच्छति।
अस्ति ऋग्वेदशाखैकविंशतिः सर्वसम्मता ॥९॥
लभ्यते तु स्वरूपेणैतासु शाकलसंहिता।
यस्या विभागोऽत्र द्वेधा मण्डलाष्टकभेदतः ॥१०॥

**ओम् सहस्रधा पञ्चदशान्युक्था यावद् द्यावापृथिवी तावदित्तत्।**
**सहस्रधा महिमानः सहस्रं यावद् ब्रह्म विष्ठितं तावती वाक् ॥१०. १० ११५. ८.॥**

इति मन्त्रानुसारेण ऋचां संख्यां बुधाः क्वचित्।
इह पञ्चदश प्राहुः सहस्राणि परे दश ॥११॥

शाकलातो वाष्कलायां सूक्ताष्टकमिहाधिकम् ।
किन्तु सा वाष्कला क्वापि नायात्यक्षिपथं बुधाम् ॥१२॥
ऋग्वेदीय—शाकलायां सामवेदीयकौथुमी ।
समाप्यतेऽतिरिच्यन्ते तन्मन्त्राः पञ्चसप्ततिः ॥१३॥
अथाप्यथर्ववेदीया यास्ति शौनकसंहिता ।
शतानि द्वादश ऋचां तस्यामपि समासते ॥१४॥
अथ कृष्णयजुर्वेद—तैत्तिरीयाख्यसंहिता ।
शौकनाया बहून् मन्त्रान् दधातीत्यपि विश्रुतम् ॥१५॥
इत्थमस्यां शाकलायां स्थिता वेदचतुष्टयी ।
विधिनाध्ययनादस्याः कृत्स्नवेदफलं भवेत् ॥१६॥
इन्द्रियाणि प्रमादोनि बुद्धिश्चाल्पावबोधभाक् ।
इति न ज्ञायतेऽन्वक्षानुमानैर्वेदनित्यता ॥१७॥
सा त्वाप्तवाक्यरूपेण शब्देनैवावगम्यते ।
शास्त्रेण जैमिनीयेन नैकधा सा समर्थ्यते ॥१८॥
मन्त्रा दृष्टा न रचिता इति कौषीतकेर्मतम् ।
ऐतरयोऽवदद्—गौरवीतः सूक्तानि दृष्टवान् ॥१९॥
श्रुतेर्न पौरुषेयत्वं पुंसः कर्तुरभावतः ।
इत्याह सांख्यं वेदार्थं, निरपेक्षं यदीश्वरे ॥२०॥
'अस्य भूतस्य महत एतन्निःश्वसितं मतम् ।
ऋग्वेदादि'रिति प्राह बृहदारण्यकं स्फुटम् ॥२१॥
श्वेताश्वतर आहस्म—'यो विधत्तो विधिं पुरः ।
यो वै वेदांश्च तस्मै तान् प्रहिणोति' स ईश्वरः ॥२२॥
'भूतं' भवद्, भविष्यञ्च सर्वं वेदात्प्रसिद्ध्यति ।'
इति त्रिकालाबाध्यस्य नित्यत्व मनुरब्रवीत् ॥२३॥
मन्त्रद्रष्टार ऋषयो न ते मन्त्रकृतः स्मृताः ।
इतोऽप्यपौरुषेयत्वं वेदानामिह सिद्ध्यति ॥२४॥

ऋषिञ्च देवतां छन्दो विनियोगं विदन्नरः ।
स्वाध्यायादि प्रकुर्वाणो विन्दतीश्रुतेः फलम् ॥२५॥
अस्याः शाकलशाखाया मण्डलानि दशवदन् ।
आद्यस्य तेषु ऋषयस्त्रयोविंशतिरीरिताः ॥२६॥
द्वितीयस्य गृत्समदो विश्वामित्रस्तृतीयके ।
वामदेवश्चतुर्थस्य, पञ्चमस्यात्रिरेव च ॥२७॥
भारद्वाजोऽथ षष्ठस्य, वसिष्ठः सप्तमस्य च ।
अष्टमस्य ऋषिः कण्वोऽनेके च नवमर्षयः ॥२८॥
दशमस्य क्षुद्रमहासूक्ताद्या बहवः स्मृताः ।
सर्वेऽपि ब्राह्मणाः पुण्या इत्याहुरिह वैदिकाः ॥२९॥
ऐतिह्यास्तु क्षत्रविट्शूद्रानप्याहुरन्तिमे ।
सन्देहास्पदमेवैतन्मतमद्यावधि स्थितम् ॥३०॥
द्योतनाद् दोपनाद् दानाद् देवा यास्कस्य सम्मताः ।
स्थानभेदात्ते त्रिधास्युरग्निवाय्विन्द्रसूर्यकाः ॥३१॥
अग्निस्तु पृथ्वीस्थानीयो वायुर्वन्द्रोऽन्तरिक्षगः ।
द्युस्थानीयो भवेत्सूर्य इत्याहुर्मुख्यदेवताः ॥३२॥
जडान्यपि श्रुतौ यानि स्तूयन्ते चेतनैः समम् ।
तत्रैतेषामधिष्ठात्री देवतैवावधार्यताम् ॥३३॥
मीमांसकास्तु मन्त्रेषु दिव्यां शक्तिमवस्थिताम् ।
अनादिकालादेवाहुर्निहितां देवतामिव ॥३४॥
एकादश स्थिताः पृथ्व्यां तावत्यश्चान्तरिक्षगाः ।
एकादश द्युस्थानीया स्त्रयस्त्रिंशद्धि देवताः ॥३५॥

ओम् ये देवासो दिव्येकादश स्थ पृथिव्यामध्येकादश स्थ ।
अप्सुक्षिथो महिनैकादश स्थ ते देवासो यज्ञमिमं जुषध्वम् ।
१. २१. १४०. ११ ॥

ओम् आ नासत्या त्रिभिरेकादशैरिह देवेभिर्यातं मधुपेयमश्विना ।
प्रायुस्तारिष्टं नीरपांसि मृक्षतं सेधतं द्वेषो भवतं सचाभुवा ॥
१. ७. ३४. ११. ॥

ओम् श्रुष्टीवानो हि दाशुषे देवा अग्ने विचेतसः ।
तान् रोहिदश्च गिर्वणस्त्रयस्त्रिंशतमा वह ॥१. ९. ४५. २॥

शाकलायां तैत्तिरीव शाखायामेतरेयके ।
ब्राह्मणे वै शतपथे त्रयस्त्रिशतस्मृता हि ताः ॥३६॥

क्वचिच्छाकलशाखायां ग्रहाग्न्यनलपावकाः (३३३९) ।
देवताः कथिता देव माहात्म्यख्यापनाथ तु ॥३७॥

ओम् त्रीणि शतात्री सहस्राण्यग्निंत्रिंशच्च देवानव चासपर्यन् ।
औक्षन्घृतैरस्तृणन्बर्हिरस्मा आदिद्धोतारं न्यसादयन्त ॥१.४.५३.६.

चन्दयन्ति मनुष्यान्वा, छादयन्ति मखादिकम् ।
एतद्वै छन्दसामाहुश्छन्दस्त्वं ते मनीषिणः ॥३८॥
मुख्यानीमानि छन्दांसि स्मृतान्यत्रैकविंशतिः ।
चतुर्विंशतिवर्णेभ्यः स चतुःशतवर्णमा ॥३९॥
यस्मै तु कर्मणे मन्त्रो वैदिको विनियुज्यते ।
तदेव विनियोगादिसंज्ञयेह प्रयुज्यते ॥४०॥
अर्थान्तरेऽथवा मन्त्रे स्थितेपि विषयान्तरे ।
कार्यान्तरेषु मन्त्रोऽयं विनियोगैर्नियुज्यते ॥४१॥
ब्राह्मणेभ्योऽथ कल्पेभ्य ऋषिदेवादिवेदनम् ।
भवतीत्याहुराचार्या ब्राह्मणाद्युपयोगिताम् ॥४२॥
विधर्मिणो विदेशोत्थास्तथा स्वैरविचारिणः ।
मन्यन्ते बहुदेवार्चा आर्चा नेश्वरवेदिनः ॥४३॥
तेषामेषोक्तिराधारं विना स्याच्चित्रकल्पना ।
देवतानां रहस्यस्य चाज्ञानस्योपजृम्भितम् ॥४४॥
देवतानां रहस्यञ्च बृहद्देवतयोच्यते ।
'एकमेवाद्वितीयं तन्नेह नानास्ति किञ्चन ।'४५॥
माहाभाग्याद् देवताया आत्मैको बहुधा स्तुतः ।
एकस्यात्मन एवान्येऽङ्गानि देवा भवन्त्यमी ॥४६॥

इति यास्कवचोयुक्त्या नामिनो बहुनामता।
ऐतरेयारण्यकेऽपि प्रोक्तार्चैकस्य ऋग्वताम् ॥४७॥
ऋग्वेदेऽपि 'महद्देवानामेकमसुरत्वकम्'। (३. ५. ५५)
द्वाविंशत्यृचसूक्तेन सोपपत्ति निरूपितम् ॥४८॥
प्राकृतिक्यां तत्र तत्र स्थूलमूर्तौ परां चितिम्।
पश्यन्नेव ऋषिर्ब्रूते महिमानममर्त्यगाम् ॥४९॥

ओम् अपश्यमहं महतो महित्वममर्त्यस्य मर्त्यासु विक्षु।
नाना हनू विभृते संभरेते असिन्वती बप्सती भूर्यत्तः ॥ १०. ६. ७९. १ ॥

इन्द्रो मनुष्यधृत्तस्य महिमा सिन्धुतोऽधिकः।
स स्वकीयेन महसा पिपर्ति सकलं जगत् ॥५०॥

ओम् इन्द्रं स्तवा नृतमं यस्य मह्ना विबबाधे रोचना विज्मो अन्तान्।
आयः पप्रौ चर्षणीभृद्वरोभिः प्र सिन्धुभ्यो रिरिचानो महित्वा ॥
१०. ७. ८९. १ ॥

स्तुत्यनानामूर्तिमन्तं दीप्तियुक्तं प्रभुं परम्।
श्रेष्ठं स्वेष्टं देवमिन्द्रं स्तौमीत्याद्यब्रवीदृषिः ॥५१॥

ओम् स्तुषेय्यं पुरुवर्पसमृभ्वमिनतममाप्त्यमाप्त्यानाम्।
आ दर्शते शवसा सप्त दानून् प्रसाक्षते प्रतिमानानि भूरि ॥१०. १०। १२०. ६॥

नासदीयादिसूक्तेषु यादृक् स्वैरोच्चचिन्तनम्।
तादृगद्यावधि क्वापि मानवेनास्ति न श्रितम् ॥५२॥
अन्यत्राप्यत्र सूक्तेषु परमात्मैकचिन्तनम्।
गभीरं गहनञ्चास्ति मन्त्रेऽप्येकत्र कुत्रचित् ॥५३॥

ओम् अचिकित्वाञ्चिकितुषश्चिदत्र कवीन् पृच्छामि विद्मने न विद्वान्।
वि यस्तस्तम्भ षलिमा रजांस्यजस्य रूपे किमपि स्विदेकम् ॥

इन्द्रप्रसादात्सावर्तिम्यं समाधावनुभूय च।
यवसादे यवादे च हार्दे च स्वं न्यभालयत् ॥५४॥

ओम् संयद्वयं यवसादो जनानामहं यवाद उर्वज्रे अन्तः।
अत्रा युक्तोऽवसातारमिच्छादथो अयुक्तं युनजद्ववन्वाम् ॥ १०. २२७. ९. ॥

कारको न परस्तस्मान्न परो धारकस्ततः ।
बलवानन्नवान्वायं पवित्रयति नस्तनूम् ॥५५॥

ओम् नैतावदेना परो अन्यदस्त्युक्षा स द्यावापृथिवी बिभर्ति ।
त्वचं पवित्रं कृणुत स्वधावान्यदीं सूर्यं न हरितो वहन्ति ॥ १०. ३. ३१. ८ ॥

मेधाविनोऽत्र कवयः कल्पयन्त्येकमीश्वीश्वरम् ।
नैकधा च वदन्त्येनमित्यस्तीश्वर वेदनम् ॥५६॥

ओम् सुपर्णं विप्राः कवयो वचोभिरेकं सन्तं बहुधा कल्पयन्ति ।
छन्दांसि च दधतो अध्वरेषु ग्रहान्त्सोमस्य मिमते द्वादश ॥ १०- १०. ११४. ५॥

आस्ते पुरुषसूक्तञ्च तदीश्वरनिरूपकम् ।
हिरण्यगर्भसूक्तञ्च वर्ततेऽत्र तथाविधम् ॥५७॥
अन्येष्वपि च मन्त्रेषु विद्यते तत्त्वचिन्तनम् ।
न किञ्चिदासीत्प्रलये कुतः सृष्टिरभूदिति ॥५८॥

ओम् न मृत्युरासीदमृतं न तर्हि न रात्र्या अह्न आसीत्प्रकेतः ।
आनीदवातं स्वधया तदेकं तस्माद्धान्यन्न परः किञ्चिदास ॥ १०. ११. १२९. २ ॥

आसीत् सृष्टौ कर्मफलबीजं यदवशेषितम् ।
अतः प्रभुः स्रष्टुमैच्छदित्यादि प्रतिपादितम् ॥५९॥

ओम् कामस्तदग्रे समवर्तताधि मनसो रेतः प्रथमं यदासीत् ।
सतो बन्धुमसति निरविन्दन् हृदि प्रतीष्या कवयो मनीषा ॥१०. ११. १२९. ४॥

एते मन्त्राश्च सूक्तानि खलूक्तानीह यान्यपि ।
तेषामेकाग्रचित्तेन कार्यमर्थविमर्शनम् ॥६०॥
ईश्वरास्तित्ववादे वा तदुपास्तिविधौ तथा ।
श्रुतिः स्मृतिः पुराणादिऋग्वेदान्नातिरिच्यते ॥६१॥
ऋग्वेदेऽग्निर्यजुर्वेदे वायुः सूर्योऽप्यथर्वणि ।
ईशशक्तितया प्रोक्तास्तेन वेदत्रयी स्मृता ॥६२॥
श्रीमद्भागवते विष्णु पुराणे चापि भारते ।
ब्रह्मादेशाद्वेदभागो व्यासोक्तः परिगीयते ॥६३॥

वेदान् विव्यास यस्मात्स वेदव्यास इतीरितः।
तपसा ब्रह्मचर्येण व्यस्य वेदान् अपाठयत् ॥६४॥
तत्र पैलस्य ऋग्वेदं, सामवेदञ्च जैमिनेः।
वैशम्पायनविप्रर्षे र्यजुर्वेदं यथाक्रमम् ॥६५॥
अध्यापत्सुमनसश्चार्थवाणं महामुनिः।
ततः पैलादिभिः स्वान्तेवासिनोऽध्यापिताः श्रुतिम् ॥६६॥
इत्थं यद्यपि ऋग्वेदशाखा बह्वयोऽभवन्निह।
तथापि तत्र पञ्चैव प्रधाना विदिता विदाम् ॥६७॥
शाकला, वाष्कला शाङ्खायनी चैवाश्वलायनी।
माण्डुका चेति ऋग्वेदः पञ्चशाखोऽस्ति कामदः ॥६८॥
यास्कस्य त्रिविधा मन्त्रा स्त्रयोदशविधा मताः।
उव्वटस्येति तान् सर्वान् शाकलायां लभामहे ॥६९॥
निर्भुजप्रतृणाख्याभ्यां पाठाभ्यामथ भेदतः।
संहितात्र भवेद् द्वेधा तन्नाम्नोरनु वर्तिनी ॥७०॥
सरलोऽविकलः पाठो निर्भुजः परिकीर्तितः।
पदक्रमादिपाठस्तु प्रतृणः परिगीयते ॥७१॥
पदक्रमौ शिखामाले ध्वजालेखे रथस्तथा।
दण्डश्चेति प्रकथिता पाठभेदा इहाष्ट ते ॥७२॥

—*—*—

## अथ ऋक्संहिता संस्कृति सूत्रोच्चयो नाम
## द्वितीयोऽध्यायः

समृद्धायां सभ्यतायां संस्कृतिः परिपुष्यति।
इति संस्कृतिचिन्तायां सभ्यतापि विचिन्त्यते ॥७३॥
विद्यानुभववृद्धानां सभा लोके सभा स्मृता।
तस्यां साधुश्च पुरुषः सभ्य इत्यभिधीयते ॥७४॥
तस्य सभ्यस्य यो भावो (यदस्तित्वं विशेषभाक्।
यद्व्यक्तित्वं विशिष्टं वा) सभ्यतेति स उच्यते ॥७५॥

देशे देशे सभ्यतेयं प्रायशोऽत्र विभिद्यते।
विद्या वानुभवो ह्यत्र पृथक्पृथगवेक्ष्यते ॥७६॥

तथापि कानिचिद् मूलभूततत्त्वानि सभ्यताम्।
परिवेष्ट्यावतिष्ठन्ते, दिशन्त्येतानि संस्कृतिम् ॥७७॥
यथा वासःपरीधानं, भूषणादि-विधारणम्।
वाहनादिव्यवस्था च निवासादि व्यवस्थितिः ॥७८॥

आत्मरक्षाविधानञ्च दुर्मदारिप्रमर्दनम्।
युद्धनीतिर्युद्धरीतिर्मैत्रीकरण कौशलम् ॥७९॥
प्रत्यक्षादुपरि स्थित्वा परोक्षार्थानुशीलनम्।
तत्प्राप्तये प्रयत्नाश्च शिक्षादीक्षादि साधनम् ॥८०॥
भोज्याभोज्यविवेकश्च भोजनं पानमप्युत।
भूगोलस्य खगोलस्य परिज्ञानं चिकित्सितम् ॥८१॥
स्थले जले च नभसि प्रयाणं, व्यापृतिस्तरः।
दानं भोगश्च वस्तूनां देहसंस्कारकल्पनम् ॥८२॥
सर्गादिप्रलयान्तानामितिहासोऽस्य कर्मणाम्।
वर्गकल्पनया राष्ट्र-सर्वाङ्ग-हित-साधनम् ॥८३॥
ईश्वरास्तित्वविज्ञानं जगत्यस्यापि वर्तनम्।
तत्प्राप्तिसाधनं तस्याराधनं तत्र लीनता ॥८४॥

उद्भिज्जादि परिज्ञानं पशुपक्ष्यादिपालनम्।
शीतोष्णवृष्टिविज्ञानं वातावरणवेदनम् ॥८५॥

शासनादिव्यवस्थानं जीवनोत्तरचिन्तनम्।
क्रीडादिहृदयाह्लादसाधनोपयुजा तथा ॥८६॥

कृष्यादिश्रमनिष्ठत्वं नद्यादेरुपयोजनम्।
आधिभौतिकविज्ञाने विज्ञाने चाधिदैविके ॥८७॥
आध्यात्मिके च विज्ञाने परिनिष्ठतता पुनः।
समाजस्य सुनिर्माणं तथा गार्हस्थ्यजीवनम् ॥८८॥

व्यक्तेः शक्तिसमृद्धिश्च जीवनोद्देश्यनिर्णयः।
तत्प्राप्तये प्रयतनमित्याद्यङ्गास्ति सभ्यता ॥८९॥
नैयून्याधिक्यतः सर्वदेशानां सभ्यता त्वियम्।
प्रायः सर्वं साधयित्वा शोभते सर्वतः स्फुटम् ॥९०॥
किन्तु देशान्तराण्यत्र कदा प्राप्तानि सभ्यताम्।
इत्यनुक्त्वा स्वदेशस्य सयभ्ताप्राप्तिरुच्यते ॥९१॥
ऋग्वेदस्यैकमत्येन प्राचीनतमतोच्यते।
इतः प्राचीन इह नो कश्चिद् ग्रन्थो निरीक्ष्यते ॥९२॥
मोक्षमूलरमुख्यास्तं ख्रीष्टाद् द्वादशतः पुरा।
शताब्दीभ्योऽथ विंशत्या हागार्कविशपादयः ॥९३॥
लोकमान्यश्च तं पञ्चचत्वारिंशत उद्गतम्।
पावगी सप्ततेः पूर्वं वैस्त्वेकादित्रिंशतः ॥९४॥
अविनाशचन्द्रदासस्त्वासहस्रात् पञ्चविंशतेः।
आ सहस्रात्पुरा पञ्चसप्ततात्प्रत्यपादयत् ॥९५॥
अनाद्यनन्तां मन्यन्ते भारतीयास्तु पण्डिताः।
प्रभोरनाद्यनन्तस्य वाणीं वेदात्मिकामिमाम् ॥९६॥
ऋग्वेदे होमयज्ञार्थो भवेत्सूक्तसमुच्चयः।
आर्याणां सभ्यतां, धर्मं, समाजं, संस्कृतिं तथा ॥९७॥
इतिहासञ्च तन्मन्त्रसहस्राणि ब्रुवन्ति नः।
बहवो मूल्यवन्तश्च ज्ञायन्ते विषयास्ततः ॥९८॥
न देवा एव देव्योऽपि स्तूयन्तेऽदितिमुख्यकाः।
नर्षिभिः केवलं नारी–ऋषिकाभिरपि स्फुटम् ॥९९॥
न नराणां कृते धर्मार्थादयश्च निरूपिताः।
यावन्नारीजनार्थेऽपि सर्वं तत्तत्समीरितम् ॥१००॥
अदितिर्दितिरप्यत्र द्यावापृथ्व्यावुषा तथा।
सीता सूर्या शचीन्द्राणी वाग् इला च सरस्वती ॥१०१॥
भारती च सरण्यूश्च सिनीवाली तथैव च।
राका गुङ्गुश्चासुदेवी श्रद्धा पृश्निरथापि च ॥१०२॥

वरुणानी तथाग्नायी, अरण्यानीति मुख्यतः ।
सन्ति देव्यः स्तुताः सूक्तं ऋग्वेदे बहुवर्णनैः ॥१०३॥
अप्रसिद्धाः परा देव्योऽपि प्राप्याः स्युर्गवेषणात् ।
नद्यश्चाप्सरसोऽप्यत्र स्तूयन्ते देवभावतः ॥१०४॥
जडोऽग्निर्जडवायुर्वा जडः सूर्यो जडा नदी ।
नं देवास्तेषु चिद्रूपाः देवा देवा अधिष्ठिताः ॥१०५॥

भगवान् सच्चिदानन्दः सर्वाधिष्ठातृभावतः ।
इह नानानामरूपैः स्तूयते वस्तुतः श्रुतौ ॥१०६॥
सप्तत्रिंशति देवेषु दृश्यन्ते सूक्तसूक्तयः ।
ऋग्वेदे चात्र देवीषु त्रयोविंशतिसंख्यया ॥१०७॥

आर्येषु नारीसम्मानं विवाहस्यानिवार्यता ।
गृहिण्यां गृहभावश्च कन्याजन्माभिकाङ्क्षणम् ॥१०८
कन्यानामादरो दानं दौहित्रे दायभागतः ।
गवादिदोहनं तासां दुहितृत्वाच्च लक्ष्यते ॥१०९॥
मथित्वा दधि ता आज्यं लभन्ते प्राज्यसंस्तुति ।
वस्त्रादिवयनं कुम्भाभरणं कृषिरक्षणम् ॥११०॥
पितृसेवा, पितृभ्रातृद्वारा तासां च रक्षणम् ।
अभ्रातृका चिन्तनीया, कुमारी पितृदायभाक् ॥१११॥
यथा काक्षीवती घोषा, गृहे नारीप्रधानता ।
वीरप्रसविनी काम्या, स्वधनाद्धनदायिनी ॥११२॥
आर्याणामेव मर्यादा कन्या–नारी–समादरे ।
अन्येषां द्रोहभाक् कन्या नारी चोपानहा समा ॥११३॥
स्त्रीशिक्षा, वेदपठनं, कवनं, मन्त्रदर्शनम् ।
नारीणामिह ऋग्वेदे दृश्यते श्रूयतेऽथवा ॥११४॥
ताभी रथादिनिर्माणं, वस्त्रालङ्कारसज्जनम् ।
सज्जितानाञ्च कन्यानां दानं, यज्ञेषु योजनम् ॥११५॥

दम्पतिभ्यां सूक्तक्लृप्तिर्लोपामुद्रर्ष्यगस्त्यवत् ।
आत्रेय्यपाला, सूर्या च विश्ववारा च रोमशा ॥११६॥
इन्द्राणी चेन्द्रमाता च, जुहूः श्रद्धा यमी च वाक् ।
उर्वशी ममता चैवेत्येता ऋषिपदं गताः ॥११७॥

एतदुक्तानि सूक्तानि काव्यगीतमयान्यहो ।
नृत्यं जानन्ति चैताश्च युद्धं यान्तिस्म भर्तृभिः ॥११८॥
विश्पला, मुगद्लानी च, स्त्रीसेना, दनुरेव च ।
अयुध्यन्त गवादींश्चाजयन् अङ्गक्षतिं गताः ॥११९॥

पेठुर्वेदं न ताः सर्वा, ब्रह्मवादिन्य एव तु ।
सद्योद्वाहास्त्वशिक्षन्त काव्यशास्त्रकलादिकम् ॥१२०॥

पुराकल्पे कुमारीणां मौञ्जीबन्धनमिष्यते ।
अध्यापनञ्च वेदानां सावित्रीवचनं तथा ॥१२१॥

पिता पितृव्यो भ्राता वा नैनामध्यापयेत्परः ।
इत्यादिस्मृतिवाक्यानि स्त्रीशिक्षामनुमन्वते ॥१२२॥
सुवासोधारणं तासामौर्णेयानां प्रधानता ।
स्त्रीभिस्तद्वयनं तन्तुवायैस्तत्तननादिकम् ॥१२३॥
करयोः कङ्कणे मालावलयायुधभूषणम् ।
सौवर्णमथ बालानां भूषणैः परिभूषणम् ॥१२४॥
वस्त्रालङ्कारसज्जायाः कन्यायाश्च वरेऽर्पणम् ।
उदीरितोऽत्र यूनोश्च विवाहसमयोऽस्फुटः ॥१२५॥

प्रौढे वयसि वा, प्राप्ताः कन्याश्चात्र स्वतन्त्रताम् ।
पतिपुत्रवती भूया इत्याशीः कन्यकाजने ॥१२६॥

कन्यावमुक्तवस्त्रादि ब्राह्मणेभ्यः स्म दीयते ।
पतिर्न पत्नीवासोभिरङ्गमाच्छादयत् स्वकम् ॥१२७॥

विवाहसूक्तमत्रानुसन्धेयं तद् विवित्सुभिः ।
सम्पठ्यते यदद्यापि हिन्दूद्वाहार्थमण्डपे ॥१२८॥

विवाहसूक्तसूक्तस्यार्थस्य सम्यक्प्रतीतये ।
शिक्षिताश्च वयःस्थाश्च कन्याः स्युरिति गम्यते ॥१२९
कल्पसूत्रेषु पुत्राप्त्यै स्मृता पुंसवनक्रिया ।
ऋग्वेदे प्रार्थना नानाविधाः पुत्रस्य गुप्तये ॥१३०॥
अनौरसोऽन्यजातो वा नेष्यते स्मर्षिराजभिः ।
अग्निश्च प्रार्थ्यते शत्रुहन्ता भूयाच्छिशुर्मम ॥१३१॥
घोषा कुष्ठेन दुष्टाङ्गी, अश्विभ्यामिह मोचिता ।
विवाहिता च वार्धक्ये, दृश्ये सूक्ते त्विहाश्विने ॥१३२॥
विश्पलाया रणे भग्ना जङ्घाश्विभ्यां कृताऽऽयसा ।
कक्षीवता च वृद्धेन वृचया युवतिर्वृता ॥१३३॥
च्यवनेन सुकन्या च श्यावास्येन तरन्तजा ।
ऋषिणा किल ब्राह्मणेनोदुह्यतेस्म नृपात्मजा ॥१३४
यजमानः पङ्गुरन्धः प्रसाद्येह परावृजः ।
इन्द्राल्लेभेङ्घ्रिनेत्रादि जरासूदवहद्वधूः ॥१३५॥
स्वनयेन स्वकन्याश्च दत्ताः कक्षीवते दश ।
यौतिके तेन दत्तानि निष्कादीनि बहूनि च ॥१३६॥
बहुपत्नीपरिणयस्तासां सापत्न्यदुःखिता ।
अश्वानां भूषणादीनि तथार्याणां धनिष्ठता ॥१७॥
पत्या च यज्ञसंयोगः पत्नीनामिह दृश्यते ।
यजमानौ हि तौ भूत्वा यजतः स्माहिताग्निकौ ॥१३८॥
गर्भरक्षावधानञ्च पूजार्चा प्रार्थना स्तुतिः ।
अत्र सूक्तद्वयं धत्ते सुधीभिरनुशोध्यताम् ॥१३९॥
दशमासान् गर्भवासस्ततो जन्म श्रुतं शिशोः ।
यथेष्टवर्णाकारत्वं शिशोर्देवार्चनादिना ॥१४०॥
यमजौ बहवश्चैव पुत्रा जन्यन्त एकदा ।
स्त्रीभिः संयुध्यमानानां धनं सर्वं स्म गृह्यते ॥१४१॥

पुरूरवस उर्वश्याः कथोपकथने श्रुतौ ।
स्त्रीप्रेम्णोऽस्थिरता, तासां मनोऽशास्यं मतिर्लघुः ॥१४२॥
लज्जावर्जाः स्त्रियो निन्द्या वन्द्या लज्जासमन्विताः ।
वाहने चाङ्गणे स्वप्नशीलास्ताः काश्चन क्वचित् ॥१४३॥
द्यूतव्यसनिनां भार्यात्यागस्तासाञ्च दूषणम् ।
तेषां निरादरः स्वस्त्रीदशादर्शनदुःखिता ॥१४४॥
असत्याः क्वचिदुत्प्रेक्षाजारसादृश्यकल्पनम् ।
तथा विपथगामिन्या नरकाप्तिः पतिद्विषः ॥१४५॥
सधवा स्वपती कान्तं, विधवेच्छति देवरम् ।
पत्या सह चितारोहाद्वारणं श्रूयते श्रुतौ ॥१४६॥
असत्याः स्वल्वलङ्कारयुक्तवाचा निरूपणम् ।
न सत्यं, सत्यमपि चेद्दस्युवर्गे तथा भवेत् ॥१४७॥
शिक्षादीक्षादृशा नारी क्रियाकौशलदृष्टितः ।
ऋग्वेदे च स्वरूपेणात्युदारैव निरूपिता ॥१४८॥

## वैदिकसंस्कृततिपरिचयो नाम तृतीयोऽध्यायः

देहावरणमारभ्य देह्यावरणवारणम् ।
यावत्सर्वं कार्यजातं तां तां संस्कृतिमाश्रितम् ॥१४९॥
भारतीयां संस्कृतिञ्च वेत्तुं वेदानुशीलनम् ।
आवश्यकं प्रथमतस्तत्राप्यृग्वेदवेदनम् ॥१५०॥
तत्रापि संहिताभागं मन्त्रभागापराभिधम् ।
अधिकृत्य समासेनोक्तं व्यासेन तनिष्यते ॥१५१॥
आसीद्वासःपरीधानं भारते प्राच्यकालतः ।
इति वस्त्रविधानेन तद्वानेन च गम्यते ॥१५२॥
वयनं कन्यकाभिश्च नारीभिश्च व्यधीयत ।
कुविन्दैरपि तत्प्रोक्तं क्रमादत्र निदर्श्यते ॥१५३॥

ओम् साध्वपांसि सनता न उक्षिते उषासानक्ता वय्येव रण्विते ।
तन्तुं ततं संवयन्ती समीची यज्ञस्य पेशः सुदुघे पयस्वती ॥ २.१.३. ६.

'अस्मत्कर्माणि साधूनि समुद्दिश्य सनातने ।
फलसेक्त्र्यावहोरात्रे कन्यके वानपण्डिते ॥१५४॥
स्तुते ततं तन्तुसमं यज्ञं सम्यक् स्वरूपतः ।
वितन्वत्यौ समीचीने फलदात्र्यौ भविष्यतः' ॥१५५॥

**ओम्** पुन, समव्यद्वितं वयन्ती मध्या कर्तोर्न्यधाच्छक्म धीरः ।
उत्संहायास्थाव्यृतूँरदर्धररमतिः सविता देव आगात् ॥ २. ४. ३८. ४.

रात्रिर्वयन्ती नारीव संवेष्टयति सन्ततम् ।
कर्म न्यधादुदस्थाच्च लोकः सूर्योदये पुनः ॥१५६

**ओम्** उभा उ नूनं तदिदर्थयेथे वितन्वाथे धियो वस्त्रापसेव ।
**सध्रीचीना** यातवे प्रेमजीगः सुदिनेव पृक्ष आ तंसयेथे ॥ १०. ६. १०६. १.

अश्विनौ स्तुतिकामौ नः कुविन्दौ पटवन्मतीः ।
तन्वाथेऽभीप्सितप्राप्त्यै तौ स्तुमोऽन्नविभूषकौ ॥१५७
न केवलं च कार्पासमूर्णावस्त्रमपि श्रुतौ ।
श्रूयते सूर्यकिरणैः शोध्यमानं समन्ततः ॥१५८

**ओम्** आधीषमाणायाः पतिः शुचायाश्च शुचस्य च ।
**वासो** वायोऽवीनामा वासांसि मर्मृजत् ॥ १०. २. २६. ६.

अव्योः स्त्रीपुंसयोः स्वामी तद्रोमपरिकल्पितम् ।
वासोवृन्दं स्वकिरणैः शोधयत्येष भास्करः ॥१५९
न केवलं वस्त्रवानं वस्त्रदानमपि श्रुतौ ।
श्रूयमाणं पुरा वस्त्रवानप्राचुर्यमावदेत् ॥१६०

**ओम्** उच्चा दिवि दक्षिणावन्तो अस्थुर्ये अश्वदाः सह ते सूर्येण ।
**हिरण्यदा** अमृतत्वं भजन्ते वासोदा सोम प्रतिरन्त आयुः ॥ १०. ९. १०७. २.

वदान्या ऊर्ध्वमृच्छन्ति सूर्यलोकं तुरङ्गदाः ।
स्वर्णदा देवलोकं च चन्द्रलोकं च वस्त्रदाः ॥१६१
ऊर्णावस्त्रमिवार्याणामूर्णाकम्बलमप्यभूत् ।
ऋग्वेदमन्त्रैरित्येष वृत्तान्तोऽपि निवेद्यते ॥१६२

**ओम्** उर्णम्रदा विप्रथस्वाभ्यर्का अनूषत । भवा नः शुभ्र सातये । ५. १. ५४.

ऊर्णाकम्बलवत्स्पर्शसुखदं, प्रथयेर्मृदु ।
हे बर्हिः शुभ्र हे भूया धनदानायनः सदा ॥१६३
आभूषणानि चास्त्राणि कण्ठवक्षःकराङ्घ्रिषु ।
वेदकालेऽपि दधति स्मार्या इत्यपि गीयते ॥१६४

ओम् ये अञ्जिषु ये वाशीषु स्वभानवः स्रक्षु रुक्मेषु खादिषु ।
श्राया रथेषु धन्वसु ।

आभूषणेषु चास्त्रेषु माल्येषु निजदीप्तिभिः ।
उरोभूषासु कटकेष्वङ्घ्रिभूषासु चाश्रिताः ॥१६५
न स्वयं भूषणैः सज्जा यावत्तैस्तैः शिशूनपि ।
अलङ्कुर्वन्ति स्मातिमात्रं नववैभवशालिनः ॥१६६

ओम् सखाय आ नि षीदत पुनानाय प्रगायत । शिशुं न यज्ञैः परि भूषत श्रिये ।
९. ७. १०४. १.

सखिभूता ऋत्विजस्ते भूषयन्तु ससूक्तकैः ।
सोमं शिशुमिव स्वर्णभूषणैरिव सन्मखैः ॥१६७
निष्कादिस्वर्णभूषाणामुपयोगं स्म जानते ।
आर्या वैदिककालेऽपीत्यृग्वेदाज्ज्ञायतेऽप्यदः ॥१६८

ओम् निष्कं वाघा कृणवते स्रजं वा दुहितर्दिवः । त्रिते दुष्वप्न्यं सर्वमाप्त्ये परि दघस्यनेहसो व ऊतयः सुऊतयो व ऊतयः ॥ ८. ६. ४७. १५

दद्मः सुवर्णकाराय मालाकाराय वाखिलम् ।
दुष्टस्वप्नफलं प्राप्यं यत्त्रिते तद्भगो उषे ॥१६९
निष्कं ग्रैवेयकं वेदे प्रख्यातं कण्ठभूषणम् ।
तेन चालङ्कृता आर्या विद्युद्बलमवर्धयन् ॥१७०

ओम् आ श्वैत्रेयस्य जन्तवो द्युमद्वर्धन्त कृष्टयः ।
निष्कग्रीवो बृहदुक्थ एना मध्वा न वाजयुः ॥ ५. २. १९. ३.

हे जायमाना मनुजाः संवर्धयत वैद्युतम् ।
बलं भवन्तो ग्रीवायां निष्केण समलङ्कृताः ॥१७१
न स्वर्णभूषणान्येव सुवर्णास्तरणान्यपि ।
वैदिकेषु रथेष्वासन् यानेष्वन्येषु चाप्यहो ॥१७२

**ओम् य ऋज्रा मह्यं** मामहे सह त्वचा हिरण्यया ।
**एष विश्वान्यभ्यस्तु** सौभगासङ्गस्य स्वनद्रथः ॥ ८. १. १. ३२.

हिरण्मय्या त्वचा युक्तान् गतिशीलान् ददौ रथान् ।
आसङ्गात्मा स विश्वानि अभ्यस्त्वरिधनानि नः ॥१७३
भूमध्यगतमप्यार्या धनमैच्छन् दिविस्थितम् ।
इति वेदेषु विज्ञानविशेषः सूच्यतेऽञ्जसा ॥१७४

**ओम् स नो** विश्वा दिवो वसूतो पृथिव्या अधि । पुनान इन्दवा भर । ६. २. ५८. ४.

हे सोम, पवमानस्त्वं सर्वां नः श्रियमाहर ।
या स्थिता दिवि या चैषा भूमध्यमधितिष्ठति ॥१७५
नापिता अपि वेदेषु श्मश्र्वादिवपनैर्नरान् ।
भूषयन्ति स्मेति तत्रत्यैर्मन्त्रैरवगम्यते ॥१७६

**ओम् यदुद्वतो** निवतो यासि बप्सत्पृथगेषि प्रगर्धिनीव सेना ।
**या ते वातो** अनुवाति शोचिर्वप्तेव श्मश्रु वपसि प्र भूम ॥ १०. ११. १४२. ४.

अग्ने ! नीचांस्तथैवोच्चान् वनवृक्षान् दहस्यरम् ।
वातानुगतशोचिस्त्वं नापितो भासि वै वपन् ॥१७७
शिखा वैदिककालेऽभूद्विविधैर्विधिभिर्धृता ।
तथा वसिष्ठगोत्राणां श्रुता दक्षिणतः शिखा ॥१७८

**ओम् श्वित्यञ्चो** मा दक्षिणतस्कपर्दा धिय जिन्वासो अभि हि प्रमन्दुः ।
**उत्तिष्ठन्वोचे** परिबर्हिषो नृ॰न्न मे दूरादवितवे वसिष्ठाः ॥ ७. २. ३३. १.

श्वेतवर्णाः कर्मपूराः सुता दक्षिणतःशिखाः ।
हर्षदाः स्युर्न मद्दूरे वसिष्ठेनेदमर्थितम् ॥१७९
वेदकालेऽपि चात्रासन् रथकारा भृगूद्भवाः ।
रथवत्स्तोत्रसंस्कारो योषावच्चात्र दृश्यते ॥१८०

**ओम् एतं** वां स्तोममश्विनावकर्मा तक्षाम भृगवो न रथम् ।
**न्यमृक्षाम योषणां** न मर्ये नित्यं न सूनुं तनयं दधानाः ॥ १०. ३. ४०. १४.

हे अश्विनाविदं स्तोत्रं वां वयं साध्वकुर्महि ।
यथा रथं ते भृगवो यथा योषां च पुत्रिणः ॥१८१

## अथ यजुःसंहितासंस्कृतिसूत्रोच्चयो नाम चतुर्थोऽध्यायः

यजेर्यजुः स्यात्पूजार्थो यज्ञार्थो गद्यवाचि वा।
स्वभावात्तद् यजुर्वेदे यज्ञकर्म-प्रधानता ॥१८२
यज्ञेषु ये प्रयुज्यन्ते मन्त्राश्च नियमा इह।
तेषामेव समष्टिः स्याद् यजुर्वेदस्य संहिता ॥१८३

अत एव यजुर्वेदेऽध्यायाद्याः कर्मसङ्गताः।
यज्ञोचितैर्वा मन्त्रैर्वा विधानैर्वा विभाजिताः ॥१८४
यज्ञैर्देवाः प्रसीदन्ति, वर्षन्त्यन्नफलोदयम्।
यैः सुखेन च शान्त्या च जना जीवन्ति भूतले ॥१८५
यज्ञार्थं कालबोधाय ज्यौतिषं शास्त्रमुद्गतम्।
विशुद्धोच्चारणार्थञ्च शास्त्रं व्याकरणं महत् ॥१८६
दैवविद्या ब्रह्मविद्या, विद्या दार्शनिकी तथा।
यज्ञादिफलचिन्तायामेव ब्रह्मर्षिभिः स्मृताः ॥१८७
यज्ञकुण्डादि—रचनोचित—रेखादि—लेखनात्।
जातं ज्यामितिशास्त्रं तद् रेखागणितनामकम् ॥१८८
इत्यमुष्माद्यजुर्वेदान्नानाविद्या विजज्ञिरे।
इति वेदेषु यजुषां महिमा गीयते महान् ॥१८९
अथैतस्मिन् यजुर्वेदे शतं शाखाः पतञ्जलिः।
सप्तोत्तरं पुराणानि, परे प्राहुर्नवोत्तरम् ॥१९०
षडशीतिरिमाः प्रोचे चरणव्यूहकारकः।
येनोपलब्धा यावत्यस्तेन तावत्य ईरिताः ॥१९१
किन्त्वद्य तासां पञ्चैव लभ्या रूपेण संहिताः।
नाम्ना त्वद्यापि भूयस्यः श्रूयन्ते शास्त्रविस्तरे ॥१९२
यजुर्वेदस्य भागौ द्वौ कृष्णशुक्लाभिधानकौ।
तत्र कृष्णाभिधानस्य शाखा द्वादश विश्रुताः ॥१९३

मैत्रायणी--तैत्तिरीय--चरकाश्च कपिष्ठलाः।
वार्तान्तवेय—श्वेताश्वतर—प्राच्यौपमन्यवाः ॥१९४

चारावारायणीये च कठाहरकसंज्ञिते ।
इति प्रोक्ताः पुराणेषु नामतो नाद्य ताः समाः ॥१९५
मैत्रायणी तैत्तिरीया कठा चेतीह मुद्रिताः ।
काले पतञ्जलेर्लभ्याऽभवच्चरकसंहिता ॥१९६
औक्ष्या च खाण्डिकेया च सा द्विधाभूदवेक्षिता ।
तत्रापरस्याः पञ्चासन्नुपशाखाः सुविश्रुताः ॥१९७
हिरण्यकेश्यापस्तम्बी सत्याषाढी तथैव च ।
बौधायनी पञ्चमी तु स्मृता शाटचायनी शुभा ॥१९८
मैत्रायण्या अपि प्रोक्ता उपशाखाः षडत्र यत् ।
हारिद्रवीय--वाराह--च्छागलेयाः समानवाः ॥१९९
श्यामायनीया चाप्येता दुन्दुभा चेति विश्रुताः ।
शाखोपशाखाभिरियं तताऽऽसीत्कृष्णसंहिता ॥२००
अथ शुक्लयजुर्वेदशाखाः सप्तदशोदिताः ।
माध्यन्दिनी च काण्वी च जाबाली गालवी तथा ॥२०१
कापाली पुनरौधेयी वैधेयी वैजवी पुनः ।
वैनेयी चपि वैरेयी पौण्ड्रवत्सी च संहिता ॥२०२
पाराशरीया ज्ञापीया तथा ताप्यायनीयका ।
कात्यायनीयका चैवावटिका परमा च सा ॥२०३
एतासु त्वद्य लभ्येते काण्वी माध्यन्दिनी च ते ।
इत्थं शाखाशतात्पञ्च यजुर्वेदस्य धीमहे ॥२०४
शेषा वैदेशिकैश्चैव विधर्मैश्चैव राजभिः ।
दाहिता नाशिता वेति तैस्तैर्लेखैस्तु विद्महे ॥२०५
कामधेनौ स्मृतिग्रन्थे भोजो धारापुरीश्वरः ।
मतादित्येन विप्राणां ग्रन्था दग्धा इति व्यधात् ॥२०६
'सह्याद्रिखण्डो' बौद्धैश्च ग्रन्थागारो विनाशितः ।
अलक्षेन्द्रीयपुर्याञ्च यवनैर्दाहितोऽपरः ॥२०७

महमूदेन बहवो ग्रन्था मोहेन मर्दिताः।
अथ नादिरशाहेनानादरेण विनाशिताः ॥२०८

भूयांसो यवनेन्द्रास्तु संस्कृतग्रन्थवह्निना।
स्नानागारानुष्णयन्ति स्मेति सर्वत्र विश्रुतम् ॥२०९

इत्थं मात्सर्यतो बौद्धैर्यवनैश्च विनाशिताः।
ग्रन्थान्तराणीवैताः स्युर्लोपिता इति मन्महे ॥२१०
अलब्धाः शोचनीयास्तास्तथा लब्धा अपीह नः।
ये यच्छाखा द्विजास्तेऽपि तां नैवाधीयतेऽधुना ॥२११
विन्ध्यस्य नोत्तरस्यां ता, दक्षिणस्यान्तु काश्चन।
यथा स्थिता महाराष्ट्रे सम्यक् शाकलसंहिता ॥२१२
इत्थमत्र यजुर्वेदशाखानां कथितात् शतात्।
लब्धासु तिस्रः कृष्णस्य द्वे शुक्लस्येत्युदीरितम् ॥२१३
तैत्तिरीया पुराणेषु तित्तिरीभूत--शिष्यकैः।
याज्ञवल्क्येन गुर्वाज्ञामनु वान्ता तु भक्षिता ॥२१४
इत्युक्ता, पाणिनिस्तत्र किन्तु नैवास्ति सम्मतः।
अथ चात्रेयशाखापि ऋषिं ब्रूतेऽत्र तित्तिरिम् ॥२१५

इह कृष्णयजुर्वेदे गद्यं पद्यञ्च मिश्रितम्।
मिश्रीभावं सूचयते मन्त्रब्राह्मणभागयोः ॥२१६

तैत्तिरीयेऽथ ऋग्वेदे सप्त काण्डान्यधीमहे।
चतुश्चत्वारिंशतञ्चाध्यायान्वात्र प्रपाठकान् ॥२१७

एकपञ्चाशदधिकान्यनुवाकशतानि षट्।
मन्त्रान् वसुग्रहब्रह्मनेत्रसंख्यां (२१९८) श्च साम्प्रतम् ॥२१८

रसग्रहाक्षिखब्रह्मब्रह्मसंख्याक्षराणि (११० २९६) च।
अस्यां श्रीसायणादीनां भाष्याण्यपि लभामहे ॥२१९

ऋषयस्त्वस्य न स्पष्टा अननुक्रमदर्शनात्।
षड् ऋषीननुमन्यन्ते विद्वांसः काण्डनामभिः ॥२२०

प्राजापत्यश्च सौम्यश्चाग्नेयं वा वैश्वदेवकम् ।
स्वायम्भुवञ्चारुणं च काण्डाख्याः षडिमाः स्थिताः ।।२२१
सत्याषाढस्य सूत्रस्य व्याख्यायां प्रथमेऽपरे ।
काण्डे प्रजापतिः प्रोक्तः शेषास्ते पञ्च पञ्चसु ।।२२२
साहिती वारुणी चैव याज्ञिकी चैव देवता ।
इति त्रीण्यपि नामानि गीयन्ते काण्डगैः समम् । २२३
अत्राश्वमेधयज्ञान्ते मन्त्रा राष्ट्रियतोज्ज्वलाः ।
तत्र राष्ट्राभिवृद्धयर्थं देवा एवार्थिता इह ।।२२४
तैत्तिरीयामधि प्रायो मन्त्रा वाजसनेयिकाः ।
देवा अप्यत्र तत्तुल्या रुद्राध्याये प्रधानता ।।२२५
शाकल्यः क्रमपाठस्य पदपाठस्य शाकलः ।
आत्रेयो वान्तिमे काण्डेऽस्ति सौदासवशिष्ठकम् ।।२२६
क्वचित्संस्करणे चास्या धृतराष्ट्रादिकीर्तनम् ।
वराह--कालकञ्जादिवार्तास्या ब्राह्मणे स्थिता ।।२२७
तैलङ्गा द्राविडाश्चेमाम् आपस्तम्बामचीकथन् ।
माध्यन्दिनीवत्त काश्यां षादेः खादिं वदन्ति वा ।।२२८
अस्ति भूयः समानत्वं शाकलातैत्तिरीययोः ।
शाकलावत्त्रयस्त्रिंशद्देवा अत्राप्युदीरिताः ।।२२९
सिनीवाल्याः सौपशात्वं शण्डामर्ककथा तथा ।
अतिदीर्घनिशोल्लेखः, तत्पारप्राप्तयेऽर्थना ।। २३०
इत्थं नानाविधं साम्यं शक्यं द्रष्टुं द्वयोर्बुधैः ।
मैत्रायण्यां संहितायामस्ति काण्डचतुष्टयम् ।।२३१
चतुःपञ्चाशदध्याया मन्त्राः सिन्धुगुणार्णवः ।
नात्रोच्चारणचिन्हानि पादव्यूहेऽग्रिमा त्वियम् ।।२३२
कलापशाखापर्याया प्रसिद्धाऽऽसीत् पतञ्जलौ ।
'अध्यगात्कठकालाप'मित्यादि तदुदाहृतेः ।।२३३

अस्याः षडुपशाखाः स्युर्मानवाद्याः सुविश्रुताः ।
मनोर्मानवधर्माख्यसूत्रमूलं हि मानवी ॥२३४
वाराहशाखाप्येतासु यस्या वाराहसूत्रकम् ।
अथ काठकशाखायामष्टादश प्रपाठकाः ॥२३५
स्थानका वाऽनयोर्भेदः स्वल्पीयानेव शाखयोः ।
समा संख्यानुवाकानामश्वमेधान्तवर्णनम् ॥२३६
किन्तूच्चारणचिन्हानि काठके, न कलापके ।
तिस्रः कृष्णयजुर्वेदशाखा एता मिथः समाः ॥२३७
क्रमे तु भेदो, मन्त्राणां मन्त्रांशानाञ्च भेदकः ॥२३८
इत्यादि बहु वक्तव्य मुपयोगाल्पताकृतात् ।
प्रतिरोधान्निरोध्यान्तः प्रोच्यतेऽपौरुषेयता ॥२३९

## वेदानामपौरुषेयत्वं नाम

### पञ्चमोऽध्यायः

वेदः प्रोक्तः शब्दराशिः स मन्त्रब्राह्मणात्मकः ।
ऋग्यजुःसामाथर्वाणो यस्य भेदा उदाहृताः ॥२४०
वेदेषु कालिदासादिप्रणीतकवितादिवत् ।
रसा गुणा अलङ्कारा रीतयश्च विभान्ति ताः ॥२४१॥
'कविर्मनीषी परिभूः स्वयम्भूः' स निरश्वसत् ।
वेदात्मकानि काव्यानि तत्तेष्वेषां स्थितिर्भवेत् ॥२४२॥
किन्तु क्लिष्टार्थमुख्या यत्तेषु दोषा अपि स्थिताः ।
तत्तेषां पौरुषेयत्वे नास्ति कश्चन संशयः ॥२४३॥
तथाहि—अभ्यक्सेत्यादौ क्लिष्टार्थत्वमवस्थितम् ।
अधः स्विदासीदित्यादौ सन्दिग्धार्थत्वमप्युत ॥२४४॥
अथो 'शृणोत ग्रावाणः; इति 'त्रायस्व ओषधे' !
'स्वधिते मैनं' मित्यादौ प्रतीपार्थत्वमस्ति च ॥२४५॥
'शुभिके शिर आरोह शोभयन्ती मुखं मम' ।
इत्यादिषु प्रवृत्तानां प्रवर्तनमिवाफलम् ॥२४६॥

'एक एवे'ति च प्रोक्ते सहस्राणि सहस्रशः ।
इत्याद्युक्तौ व्याहतार्थो नाम दोषः प्रतिष्ठितः ॥२४७॥
'उरु प्रथस्वे'ति मन्त्रे पठिते ब्राह्मणे पुनः ।
पुरोडाशं प्रथयतीत्युक्तौ स्यात्पुनरुक्तता ॥२४८
'चत्वारि श्रृङ्गा' इत्यादौ चासतोऽर्थस्य वर्णनम् ।
'अदितिर्द्यौ' रिति च विप्रतिषिद्धार्थशंसनम् ॥२४९
'किं ते कृण्वन्ति' इत्यादावनित्यानाँ च कीर्तनम् ।
मन्त्राणां पौरुषेयत्वं व्यञ्जयन्ति बलादिव ॥२५०
न केवलञ्च मन्त्राणां, यावद् ब्राह्मणगामिनाम् ।
विधीनामर्थवादानामपि दोषा भवन्ति ते ॥२५१
'अनाहुतिर्वा उच्यन्ते जर्तिलाश्च गवीधुकाः ।
पुनस्तेषाममीषाञ्च यवाग्वाऽऽहुतिरिष्यते ॥२५२
'एवमेवोदिते सूर्ये जुहोती'ति विधिः स्वयम् ।
प्रद्रुतातिथिदृष्टान्तद्वारेण विनिवार्यते ॥२५३
'अतिरात्रे षोडशिनं गृह्णाती'ति विधिः पुनः ।
'नातिरात्रे षोडशिनं गृह्णाती'ति निरस्यते ॥२५४
इत्यादिषु व्याहतत्वं स्फुटमेव प्रतिष्ठितम् ।
न केवलं चाप्रवृत्तप्रवर्तकविधे विधौ ॥२५५
आत्मा वा इदमित्यादावसद्वा इदमित्यथ ।
अज्ञातज्ञापकेऽप्यस्मिन्नयं दोषो निशाम्यते ॥२५६
निरर्थकत्वं च स्पष्टमर्थवादेषु विद्यते ।
सोऽरोदीद्यदरोदीत्तद् इत्यादिष्वखिलेष्वपि ॥२५७
शास्त्रलोकविरोधेन विद्याख्यातिविरुद्धते ।
अप्यर्थवादवाक्येषु स्थिते अत्रावलोकिते ॥२५८
तद्यथास्ति 'मनः स्तेनं वागप्यनृतवादिनी ।
इत्यर्थके, 'धूम एवाग्नेर्दिवे'त्यादिके क्रमात् ॥२५९

'सर्वान् कामानवाप्नोति पूर्णाहुत्येति चासतः ।
पदार्थस्य प्रकथनमन्यवैयर्थ्यबोधकम् ।।२६०

न पृथ्व्यामग्निश्चेतव्यो नान्तरिक्षे च नो दिवि ।
इत्याद्युक्तिरसम्भूत--पदार्थ--प्रतिपादिनी ।।२६१

सत्सु चैतेषु दोषेषु वेदानां पौरुषेयता ।
स्वीकार्या भुवि हि ख्याता पुरुषाणां प्रमादिता ।।२६२

इत्युक्तवन्तं प्रत्याहुः पौरुषेयत्ववारकाः ।
क्लिष्टार्थत्वादिदोषाणां समाधाने परायणाः ।।२६३

'अस्मभ्यं वृष्टये वज्रं तत्तवेन्द्र प्रकल्पताम् ।
'इति स्पष्टापि'अभ्यक्से'ति ऋक्क्लिष्टा किलाधियाम् ।।२६४

स्थाणोश्च नापराधोऽयं यत्तमन्धो न पश्यति ।
पुरुषस्यापराधोऽसौ यद्वेदार्थं न वेत्ति सः ।।२६५

अधः स्विदासीदित्यादावात्मनोऽतिगभीरता ।
'को अद्धा वेद' इत्यादौ मन्त्रेऽप्यस्त्येव दर्शिता ।।२६६

स्वधिते मैनमित्यादौ देवता त्वभिमानिनी ।
स्तूयते तात्स्थ्यसम्बन्धात्तेन नाम्नैव चेतना ।।२६७

एक एव सहस्राणि रूपाणि धरति प्रभुः ।
स्वमहिम्ना ततस्तत्र व्याघातस्यास्ति का कथा ।।२६८

शुभिके शिर आरोहेत्यादौ तद्देवता स्तुता ।
तस्याश्चानुग्रहः कश्चिदविज्ञातः प्रकाशितः ।।२६९

उरु प्रथस्वेति मन्त्रे य एवार्थोऽवभासते ।
पुरोडाशं प्रथयतीत्यत्र सोऽनूद्यते विधौ ।।२७०

परिसंख्यार्थवादो वा गुणार्थेन पुनः श्रुतिः ।
इत्यादि चानुवादस्य तस्य स्पष्टं प्रयोजनम् ।।२७१

चत्वारि शृङ्गा इत्यत्र तादृशी देवता स्तुता ।
यज्ञात्मिकातिशयोक्त्याऽध्यवस्याङ्गानि तत्तया ।।२७२

अदितिर्द्यौरिति गुणैर्युज्यतेऽनेकरूपता ।
त्वमेव माता च पिता त्वमेवेत्यादिवद् बुधाः ॥२७३
किं ते कृण्वन्ति इत्यादौ कीकटादिपदश्रुतिः ।
समानाऽनित्यभावानां नित्यानामेव बोधिका ॥२७४
इत्थं मन्त्रेषु ये दोषाः कैश्चिदुद्भाविता हठात् ।
सर्वेऽपि ते समाधानं भजन्ति सुविचारतः ॥२७५
यथा मन्त्रा विनिर्दोषास्तथैव ब्राह्मणान्यपि ।
निर्दूषणानि सिद्ध्यन्ति बुद्ध्या बुद्ध्वा विचारणात् ।२७६
उदितेऽनुदिते चैव समयाध्युषिते तथा ।
सर्वथा वर्त्तते यज्ञ इतीयं वैदिकी श्रुतिः ॥२७७
इत्यादिस्मृतिवाक्येषु व्याहतत्वं समाहितम् ।
षोडशिग्रहणार्थोऽपि मीमांसासु निरूपितः ॥२७८
आत्मा वा इदमित्यादौ व्यक्ताव्यक्तस्थिती स्थिते ।
न तु वेदे सदसती तत्त्वे मूलतया स्तुते ॥२७९
सोऽरोदीदिति वाक्यञ्च रजतादानवाक्यतः ।
सम्बद्धं रजतस्याश्रुभवत्वं वक्ति कारणम् ॥२८०
स्तेनं मनोऽस्तीति वचो वस्तुस्थितिनिदर्शकम् ।
न तु शास्त्रविरोधेन स्तेयादीनां विधायकम् ॥२८१
तथा च 'धूम एवाग्नेर्दिवेति' बहुदूरतः ।
दिवा धूमो नक्तमग्निर्दृश्यः स्यादिति वक्ति नः ॥२८२
शास्त्रलोकविरुद्धत्वं नात्र तत्र च संस्थितम् ।
सर्वान् कामानितीहापि सर्वत्वमाधिकारिकम् ॥२८३
नान्यवैयर्थ्यहेतुः स्यान्नासतश्च प्रकाशकम् ।
फलस्य कर्मनिष्पत्तेर्लोकवत्परिणामतः ॥२८४
पृथिव्यामग्निचयनाद्धिरण्ये तत्प्रशस्यते ।
इति तात्पर्यमादेयं शब्दानां तत्परत्वतः ॥२८५
इत्थं मन्त्रेषु विधिषु चार्थवादेषु सर्वथा ।
दोषाभावान्न वेदानां कर्तृत्वं पुरुषे स्थितम् ॥२८६

प्रमादशीलः पुरुषः पुरुषो वञ्चनात्मकः ।
इति तत्कृतिषु श्रद्धामद्धा नादधते बुधाः ॥२८७
वेदानां कर्तृता तावत्सर्वज्ञे पुरुषोत्तमे ।
स्थितेति न प्रमादोऽत्र वञ्चना वा विशङ्क्यते ॥२८८
प्रमादवञ्चनामुख्यैर्दोषैर्मुक्ततया तथा ।
वेदानां वेदविद्भिरभ्युक्ताऽपौरुषेयता ॥२८९
वेदांश्चैके सन्निकर्षं पुरुषाख्या इतीदृशी ।
विकल्पना निरस्तैव प्रवक्तृपुरुषाख्यया ॥२९०
अनित्यदर्शनाच्चेति शङ्कापीह निरस्यते ।
उक्तं तु शब्दपूर्वत्वमिति सूत्रे विशेषतः ॥२९१
श्रुतिसामान्यमात्रेण तत्तथा प्रतिभाति नः ।
व्याख्यानतो विशिष्टा स्यात्प्रतिपत्तिर्निरुक्तगात् ॥२९२
औत्पत्तिकस्तु शब्दार्थेनासौ सम्बन्ध इष्यते ।
सिद्धे शब्दार्थसम्बन्धे नित्यत्वं ख्याप्यते श्रुतेः ॥२९३
कृते चाविनियोगः स्यात्कर्मणो हि समत्वतः ।
इत्ययं प्रबलो हेतुर्हन्ति तत्पौरुषेयताम् ॥२३४
यथात्र पूर्वमीमांसाशास्त्रे जैमिनिनोदिता ।
अपौरुषेयता तद्वद् व्यासेनाप्युत्तरे स्मृता ॥२९५
तथाहि 'शास्त्रयोनित्वाद्' इत्यत्रोक्ता सयोनिता ।
'अत एव च नित्यत्व' मिति सूत्रे स्फुटीकृता ॥२९६
सूत्रद्वयमिदं श्रीमच्छङ्कराचार्यचिन्तनम् ।
प्राप्य प्रकाशितं सम्यक् सूर्याचन्द्रमसोरिव ॥२९७
पुराणन्यायमीमांसाधर्मशास्त्राङ्गनामभिः ।
विद्यास्थानैरनेकैस्तूरबृंपणमुपेयुषः ॥२९८
ऋग्वेदादेः सुमहतः शास्त्रस्यास्य प्रदीपवत् ।
अवद्योतयतश्चार्थान् सर्वान् सर्वज्ञतानिधेः ॥२९९
योनिर्वा कारणं ब्रह्म ततस्सर्वज्ञमेव तत् ।
अस्तीति वेदैराम्नातं सत्यं ज्ञानमनन्तकम् ॥३००

न हीदृशस्य शास्त्रस्य ऋग्वेदादिस्वरूपिणः ।
सर्वज्ञतागुणजुषस्ततोऽन्यस्माद्धि सम्भवः ॥३०१
यद्यद्धि विस्तृतार्थं सच्छास्त्रं यस्मात्प्रसूयते ।
स ततोऽधिकविज्ञानो भवतीति विदुर्बुधाः ॥३०२
ज्ञेयैकदेशफलकं यथा व्याकरणं मुनेः ।
पाणिनेर्भूरिविज्ञाननिधेर्माहात्म्यदर्शकम् ॥३०३
अनेकशाखाभिन्नस्य ऋग्वेदादेस्तु का कथा ।
देवतिर्यङ्मनुष्यादिवर्णाश्रमविभागिनः ॥३०४
सर्वज्ञानाकरस्यास्याप्रयत्नेनैव लीलया ।
निःश्वासवदभूद्यस्मादाविर्भावः स ईश्वरः ॥३०५
भूतोऽप्यभूतः स महान् सर्वज्ञः सर्वशक्तिमान् ।
यस्य निःश्वसितं वेदा यस्तेभ्यो निर्ममे जगत् ॥३०६
अत एव च नित्यत्वमिति सूत्रेऽपि कस्यचित् ।
वेदकर्तुः स्वतन्त्रस्य स्मृत्यभावाद् दृढीकृतम् ॥३०७
तस्य वेदस्य नित्यत्वमस्मादपि निमित्ततः ।
प्रभवो वेदशब्देभ्यो देवादेर्जगतो यतः ॥३०८
यज्ञेन वाचः पदवीत्यादिमात्रेण च श्रुतेः ।
प्रविष्टत्वं समाम्नातमृषिषु मन्त्रद्रष्टृषु ॥३०९
युगान्तेऽन्तर्हितान्वेदान् सेतिहासान्महर्षयः ।
लेभिरे तपसा पूर्वमनुज्ञाताः स्वयम्भुवा ॥३१०
इत्यादिस्मृतिवाक्यैश्च स एवार्थः स्फुटीकृतः ।
वेदस्यापौरुषेयत्वमित्थं च स्पष्टतां गतम् ॥३११
विद्यापीठे भारतीया संस्कृतिः पाठ्यतामिति ।
इत्यादिष्टोऽस्मि सूत्राणि कानिचित् सङ्गृहीतवान् ॥३१२



# प्रशस्तिकादम्बरी

## १. जगद्गुरुशङ्कराचार्यभगवत्पादप्रशस्तिः

ब्रह्मैव सत्यं जगदस्ति मिथ्येत्युक्त्वा कृता येन दृगञ्जनाढ्या ।
तथापि यः प्राह निरञ्जनं तत्, तं शङ्करं शङ्करमानताः स्मः ॥१॥
शून्यस्य पूर्णं क्षणिकस्य नित्यं दुःखस्य चानन्दमिहादिशन्तम् ।
बुद्धात्प्रबुद्धं जयिनं जिनाच्च तं शङ्करं शङ्करमानताः स्मः ॥२॥
अद्वैतवादोद्धृतचिद्विवादं मिथ्यात्वगाथाञ्जदचित्प्रवादम् ।
तत्त्वं ब्रुवाणं भुवि निर्विशेषं तं शङ्करं शङ्करमानताः स्मः ॥३॥
अन्योन्यभीत्या मिलतां जनानां सम्मेलनं नूनमनित्यमेव ।
एकत्वदृष्ट्या त्वथ मेलयन्तं तान् शङ्करं शङ्करमानताः स्मः ॥४॥
अत्रारुरुक्षोस्तनुधर्मदृष्ट्या जात्यादिभेदं भजतः प्रदर्श्य ।
आरूढवृत्तेरभिदां दिशन्तं तं शङ्करं शङ्करमानताः स्मः ॥५
अधानवद्या अपि भूतविद्या विज्ञाय शान्तिं न जना लभन्ते ।
अध्यात्मविद्यां प्रथयन्तमेभ्यस्तं शङ्करं शङ्करमानताः स्मः ॥६॥
द्वात्रिंशता तद्विहितं शरद्भिः शतानि यन्नो शरदामकार्षुः ।
यमाश्रितः प्राह बलं स कालस्तं शङ्करं शङ्करमानताः स्मः ॥७॥
बुद्धानुगानां श्रुतिदूषणानां वाचा खराणामयुतानि जित्वा ।
विनैव शस्त्रं विजयं श्रयन्तं तं शङ्करं शङ्करमानताः स्मः ॥८॥

## मैथिलकोकिलविद्यापतिप्रशस्तिपद्याष्टकम्

१

शिवासहितशङ्करे वहति भावमत्युज्ज्वलं,
दधाति वृषभानुजामिलितनन्दसूनौ रसम् ।
चिनोति च यशः कलत्रसखरूपनारायणे,
प्रियो गणपतेः सुतो जयति कोऽपि विद्यापतिः ॥

२

अहो पितृपरम्परा वहति संस्कृतं, प्राकृतं
मतिर्नयति, सद्रुचिर्जनयति त्वपभ्रंशकम्।
परन्तु रघुनन्दनस्य सदनेऽथ विद्यापतेः
कवेश्च वदने श्रियं श्रयति निस्तुलां मैथिल।

३

न भक्तियुगमागमिष्यदधुनापि हिन्दीविदा--
मुदेष्यदिह नापि रीतियुगमद्य यावत्तराम्।
अयास्यदिदमेकमेव खलु वीरगाथायुगं,
न चेदयमुदैष्यदत्र कविकोकिलो मैथिलः॥

४

शिवाशिवसमाश्रिता सुरधुनीह भक्तिः स्थिता,
प्रियाप्रियसमादृता च रसरीतिरादित्यजा।
प्रकाशमथ या स्फुटं वहति, वीरगाथा तु सा,
प्रयागसदृशे कवौ सममिलत्किलैतत्त्रयम्॥

५

न सम्प्रति कवीश्वराः क्वचन सोरठाछ्प्पयान्,
लिखन्ति न च ते सृजन्ति कुहचित्सवैयादिकान्।
समेऽपि कवयन्ति गीतिमयकाव्यमत्युत्सुका—
स्तमेनमखिलं विलासमवयात विद्यापतेः॥

६

रसैरपि परिप्लुता परिगता च भावैरपि
प्रकामललितास्ति भूषणरुचापि वाणी कवेः।
क्व रूपकनिरूपणं, क्व च भवेदुदारोपमा,
क्व यादृगिह तादृगस्त्यतिशयान्वितोत्प्रेक्षणा॥

७

तरौ विहगकूजितं मधुसमागमे पूजितं,
प्रभातपरिभासनं नवविकासि वृन्दावनम् ।
समस्तमिदमीरितं प्रकृतिचित्रणं श्रीरितं,
न तद्विषयतां गतं, परमिहैकमुद्दीपनम् ।

८

कियन्नु भुवि गीयतां नवविदर्भमार्गो गिरां,
कियच्च रसशालितानवलभाऽस्य माधुर्यजा ।
शमो विनयशालिनां प्रणयशालिनां सद्रतिः,
परस्परविरोधिनावपि पदावलौ तिष्ठतः ॥

## ३. स्वामिश्रीहरिदासमहानुभावस्य प्रशस्तिः

१

श्यामाकुञ्जविहारिकेलिरसिको यत्राविरासीदयं
देशः पञ्चनदः स पञ्चवदनः प्रान्तेषु निर्दिश्यते ।
मूलस्थानममुष्य मौलिमुकुटं विज्ञायते मण्डलम्
'उच्च' ग्राम इह स्वनामसदृशो विख्यायते रत्नवत् ॥

२

श्रीसारस्वतवंश एति भुवने वंशावतंसश्रियं
विष्णुस्वामिमतं च याति विपिने सत्सम्प्रदायस्थितिम् ।
स्तूयेते ललितावतारिणमिमं यत्ते सुवाने बुधैः
श्यामाकुञ्जविहारिकेलिरसिकं सङ्गीतविद्याधरम् ॥

३

दूरादेव विहाय सर्वमहतां वृन्दानि वृन्दाटवी—
मध्ये चार्वधितिष्ठता निधिवनं लेभे निधिर्येन सः ।
श्यामाकुञ्जविहारिकेलिरसिकेनानेन सद्भाविता
यस्य श्रीहृदयं हरत्यपि पटाक्षेपान्तराये हठात् ॥

४

यः श्यामानयने निरञ्जनपदेऽप्यालोकयन् श्यामतां
चित्रं चम्पकवल्लिकोपरिलसत्कुन्दालिनं पश्यति।
तस्मै सम्भृतकामकोटिकटकोद्भूताह्वादर्शिने,
श्यामाकुञ्जविहारिकेलिरसिकायास्माकमास्तां नतिः ।।

५

यस्य श्लेषकवेर्विराजतितरामैश्वर्यमाधुर्ययोः
श्लेषः कोऽप्यथ कापि तार्किकदिशा सद्भावनासागरे।
तस्माद्धन्यमनन्यमन्यमधिकं मन्यामहे कं पुनः
श्यामाकुञ्जविहारिकेलिरसिकाद् गन्धर्वविद्याधरात् ।।

६

श्रीश्यामावदनामृते निपतिते यस्योद्दिधीर्षद्दृशौ,
चेतो मज्जति केशपाशविलसत्सीमन्तसीमान्तरे।
तस्येन्दौ मृगशैवलेषु च लसच्छ्रचङ्गोपमानाहृतैः
श्यामाकुञ्जविहारिकेलिरसिकस्याश्रीयतां भावना ।।

७

यः श्रीकुञ्जविहारिणः प्रियतमाश्यामभ्रुवोर्दर्शना-
त्काश्चित्कामवशां दशामभिदधच्छ्यामाहितं चिन्तयन्।
सर्वश्यामतनुं विलोक्य पतितां कष्टेऽवदत् स्वामिनीं
श्यामाकुञ्जविहारिकेलिरसिके तस्मिन्मनः खेलतु ।।

८

श्रीवृन्दावनरेणुमेव वपुषा चित्तेन चाराधयन्,
सर्वत्र प्रणयं समानमुपयन् किङ्कामिनीकाञ्चनः।
जीवन्मुक्ततया, 'स वै रस' इति श्रौतानि सत्यापयन्
श्यामाकुञ्जविहारिकेलिरसिक ! त्वं केवलस्त्वत्समः ।।



## अखिलभारतीयसँस्कृतसाहित्यसम्मेलनप्रशस्तिः

स्वर्णजयन्तीसमारोहावसरे समायोजिते संस्कृतकविसम्मेलने पठिता

१

जयत्यखिलभारतीयसुरभारतीसाहिती—
सुमेलनमिदं स्वकीयकनकोत्सवायोजने ।
जनेषु जनयच्चिराय परमानुरागं नवं
वसन्त इव पल्लवेषु विविधस्वभावेष्वपि ॥

२

महामहिमराष्ट्रपः समुदघाटयत्सूर्यवत्
समेतजनमानसाम्बुजशतानि गोभिः प्रगे ।
अदृष्टतनुरप्यवातनुत काचिदत्रेन्दिरा,
गिरा निजरुचिं स्वदेशधृतसंस्कृतौ संस्कृते ॥

३

दिनेऽपि समुपागतान् बुधशतैरनेकान् कवीन्,
समाद्रियत यत्र सत्कृतहसिंहरावो नृपः ।
महान्तमुपराज्यपालपदभाक् स आदित्यनाथ—
श्चापि समुपाचरत्समुदमादरं धीमताम् ॥

४

रवौ गगनमध्यमागतवतीह 'राकेशतः',
प्रयोजककृतेरभून्नवविचारगोष्ठी सृता ।
सभापतिपदं तदा श्रयति पोतदारे बुधै—
रदर्शि सुरभारती प्रभुतया भृता साहिती ॥

५

गिरः किल समीरितास्तु विविधा बुधैर्बन्दिवत्,
यशांसि सुरभारतीपरिचितान्यगायन्मुदा ।
परन्तु परगेहबद्धवसतिस्तु गीराङ्गला,
न वन्दिपदभाक्तयापि विदुषामभूत्सम्मता ॥

६

अशेषसुषमामय भवनमस्ति विज्ञानिनां,
तदीयसुषमामपूपुषदियं सभा ज्ञानिनाम् ।
घना किल घनावली गगनमत्र सम्भूषये--
त्तथापि तदलङ्करोति किमलं न सौदामिनी ।।

७

श्रियं श्रयति किं द्विधा भवनमद्य विज्ञानिनाम् ?
कथं न कलयामि तामहमपीति सञ्चिन्तयत् ।
इदं भवनमप्यहो बुधवरानिहामन्त्रय--
त्प्रतीच्यपरिपाटिकाश्रितमपीच्यशैलीं श्रयत् ।।

८

बुधेषु समदर्शयत्कमपि पक्षपातं यथा,
तथा भवनमप्यदः सपदि पक्षयोस्तैः श्रितम् ।
अनेकपरिषन्मिषादुभयतः स्थितास्ते पुनः,
पुनन्ति नवलैर्निबन्धपठनैः स्वमन्त्रैरिव ।।

**परिषत्प्रशस्तिः----**

१

क्वचिदिह वेदपरिषदं संयोजयति स्म देवराजोऽयम् ।
दशशतनयनः ससुमतिनयनं नो जयति देवराजो यम् ।।
वेदः किलेह पट्टाभिरामशास्त्रीयति स्वकैरङ्गैः ।
तत्परिषदोऽपि पट्टाभिरामशास्त्री पतिः स्वकै रङ्गैः ।।

२

दर्शनपरिषद्योजननिपुणश्चेत्सत्यभूषणो योगी ।
दर्शनगोचरतामपि यातः स्यात् सत्यभूषणो योगी ।।
श्रीमान् महामहोपाध्यायो डाक्तर उमेशमिश्रोऽस्याः ।
मायी महामहोपाध्यायः स च भवति नूनमध्यक्षः ।।

३

ज्योतिषयोषित्परिषदि गोस्वामी कोऽपि जयति गिरिधारी ।
एको नवसंख्यानां योक्ता चान्यो नवप्रकृतिकानाम् ।।

४

तन्त्रपरिषदो योक्ता किल त्रिपाठी तु रुद्रदेवोऽयम् ।
सुविदितियामलतन्त्रादिकपरिपाटीषु रुद्र एव स्यात् ।।

५

जयति व्याकृतिभाषाशास्त्रपरिषदोऽत्र योजको विद्वान् ।
सत्यव्रतोऽप्यसत्ये वर्त्मनि तिष्ठन् प्रशास्ति यः सत्यम् ।।
अध्यक्षोऽस्यां परिषदि यदि न भवेत्पण्डितप्रबोधोऽयम् ।
तर्हि विवदमानानां किमु तेषां स्यान्मिथो न संरोधः ।।

६

संयोजकतान्वयतोऽवृणुत पुराणेतिहासपरिषद्यम् ।
भूयादमीरचन्द्रो भवतां प्रीत्यै समीरचन्द्रोऽयम् ।।
वन्द्यो महामहोपाध्यायः श्रीदत्तवामनो जयति ।
योऽस्या अध्यक्षतया प्रकृतेरध्यक्षतां स्म दर्शयति ।।

७

ओङ्कारनाथतनयो लक्ष्मीनारायणो जयति जोषी ।
उदघाटयत्परिषदं साहित्यस्योपनिषदमिव य इमाम् ।।
अस्याश्च परिषदो योजकमविदं श्रीरामचन्द्रमेव परम् ।
वाणा वा वाण्यो वा सुखदाः कपिषु श्रुताः कविषु वाऽस्य ।।
अध्यक्षोऽस्या ध्येयः पाण्डेयः कान्तिचन्द्र इति विदितः ।
यस्य न सहृदयतायां कश्चन सम्भवति संशयाङ्कुलवः ।।

८

आयुर्वेदपरिषदो योक्ताऽसौ प्रेमशङ्करो जयति ।
धन्वनि देशे रोगांस्तरन् स धन्वन्तरिर्विदितः ।।
श्रीशिवशर्मा साक्षादध्यक्षोऽस्या मतः शिवोऽस्माकम् ।
कविराजा अपि यस्मादविदन् मृतजीवनीं महाविद्याम् ।।

६

इह राजशास्त्रपरिषद्योजकतां दशरथः कश्चित् ।
अधरद्विद्याधरजो नत्वजजो राजधर्मसम्मूढः ॥

१

**राधाकृष्ण**करावमर्शलसिता, स्या**दिन्दिरा**संश्रिता,
**आदित्येन** विभासिता **विधुनुता** **सिंहेन** चाध्यासिता ।
या चैव प्रभुताप्रभूतविषये, तत्तद्विचारान्विता,
वन्द्या **स्वर्णजयन्तिके**यमपरा, **वृन्दाटवी** प्रोज्ज्वला ॥

२

साहित्ये **ललिता**ऽथ **चम्पकलता** या पत्रकारित्वके,
या **चित्रा** किल बौद्धजैनसरणौ, वेदे **विशाखा** सखी ।
**वृन्दा** व्याकरणे च या **गुणवती** या राजशास्त्रे स्थिता,
ज्योतिःशास्त्रचये च या **गुणकला**, या दर्शने **भानुजा** ॥

३

आयुर्वेद**सुदेविका**ऽथ लिपिषु स्या**दिन्दुलेखा** पुन--
स्तन्त्रे **चन्द्रकला** पुराणनिवहे या **रङ्गदेवी** मता ।
**चित्राङ्गा**थ कलासु शिक्षणपथे या **तुङ्गविद्या** स्थिता,
इत्याद्याः परिषत्स्वरूपकलनाः सर्वाः सखीर्मन्महे ॥

४

इयं सभा नराधिकापि राधिकास्ति मां प्रति,
प्रसाधितापि हन्त विद्यतेऽद्य विप्रसाधिता ।
विवादमप्युपास्य वादमेव यानुमोदते,
कवित्वमाश्रितापि चाकवित्त्वमस्त्युपाश्रिता ॥

५

**बहादुरेण** पोषितां **बहादुरेण** तोषितां,
कविप्रभाविभासिताङ्कविप्रभाप्रकाशिताम् ।
**वसन्त**वासिताञ्च देशमुख्यवागुपासितां,
शुभांशुभां प्रसादये कवीन्द्रसत्सभां **शुभाम्** ॥

६

न मुम्बईद्विजाग्रसंसदः सदः प्रसादने
शकुन्तला च मृच्छकट्यथाभिनेयतां गते ?
न देशमुख्यसत्कवेः प्रशस्तिपद्ययुग्मकं,
सहस्रयुग्मकं च तत्प्रतिप्रसादने स्थितम् ? ॥

७

परस्परप्रसादनं निजान्तरावसादनं
निराकरोति नूनमित्यदः सतां सुसम्मतम् ।
प्रमाणयन्नयं नयं विदन् स्वदेशमण्डनो
न मण्डनः किमाचरत्यनेन लोकसङ्ग्रहम् ॥

८

नमामि काव्यसंसदे, न मामि काव्यसम्मदे,
नयामि भावसम्पदं, न यामि भावतः पदम् ।
तथापि कल्पयामि काव्यमल्पयामि तत्पुनः—
पुनर्न तर्पयामि चित्तमर्पयामि किं परम् ॥

९

श्रीरामकरण एतामध्यक्षतया किलाक्षतामवदत् ।
श्रीरामकरण एको लवणपयोनिधितनूमिवाबध्नन् ॥

१०

संस्कृतशिक्षापरिषदमुद्घाटितवान् स भक्तदर्शनो विद्वान् ।
यो भारतोपशिक्षामन्त्री स्मारयति तं सुमन्त्रं नः ।
श्रीक्षेमचन्द्रचट्टोपध्यायोऽध्यक्षतामधत्तास्याम् ।
यस्यां संस्कृतशिक्षाक्षेत्रे क्षेमं प्रसारणीयमभूत् ॥

११

उद्घाटिता गुरुवरैः संस्कृतमयपत्रकारितापरिषद् ।
मान्यैर्महामहोपाध्यायैः शास्त्रिपरमेश्वरानन्दैः ॥
यां तु दिवाकरशास्त्री संयोजितवान् दिवाकरेण समः ।
ज्योतिष्मतीं स्वकीयां प्रतिभां परितः प्रकाशयन् भद्रैः ॥

संसत्सदस्यपदभाक्, दृढवाग्विभवस्त्रिपाठ्यनन्तोऽयम् ।
संसदमध्यक्षतयाऽधिष्टितवान्, सादरं प्रतिष्ठितवान् ॥

१२

द्राक्तरनाकामूरा उदजीघटदत्र जैनबौद्धसदः ।
जयपत्तनाधिवासी संस्कृतभाषाविशेषसमुपासी ॥
श्रीरामचन्द्रनाम्ना पाण्डेयेनाभवच्च योज्यमिदम् ।
श्रीरामचन्द्रनाम्ना वैरिसहजयोर्यथाऽभवद्राज्यम् ॥
पण्डितबेचरदासो जयति तदध्यक्षतां वहन्नस्याम् ।
मण्डितखेचरचक्रो जयति यथा चन्द्रिकोज्ज्वलश्चन्द्रः ॥

## केन्द्रीयशिक्षामन्त्रालयायोजितायाम्

### अखिलभारतीयसंस्कृतभाषणप्रतियोगितायां

### सभाप्रशस्तिः

१

भास्वद्भिर्गुरुभिर्बुधैश्च कविभिर्भौमैश्च सोमैरियं
नैकैः सम्यगधिष्ठिता भुवि सभा कीर्त्याऽतिशेते नभः ।
किञ्च न्यस्तगुणान्तरं सपदि तच्छब्दानुयोगि श्रुतं
सच्छब्दप्रतियोगितां कलयते नानागुणा किन्त्वियम् ॥

२

तस्योद्घाटनमात्मनः समभवद्रूपादिशून्यादहो !
अस्यास्तत्परमेश्वरेण विहितं विद्वद्गुणैः शोभिना ।
विख्याता तु मनीषितात्र कविता हन्तोभयोः शुक्लता,
याथातथ्यत एव कार्यकरणादित्यत्र सम्भाव्यते ॥

३

अस्यामस्ति विबुद्धरामकरणो वाण्या हृदावेधक—
स्तस्मिन्नस्ति जडं तु शम्भुकरणं वाणो मृगावेधकः ।
अस्यां द्राक्तरमण्डनः स्वयतनैरद्धाऽऽदधाति श्रियं,
तस्मिञ्ज्यौतिषमण्डलं स्वपतनैर्धत्ते तमः प्रत्यहम् ॥

४

एकः सोमसुतो बुधः श्रयति तन्मन्दश्च भास्वत्सुतः,
केतोस्तत्र कबन्धमात्रमयते राहोः शिरः केवलम् ।
तस्माच्छब्दगुणं सदप्यहह तन्मौनेन कालं नयेद्,
एषा वाक्प्रतियोगितार्थमुदिता तूष्णीं स्थिता स्यात्कथम् ॥

५

तत्राप्यद्य विशिष्टसंस्कृतकविव्रातो मिलित्वाऽधुना,
वाचां कर्तुमुपस्थितो रसभृतां निर्व्याजमामेलनम् ।
तस्मै किं किमुपाह्रियेत मयका, नाद्यापि तद्धार्यते,
तावत्स्वागतमेव भावभरितात्स्वान्तात्समुच्चार्यते ॥

## संस्कृतविद्यापीठेऽन्तर्व्यूहसमितिप्रशस्तिः

वितनोतु राम इव शं श्रीमान् पट्टाभिरामशास्त्री मे ।
आदरविनतग्रीवो गुरुषु भवाम्येव सुग्रीवः ॥१
वितरन्तु ममानन्दं गुरवः श्रीलपरमेश्वरानन्दाः ।
येषामाशीर्वचने भद्रा लक्ष्मीः सदास्ति सन्निहिता ॥२
अस्मि द्विजचरणाम्बुजनखचन्द्रोऽमीरचन्द्रोऽहम् ।
अहह ! तथाप्याद्रियते विप्रः श्रीमौलिचन्द्रो माम् ॥३
श्रीरामकरणशर्मा शर्माधिकमद्य मे हृदा तनुताम् ।
असतां निग्रहकर्ता सतामनुग्राहकोऽप्ययं प्रथितः ॥४
श्रीमन्मण्डममिश्रो मण्डयतु ममाद्य पक्षमार्द्रमनाः ।
यस्यादेशादनिशं विद्यापीठं निषेवमानोऽस्मि ॥५
साहित्यसांख्ययोगौ संस्कृतिधर्मौ च पाठयंश्छात्रान् ।
प्रथमश्रेण्यां प्रायेणोत्ततुं यत्नशालिनोऽकार्षम् ॥६
लेखनभाषणपटुतामाविष्कर्तुं च योग्यपात्रेषु ।
प्रायतिषि तत्र तत्र स्पर्धावसरेषु छात्रेषु ॥७
विश्वशताब्दीग्रन्थं संस्कृतरत्नाकरं च सम्पाद्य ।
वर्षत्रयादभिज्ञैः सम्पादनकर्तृभिः सहायोऽस्मि ॥८

समयेऽभिनन्दनीयानभिनन्दनपद्यपुष्पौघैः ।
पजयितुं कृतयत्ने कविरत्ने मयि सदा स दादयताम् ॥९

नान्यं कमपि वदान्यं प्राथिवानस्मि सम्मान्यम् ।
श्रीमण्डनं विशुद्धं त्यक्त्वा श्रीमण्डनं मिश्रम् ॥१०

## श्रीरामराज्यपरिषत्प्रशस्तिः

उज्जीवनाय करपात्रधृतामृतेव
श्रीकृष्णबोधवचनानि समुद्गिरन्ती ।
नानाभ्रमानपि निवर्तयति प्रचारे
श्रीरामराज्यपरिषद् वृषभानुजेव ॥

सोढ्वाऽपि बन्धनशतान्यवमाननाश्च
त्यक्तान्यकार्यनिकरोऽभिनवेऽत्र राज्ये ।
कान्तिं प्रसादयति यो वृषभानुजातां
सोऽयं मुरारिरिव राजति धर्मसङ्घः ॥

श्रीरामराज्यपरिषद् भुवि राधिकाया
लीलामिवानुकुरुते क्वचनेति सत्यम् ।
नानाभ्रमानपि निवर्तयति प्रचारेषू—
द्बोधयत्यपि गिरा सुमनःसमाजम् ॥

## केन्द्रीयसंस्कृतमण्डलप्रशस्तिः

दैवी वाक् संस्कृतेयं सहजसुभगमप्यात्मरूपं विलोप्य—
प्रान्तानैक्यादनैक्यं समुपगतवती तोषपोषौ जुषन्ती ।
लुप्तं रूपं तु तस्याः पुनरपि भुवनेऽद्य प्रकाशं विधातुं,
तत्तत्प्रान्तेभ्य आप्ता इह भरतभुवो राजधानीमवाप्ताः ॥

काश्मीरात्कर्णसिंहो नृपतिरयमथ श्रीधरोऽयं विहारा—
न्मद्रासाद्राघवोऽयं सपदि सुरतिनारायणश्चैष काश्याः ।
गौरीनाथश्च वङ्गान्नरपतिपदतो माधवः कृष्णशर्मा,
व्रातात्चार्यः किलान्ध्रादिह समुपगतो गुर्जरेभ्यः प्रतापः ॥

## श्रीरूपकलाहरिनामसङ्कीर्तनसम्मेलनप्रशस्तिः

साकेतनाकेऽतनुके निकेतने वसन्तमेकान्तवसन्तसुन्दरम् ।
वेदान्तविद्योतितमेकमीश्वरं श्रीसेवितं रामपदार्थमाश्रये ॥
यद्धाम धामाददते सुधामयं, यन्नाम नाम प्रदिशत्यनामयम् ।
यद्रूपमारूपयति स्वरूपिणं, लीलाविलीनाघततिः स नोऽवतु ॥
दृष्ट्वाऽभवन् रूपकलाः सचेतसां, चेतांसि, नामश्रवणोत्सुकानि यत् ।
तन्नामसंकीर्तनमेलनोत्सवस्तान्यादिशत् शान्तिपरम्परां पराम् ॥
अष्टोत्तरश्रीशतशोभिताः श्रियं, दिशन्तु वो रूपकलाः समुज्ज्वलाः ।
यासां प्रसादेन सतां समागमो, गमागमं हर्तुमिह प्रवर्तते ॥

## वटपत्तनस्थायाः

### संस्कृतविद्वत्सभायाः

#### प्रशस्तिः

१

राधामाधवधाविनीति किमियं वर्वर्ति सूर्यात्मजा,
गौरीशङ्करसङ्गिनीति किमियं जागर्ति भागीरथी ।
इत्याद्या विगलन्तु संशयधियो विद्वत्सभा खल्वियं,
निश्चेयात्र सरस्वती गुणगणैर्गूढाप्यगूढा क्वचित् ॥

२

नीरक्षीरविवेकिभिर्जगति या हंसैरिवोदुह्यते,
मुग्धैरप्यहहा न यत्करुणया विद्वत्पथे मुह्यते ।
या गायन्त्यथ दृश्यते सुमनसां कीर्तीः प्रवीणा चिरं,
सा मे भाति सरस्वती वटपुरे विद्वत्सभावर्ष्मणा ॥

३

यस्याः श्याममनोज्ञबालनिचयेनालङ्कृते मूर्धनि
न्यायेनैव शिरोमणिः स बदरीनाथः सुधीः ख्याप्यते ।
प्राच्याप्राच्यविशेषविच्छ्रवणयोर्लग्नोऽवतंसश्रियं
यस्याः पुष्यति चैष भट्टपदभाग् गोविन्दलालो बुधः ॥

वदाम यदि वारि वेति, तदटत्पुनर्जन्मनाऽऽ
मनाम वटमम्बुजं, तदुदरेऽथ विद्वत्सभा।
विभाति न चतुर्मुखप्रतिभया तनूर्वेधसो—
ऽथ नास्ति कमलासना भवति नाभिजाता नु किम॥

वढं वटफलं यथा वटदलं न किं तत्तथा,
वदीयमुदरं तथाधिशयिता न विद्वत्सभा।
पदाब्जमथवा शयाब्जकलितं मुखाब्जेन किं,
न सा रसयते ततो भवति विष्णुमूर्तिर्न किम्॥

वटोऽक्षयवटो मतः स इव यो भवेदुद्गतः
स वै भुवि वटोदरो हिमगिरिस्ततोऽस्मिन् स्थिता।
दिगम्बरवृता, धृतामलकलाऽथ भागीरथी—
श्रिता भवति शङ्कराकृतिरियं च विद्वत्सभा॥

नमामि वटपत्तनेऽपि रसिकालिवृन्दावने,
किलैष वृषभानुभूरिति धियाद्य विद्वत्सभाम्।
अपि व्रजसुताय या शरदिजैश्च वासन्तिकैः
पुरा प्रमदमातनोत्यतनुवाग्विलासैरियम्॥

## दरभंगानगरे वक्तृत्वस्पर्धासमारोहे सभाप्रशस्तिः--

१

शुभा सभा किलेश्वरप्रसादिनी स्वकर्मणा
नृसिंहकल्पितेन भाति चार्वखर्वशर्मणा।
शुभेश्वरप्रसादसिंहशर्मणा प्रकाशता—
मनेष्यताभविष्यदेव तत्तदापि साम्प्रतम्॥

२

उपक्रमक्षणे क्षणेऽथ वासुदेवसूनुना
कलाधरेण धीधनेन श्रीधरेण शोभिता।
सदामहेशरामबद्रिकेश्वरादिनामभि—
र्मिथः समागमेन भासते सतामियं सभा॥

३

इयं सभा नराधिकापि राधिकास्ति मां प्रति
प्रसाधितापि हन्त ! वर्ततेऽद्य विप्रसाधिता ।
विवादमप्युपास्य वादमेव यानुमोदते,
कवित्वमाश्रितापि चाक-वित्वमप्युपाश्रिता ॥

४

अनर्थकाश्च सार्थकाश्च सन्ति यत्र वर्णका,
निरर्थकाः सदर्थकाश्च भान्ति यत्र मन्त्रकाः ।
प्रधानकारणस्य या वदावदाऽणुकारणे,
धृतस्पृहा, निराकरिष्णुरस्य तस्य च स्वयम् ॥

५

अथानुमासु या ध्वनिं समाविशन्तमीक्षितुं
समुत्सुकापि तं बहिः स्थितं ततो दिदृक्षते ।
अहोभिरत्र काप्यपूर्विका श्रितास्ति रात्रिता—,[1]
ऽथ रात्रिभिर्धृतास्त्यनन्तवासरद्युतिः[2] शुभा ॥

## सभासदां प्रशस्तयः

१

कविवागेव न गायति यमञ्जसा श्रुतिरपि स्तौति ।
तं कामेश्वरसंज्ञं वैश्रवणं कामदं सदा नौमि ॥

२

श्रीलशुभेश्वरसिंहः श्रोत्रियमौलौ विराजतेऽविरतम् ।
चन्द्रक इव हरमौलौ हरिमौलौ चापि चन्द्रकवत् ॥

---

१. अपूर्विका रात्रिता=त्रिता, २. अनन्तवासरद्युतिः=वासद्युतिः

३

जयत्ययं श्रीधरवासुदेवः प्रतिप्रवर्षत्यपि हन्त दैवे ।
यो विश्वविद्यालयमेनमाराद् बिभर्ति गोवर्धनमेकनिष्ठया ॥

४

पाण्डेय एवास्य कुलस्य मन्त्री दिनेशनामा सदसद्विवेकी ।
प्राभातिकीं कान्तिमसौ तनोतु प्रारम्भिकीं क्रान्तिमयं तनोति ॥

५

सहायकः शिक्षणदेशिकोऽयं विराजते रामपदार्थशर्मा ।
यस्याद्भुतां सद्गुणकर्मजातेर्विशेषतां गायति गोतमोऽपि ॥

६

श्रीरामकरणशर्मा जयतितरां, संस्कृतक्षेत्रम्—
नवनवबीजारोपणविधये बलरामकरणवद् विलिखन् ॥

७

परमेश्वरोऽप्यपर–मेश्वर एवास्मद्गुरुरयं जयति ।
हिमगिरितुङ्गतया यः श्रितोऽपि जलधेर्गभीरतां श्रयते ॥

८

न कदापि सदानन्दो दर्शनविषयाद् बहिर्गच्छन् ।
अस्माभिरद्य दृष्टः क्षणाय कस्मैचनापि नयनाभ्याम् ॥

९

वन्द्यो महेशनामा वैयाकरणः स आदिमो विदुषाम् ।
पाणिनिरपि यद्वाणीमुल्लेख्यां तां पुरा मनुते ॥

१०

रामप्रसिद्धशर्मा जयति सुदशयाऽत्र वैदेह्या ।
जयति च विपुलानन्दो दार्शनिकः श्रीकुलानन्दः ॥

११

श्रीश्यामसुन्दरोऽयं दर्शनयोग्यां श्रियं वहति ।
यस्य गिराऽपार्थानामपि मोहो दूरमपसरति ॥

१२

कविशेखरतां बिभ्रत्करबदरीवज्जगन्निभालयति ।
कश्चिद् बदरीनाथो हृदयदरीं न श्रितोऽस्ति दरभङ्गाम् ॥

१३

मान्यो रमेश्वरलतासंस्कृतविद्यालयाचार्यः ।
स उपेन्द्रोऽपि बुधेन्द्रो यस्यातिथयोऽभवाम भवनेषु ॥

१४

मुख्यतया मम गुरवो मीमांसकमौलि-कृष्णलाल-बुधाः ।
बहिरनुपेता अपि मद्धृदि समुपेता भवन्ति ते वन्द्याः ॥

१५

अन्येऽपि मान्या बहवो वदान्या विदांवराः सन्ति सभाविभूषाः ।
न नाम तेषां प्रगृणानि किन्तु, प्रणाममेभ्यस्तु निवेदयामि ॥

१६

दिल्लीस्थे किल संस्कृतविद्यापीठे सुरसरस्वतीसेवाम् ।
कुर्वन्नमीरचन्द्रो भवतां क्लान्त्यै समीरचन्द्रः स्याद् ॥

—×—×—

# पूर्तिकादम्बरी


| समस्याः— | पूर्तयः |
|---|---|
| १. संस्कृतम् | १ |
| २. कृष्णचन्द्रं भजे | १ |
| ३. उदयति हिमरश्मौ कैरवैर्नाभ्यनन्दि | १ |
| ४. कुर्यात्सदा मङ्गलम् | १ |
| ५. सारस्वतं किमपि धाम वयं नमामः | १ |
| ६. नाद्यापि नेत्रातिथिः | १ |
| ७. स्वादुः सुगन्धिः स्वदते तुषारः | १ |
| ८. झङ्कारि शृङ्गारकम् | १ |
| ९. मनीषिणः सन्ति न ते हितैषिणः | १ |
| १०. सयाजिभूपेन्द्रयशस्तनोति | १ |
| ११. धात्रंशो लाकृतिरयमहो मद्ध्वरिः सुद्ध्युपास्यः | १ |
| १२. माधुरी माधवस्य | २ |
| १३. स्मेरं कुतस्ते मुखम् ? | २ |
| १४. रहस्यं साधूनामनुपधि विशुद्धं विजयते | २ |
| १५. विद्वद्वृन्दविकासिसंस्कृतमहाविद्यालयो राजते | २ |
| १६. संस्कृतिः संस्कृतञ्च | ३ |
| १७. गुणाः पूजास्थानं गुणिषु न च लिङ्गं न च वयः | ३ |
| १८. वारि ववर्ति वह्निः | ४+४ |
| १९. आरादुदाराङ्गणाम् | ४ |
| २०. शोभनम् | . |

२१. भारतम् ५
२२. हरित्पत्रो वृक्षो जनयति सुमं नैव हरितम् ५
२३. यायात्कामुपयोगितां सुरगवी ८
२४. किं कम्प्रति ब्रूमहे ? १०

स्वतन्त्रकविताः—

१. हंसान्योक्तिः
२. कोकिलान्योक्तिः
३. षड्विंशे दिवसे जनवर्याः
४. उद्बोधनम्
५. अगस्ते तिथौ पञ्चदश्याम्

———

**'संस्कृतम्'**

वन्दे मञ्जुलतातिमञ्जुलतया फुल्लत्तमालश्रिया,
चञ्चच्चारुतरैः प्रसूननिकरैराकल्पितालङ्कृति ।
राधामाधवयुग्ममद्भुतवयो वर्धिष्णु—शोभाभरं,
कुञ्जे क्वापि सखीभिरात्मविधिनैवोद्वाहितः संस्कृतम् ॥

**'कृष्णचन्द्रं भजे'**

१

निष्कलङ्कं सदा वर्धमानं मुदा
धीयमानं हृदाऽऽकाशशुभ्रश्रिणा ।
कोटिताराधिकां राधिकां संश्रितं
कर्मबन्धच्छिदे कृष्णचन्द्रं भजे ॥

**उदयति हिमरश्मौ कैरवैर्नाभ्यनन्दि**

अहह किमिति मन्दो मन्दभाग्यो जनोऽयं
कलयति न महत्त्वं तस्य वृन्दावनस्य ।
मधुपतिरिह राधां वन्दमानो द्विरेफै—
रुदयति हिमरश्मौ कैरवैर्नाभ्यनन्दि ॥

**'कुर्यात्सदा मंगलम्**

१

'ऊर्ध्वं सत्त्वगतिस्तमोगतिरधो मध्ये रजोऽवस्थितिः,
सत्त्वं विष्णुतनुस्तमः शिवतनुर्धाता रजोविग्रहः ।'
ज्योतिर्लिङ्गगवेषणे वितथयद् गाथामिमां विश्रुतां
तद्देवत्रितयं नवे परिणये कुर्यात्सदा मङ्गलम् ॥

**सारस्वतं किमपि धाम वयं नमामः**

१

यन्मन्दतामरसतामपहन्ति नित्यं यत्कौमुदं वितनुते मदनाशनार्चिः ।
एकं दिनेशशशिशुष्मिमहोतिशायि सारस्वतं किमपि धाम वयं नमामः ॥

## नाद्यापि नेत्रातिथिः

यं द्रष्टुं सकला कलानिधिसभा सत्यं चकोरायते,
यं स्प्रष्टु हृदयं दयालुविदुषां नित्यं नभस्यत्यदः ।
यं स्रष्टुं सुचिरात्सुरासुरति वा मथ्नन् समाजो बुधां,
चन्द्रः सोऽयमहो सुधैककिरणो नाद्यापि नेत्रातिथिः ॥

## स्वादुः सुगन्धिः स्वदते तुषारः

काले नवाभिः कविताभिरत्र याते समाजे विमनायमाने ।
कवेस्तु कस्यापि न वाक्प्रसारः स्वादुः सुगन्धिः स्वदते तुषारः ॥

## 'झङ्कारि शृंगारकम्'

वाल्मीकावभवत्सुधा गुणगणो व्यासे तु भक्तिः सुधा,
शृङ्गारः प्रचितोपमोऽप्यनुपमोऽभूत्कालिदासे सुधा ।
भासे हास्यरसः सुधा नवरसोत्प्रेक्षा च हर्षे सुधा,
माघे भारविपृष्ठगामिनि सुधा झङ्कारि शृङ्गारकम् ॥

## 'मनीषिणः सन्ति न ते हितैषिणः'

१

'बलं मतिः प्रीतिरिति त्रयं नृणां
परस्परोपक्रियया हितावहम् ।
परं न दृष्टा बलिनो मनीषिणो,
मनीषिणः सन्ति न ते हितैषिणः ॥'

## स याजिभूपेन्द्रयशस्तनोति

१

आज्यस्य राज्यस्य मनस्तिलस्य
वयोयवस्याक्षतवर्ष्मणश्च ।
हविष्कृतस्याद्य किलेष्टगन्धः
स याजिभूपेन्द्रयशस्तनोति ॥

'सुद्ध्युपास्यः ।'

(युग्मकम्)

यस्मिन्नेको यणचिरलगत्सर्वथाप्यप्रयोज्ये,
यस्य स्थानेऽन्तरतम इति प्राविशन्नैव चेतः ।
पूर्वस्मिन्नाविशति न विधौ यत्र वाचः परस्मिन्,
आदेशः स्थानिवदपि च नानल्विधौ यत्र दृष्टः ॥

नैवोपास्तेऽनचि च हृदयं द्वित्वमस्मिन् विधाय,
दृष्टो वा न द्विवचनविषये यत्र नास्ते निषेधः ।
संयोगाँ यः श्रयति च रतिं तस्य लोपो न यत्र,
धात्रंशो लाकृतिरयमहो मद्ध्वरिः सुद्ध्युपास्यः ॥

माधुरी माधवस्य ।

१

नेत्रे, भृङ्गनवपि न भवतं, मा स्म भूतं चकोरौ,
मा च स्यातं हरिणशिशुकौ, मा सरोजे युवाँस्तम् ।
मीनौ भूत्वा यदवधि न तन्मात्रजीवे भवेतं,
शक्या यावन्नहि कलयितु माधुरी माधवस्य ॥

२

मायायोगात्प्रसरतितरां माधुरी विश्वकर्तु—
श्छायायोगाद् विसरतितरां माधुरी चित्रभानोः ।
राकायोगाद् विकसतितरां माधुरी शीतरश्मे
राधायोगाद् विलसतितरां माधुरी माधवस्य ॥

स्मेरं कुतस्ते मुखम्

१

तद् दुग्धच्छविमुग्धदन्तकलिकं स्निग्धं गतं शैशवं
सत्पद्मद्युतिसद्मचारुनयनं तारुण्यकं न स्थितम् ।
संशुष्यत्सुषमाम्बु सम्प्रति गलज्जम्बीरनिम्बूपमा—
बद्धस्पर्धमलज्जमर्धजरतः स्मेरं कुतस्ते मुखम् ॥

२

सत्यं नाद्य गवेषयन्नपि वने त्वं प्रेयसीं दृष्टवान्,
नैवाक्षेषु जयस्य मार्गमुचित मुग्धामिमां पृष्टवान्।
तस्याः पादतले च यावकरसैर्नेष्टा लिपीः सृष्टवान्
हे गोचारणखिन्न, भिन्नसरणे, स्मेरं कुतस्ते मुखम् ॥

**'रहस्यं साधूनामनुपधि विशुद्धं विजयते**

१

'रहस्यं साधुनामनुपधि विशुद्धं विजयते'
सखे, अस्मिन्वाक्ये पठसि न पुरा यावदिति किम्।
इहाद्यत्वे कालापणमिति नवीनं किमपि तद्
रहस्यं धूर्तानामुपधिमदशुद्धं विजयते ॥

२

अहो, पारेमायामयजलधि, दूरेश्रुतिगिराम्,
अतीतं ब्रह्माब्धिं न च पुनरधीनं भगवतः।
इदं मध्येवृन्दाटवि, कविषु राधेति विदितं
रहस्यं साधूनामनुपधि विशुद्धं विजयते ॥

**विद्वद्वृन्दविकासि संस्कृतमहाविद्यालयो राजते।**

आयातासु घनावलीष्विव विजातीयासु शिक्षासु यः,
पक्षाघातभयेन मानसमिवागान्मानसं धीमताम्।
सोऽयं सम्प्रति शारदीयमुपमालाभेन हंसाभया,
विद्वद्वृन्द, विकासिसंस्कृत, महाविद्यालयो राजते ॥

२

यावद् ब्रह्मविवेचनी भुवि महाविद्या न साभ्यस्यते,
तावन्नैव भवत्ययं मतिमतां प्रायस्त्वविद्यालयः।
किन्त्वस्मिन् वृषभानुजाचरणयोरर्चाविधौ धीमतां,
विद्वद्वृन्द,विकासिसंस्कृत, महाविद्यालयो राजते ॥

## संस्कृतिः संस्कृतिश्च

अनुसरति परेषां वेषभाषे नरो यः
स भवति परतन्त्रः कीशवत्कीरवच्च ।
इति परवशतायाः पाशमुच्छेत्तुकामै—
र्द्वयमिह परिरक्ष्यं संस्कृतिः संस्कृतञ्च ॥

यदि विपदि न शक्यं रक्षितुं गौरवं स्वं
यदि विवशतयासौ वर्णभेदोऽपि हेयः ।
तदिदमुभयमास्तामद्य सर्वात्मना तु,
द्वयमिह परिरक्ष्यं संस्कृतिः संस्कृतिश्च ॥

अतिचिरचलनेनाघातकोटिक्लमेन,
प्रियजननिधनेन प्रेमिदारिद्रयकेण ।
परजनमहसा चात्मीयशक्तिक्षयेण
द्वयमिह परिरक्ष्यं संस्कृतिः संस्कृतञ्च ॥

## गुणाः पूजास्थानं गुणिषु न च लिङ्गं न च वयः

१

नमामः श्रीराधामविरतमगाधां रसभरैः,
किशोरीं श्रीकृष्णोद्धुरहृदयचोरीं गुणभरैः ।
पुराणैः किं पुम्भिर्विधिहरिहरैरेककगुणै—
र्गुणाः पूजास्थानं गुणिषु न च लिङ्गं न च वयः ॥

२

इदं विद्यापीठं त्रिचतुरशरज्जातमपि यत्
प्रतिष्ठां भूयिष्ठां गमितमनया वादसभया ।
न तत्राश्चर्यं स्यादतिमतिमतां किञ्चन यतो
गुणाः पूजास्थानं गुणिषु न च लिङ्गं न च वयः ॥

३

'गुणाः' पूजास्थानं गुणिषु न च लिङ्गं न च वयः'
किमेतादृङ् मिथ्याक्षरमभिहितं भर्तृहरिणा।
गुणा बन्धस्थानं क्वचन च वधस्थानमिति मे'
तया गङ्गादेव्या कथितममुना गान्धिमुनिमा॥

## वारि वर्वर्ति वह्निः

१

दुष्टैरापीडितोऽपि त्यजति न सहजामात्मशान्तिं महात्मा,
किं नामौर्वानलेन क्षुभितमपि निधेर्वारि वर्वर्ति वह्निः।
भूयः संसेव्यमानोऽपि न चरति हितं कस्यचिद्वा दुरात्मा,
किं कर्पूरैः समृद्धो मलयजसहितैर्वारि वर्वर्ति वह्निः॥

२

सर्वाश्चर्यैकधाम प्रथितमिदमहो भारतं नाम यस्मिन्,
गाङ्गं वा यामुनं वा दुरिततृणचये वारि वर्वर्ति वह्निः।
यस्मिंश्च ब्राह्मणानां निगमविधिविदां वैदिकैस्तैः प्रयोगै-
रिष्टोऽनिष्टापघाती सपदि रविगतो वारि वर्वर्ति वह्निः॥

३

**शृंगारे**

पुलकिततनुगात्री प्रीतिसौभाग्यपात्री कमलसरसि काचित्प्रेयसा सिच्यतेस्म।
कठिनकुचतटाभ्यां प्रोच्छलत्किन्तु तस्या इतरयुवतिदेहे वारि वर्वर्ति वह्निः॥

४

**वीरे**

सरभसमभिगच्छन्वीरपोतः प्रवर्षच्छरनिहतविपक्षः केनचिद्भिन्नमर्मा।
क्षणमपगतसंज्ञोऽसिक्त एवोदतिष्ठद् रिपुकरकलितं यद् वारि वर्वर्ति वह्निः॥

## आरादुदारांगणम् ।

१

श्रीराधाचरणारविन्दमधुने चेतो द्विरेफायतां,
श्रीकृष्णाननचन्द्रबिम्बमनु मे दृष्टिश्चकोरायताम् ।
तद्द्वन्द्वोज्ज्वलकेलिकीर्तिजलधौ वाणी च मीनायता-
मित्येताः कुरु काकुचाटुरचना आरादुदाराङ्गणम् ।

२

दैन्येऽपि प्रथिते, भृशं शिथिलिते मानेऽपि निर्वासिते,
दर्पेऽपि प्रणिपातपङ्क्तिभिरहो मार्गेऽपि सम्मार्जिते ।
हा पारुष्यमपारमेव यदियं नाशापिशाची गता,
या गन्तुं न ददाति मादृशजनानारादुदाराङ्गणम् ॥

३

वैषम्यस्य विजृम्भितं, परतरस्वार्थस्य दुर्लालनं,
सम्प्रत्येव विलोक्यते धनिगृहे स्वस्वाङ्गसम्पालनम् ।
पूर्वं तावदलीयत त्रिपथगा शम्भोः कपर्दान्तरे,
दृष्टवा दाननदीमनेकपथगामारादुदाराङ्गणम् ॥

४

त्वं लक्ष्मीः कृपणानुसारिणि गता सद्वर्णधातुक्षयं,
मूर्तिः कागदवर्तिनी तव जनैरद्यानुशोच्या चिरम् ।
'किं मन्ये विहरिष्यसे पुनरपि क्षाराम्बुधौ शेष्यसे'
भूयो मार्जनकारिणी भव सुखिन्यारादुदाङ्गणम् ॥

## शोभनम् ।

१

सुरभिमृदुभी रागे सान्द्रैर्महामधुरैर्वनी,
हरित सततं पुष्पैः पत्रैः फलैश्च ययोर्गुणान् ।
अनिमिषदृशा पायम्पायं परस्परमप्यहो,
अधिकतृषिताभ्यामेताभ्यां परं किमु शोभनम् ॥

२

विकचनलिनैरन्तर्लीनालिपालिमनोहरै—
स्तरणितनयाप्येषा जाग्रत्परःशतलोचना ।
कलयति ययोर्लावण्येन स्फुरन्नवमाधुरी—
भरमतिचला ताभ्यामाभ्यां परं किमु शोभनम् ॥

३

अवितथमिदं रामे रूपं विदेहममूमुहत्,
समधिगततत्त्वाद्द्वैतं यथा तुलसी जगौ ।
परमतितरां विस्मेरं मे मनः कुरुतेऽदयं,
तदपि निमिषत्किञ्चिद्रूपं विमुह्यति शोभनम् ॥

४

इममभिदधुः केचिल्लोकं सुखायतनं परं,
परमकथयन्नन्ये धन्यं चिराय मुदास्पदम् ।
जगदुरपरे श्रीवैकुण्ठं विकुण्ठविनोददं,
मम तु विपिनादन्यत्किञ्चिद्विभाति न शोभनम् ॥

## भारतम् ।

मा भूस्त्वं प्रतिभा-रतं नवनवोन्मेषश्रिया कोमलं
मा स्म क्वापि भवश्च तर्कसरणिव्यासङ्गतः कर्कशम् ।
चेतः सम्प्रति यादृशं त्वमसि रे भूयाश्चिरं तादृशं
राधापादसरोजजाग्रदमलश्रीमन्नखाभारतम् ॥१

श्रीराधेऽध्युषितं त्वयेति नितरां वृन्दावनं मे प्रियं,
कालिन्दीसमुपाश्रितं तदिति मे प्रेयस्तदत्यन्ततः ।
सापि श्यामरसप्रवाहलहरीभिर्यत्र संक्रीडते,
तत्त्वेतत्पुरुगौरवाढ्यमिति मे प्रेष्ठं परं भारतम् ॥२

भूलोकः सुखदुःखसङ्कुलतया नूनं प्रशस्यः परं,
तस्मिन्नप्यनवद्यनीतिनिलयः सैषेशिया श्रेयसी।
तस्याञ्चापि सनातनीरुपदधद् धर्मस्य काश्चित् स्थिती-
राचारे नियतं विचारवियतं श्रेष्ठं परं भारतम् ॥३

आरुण्येन महाप्रतापपिशुनः, सैत्येन कीर्तिस्पशः
शैत्येनाभिवदंश्च जीवनमुदश्चक्रेण चक्रेशताम्।
स्वर्गं भास्करतेजसाऽथ गगनं शौक्ल्येन कार्ष्येण गाम्,
भूतं भावि भवद् व्यनक्ति विमलं राष्ट्रध्वजो भारतम् ॥५

## हरित्पत्रो वृक्षो जनयति सुमं नैव हरितम्

हरिपत्रो वृक्षो जनयति सुमं नैव हरितं हरित्पुष्पश्चान्यो जनयति फलं नैव हरितम्।
तथापि प्रत्यक्षापलपनविधौ लोललपनो 'गुणं कार्ये हेतोः, कथयति स नैयायिकजनः ॥१
यदा शास्त्रे न्यायः सुमनसि न दृष्टिं वितरति तदा लोके न्यायं कथमिव लभन्तां सुमनसः।
उदास्ते शुद्धोऽपि प्रथितविनयोऽपीदृशि पदे, हरित्पत्रो वृक्षो जनयति सुमं नैव हरितम् ॥२
व्रजे नन्दः सूनुं कमपि जनयामास स हरिं स चागात्तं त्यक्त्वा ज्वलति विरहज्वालनिवहे।
इति श्रुत्वा छायाश्रयिपथिकवृन्दस्य वदनाद् हरित्पत्रो वृक्षो जनयति सुमं नैव हरितम् ॥

हरिः श्यामो राधा कनककपिशाङ्गीति विदितं,
मिथः कान्त्योर्योगाद् सपदि भवतस्तौ तु हरितौ।
न तौ मे लुप्येतां कुसुममृदुलावित्यतिदयो
हरित्पत्रो वृक्षो जनयति सु ं नैव हरितम् ॥४
हरित्पुष्पां पश्यत्यपि न मधुपश्चम्पकलतां
ततो भृङ्गश्यामः कुसुमचयने नैष्यति स माम्।
इति श्रीमद्राधापरिचरणयोगाय चतुरो
हरित्पत्रो वृक्षो जनयति सुमं नैव हरितम् ॥५

## 'यायात्कामुपयोगितां सुरगवी'

१

केचित्प्रान्तनितान्तरागरसिकाः प्रादेशिकीमाश्रिता;
अन्ये राष्ट्रविकासपक्षपतिताः स्वां राष्ट्रभाषां श्रिताः।

अन्ताराष्ट्रियदृष्टिपुष्टमतयोऽङ्गीकुर्वते चाङ्गलं,
यायात्कामुपयोगितां सुरगवी निर्वासिता सर्वतः ॥

२

जानाना अपि सर्ववाक्प्रसविनीमेनां महाबुद्धयो,
नापेक्षन्त इति प्रयाति न मनः कस्याधुना विस्मयम् ।
किन्तु प्राकृतवाक्षु पुष्पफलभाक्ष्वेतासु शाखास्विव,
यायात्कामुपयोगितां सुरगवी धूलौ स्थिता मूलवत् ॥

३

यैकस्मिन्नपि सुप्रयुक्तविदिते शब्दे स्मृता कामधुक्,
या दुग्धापि दिने दिने कविवरैस्तिष्ठेददुग्धेव च ।
तस्या अप्यथ नाचिकेतसकथोक्तानां गवां गोचरा,
'यायात्कामुपयोगितां सुरगवी' त्येषास्ति चिन्ता सताम् ॥

४

लोके गौरवभाजि राजनि पदे प्राप्याधिकारोत्सवं,
नैतज्ज्ञा अपि लेखभाषाणविधावेतां प्रसंयुञ्जते ।
इत्येषा सततं विभूतिमहतां गीतेषु दक्षाधुना,
'यायात्कामुपयोगितां सुरगवी' गोविन्दगीताद्दते ॥

५

हा हा ! भारतवेश्मसु प्रविशति प्रेष्ठेव भाषाङ्गली,
दूती वेयमहो क्वचित्तदमलालिन्देषु हिन्दी स्थिता ।
द्वारेष्वस्ति च किङ्करीव चपला प्रादेशिकी भारती,
'यायात्कामुपयोगितां सुरगवी' जातेयमल्लागवी ॥

६

'यायात्कामुपयोगितां सुरगवी' जीर्णेव हिन्दुप्रजा,
न्यक्कारं मुहुरात्मजैर्निगमिता नानाविधैः प्राकृतैः ।
इत्येषा भुवि रामनामरटनैरेव स्वकालं नये—
दित्येवेशुकुलेषु नामरटनान्तोऽस्याः स पाठ्यक्रमः ॥

७

'यायात्कामुपयोगितां सुरगवी' सत्यं शिवं सुन्दरं,
श्यामं तं परिहाय यस्य चरितं गायन्ति मुक्ता अपि।
मुक्ता नूनमियं बुधैर्नृपतिभिस्ताभिः प्रजाभिस्तथा,
मुक्तिं प्राप्स्यति तद्यशोऽतिविमलं भूयो गृणन्ती मुदा॥

८

'यायात्कामुपयोगितां सुरगवी' वेदेषु खेदात्मसु,
प्राचीनेषु लयङ्गतेषु मुनिषु प्रास्तेषु देवेषु च।
सर्वत्राधिकमानमाश्रयति चास्मिन्नाङ्गले मङ्गलं,
तत्पादाम्बुजसेविनामिह सतां सम्मेलनैः किं फलम्॥

## किं कम्प्रति ब्रूमहे

साहित्ये नितरां रता अपि गताः सौहित्यमन्तः पदे,
न्याये दीक्षितशिक्षिता अपि चिराद् वेदान्तभूमौ स्थिताः।
एते वेदितवेदितव्यविषया अप्याङ्‌लविद्यावतां,
वृन्दे सम्प्रति कम्प्रतीव हृदये किं कम्प्रति ब्रूमहे॥१॥
सेयं चेतसि कम्प्रता नहि भयान्नो विस्मयान्न स्मया,
न्नैषा भिन्नरुचेश्चिरं परिचयान्नापि स्वबोधव्ययात्।
पद्यानामधिकाधिकादुपचयात्, कालस्य चापक्षयात्,
वक्तॄणां नियमान्वयाच्च विदितात् किं कम्प्रति ब्रूमहे॥२॥
एकः काञ्चनभाजनेषु ददते श्वभ्योऽपि दध्योदनान्,
अन्यः पाणिपुटं प्रसार्य दिवसानाकुञ्च्य चास्ते निशः।
पश्यन्नीदृशपक्षपातमपि नो लक्ष्मीं रुणत्स्यच्युते--
त्युक्तः प्राह स-हिन्दुकोडभयतः किं कम्प्रति ब्रूमहे॥३॥

देवाः पश्यत भारतेऽद्य परितः कृष्णापणैर्दूषिते,
सत्यं शौचमहिंसया सह पदं कुत्रापि नैवाप्नुतः।
इत्युक्ताः स्म वदन्ति धर्मनिरपेक्षे राज्यतन्त्रेऽधुना,
स्थातुं वाञ्छति नैष धर्मनिवहः किं कम्प्रति ब्रूमहे ॥४॥
'मातर्भारति भारते तव रतिः पूर्वेव नो दृश्यते'
इत्थं पर्यनुयुक्तया बहुतया सक्षोभमुक्ता वयम्।
पुत्रीणां मम सुन्दरावयविनीनामङ्गभङ्गैर्नवां,
भाषां भावयतामिहात्रभवतां किं कं प्रति ब्रूमहे ॥५॥
दुर्भिक्ष, त्यज भारतं श्वसितु यत्किञ्चिज्जनस्तद्गतः
इत्युक्तेन तु तेन सस्मितमुखेनोक्ताः किमप्यद्भुतम्।
अस्मत्पीडितभारतेऽप्यथ करा नित्यं नवा जाग्रति,
त्यक्तेऽस्माभिरिहागमिष्यति नु किं, किं कं प्रति ब्रूमहे ॥६॥
जाता वेदपराङ्मुखा मुखभुवो, रक्षाक्षमा बाहुजाः,
वैश्याः सन्निरताश्च कृष्णापणने, शूद्राः पथो भ्रंशिताः।
सत्स्वेतेषु चतुर्विधेषु परितोऽस्मान् पारतन्त्र्येष्विदं,
स्वातन्त्र्यं प्रभवो न भोक्तुमधुना किं कम्प्रति ब्रूमहे ॥७॥
एकः सप्तभिरेव तुष्यति परो वाञ्छत्यहो षोडशा—
थान्योऽप्यञ्चति पञ्चविंशतिमथो कश्चित्त्रयस्त्रिंशतम्।
द्वावेवेच्छति चापरः परमिमे पश्याम एकं परं,
मिथ्यास्वस्वदुराग्रहग्रहगतं किं कं प्रति ब्रूमहे ॥८
मन्यन्ते द्वयवादिनः श्रुतिपदं 'यद्द्वा सुपर्णेति' तद्
श्रीमद्भागवते स्वयं भगवता व्याख्यातमस्त्यन्यथा।
वैलक्षण्यमहो मिथोऽत्र कथितं बद्धस्य मुक्तस्य च
भ्रान्त्या जीवमहेशभेदमनसां किं कं प्रति ब्रूमहे ॥९
यो गङ्गां यमुनां नदीं न मनुते, जानाति चोर्वीं नदीम्,
यो ब्रूते च विचार्य प्रातिपादिकं तत्पूर्णचन्द्रादिकम्।
मध्ये तद्धितमात्मतीनमपि यः संसाधयत्यञ्जसा,
वृद्ध्या बाधयते गुणं, तमभितः किं कं प्रति ब्रूमहे ॥१०

# हंसान्योक्तिः

## अवतरणिका

वटानां भूयसां मध्ये स्थितमेकं जलाशयम् ।
वटोदरसरोनाम्ना जनः समचिकेतत ॥१

चक्रचर्चितचारुत्वं हंसशंसितसाधवम् ।
कारण्डवार्चिताकारं बकः कोऽपि तदाययौ ॥२॥

आलोक्य हंसान् स्वसमान् वलक्षान्
तानेव शत्रूनिव मन्यमानः ।
तैः सत्कृतोऽप्येष वचोभिरन्तः—
स्थितं विकारं सहसोज्जगार ॥३॥

१

'अरे मरालाः, स्पृहयालवः स्मो
भवद्विभूत्यै नवकीर्तिमूर्त्यै ।'
इतीरितास्ते सरलाः स्वभावा—
त्तस्मै ददुर्मानपुरस्सरं ताम् ॥४॥

२

शं खेदहारिणि नृणां परमं तु शङ्खे यन्नादतो द्रवति दिक्षु स कातरौघः ।
तं मथ्यमानजलधेरिव यस्य नादं धीरास्तु जीवनमिवाददते नवीनम् ॥

३

एष प्रकाशयति वास्तवमीश्वरस्य वस्तुस्वरूपमिति वेद्मि यथार्थतोऽहम् ।
नारायणः शयितमत्र समाधिनिद्रामध्ये ध्रुवं ध्रुवमजागरयत्त्वनेन ॥

४

तं वीरवीरणमहं यदि नाद्रियेऽपि स्वं गौरवं स सुतरां स्वबलेन लब्धा ।
अस्मैं तु नाश्रयमहं यदि नाद्य दद्यां कुर्युर्बका बत ! तदास्य दशामवद्याम्''

५

हे हंस, पूर्वमपि पश्चिममप्ययासीः क्षीरं निपीय बहुधा जलमप्यहासीः।
किन्त्वद्य मद्यप इवापगतो विवेकाद् भेदं न वेत्सि बत ! शम्बुकशङ्खयोस्त्वम् ॥

६

इत्थं बुधैः क्वचन पर्यनुयुज्यमानो मानोन्नतैरपि नतैः प्रणयैकभारात्।
हंसो यदाह पुरुदाहधरो हृदन्तः सन्तः स्वभावसरलाः शृणुतेह तन्मे ॥

७

जानामि शम्बुकमिमं धृतशङ्खरूपं बालभ्रमाय महते भुवि कल्पमानम्।
तं शङ्खमूर्धसु दधे परमेतदर्थं, जानातु तावदयमेव निजं स्वरूपम् ॥

८

नैतस्य शङ्खवदिहास्ति विशालमन्तर्नाप्यस्य स ध्वनिरहो विबुधाध्वनीनः।
अस्त्येव सर्वविधिना सुतरां स दीनः सन्दर्शयत्यहह किन्तु मृषा महत्त्वम् ॥

९

नायं वदत्यनुगुणं स्वयमेव किञ्चिन्नो वादयन्त्यपि तथैनमिहात्मवन्तः।
इत्थं गिरां रसकिरां मधुरेषु सारेष्वस्मिन्न कर्तरि न कर्मणि योग्यतास्ति ॥

## कोकिलान्योक्तिः

### कोकिलः कूजतु किमर्थम् ?

१

स्तौतु किन्नु वसन्तमन्तः कौतुकावहने समर्थम्।
रौतु वा निजसङ्गिनीहृदि भावयन्नभिनवमुदर्थम् ॥
कोकिलः कूजतु किमर्थम् ?
नौतु सम्प्रति राजनैतिकविजयलाभैर्मोदमानं,
यौतु वा सान्त्वैः पराजयखिन्नमनसं गलितमानं,
क्ष्णौतु तद्धृदयं निरर्थम् ?
स्नौतु वा सुखदुःखसमभावात्मकं रसमेतदर्थम्।
कोकिलः कूजतु किमर्थम् ?

२

द्यौतु भारतसीमरक्षरणसक्षरणं युवकं सदर्थम्,
कौतु वा क्षुधितप्रजाजनजीवनं कृषकं तदर्थम्।
कोकिलः कूजतु किमर्थम् ?
सौतु वा मनसा परैरुपहृतमदः संस्कृतिमहत्त्वम्,
क्षौतु वा प्रतिरोद्धुमसमीचीनपाकसमानतत्त्वम्।
तौतु वान्तरराष्ट्रमर्थम् ?
हन्त हन्त सदोषमपि वौर्णोतु राष्ट्रं श्रितकदर्थम्।
कोकिलः कूजतु किमर्थम् ?

३

प्रश्नदशकं क्षणिकमथवा सामयिकमिदमिति तदर्थम्,
कोकिलो निजकाकलीकलनं कलयते किल निरर्थम्।
कोकिलः कूजतु किमर्थम् ?
शाश्वतं शिवमथ च सुन्दरमपि च सत्यं किमपि तत्त्वम्,
मार्गयन् यदवाप तदिदं प्रेम मङ्गलमयसतत्त्वम्।
तन्न सम्प्रति जाग्रदर्थम् ?
इति कुहूमिव सर्वतः स विलोक्य कूजति तत्तदर्थम्,
कोकिलः कूजतु तदर्थम् ?

५

प्रेम चन्द्रवदेव जनजनमनसि नभसि समुद्यदर्थम्,
उज्ज्वलीकुरुते स्म शुक्लं श्याममसमर्थं समर्थम्।
कोकिलः कूजतु तदर्थम् ?
तत्पयो वा वारि भूत्वा कुहचिदबलासु प्रकाशम्।
कुत्रचित्सबलेषु रुधिरीभूय तत्स्फुटमनवकाशम्॥
किन्तु युवसु क्लिद्यदर्थम् ?
वासनायां स्वभ्रमं जनयत्प्रयतते बत व्यर्थम्।
कोकिलः कूजतु किमर्थम् ?

## 'षड्विंशे दिवसे जनवर्याः'

षड्विंशे दिवसे जनवर्याः ।

नहि मञ्जुलमञ्जीरशिञ्जितं शुश्रूषे सुन्दर्याः ॥
न च कुहचन किङ्किणिकाक्वणितं नापि च कङ्कणरावम् ।
नापि दधे मणिमालारणितं श्रोतुमहं हृदि भावम् ॥
इह रूपं कलये ज्वलितं मृगमनसे दारुणदावम् ।
गन्धादिकमपि मन्येऽधन्यं व्यर्थमिव प्रस्तावम् ॥
गन्धर्व्या गीते न मनो मम न च वाद्ये किन्नर्याः ।
अप्सरसां नृत्येऽपि न रमते तदिदं स्वरेऽप्यमर्याः ॥

षड्विंशे दिवसे जनवर्याः ।

काव्यं नव्यं भव्यं गणये यद्यपि भृतशृङ्गारम् ।
करुणाद्भुतशान्तैरपि भरितं भक्त्या भावितसारम् ॥
किन्तु न तद्रसमपि रसयितुमिह हृदयं ममास्त्युदारम् ।
सर्वमिदं जानेऽकालिकमिव विकसन्नवकल्हारम् ॥
अद्य न याच्या वाचि चमत्कृतिरर्थे चारुणि चर्या ।
न च प्रसादे माधुर्ये वा काम्या मे कविचर्या ॥

षड्विंशे दिवसे जनवर्याः ।

गीतं गायतु कश्चन भीतं यत्कुरुताद्रिपुवर्गम् ।
भारतमातुर्वीरसुतानां वितरतु यद्बलसर्गम् ॥
यज्ज्वलनं प्रबलयतु सर्वतो देशे प्रतिक्रियायाः ।
झञ्झावातं वा वात्यामयचक्रं शुचिप्रियायाः ॥
परितो जाग्रतु वीरभावनाः काश्चन झटित्यजर्याः ।
चीनपाकयोः प्रतिरोधे स्युः शक्ता अप्रतितर्याः ॥

षड्विंशे दिवसे जनवर्याः ।

ताभ्यामप्यतिनीचां कश्चन कुरुते क्वचिदपि चेष्टाम् ।
भारतगौरवरक्षणसक्षणवीरजनैरिह नेष्टाम् ॥

तस्य हृदन्तर्महाभयं यज्जनयति गत्यवरोधम् ।
अपहरते भूमण्डलवर्तिषु देशेष्वस्य विरोधम् ॥
तादृशगीतानलमिह पातु सत्वरया श्रुतिदर्या ।
धृतं चकोरव्रतमिह मम तत्प्रवर्ततां परिचर्या ॥

षड्विंशे दिवसे जनवर्याः ।

# उद्बोधनम्

अवतरणिका—

विलोक्य संस्कृते तु शिक्षकं कमप्यहं चिरं,
व्यचारयं, समन्ततश्च दृष्टिमभ्यसारयम् ।
न दीनता-नदीनता ततोऽधिकाऽधिकारतः,
क्वचित्परत्र धारिता, मया त्वभून्निभालिता ॥१॥
स एष शिक्षकेषु नागरेषु हन्त वन्यवद्
विमुग्धतां श्रितोऽत्र मन्यते ऋजुस्वभावतः ।
स एष शिष्यवर्गमध्यखर्वगर्वमण्डिते,
स्ववेषतः सुदामतैकधामतां गतो मतः ॥२॥
प्रबन्धकैरयं च बन्ध्यबन्धनोऽवसीयते,
प्रधानशिक्षकेन चैष निष्फलोऽभिधीयते ।
गृहे गतोऽपि जीविकार्जनेऽपटुर्बटुर्मतः,
सुहृज्जनेऽपि मूकवत्स्थितः स मूढ आस्थितः ॥३॥
इति प्रगल्भताममुष्य जाग्रतीं विलोकितुं,
तथास्य हीनभावनां निरासितुं, तमासितुम् ।
विचिन्तितं चिरं परन्तु भावनानभस्यहं,
न किञ्चदप्यवाप्य लोकभूमिमध्यवातरम् ॥४॥
अथास्य हस्तमाकलय्य संकलय्य सौहृदम्,
सहानुभूतिमस्य जीवनं प्रति प्रदर्शयन् ।
अनीतिरीतिमन्यदीयभावनाभिभाविता—
मिमं प्रति प्रणिन्द्य, शिक्षकं तमेनमावदम् ॥५॥

भारतीय- संस्कृति—सम्मण्डित ।
शृणु मम वचनं संस्कृतपण्डित ।।१।

अवहेलितः किमु त्वमिहैकः,
प्रतिखेलितो निजात्मनि चैकः ।
अस्यामभिनवसङ्घटनायाम्,
असम्मेलितः किमिति तथैकः ।।
किं त्वं रामराज्यरचनायाः
कार्यं कर्तुमलं न विशङ्कित ।।२

रामराज्यमिति पदमाख्यातुं
सत्यमहिंसां च व्याख्यातुम् ।
एकः साक्षीभवन्नपि त्वं,
प्रजातन्त्रशब्दार्थं म्नातुम् ।
किं त्वं विश्वबन्धुतालाभे
पठितुं मन्त्रमशक्तोऽतङ्कित ।।३।।

विद्याविनयसमेते विप्रे
गवि च गजे श्वगणे च क्षिप्रे ।
अन्त्यज-पर्यन्तेऽपि समं तत्
पश्यसि किं नो मृदौ क्षुरप्रे ।।
तत्किं तव यत्नेन न भावि,
दण्डितमेतदसत्यं सम्मित ।।४।।

आः, स्वतन्त्रतादिनमपि जातम्,
इतः पराश्रयतिमिरं यातम् ।
तथापि पश्चिमतः प्रविकाशी -
यदा भास्वता नभ आभातम् ।।
हा भास्वाञ्जलदैराच्छन्नः,
भूतलमननुरज्य मतिरञ्जित ।।८।।

स्नेहं गेहं सुखं च हित्वा,
कृतं सुविद्यार्जनमिह जित्वा–
मनोऽसि शक्तः प्रजारञ्जने,
रूपे धर्तुमसुप्रभञ्जने ।
विना प्रभञ्जनमिमान्हि मेधान्
तिलशः खण्डान् करोतु कोऽजित ।।५

शुक्रबृहस्पत्योर्नयदृष्टिः,
धर्मे नये मनोः सम्मृष्टिः ।
त्वत्त एव परजनैरधीता,
सा चाणक्यनीतिमतिकृष्टिः ।
किं त्वं निजशिष्यानुशिष्ययो-
र्भ्रान्ति हर्तुमलं न समञ्चित ।।६।।

प्रकृतितत्त्वबोधकतां धत्से,
विकृतिमात्रशोधकतां दत्से ।
अन्धानुकृतिव्याधिमिमं किं,
देशस्याद्यावधि न विरुन्त्से ।
तव त्यागतपसोस्तु महिम्ना,
भविता भारतमेतदनङ्कित ।।७।।

एतु सत्यभारतीय आत्मा
जागर्त्वेष तथाशु तवात्मा ।
तव प्रीतिपूतानवलोकान्
वीक्ष्य जनो भविता न दुरात्मा ।।
त्वं त्वनया निजयावहेलया,
मुक्तिं प्राप्स्यति नैव कथञ्चित् ।।९।।

## अगस्ते तिथौ पञ्चदश्याम्

**अगस्ते** तिथौ पञ्चदश्याममुष्यां
**स्वदेशस्य** सर्वाङ्गसौभाग्यदायाम् ।
स्वतन्त्राश्चिरात्प्रार्थयामो भवन्तं
प्रभो पाहि राष्ट्रं श्रितं त्वामनन्तम् ।।

**न राष्ट्रे** जना वैरभावाश्रयाः स्युः,
**न चौर्ये** न कालापरो तत्पराः स्युः ।
न मूर्खा न वा निर्बला निर्धनाः स्युः
न चैवान्यसञ्चालिता वञ्चकाः स्युः ।।

**वयं संस्कृतिं** संस्कृतं रक्षयन्तः
**श्रमोपार्जितं** भोजनं भक्षयन्तः ।
मिथो भ्रातृभावं भजन्तोऽतिमात्रं
नयामः परामुन्नतिं जीवमात्रम् ।।



